श्रीः

श्रीलालबहादुरशास्त्रि केन्द्रिय संस्कृत विद्यापीठ ग्रन्थमालायाः
पञ्चत्रिंशत्तमं पुष्पम्

# शा ब रं भा ष्य म्

कुमारिलभट्ट-श्रीवेङ्कटेश्वरदीक्षित-श्रीराजचूडामणिदीक्षित-
श्रीपट्टाभिरामशास्त्रिभिः प्रणीताभिः
टुप्टीका-वार्तिकाभरण-तन्त्रशिखामणि-भाष्यसन्दर्भयोजिनीभिः
सहितम्
(तस्य सप्तमाष्टमयोरध्याययोर्भागः)




प्रधान सम्पादकः
**डाक्टर मण्डनमिश्रः**

सम्पादकः
**आचार्य पट्टाभिरामशास्त्री 'पद्मभूषणम्'**

नूतन दिल्ली
१९८४

# Shabara Bhashya

with

Tuptika-Vartikabharana-Tantrasikhamani and
Bhashya-Sandarbhayojini

7th 8th Chapters

*Chief editor*

**Dr. Mandana Misra**

*Edited by*

**Acharya Pattabhirama Sastri 'Padmabhushan'**

Sri Lalbahadur Sastri Kendriya Vidyapeet
New Delhi
**1984**

# भूमिका विषयसूची

# सप्तमाध्यायविषयगर्भिताधिकरणसूची

## प्रथमः पादः



## द्वितीयः पादः



## तृतीयः पादः

### चतुर्थः पादः

# अष्टमाध्याये

## प्रथमः पादः

### अष्टमाध्याये द्वितीयः पादः

### अष्टमाध्याये तृतीयः पादः



### अष्टमाध्याये चतुर्थः पादः



सप्तमाष्टमाध्याययोरधिकरणविषय
सूची समाप्ता॥

# प्रधानसम्पादकीयम्

श्रीलालबहादुर-शास्त्रि-केन्द्रिय-विद्यापीठात् मीमांसाभाष्यस्य टुप्टीका-वार्तिकाभरण-तन्त्रशिखामणि भाष्यसन्दर्भयोजिनीसहितस्य सप्तमाष्टमाध्याययोर्भागः प्रकाशितो विदुषां करकमलान्यलङ्करोतीति नितरां सन्तुष्यदन्तरङ्गोऽस्मि। तत्र तत्र विद्यमानाः पाण्डुलिपीस्सङ्गृह्य तास्संशोध्य मुद्रणयोग्यां पाण्डुलिपिं सज्जीकृत्य स्वयं भाष्यस्य भाष्यसन्दर्भयोजिनीं टीकां प्रणीय मदाचार्याः पूज्यपादा ग्रन्थमिमं सम्पादितवन्त इति शिक्षा-मन्त्रालयः विद्यापीठाधिकारिणश्च सर्वथाऽधमर्णाः। पाण्डुलिपीनां विषये यद्वक्तव्यं तद् भूमिकायां विवृतं पूज्यपादैः। परिणते वयसि वर्तमाना अपि पदे पदे शरीरास्वास्थ्यमनुभवन्तोऽपि चक्षुस्तेजोमालिन्येन क्लिश्यन्तोऽपि अध्यापने व्यापृता अपि निस्सहाया अपि महदिदं कार्यं गुरुचरणास्सम्पादयामासुरिति तेभ्यः किमुपहरामि ऋते मत्प्रणामेभ्यः। अत्र गुरुचरणैर्भूमिकायां बह्वो विषया निर्दिष्टाः ये चाध्येतॄणां ज्ञानविवर्धकाः। मीमांसान्याया बहुभिर्बहुधा विस्तरं नीताः, किन्तु प्रमाणप्रमेयनिरूपणविषये मीमांसासम्बन्धिनि ग्रन्था विरला एव। ते च विषया अत्र पूज्यपादैस्सङ्कलिताः प्रामाणिकग्रन्थेभ्योऽध्येतॄणामुपकाराय। पूज्यपादानां क्लेशसहनपूर्वकमेतादृश-कार्यसम्पादने श्रीकाञ्चीपरमाचार्याणामनुग्रह एवावलम्बः। श्रीपरमाचार्येषु प्रसन्नेषु शिक्षामन्त्रालयस्य विद्यापीठस्य पूज्यपादानाञ्चाभ्युदये कस्सन्देहः? तेषामनुग्रहप्रसादावाप्तये सप्तमाष्टमाध्यायभागमिमं सभक्तिश्रद्धं तेषां चरणकमलयोस्समर्पयन् परमां मुदमवाप्नोमि। तेषां प्रेरणयैवायं ग्रन्थस्समपादि गुरुचरणैः। अतः परमाचार्यान् शतशः प्रणम्य प्रार्थयामि-यन्मद्गुरुचरणाः सुस्वास्थ्यमनुभवन्तोऽवशिष्टस्य भागस्यापि सम्पादने शक्तिमन्तो भवन्त्विति। उत्तमेष्वेतादृशकार्येषु द्रव्यसाहाय्यमितरसामग्रीवितरणञ्च विदधद्भ्यः शिक्षामन्त्रालयाधिकारिभ्यः कृतज्ञताञ्चाविष्कुर्वन् विद्यापीठसहयोगिभ्यो भूयसो धन्यवादान् वितरामि ये च मन्निर्देशानुसारेण कार्याणि निर्वहन्ति।

रामनवमी
सं० २०४४

प्रधानसम्पादकः
डॉ० मण्डन मिश्रः

श्रीः

श्री गुरुभ्यो नमः

# 'यत्किञ्चित्'

एकदा सञ्चरणशीलदेवानां जगद्गुरु श्रीशङ्कराचार्याणां श्रीकाञ्चीकामकोटिपीठे सुप्रतिष्ठितानां श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणानां दर्शनेनात्मानं पावयितुं सह जायया प्रस्थितस्तान् कर्णाटकमहाराष्ट्रसीमावर्तिनि 'शाहाबाद' इत्यत्र कस्याश्चन नद्याः ( पम्प रिवर ) तटेऽभ्रंलिहैस्तरुभिः परिवृते विद्यमानानवगत्य तत्रागच्छम्। आवाभ्यां सह मत्पुत्र्यौ सौभाग्यवत्यौ विजया सरस्वती चेति द्वे आस्ताम्। नद्यां स्नात्वाऽनुष्ठानाय श्रीचरणास्सन्नद्धा आसन्। मदागमनं विज्ञाय मामाहूतवन्तः। वयं चत्वारोऽपि तान् प्रणम्य तिष्ठन्त आस्म। कुशलप्रश्नानन्तरं किं त्रिचतुराणि दिनान्यत्र स्थातुं शक्नुयाः? किं तव कोऽप्यत्र वर्तते परिचितः? इत्यपृच्छन्। श्रीचरणानां यावदादेशं निवसामि, परिचितस्य कस्याप्यभावेऽपि परिचिनोमीत्यभ्यधाम्। तस्मिन्नेव क्षणे श्रीचरणा मौनव्रतं धारयामासुः। तत्रत्यप्रबन्धकेषु कश्चन मामवदत्—अत्रैव नद्यास्तीरे भवदर्थं कञ्चनावासं कल्पयिष्यामि, सपरिवारा अत्र स्थातुमर्हन्तीति। सह सुताभ्यां तत्र वासाय ससाध्वसोऽभवम्। तदैव कश्चन युवा मां प्रणम्याब्रवीत्—नातिदूरेऽहं सपत्नीकस्सापत्यश्च निवसामि, भवन्तो मद्गृहानागच्छन्तु इति। अपरिचितस्य गृहं प्रति गमनं समुचितं न वेति सन्दिहाने मयि मज्जाया तमपृच्छत्-को भवानिति? किं मातः। अहमत्रभवतीनां स्मृतिपथं नागतः? कालिकाता नगरे प्रत्यहं संस्कृताध्ययनायाधस्तलान्निकेतनस्यागच्छन्नासम्। अनयोरयं दम्पत्योस्सुत इति मम मज्जायायाश्च स्मृतिपथमागतः। किं चिन्तयन्ति भवन्तः? मया सहागच्छन्तु इति सामग्रीजातमुत्थाप्यास्मान् स्वगृहमनयत्। तत्र तिस्रो रात्रीरुषित्वा काष्ठमौनव्रतधारिणां श्रीचरणानां दर्शनेन सुकृती भूत्वा यावच्चतुर्थदिने प्रातः श्रीचरणानां दर्शनायागच्छम् तावन्मौनव्रतं भङ्क्त्वा जगद्गुरवो भाषमाणा वर्तन्त इति विज्ञाय तान् प्रणम्य भक्तजनसङ्कुले कुहचित्कोणेऽवस्थितं मां विलोक्य करुणामूर्तयः चेष्टया समाहूय समीपमुपवेष्टुमजिज्ञपन्। किञ्चिद्दूर उपविष्टं मां समीप उपवेष्टुं संज्ञयाऽब्रुवन्। तथोपवेष्टुं ससाध्वस एवाभवम्। तथाप्युविष्टं माम्-इदानीं त्वं किं करोषि? दिनचर्या का? किमध्यापयसि? कति छात्राः पठन्ति? कान् ग्रन्थान् प्रकाशयसि? इत्यादिकं पृष्ट्वा श्रीवेङ्कटेश्वरदीक्षितप्रणीतं टुप्टीकाव्याख्यानं वार्तिकाभरणं श्रीराजचुडामणिदीक्षितविरचितं वार्तिकाभरणव्याख्यानं तन्त्रशिखामणिञ्च शाबरभाष्यटुप्टीकासहितं कुतो न प्रकाशयसि? इत्युक्त्वा तन्त्रशिखामणि-वार्तिकाभरणकृतां जीवनचरित्रं तेषां वैदुष्यञ्च विस्तरेण बोधयामासुः। वार्तिकाभरणस्य तन्त्रशिखामणेश्च समग्रमातृका नोपलभ्यत इत्युक्तवति मयि तञ्जापुरसरस्वतीभवने, मद्रासप्राच्यमातृकाकोशागारे, मैसूर-कोशागारे च मातृका वर्तन्ते। ततः प्राप्तुं शक्यन्ते यतस्व, मातृकाः प्राप्नुयाः। यावदुपलभ्यते तावन्तं भागं प्रकाशय इत्यादिशन्। एवं होरात्रयं वार्तालापानन्तरं माध्यह्निकस्नानाय श्रीचरणाः प्रस्थिताः, परेद्यवि प्रातः दर्शनार्थं सपरिवारोऽगच्छम्। स्नात्वा गात्रे भस्मोद्धूलनं विदधानाः श्रीचरणाः द्रुतकनकनिभा अनुष्ठानाय समुपविष्टा आसन्। प्रणामानन्तरमद्य वाराणसीं प्रस्थातुमभिलषामि। श्रीचरणा महतोऽस्य ग्रन्थस्य सम्पादनाय मामादिशन्ति। तावद्वैदुष्यं नाहमावहामि। पदे पदे नैकविधामयेन पीडितो भवामि इत्युक्तवति मयि श्रीचरणा हस्तमुद्यम्य मामन्वगृह्णन् दीर्घायुर्भविष्यसि, कार्यमिदमचिरात् साधयेति।

एवमाशिषः प्रतिगृह्य वाराणसीं प्राप्य वार्तिकाभरणमातृकान्वेषणकार्ये व्यापृतोऽभवम्। तञ्जापुर सरस्वतीमहालपुस्तकालयाध्यक्षाय यावदुपलम्भ वार्तिकाभरणं प्रतिलिपीकृत्य प्रेषयितुं नियमानुसारेण पत्रं

व्यसर्जयम्। ततः मासचतुष्टयानन्तरं प्रतिलिपिरासादिता, यस्यामष्टमाध्यायप्रभृति दशमाध्यायद्वितीयपादान्तो भागो ग्रन्थस्यासीत्। प्रतिलिपिः कयाचन नार्या लिखिता प्रायोऽशुद्धिबहुला तत्र तत्र खण्डिता च। कथञ्चित्त-दधीत्य शोधयितुमारभे। शोधनावसरे शिरो मे भ्रमति स्म। टुप्टीकाग्रन्थं सविधे निक्षिप्य संशोधनमकरवम्। मातृकान्तरावलम्बनेन विना संशोधनं दुष्करमिति निरचिनवम्। अत्यधिकं क्लेशमनुभवति मयि दैवी घटना, तत्र दयासिन्धूनां जगद्गुरूणामनुग्रह एव कारणम्-मत्पूज्यपादानां म० म० चिन्नस्वामिशास्त्रिचरणानां नाम्ना कश्चन पुस्तकालयो मदारब्धवेदमीमांसानुसन्धानकेन्द्रे स्थापनीय इति निश्चित्य पूज्यपादानां मम च पुस्तकान्येकीकृत्य ग्रन्थालयस्थापनावसरे गुरुचरणानां ग्रन्थेषु वार्तिकाभरणमातृकाप्यासीत्। सा च मद्रपुरोप्राच्यमातृकाग्रन्था-गारात् प्रतिलिपीकृता अडयारग्रन्थागारगतग्रन्थात् संवादीकृता चेत्यवागच्छम्। प्रतिलिपिः शोभनाक्षरा प्रायः शुद्धा चासीत्। सा चाष्टमध्यायप्रभृति दशमद्वितीयपादान्तैवासीत्। पत्रव्यवहारेण मद्रपुरीतञ्जापुर्योः ग्रन्थागारे चैतावानेव भागो वर्तत इत्यज्ञासिषम्। उभयत्र सप्तमाध्यायो नोपलब्धः। सप्तमाध्यायेन विना प्रकाशनं न मह्यं रोचते स्म। सप्तमाध्याये लब्धे उत्तरषट्कस्य कियान् भागः प्रकाशनीय इति मम निश्चय आसीत्। दैवानुकूल्यं भविष्यतीति निश्चित्य सप्तमाध्यायशाबरभाष्यं टुप्टीकाञ्च मुद्रणालयप्रदानाय पाण्डुलिपिं निर्मातुं समा-रब्धवान्। तदवसरे गुरुपादान् स्मृत्वा 'भाष्यसन्दर्भयोजिनी' इति नाम्ना लघ्वीं टीकां लिखितुमारभे। सप्त-माध्यायटीकां परिसमाप्य कदाचिद्दिल्लीनगरं प्राप्तस्य मम तृतीयजामातुः चिरायुषो जयरामस्य सुहृत् मैसूर नगराभिजनः नाम्ना श्रीमान् एन्.के. अनन्तरावो भूतपूर्वोपमहानिदेशकः भारतीयकृष्यनुसन्धानपरिषदः परिचितो-ऽभवत्। तमहमपृच्छम्—मैसूर-प्राच्यपुस्तकागारे श्रीवेङ्कटेश्वरदीक्षितप्रणीतं वार्तिकाभरणं यदि स्यात् तत्प्रतिली-पीकृत्य प्रेषणीयमिति। सोऽपि सहृदयस्तथैव करिष्यामीति प्रतिश्रुत्य त्रिभिर्मासैः आन्ध्रलिप्या लिखितमातृकातो देवनागरीलिप्या लेखयित्वा प्रेषयामास। पत्रमप्यलिखत्—यदत्रैकैव मातृका वर्तते, यत्र च सप्तमाध्यायस्यैव वार्तिकाभरणमस्ति, तदहं प्रेषयामीति। प्रतिलिपिः शोभनाक्षरा शुद्धप्राया चासीत्। तां प्राप्य परमां मुदमवापम्, जगद्गुरूणामनुग्रहस्यैवायं परिणाम इति निर्धार्य निर्वृतान्तःकरणोऽभवम्। मत्पार्श्वे चिरात्संरक्षिता श्रीराज-चूडामणिदीक्षितानां तन्त्रशिखामणिमातृका ग्रन्थलिप्या लिखिताऽऽसीत्। तां देवनागरीलिप्या विलिख्य शाबर-भाष्यम्, टुप्टीका, वार्तिकाभरणम्, तन्त्रशिखामणिः, भाष्यसन्दर्भयोजिनी चेति क्रमेण प्रकाशयितुमुद्यतः। एवं पञ्चषवर्षाणि व्यतीतानि। महत्कष्टसाध्यमिदं कार्यं प्रकाशनं नामावशिष्टम्, अत्यधिकद्रव्यव्ययसाध्यञ्च। एतादृशेषु कार्येषु प्रकाशनसम्बन्धिषु श्री लालबहादुरशास्त्रि-केन्द्रियसंस्कृतविद्यापीठस्य प्राचार्यो डॉ० मण्डनमिश्रस्सोत्साहं सततमुद्यतो वर्तत इति तमहमप्राक्षमस्य प्रकाशनाय। सोऽपि प्रकाशनसमितेरनुमतिमवाप्य काश्यामेव सुप्रसिद्धे तारामुद्रणालयाधिपमादिश्य ग्रन्थप्रकाशनकार्यमारब्धुं मां प्राबोधयत्। प्रकाशनसामग्रीसम्पादनकार्यारम्भ-योर्मध्ये महान् कालोऽतिक्रान्तः। प्रकाशनमारभ्य मुद्रणालयस्य मन्थरगत्या भूयान् कालो व्यतीतः। दिने दिने चाहं जीर्णश्शीर्णश्च भवामि। प्रथमं यावदुपलम्भं प्रकाशनीयमित्यैच्छम्, किन्तु महान् विलम्बो जायेतेति निर्धार्य सप्तमाष्टमयोरध्याययोर्भागं प्रकाश्य श्रीकाञ्चीकामकोटिपीठाधीश्वरेभ्य उपहर्तुं निश्चिन्वानः तदर्थं डॉ० मण्डन-मिश्रस्यानुमतिमवाप्य इदम्प्रथमतया वार्तिकाभरणतन्त्रशिखामणी विदुषां करकमलयोस्समर्पयन् मुदमवाप्नोमि। मन्मतिमान्द्यानवधानादिभिः सङ्घृष्टाक्षरसंयोजनेन च जनितान् दोषान् संशोध्य विषयान् ग्राहयन्तु शिष्यान् विपश्चित इति सप्रश्रयं प्रार्थये।

## शाबरभाष्यलौकिकोदाहरणपरिपाटी

भाष्यग्रन्थेषु शाबरं भाष्यमतिचिरन्तनं परिगण्यते। शाबरी शैली हृद्याप्यतिगभीरा, सरला-प्यर्थगौरवा। भाष्यवाक्यानि पठतां सुगमेऽप्यर्थावबोधेऽर्थगतं गाम्भीर्यं विचार्यमाण एव प्रतीयेत। वैदिकेषु

विषयेषु विविच्यमानेषु यत्रार्थप्रतीतिः क्लेशेन भवति तत्र लौकिकमुदाहरणं प्रदर्श्य क्लेशापनोदने द्वारमुद्घाट्य मीमांसादर्शने तत्र तत्र जायमानान् सन्देहान् दूरीकुर्वन्ति भाष्यकृतः। क्वचिच्च समाजपरिष्कारोपयोगिनः पदार्थान् लौकिकोदाहरणप्रदर्शनव्याजेनोपदिशन्ति। क्वचिच्च लोकतन्त्रशासनानुकूलान् विषयानवबोधयन्ति। एवमाशयवतामुदाहरणानां प्रदर्शने भाष्यकाराणामिदं तात्पर्यम्-यदेतन्मीमांसाशास्त्रं दार्शनिकविषयावबोधायैव केवलं न प्रवृत्तम् किन्तु लोकाः स्वजीवने शास्त्रार्थसमन्वयं यथा कुर्युस्तथा विषयानवगच्छन्तु, अवगत्य चाचरन्तु, आचर्यं च प्रचारयन्तु, तथा च चतुरवदानन्यायोऽनुसृतो भवेदिति। एकस्य शास्त्रस्य महातात्पर्यमेकं भवति, भवन्ति चावान्तरतात्पर्याणि भूयांसि, तदिदं भाष्यशैल्याऽवगम्यते। अध्ययनम् बोध आचरणं प्रचारणञ्चेति चत्वारि मिलित्वैकः पदार्थः। बोधमात्रेण विरते व्यापारे जीवने चावबुद्धस्य सम्बन्धाभावे कृतं जीवनेन। 'सत्यं ब्रूयात्' इति विधेरर्थमवबुध्य जीवने सत्यं यदि न ब्रवीति तर्हि बुद्धस्य किं प्रयोजनं सिध्येत्। स्वाध्यायाध्ययनविधिः स्वशाखाया अध्ययनं विदधानः प्रचारणपर्यवसायी भवति। विधिश्च समग्रे प्रवर्तते नैकदेशमात्रेण पर्यवस्यति। विंशतिपदपरिमितस्य कूपस्योल्लङ्घने शतं रूप्यकाणि लभेत इति विध्यर्थमवबुध्य कश्चनाष्टदशपदान्युल्लङ्घ्य कूपे पतित्वोत्थाय चाशीतिरूप्यकाणि वाञ्छेद्यदि किं सः तावन्ति रूप्यकाणि प्राप्नुयात्? समग्रे शास्त्रार्थे सम्पादिते एव खलु विधयः पर्यवस्यन्ति। शास्तीति शास्त्रमनुशासकम्। विधेरर्थमवबुध्य स जीवने सङ्गमनीयः। विषयमिममवबुबोधयिषया तत्र तत्र भाष्यकारा लौकिकान्युदाहरणानि दर्शयन्ति।

तत्र कतिपयान्युदाहरणानि पश्यामः—सप्तमाध्यायस्य चतुर्थपादे 'इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्' (७.४.१) इति प्रथमं सूत्रं व्याचक्षाणाः शबरस्वामिनः 'न ह्यधर्मकात्फलं भवति' इति प्रतिज्ञाय 'कथं ज्ञायते'? इति पृष्ट्वेमानि वाक्यानि लिखन्ति—**'यो ह्यमेध्यं द्रव्यमुच्छिष्टः शयानो वा प्रौढपादो वामेन हस्तेन वा पादेन यथाकथञ्चिद्देवताया उत्सृजति तस्य फलं न भवतीति शिष्टास्स्मरन्ति। यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमना मन्त्रवन्नियमवच्च देवताया उत्सृजति तस्य फलं भवतीति स्मरन्ति'** इति। अत्रेयं सन्दर्भस्थितिः—कर्माणि विहितेतिकर्तव्यताकानि कानिचन सन्ति, अपराणि च सन्त्यविहितेतिकर्तव्यताकानि। 'यजेत' इत्यत्राख्याताभिहितभावनायाः किं केन कथमित्याकाङ्क्षात्रये जाते वाक्यगतं फलं किमिति साध्याकाङ्क्षापूरकम्, केनेति साधनाकाङ्क्षायां समानपदोपात्तो धात्वर्थः साधनाकाङ्क्षापूरकः, इति कर्तव्यताकाङ्क्षायां प्रकरणे विहितान्यङ्गानि पूरकाणि। सर्वाङ्गसहितेन यागेन फलं भावयेदिति बोधो जायते। यत्र चाविहितेतिकर्तव्यताको यजिराम्नायते तत्र फलयागयोः साध्यसाधनाकाङ्क्षापूरकत्वेनान्वये जाते कस्यापीतिकर्तव्यताकाङ्क्षापूरकत्वेनान्वयो वक्तव्यः। नास्ति च तत्रेतिकर्तव्यताम्नानम्। तत्र किं तदाकाङ्क्षा नोदेति उतोदेति वेति सन्देहे जाते यदि प्रथमः कल्पः तर्हि कर्तृव्यापारव्याप्यत्वनियमात्करणत्वस्य विनेतिकर्तव्यतया यागस्य करणत्वेनान्वयो न स्यात्। करणगतविशेषाकाङ्क्षाया एवेतिकर्तव्यतात्वमभ्युपगतं शास्त्रकारैः। 'यजेत' इत्यत्र 'यागं कुर्यात्' इत्यन्वये क्रियमाणे तत्रेतिकर्तव्यतापेक्षाया अनुदयादित्युच्यते तर्हि फलसाधकत्वेन यागे उपदिश्यमाने धर्माकाङ्क्षा भवत्येवेति न दोषः। धर्मरहितो यागः फलं जनयितुमक्षमः। **'न ह्यधर्मकाद्यागात् फलं भवति'**। **'कथमिदं ज्ञायते'** इति प्रश्नस्य समाधानायेमाः पङ्क्तयो भाष्यकाराणां प्रवृत्ताः।

अतिथौ गुरौ वा गृहानागतेऽभ्युत्थानादिना स सत्कर्तव्य इति नियतिः। पादौ प्रसार्य वेत्रासने स्थित एव कश्चन गुरोरतिथेर्वा स्वागतं कुर्यात् न तेन नीतिरवलम्बिता स्यात्। वेत्रासने स्थितोऽतिथिं गुरुं वा स्नानादिकं निर्वर्त्य पाकशालायां स्थितः पाचकः कथ्यतां स भोजनादिकं कारयिष्यति। एवं यदि कश्चन ब्रूयात् किं तेनातिथ्यं सम्पादितं स्यात्? आहूता देवता गृहानागच्छन्ति, अनाहूताश्चातिथयः। उभयेषां तुल्य एव

सत्कारः। यथातिथयस्सन्मानार्हास्तथा देवता अपि। न ह्यतिथय उदरपूरणाय गृहानागच्छन्ति। तच्च यत्र कुत्र वा यथा तथा वा भवितुमर्हति। अतिथय उदरपूरणाय न जीवन्ति, जीवनायोदरपूरणं कामयन्ते। जीवनं सन्मानपूर्वकं यथा भवेत्तथा ते वाञ्छन्ति। अतस्ते साधुनीत्या सत्कर्तव्या इति विषयमनेन सन्दर्भेण द्योतयन्ति भाष्यकाराः।

'शिष्टाः स्मरन्ति' इति निर्दिशन्तश्शबरस्वामिनः 'यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः, इति श्रुतिं स्मारयन्तः शिष्टाभिहितान् गुणदोषानवधार्य तदनुसारेण वर्तितव्यं लोकैरित्युपदिशन्ति। अनुभवजनितसंस्काराहितचेतसश्शिष्टाः स्मृतिग्रन्थान् प्राणैषुः। ते वितथार्थप्रतिपादका न भवेयुरिति बोधयन्ति। एवमनेके जीवनोपयोगिनो विषयास्सन्दर्भेणानेन स्फुरन्ति।

अस्मिन् भाष्यकाराणां वचननिचये 'न ह्यधर्मकाद्यागात्फलं भवति' इति निर्दिष्टमुपलभामहे। अत्र 'यागात्' इत्यस्य विशेषणम् 'अधर्मकात्' इति। यागस्स्वयं धर्मः, स कथमधर्मको भवितुमर्हति इति प्रश्न उदियात्। 'अधर्मकात्' इत्यत्रत्यधर्मशब्दोऽङ्गपर इति प्रश्नस्समाहितो भवति। विशेषेणायमर्थोऽत्र परिस्फुरति–'न हि निरङ्गाद्यागात्फलं भवति' इत्युक्तेऽपि प्रकृतसन्दर्भस्समन्वितो भवति। अङ्गपदस्थाने धर्मपदप्रयोगः कमाशयमभिव्यनक्ति ? इति जिज्ञासायामिदं मे प्रतिभाति-विश्वस्य जगतो धारको धर्मो भवति। स च धर्मो वेदार्थः। 'सर्वैश्च वेदैरहमेव वेद्यः' इति पार्थसारथिरात्मानं वेदवेद्यं प्रतिपादयति। वेदश्चापौरुषेयं वाक्यश्चैकार्थप्रतिपादक पदसमूहात्मकं जैमिनिरभिप्रैति। धर्मं जिज्ञासितुं प्रवृत्तो जैमिनिः वेदवाक्यानामर्थं विचारयति। तानि च वाक्यानि नानावेदगतानि। तेषामर्थ एव विचारविषयः। स एव च धर्मः। तेन वेदवेद्यत्वं धर्मस्यागतम्। स एव वेदवेद्यः परमेश्वरः। धर्मस्य परमेश्वरस्य चैकरूपत्वमापतति। यथा अन्ये दार्शनिका अनुमानेनेश्वरं साधयन्तस्सेश्वरवादिनो भवन्ति, तथा वेदवेद्यं धर्मं निरूपयन्तो मीमांसकास्सेश्वरवादिन इत्यत्र कस्सन्दिहीत ? यस्य भगवतः परमेश्वरस्यात्मा-स्वरूपं धर्मः स चेद्विचारविषयो मीमांसायाः किमु वक्तव्यं तस्याः सेश्वरवादित्वे ? एकस्यैव परमेश्वरस्य नाना भवन्ति रूपाणि—'एकं सद् विप्रा बहुधा वदन्ति' इति श्रुतेः। ब्रह्मा विष्णुः महेश्वर इति त्रिमूर्तयः, तथा दर्शपूर्णमासौ, अग्नीषोमीयः पशुः, ज्योतिष्टोमश्चेति यागस्य मूर्तित्रयम्। तत्र त्रिमूर्तीनां देवानां यथा नानारूपाणि, तथा मूर्तित्रययुतस्य यागस्य नानारूपाणि-ऐष्टिकानि पाशुकानि सौमिकानीति। यथा त्रयाणां देवानां मूर्तय ऐश्वर्यवत्यः, तथैव यागत्रयरूपाण्यपि फलवन्ति भवन्ति। यथा हि भगवती दुर्गापरमेश्वरी शक्तिस्वरूपिणी श्री महात्रिपुरसुन्दरी ललितापराम्बा श्री राजराजेश्वरी फलदातृत्वशक्तिं तदैवाबिभर्ति, यदा च तदीयाङ्गदेवतास्सनियममाराध्यन्ते, तथैव दर्शपूर्णमासौ ज्योतिष्टोमो वा फलप्रदाता तदेव भवति यदा तदङ्गानि यथायथमनुष्ठीयन्ते। एतेनेदं सिध्यति—यत् प्रधानयागगता शक्तिः अङ्गयागजन्यशक्तिभिरुपबृंहिता भवतीति। फलं साधनसापेक्षम्, साधनञ्चाङ्गोपकारसापेक्षम्। अङ्गैरुपकृतं साधनं फलं जनयति, अनुपकृतञ्च न साधयति इत्यन्वयव्यतिरेकाभ्यां साङ्गस्यैव प्रधानस्य फलजनकत्वसामर्थ्ये पर्यवसितेऽङ्गान्यपि तादृशसामर्थ्यवन्तीति सिध्यति, तथापि 'प्राधान्येन व्यपदेशा भवन्ती' ति न्यायेन प्रधानं फलजनकमिति व्यपदिश्यते। तथा च 'वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः' इति धर्मलक्षणमङ्गेष्वपि समन्वितं भवतीति शबरस्वामिनोऽङ्गानि धर्मशब्देन व्यवहरन्ति।

अस्मिन् भाष्यसन्दर्भे 'सेच्यं द्रव्यं देवताया उत्सृजति तस्य फलं भवति' इति निर्देशेन श्रौतयागेष्वयं पूजनप्रकारः प्रदर्शितो भाष्यकारैः, देवतोद्देश्यकद्रव्यत्यागात्मकत्वाद्यागस्य। उत्सृजतेस्त्यागोऽर्थः। 'तस्य फलम्' इत्यत्र तच्छब्द उत्सर्गं परामृशति। तेनोत्सर्गस्य देवतोद्देश्यकत्यागात्मकस्य कर्मणः फलम्, फलदाने देवताया नोपयोग इत्यापाततोऽवगम्यते। परमार्थतः पर्यालोच्यमाने प्रकृतितो विकृतौ धर्माणामतिदेशप्रसङ्गेन प्रवृत्तस्यास्य

भाष्यसन्दर्भस्यातिदेशविषयकत्वेन पर्यवसानं कल्पनीयं भवति। देवपूजनानि भवन्त्यनेकविधानि-क्वचिद्वषट्कारेण देवाः पूज्यन्ते, क्वचित्स्वाहाकारेण, क्वचित्तुलसीदलैः, क्वचिद्बिल्वदलैः, क्वचित्कुङ्कुमेन, क्वचिन्नमस्कारैः क्वचिज्जपेन, क्वचिच्च ध्यानेन। विभिन्नेषु पूजनेषु विहितेषु तत्रेतिकर्तव्यता समानाकारेण प्रवर्तते। इतिकर्तव्यताया एव स्वरूपं भाष्यकाराः **'मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखः'** इत्यादिना प्रतिपादयन्ति। श्रौतेषु कर्मसु येतिकर्तव्यता सैव प्रायः स्मार्तेषु लौकिकेषु च कर्मस्वनुष्ठीयत इत्यनुष्ठातारो विदन्ति। पूजनञ्च निराकाराया देवताया भवति, साकाराया अपि। सर्वत्रापि मेध्यद्रव्यशुद्धदेशादेः परिगणितस्य प्रकारस्यावश्यकतेत्यत्र न कस्यापि सन्देहस्स्यात्। श्रौतकर्मार्थत्वेन कथितस्य प्रकारस्य कर्मान्तरेष्वपि नयनं भाष्यकाराभिमतमिति सन्दर्भेणानेन प्रतीयते। एतेनेदं सिध्यति—शबरस्वामिनः भट्टपादप्रभृतयोऽन्ये ग्रन्थकारा नावमिकदेवताधिकरणं मीमांसाशास्त्रमर्यादानुसारेण।रचयन्तोऽपि साकारदेवतापूजनादिषु विग्रहादिपञ्चकं स्वीकृत्यैव गच्छन्तीति।

मीमांसका दर्शपूर्णमासादीनि कर्माणि तदङ्गानि च धर्मशब्देन व्यवहरन्तीति पूर्वमवोचम्। साङ्गस्य कर्मणो धर्मत्वेऽङ्गानामपि तत्त्वे का विप्रतिपत्तिः? प्रधानस्य कर्मणः श्रेयस्साधनत्वेन धर्मत्वम्, तदङ्गानाञ्च तदुपकारकत्वेन धर्मत्वमिति रीतावाश्रितायां धर्माणाम् (अङ्गानां) प्रधानीभूतो यजिः प्रयोजकस्सिध्यति, न तु प्रधानयागजन्यं फलमपूर्वं वा प्रयोजकम् इति पक्षप्रतिपादनपरम् 'अविभागात्तु नैवं स्यात्' (जै० सू० ७.१.५.) इति सूत्रं व्याचक्षाणा भाष्यकारा नावमिकं धर्माणामपूर्वप्रयुक्तत्वप्रतिपादकं न्यायमाक्षिप्य यजेर्भङ्गित्वेऽपि तत्र क्रियमाणानां धर्माणां नानर्थक्यमिति प्रतिपादनावसरे तैलपानं दृष्टान्तयन्ति—**'यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति एवं यजिरपि करिष्यति। किं नोऽदृष्टा श्रुतेनापूर्वेण कल्पितेन' इति।** अतो भङ्गुरोऽपि यागः कालान्तरे फलं जनयितुं समर्थः स्वाङ्गानि प्रयोजयतीति पक्षं निराकुर्वन्तश्शबरस्वामिनो लिखन्ति—**'तैलपानस्यापि न कालान्तरे फलं भवति। धातुसाम्यं तस्य फलम्। तच्च तत्कालमेव। यच्च फलं बलपुष्ट्यादि तत्सम्यगाहारपरिणामाद् भवति। तस्माद् विषम उपन्यासः'** इति। यागस्य नश्वरत्वेऽपि स किञ्चित् कृत्वा नश्यति। तच्च किञ्चित्कालान्तरे फलं दास्यति। नश्वरो यागः यच्च किञ्चित्करोति तत्र धर्माणामपि परम्परया सम्बन्धो विद्यत एव। तच्च धर्मास्साक्षादुत्पादयितुं न क्षमन्ते, यस्य च सामर्थ्यं साक्षाद्विद्यते तद्गतशक्त्युद्दीपकत्वेन धर्मास्तिष्ठन्तीति धर्माणामपि फलजननकार्ये व्यापृतिरस्त्येव। तथापि प्राधान्येन व्यपदेशा भवन्तीति यागात्फलं भवतीति व्यवहारः। तैलपानेन धातुसाम्यम्, कारणान्तरेण बलपुष्ट्यादिर्लभ्यत इति दृष्टान्तदार्ष्टान्तिकयोस्समन्वयः। अनेन लौकिकेन दृष्टान्तेन विषयान्तरमपि परिस्फुरति-शासनेन पञ्चवार्षिकयोजनायां निर्णीतायां तज्जन्यं फलं द्रागेव न लभ्यते, निर्णीताया योजनाया अनन्तरमेव श्रमिकवर्गस्य कार्यलाभः, श्रमिकवर्गेणाधिकारिभिश्च यथायथं स्वीयेषु कार्येषु सम्पाद्यमानेषु फलं निष्पद्यते, तथापि योजनायाः फलमिति समाजे व्यवहारः। प्रजातन्त्रशासने मुख्यत्वेन गौणत्वेन च कार्यकर्तॄणां व्यवहारे सत्यपि तस्य तत्तत्कार्ये निष्ठापूर्वकमाचरणे सत्येव शासनसूत्रं व्यवस्थितं दृढञ्च तिष्ठेत्। यस्य यत्कार्यक्षेत्रम् तेन तत् साधु सम्पाद्यमानमेव फलप्रदातृ भवेत्। यथा हि विहितेतिकर्तव्यताका यागा अविहितेतिकर्तव्यताकेषु यागेषु धर्मानतिदेशेन सम्प्रेष्य धर्मरहितानुपकुर्वन्ति, तथा सकलसामग्रीसमृद्धं राज्यं तद्विहीनेषु राज्येषु केन्द्रानुशासनानुसारेणापेक्षितसामग्रीं सम्प्रेष्योपकुर्यादित्यतिदेशन्यायोऽवबोधयति। धर्माणां सम्प्रेषणेऽतिदेशशास्त्रं व्यवस्थापकम्। तच्च द्रव्यघटितं देवताघटितञ्च सादृश्यं निर्णीयातिदेशं व्यवस्थापयति। यथातिदेशं पदार्थेषु प्राप्तेषु तानि तानि कर्माणि साध्वनुष्ठितानि फलप्रदानि भवन्ति। राज्येषु समृद्धेषु राष्ट्रं समृद्धं परिगण्यते। न्याय एषः प्रजातन्त्रशासनोपयोगी।

**'शब्दानाञ्चासामञ्जस्यम्'** (जै० सू० ७.२.१२) इति सूत्रव्याख्याने भाष्ये **यथा आचार्ये प्रोषिते आचार्यानी भवतामाचार्य इत्याचार्यशुश्रूषा आचार्यान्यामतिदिश्यते इति शबरस्वामिनो लिखन्ति। सामशब्दो**

ऋग्वचन इति पूर्वपक्षिणो मतविवरणप्रसङ्गे प्रवृत्तमिदं भाष्यवचनम्। यदि सामशब्द ऋग्वचनस्तर्हि एकस्यामृचि ऋगन्तरस्य निवेशो न भवितुमर्हति। न खलु कवतीषु ऋक्षु रथन्तरशब्दवाच्या ऋगाधेयत्वेन निवेष्टुमर्हतीति पृष्टः पूर्वपक्षी देशलक्षणां धर्मलक्षणां वाङ्गीकृत्यातिदेशमुपपादयति—कवतीदेशे रथन्तरं गायतीति। रथन्तरधर्मा वा कवतीषु रथन्तरशब्देनातिदिश्यन्त इति। तत्रेदमुदाहरणम्। अनेनोदाहरणेन शबरस्वामिनः भारतस्य चिरन्तनीं स्थितिमवबोधयन्ति। आचार्यो विद्यया सह सदाचारान् वृद्धोपसेवित्वं लौकिकव्यवहारं देवभक्तिञ्चेत्यनेकान् विषयान् शिष्यान् ग्राहयति। स चेत्प्रोषित आचार्यानी मन्त्रार्थं शीलञ्चेत्यादिकं ग्राहयितुं समर्था। यदा आचार्यपत्नी आचार्यस्थाने वर्तते तदा शिष्यकर्तृकशुश्रूषाधर्म आचार्यान्यामतिदेशेन भवति। आचार्यः पूज्यो यथा तथा आचार्यपत्न्यपि पूज्येति भारतीया संस्कृतिः। तदानीन्तनाः शिष्या भृतकाध्यापकत्वेनाचार्यं न मन्यन्ते स्म, किन्त्वाचार्यत्वेन। तथैव तत्पत्नीमपि भावयन्ति स्म। इदमुदाहरणमन्यदप्यवबोधयति—कार्यालयस्यैकस्मिन्नधिकारिणि गृहीत्वाऽवकाशं ग्रामं गतवति, तत्स्थाने नियुक्तोऽन्यः कार्याणि सम्पादयति। यद्यप्ययं कार्यनिर्वाहकाधिकारी, तथाप्यधिकारिणो धर्मा अत्रापि भवेयुः। अयं कञ्चित्कालमेव स्थास्यति कुतोऽयं परिचरितव्य इत्यौदासीन्यं परिचारकैर्नावलम्बनीयमिति। शिष्यैर्वा परिचारकैर्वा श्रमिकैर्वा नैतिकतामवलम्ब्य वर्तितव्यमित्यनेनावगम्यते।

लोकवेदाधिकरणन्यायेन लौकिकवैदिकशब्दानां तदर्थानाञ्चानन्यत्वं सूत्रकारा भाष्यकाराश्च स्वीकृत्य गच्छन्ति। अतएव 'लोकवत्' 'यथालोके' 'यथा पाके' इत्येवं सूत्रकाराः स्वीयेषु सूत्रेषु लोकशब्दं प्रयुञ्जते। भाष्यकारा अपि 'लोके येष्वर्थेषु' इति भाष्यमारभमाणास्सूत्रेषु प्रयुज्यमानाश्शब्दास्तदर्थाश्च लौकिकशब्दतदर्थानन्यत्वं भजन्त इति प्रतिजानते। जैमिनिसूत्राणि च प्रायो वेदवाक्यगर्भितानीति सूत्रानुशीलनेन स्पष्टम्।

तत्र 'समानमितरच्छ्येनेन' इति श्रुतिगतेतरच्छब्दार्थविचारप्रसङ्गे पूर्वपक्षे सूत्रकारा इतरच्छब्दस्सन्निहितवाची, सिद्धान्ते चाधिकार्थवाचीति निर्दिशन्ति। उभयत्र भाष्यकारा लौकिकं वाक्यमुदाहरन्ति—**'यथा इतरः प्रावारो दीयताम्, इतरः कम्बलो दीयताम् इति सन्निहितो दीयते न प्रावारमात्रं कम्बलमात्रं वा'** इति पूर्वपक्षे, **'यदा हि वस्त्राण्यनुक्रम्येतरशब्दः प्रयुज्यते देवदत्ताय कम्बलो दीयताम्, विष्णुमित्राय कौशेयम्। यज्ञदत्ताय क्षौमम् इतरच्चैत्राय'** इति सिद्धान्ते। पूर्वपक्षे सिद्धान्ते चेतरशब्दोऽवशिष्टद्रव्यनिर्देशकत्वेन समानः, तथापि प्रसङ्गे पर्यालोच्यमाने एकजातीयत्वमधिकं प्रत्येतव्यमिति सिद्धान्ते सिध्यति। एवं दृष्टान्तदार्ष्टान्तिकयोस्समन्वयः। अत एव 'वस्त्राण्युपक्रम्य' इति प्रसङ्गो भाष्यकारैर्दर्शितः। इषोः श्येनस्य चोभयोः ज्योतिष्टोमपूर्वकत्वं तावत्सिद्धम्। अर्थादुभयोरपि ज्योतिष्टोमादङ्गान्यतिदेशेन प्राप्नुवन्ति। ज्योतिष्टोमिकाङ्गापेक्षया विलक्षणान्यङ्गान्युभयत्र सन्ति शिष्टानि। विलक्षणेष्वप्यङ्गेषु वैलक्षण्यमुपलभ्यते। इषौ विशेषाङ्गविधानानन्तरं 'समानमितरच्छ्येनेन' इति श्रुतम्। अत्रेतरच्छब्देन ज्योतिष्टोमिकाङ्गानां ग्रहणे श्येनपदमनर्थकं स्यात्। तत्सार्थक्याय श्येनगतविशेषाङ्गग्रहणमेव प्राप्नोति। यथा वस्त्राण्यनुक्रम्य प्रयुक्तेतरशब्दः सादृश्याद्वस्त्रजातीयस्य बोधकस्तथा विशेषाङ्गसादृश्यात् श्येनगतविशेषाणामङ्गानामेवेतरच्छब्दो बोधक इति यावत्।

अनेनोदाहरणेनेयं नीतिरवगम्यते—यत्र क्वचन कार्यालये शिक्षामन्दिरे वा योग्यताविशेषानुसारेण बहुषु नियुक्तेष्ववशिष्ट इतरोऽस्मदीय इत्येवाधिकारिभिस्स न नियोक्तव्यः, किन्तु तस्मिन् पूर्वं नियुक्तेषु यां विशेषतामवधार्य नियोगः कृतस्सा अस्मिन् वर्तते न वेति निश्चित्यैव नियोगः कर्तव्यः। इयमेव नीतिस्साधीयसी। एतादृशनीतिमनवलम्ब्य येन केनापि प्रकारेण सम्प्रति नियोगस्य दृष्टिगोचरत्वादेव शिक्षणसंस्थासु कार्यालयेषु च व्यतिक्रममनुभवामः। नैतिकतायाः पालनमेव देशसमुन्नत्याधायकमित्यनेन सन्दर्भेणावगम्यते।

**'उत्पत्त्यर्थाविभागाद्वा सत्ववदैकधर्म्यं स्यात्'** (जै० सू० ७.१.२) इति सूत्रे प्रयुक्तं 'सत्त्ववत्' इत्युदाहरणं विवृण्वाना भाष्यकाराः—'यथा सत्त्वधर्मा गौर्न पदा स्प्रष्टव्यः' इति लिखन्ति। अनेन दृष्टान्तेन

पूर्वपक्षी धर्माणां यजिसामान्यार्थत्वमङ्गीकृत्यातिदेशं वारयति, सिद्धान्ती सर्वार्थत्वेन दृष्टान्ते प्रतीयमानेऽपि दार्ष्टान्तिके यजौ गुणभावमङ्गीत्यातिदेशं साधयति। गोशब्दो जातिप्रवृत्तिनिमित्तकः, जातौ पदस्पर्शो न सम्भवति तदभावस्यापि न सम्भव इति व्यक्तिलक्षणया सर्वार्थत्वं धर्माणां साधयितुं शक्यम्। यागशब्दस्तु क्रियाप्रवृत्तिनिमित्तकः, देवतोद्देशेन द्रव्यत्यागरूपत्वाद्यागस्य। जातिप्रवृत्तनिमित्तकशब्देषु व्यक्तीनां भेदेन तत्रानुगताकार प्रतीतिमादायैव जातिर्व्यवस्थिता भवति। द्रव्यत्यागरूपा व्यक्तयो मानसिकाः। न ता गोव्यक्तय इव प्रत्यक्षाः। वृषभाद्गवि जायमाना व्यक्तिर्गौः कथ्यते, न तथा यागाद्यागस्योत्पत्तिः। यजतिचोदनाचोदितेषु कर्मसु 'आश्रावय, अस्तुश्रौषट्, यज, येयजामहे वौषट्' इत्येवं नियमो वर्तते। एतादृशनियमरहितेषु कर्मसु रुद्रयागः विष्णुयागः दुर्गायागः अन्तर्यागः बहिर्याग इत्ययागेष्वपि यागशब्दव्यवहारो दृश्यते। एवं सति यागत्वेन यागा एकरूपाः कथं भवेयुः ? किञ्च 'यजेत' इत्यप्राप्तस्थले यागेन भावयेत् इति यागस्य साधनत्वेन गुणभावः, तदर्थत्वं धर्माणां कथमिव स्यात्। यदि यागजन्यापूर्वार्थत्वं धर्माणाम् तर्हि अपूर्वस्य व्यवस्थितत्वादतिदेशस्सिध्यति। तथाहि—अग्निदेवताकपुरोडाशद्रव्यकयागेन फले सम्पादयितव्ये तत्फलं यागोऽपूर्वद्वारैव निष्पादयितुं समर्थः यागस्य भङ्गुरत्वात्। फलजननसामर्थ्यं यागस्य विधिबलादङ्गीकर्तव्यम्। तच्च सामर्थ्यं केवलस्य प्रधानस्य नाङ्गीक्रियते, अङ्गोपकृतस्यैव तस्य सामर्थ्यम्। तथाचाङ्गानां प्रधानगतापूर्वोत्पादकसामर्थ्याधायकत्वं सिध्यति। आग्नेययागीयाङ्गानि आग्नेययागजन्यापूर्वसिद्ध्येऽनुष्ठीयन्ते। एवं सूर्यदेवताकचरुद्रव्यकयागेन फले सम्पादयितव्ये तत्र प्रधानयागोपकारकाणां धर्माणामभावेन तस्य यागस्यापूर्वजननसामर्थ्यं न स्यात्। विधिस्तु तस्य यागस्याग्नेययागवत् फलजनकत्वमवबोधयति। तज्जननाय यागनिष्ठफलोत्पादकसामर्थ्योद्दीपनायाङ्गापेक्षा भवति। तथा चाग्नेयसौर्ययोस्सादृश्यमुन्नीय यथाऽऽग्नेयेनाङ्गोपकृतेनापूर्वं सम्पादितं तथा सौर्येणापीति धर्माणामपूर्वप्रयुक्तत्वेऽतिदेशस्सिध्यति—आग्नेयवत् सौर्येणापूर्वं भावयेदिति।

'गौर्न पदा स्प्रष्टव्यः' इति निर्देशेनेदमुक्तं भवति यत्प्राणित्वेन प्राणिनामेकरूपत्वे सत्यपि गावः, अश्वाः, अजा इत्यवान्तरभेदस्तत्तज्जात्या यथा सिध्यति तथा मानवत्वेन मानवानामेकरूपत्वेऽपि तत्तज्जातिभेदेनावान्तरभेदोऽनिवार्यः। गवां पादस्पर्शे निषिद्धेऽन्येषां प्राणिनां पादस्पर्शो युक्त इत्यर्थो नोन्नेयः, किन्तु गोनिष्ठं प्राशस्त्यमुन्नेयम्, तथैव 'ब्राह्मणो न हन्तव्यः, 'ब्राह्मणाय नावगुरेत्' इत्युक्ते इतरे हन्तव्या इत्यर्थो न परिकल्पनीयः, किन्तु ब्राह्मणगतप्राशस्त्यं प्रत्येतव्यम्। विधेर्निषेधस्य वा क्वचनान्येन विरोधे जाते तत्प्रशमनाय समन्वयात्मिका बुद्धिरास्थेयेति मीमांसकानां सरणिः। 'अपशवो वा अन्ये गोअश्वेभ्यः' इत्युक्ते गवाश्वव्यतिरिक्तेषु पशुत्वनिषेधार्थं वाक्यमिदं प्रवृत्तमिति न निश्चेतव्यम्, किन्तु गवामश्वानाञ्च प्राशस्त्ये तात्पर्यं कल्पनीयम्।

विषयस्यास्य द्रढीकरणायोदाहरणान्तरं सौत्रं विशदयन्ति भाष्यकाराः। 'स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके' (जै० सू० ७.३.२०) इति सूत्रगतं 'यथा पाके' इत्युदाहरणं विशदयन्तो लिखन्ति—**'यथा एक एवायमर्थः पाको नाम। तस्यार्थान्तरे वैरूप्यं भवति। अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य। येनौदनपाको गृहीतो नासावशिक्षित्वा गुडं पक्तुं जानाति' इति।** अत्रायं प्रसङ्गः—सामशब्दस्य संस्कारवाचित्वं न स्वीकरोति पूर्वपक्षी तत्र दोषञ्चोद्भावयति। संस्काराश्च कर्मकाले भवन्ति। साम्नां संस्कारवाचित्वे स संस्कारः कर्मकाल एव कर्तव्यः। सामसंस्कारश्च ऋगक्षराभिव्यञ्जकत्वरूपः। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानरूपाणि स्तोत्राणि कर्मकाले क्रियन्ते, किन्तु 'रथन्तरमुत्तरयोर्गायति' इति विधिना रथन्तरस्योत्तराऋचोर्गानमभ्यस्ता ऋत्विजः कर्तुं शक्नुवन्ति। अभ्यासश्चाकर्मकाले भवति। यद्यकर्मकाले भवति तर्हि संस्कारवाचित्वं साम्नां कथमिव स्यात् ? इति पूर्वपक्षी दोषमुद्भावयति। दोषस्यास्य निवर्तकत्वेन 'यथा पाके' इत्युदाहरणं सूत्रकारैः प्रदर्शितम्। तदिदं विवृण्वन्ति—'यथा एक एवायमर्थः' इत्यादिना भाष्यकाराः। योनिभूतायामृचि समधिगतगानाभ्यासः ऋत्विक्

उत्तरासु ऋक्षु अभ्यासेन विना गातुं न क्षम इति तत्र गानमभ्यस्यति। अभ्यस्तः कर्मकाले गायति। अत्रैव पाकदृष्टान्तः। अनेनेदमुन्नेतव्यं भवति—यद् यन्त्रविज्ञानवेत्तृत्वेन यन्त्रवेत्तॄणामेकरूपत्वेऽपि यन्त्रविशेषप्रयुक्तं वैरूप्यमाश्रित्यैव तत्तत्कर्मणि तस्य तस्य नियोगो भेदेन भवति। नियोगावसरे वैरूप्यमवगत्यैव नियोगः कर्तव्य इति न्यायोऽनेन दृष्टान्तेनेति। न्यायेऽस्मिन्नाश्रीमाणे क्रियमाणानि कार्याणि व्यवस्थया कृतानि भवेयुः। अन्यथा कार्याणां पारिप्लवेन सामाजिकस्थितिः स्थिरा न स्यात्। यो यत्कार्यं जानाति स तत्राधिकारीति न्याय्यः पन्थाः। अनधिकारिणां नियोगेऽनधिकारिणां हस्तक्षेपे वा शासनसूत्रं कथं परिचलेत्? अनुशासनपरिपालनं वा कथं लोकैः क्रियेत? अनुशासनविहीना वा कथमिव नैतिकतां परिपालयेयुः इत्यादीनां विषयाणामवबुबोधयिषया भाष्यकारा आहुः-'येनौदनपाको गृहीतः नासावशिक्षित्वा गुडं पक्तुं जानाति' इति।

'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति वाक्यस्थसौमिकावभृथशब्दो दार्शपूर्णमासिकापांव्युत्सेकरूपेऽवभृथे गुणविधायक इति पूर्वपक्षे कृते तद्व्युदासपरं सूत्रम्-'न भक्तित्वात्' (जै० सू० ७·३·१४) इति। सौमिकावभृथस्य शब्दतस्सादृश्यमादाय सौमिकावभृथ इव दार्शपूर्णमासिकापांव्युत्सेकरूपोऽवभृथः प्रशस्त इत्येवं-परोऽवभृथशब्द इति सिद्धान्तपोषकतया भाष्यकारा उदाहरन्ति—'यथाऽयमाम्रो यज्ञदत्तस्य पुत्र' इति। आम्रस्य यज्ञदत्तस्य सम्बन्धो निर्ज्ञातः पुत्रत्वन्तु न निर्ज्ञातम्, तत्र पुत्र इवाम्र इति ज्ञानं भवति तथा अपांव्युत्सेकस्य दर्शपूर्णमासयोश्च सम्बन्धो नियतः तस्यावभृथत्वं न ज्ञातम्। अतोऽवभृथ इवापांव्युत्सेकः परिगण्यत इति दृष्टान्तदार्ष्टान्तिकयोस्समन्वयः।

अनेन दृष्टान्तेन भाष्यकारास्तात्कालिकवृक्षसमूहपरिपालनप्रकारमुपदिशन्तीव प्रतिभान्ति। यथा हि पिता अशनवसनादिवितरणेन सद्विद्याप्रदानेन च पुत्रं परिपोषयति तथा वृक्षोऽपि समये समये जलसेचनदाहृददानेन च संवर्धनीय इति। वृक्षाणां रोपणेन तत्समये प्रतिकृतिग्रहणयन्त्रेण प्रतिकृतिं गृहीत्वा पत्रेषु प्रकाशनमात्रेण न स्थातव्यमित्यप्युपदिशन्ति। वृक्षाणां रोपणेन पालनेन च ग्रामनगरादीनां शोभाविवर्द्धनेन सह मेघवर्षणजन्यपीडावरोधोऽपि जायत इति वृक्षपालनं वनसंरक्षणञ्चेति महते फलायेति सूचयन्ति।

'प्रणयनन्तु सौमिकमवाच्यं हीतरत्' (जै० सू० ७·३·१९) इति सूत्रे 'द्वयोः प्रणयन्ति' इत्यत्र प्रणयनं सौमिकं ग्राह्यमित्युपपादनावसरे 'तीर्थशब्दवत्' इत्युदाहृत्य तद्विशदयन्ति भाष्यकाराः 'यथा तीर्थशब्दः तीर्थमात्रवचनस्सन् तीर्थविशेषं धर्मसाधनं ब्रूते 'तीर्थयात्रां गत इति'। प्रणयनशब्दस्सौमिकदार्शपूर्णमासिकप्रणयनसाधारणवचनोऽपि चातुर्मास्येषूत्तरवेदेस्सत्वात् सोमेऽपि तत्सत्वात् प्रणयनशब्दस्सौमिकविशेषवचनस्स्वीकर्तव्यः, यथा-तीर्थशब्दस्य सामान्यतीर्थवचनत्वेऽपि 'तीर्थयात्रां गत' इत्यत्र तीर्थविशेषवचनत्वं स्वीक्रियत इति दृष्टान्तदार्ष्टान्तिकयोस्समन्वयः। विशेषस्तु प्रजातन्त्रविधौ प्रतिनिधीनां चयनावसरे प्रजास्सर्वा अपि समानाधिकारवत्यः। चयनानन्तरं प्रतिनिधयोऽधिकारवन्तो भवन्ति। प्रतिनिधयश्च नेतारमेकं चिन्वन्ति। स नेता मन्त्रिणो नियुङ्क्ते। एवञ्च सर्वत्राधिकारित्वेनाधिकारे समानेऽपि अनुशासकत्वेनानुशास्यत्वेन विशेषस्स्थास्यत्येव। अनुशास्याः प्रतिनिधिचयनावसरे तस्मिन् कर्मण्यधिकारिण एवासन् तथापि प्रतिनिधीनामनुशासकत्वेनाधिकारे वैलक्षण्यमस्त्येव। तीर्थशब्दो जलसामान्यवाचकोऽपि तत्तत्क्षेत्रगततीर्थस्य विलक्षणशक्तिमत्वं शास्त्रसिद्धमङ्गीकर्तव्यमेव। प्रजातन्त्रविधावपि पूर्वजैर्नेतृभिः देशकल्याणाय पर्यालोच्य निर्णीतं शास्त्रमस्त्येव। तदिदं शास्त्रमनुवर्तितव्यमेव चयनकर्तृभिः प्रतिनिधीभूय समागतैरधिकारिभिश्च। विषयस्यास्यावबोधनाय 'तीर्थशब्दवत्' इति निर्दिदिशुः शबरस्वामिनः।

अतिदेशे द्रव्यघटितदेवताघटितसादृश्ययोर्द्रव्यघटितसादृश्यस्य प्राबल्यनिरूपणप्रसङ्गे 'गुणत्वेन देवतास्तुतिः' (जै० सू० ८·१·३४) इति सूत्रस्य भाष्ये उदाहरन्ति- **'यथा अमात्येन मे ग्रामो दत्तः' 'सेनापतिना मे ग्रामो दत्तः' इति। न चामात्यस्सेनापतिर्वा ग्रामस्य प्रभवति राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः'** इति। यागस्य द्वे रूपे द्रव्यं देवता च। तत्र देवतोद्देशेन द्रव्यत्यागो यागः। स च 'अग्नय इदं न मम' इति मानसिकत्यागरूपः। द्रव्ये च यजमानस्य स्वत्वं वर्तते। स्वीयं स्वं देवतायै सङ्कल्प्य त्यजति यजमानः। अयमेव यागपदार्थः। अवशिष्टस्सर्वोऽपि क्रियाकलापोऽङ्गम्। यागशरीरे यथा द्रव्यं सन्निहितं न तथा देवतेति द्रव्यमन्तरङ्गं देवता च बहिरङ्गमिति दार्ष्टान्तिके स्थितिः। राज्ञां शासनसमये राज्ञः प्राधान्यम्, अन्ये चोच्चनीचभावेनाधिकारिणोऽमात्यसचिवादयस्सन्ति। देशं राष्ट्रञ्च राजा आत्मीयं मन्यते। स तस्य प्रभुः। तदीयं स्वं तत्र विद्यते। स दातुं विक्रेतुं वा प्रभवति। तथापि दाने विक्रये वा राजा तत्रैवाधिकरोति, यत्र च देशे कस्या अपि प्रजायास्स्वत्वं नास्ति। प्रजाधीनक्षेत्रे राज्ञोऽधिकारे विद्यमानेऽपि प्रजाभ्यः करग्रहणे राजाऽधिकरोति, न तस्य दाने विक्रये वा प्रभुः। येषां यत्र क्षेत्रे स्वत्वं वर्तते ते क्षेत्रविहीनान् नियुज्य कर्षणादिकार्याणि सम्पाद्य प्राप्तस्य धान्यराशेरर्धं नियुक्तेभ्यः प्रददति। नियमाननतिक्रम्य रीतावस्यामवलम्बितायां द्वेषकलहयोरवसरो न भवति। यदा च नियमानामुल्लङ्घनं तदैव जायते द्वेषस्य कलहस्य वावसरः। एतादृशीं नीतिमाश्रित्य प्रजासु गच्छन्तीषु अमात्यस्सेनापतिर्वा प्रजानां नीतिप्रणाल्या तुष्टः क्वचन कस्मैचित् किञ्चिद्ददाति तेन तृप्तो जनो ब्रवीति अमात्येन मे ग्रामो दत्त इति। अमात्यश्च राज्ञे प्रजायाः कार्यातिशयं निवेद्य तदाज्ञां प्राप्यैव क्षेत्रं वा ग्रामं वा ददाति न तु स्वाधिकारमात्रेणेति चिरन्तनी नीतिः।

सेयं नीतिः प्रजाभिरेव परिवर्तनं नीता प्रजातन्त्रे। प्रजाभिः क्रियमाणं तन्त्रं-राष्ट्रप्रशासनरूपं प्रजातन्त्रम्। सर्वाः प्रजा राज्यचालनतन्त्रे प्रवेष्टुं न शक्नुवन्तीति ताः योग्यान् कतिपयान् चित्वा राष्ट्रं चालयितुं नियुञ्जते। तेऽपि सत्रे गृहपतिमिव नेतारमेकं चिन्वन्ति। तस्य पूर्णोऽधिकारः। सोऽपि गृहपतिः ऋत्विज इव मन्त्रिणो नियुङ्क्ते। मन्त्रिणश्च सचिवान्, ते च कार्यालयाध्यक्षान्, तेऽपि कार्यकर्तॄन् नियुञ्जन्ति। अत्र तस्मिंस्तस्मिन् घट्टे नानाधिकारिणः। अधिकारिणश्च वयमेव शासका इति निर्द्धार्य कार्यमाचरन्तो भवन्ति। तेन जनतायां सन्तुष्टा अपि भवन्त्यसन्तुष्टा अपि। असन्तुष्टा न्यायपालिकामाश्रयन्ते। नीतिपतयश्च यथाविधानं निर्णयं गृह्णन्ति। असन्तुष्टानां पक्षे न्यायश्चेदपरे संसदि विधानसभायां वा विधायकानां साहाय्येन विधानस्यैव स्वमतानुसारेण परिवर्तनाय चेष्टन्ते। परिवर्तितविधानानुसारेण नीतिपतयो निर्णयं ददति। एवं विधानपरिवर्तनपरम्परायां सत्यां शासनसूत्रं शिथिलं कथं न स्यात्? गृहाणां स्तम्भेषु विचलितेषु पतनेन विना गृहाः किं कुर्युः? प्रजातन्त्रे सर्वाः प्रजास्समाना एव, तथाप्यनुशासनविहीना यदि भवेयुः प्रजातन्त्रं फलीभूतं कथमिव स्यात्? दण्डनीतिं प्रबलां विधाय नानुशासनभङ्गो वारयितुं शक्यते। प्रजातन्त्रे चयनं न सुनिश्चितम्, परिवर्तनशीलं तत्। अद्य शासको दण्डको भवति, श्व एव स दण्ड्यो भवितुमर्हति शासनपरिवर्तनेन। कथमियमनर्थपरम्परा शाम्यतु? तत्तत्पदेषु नियुक्तैरधिकारिभिस्स्वाधिकारसीमानुल्लङ्घनेनाधिकाराः प्रयोक्तव्याः। श्रुतिलिङ्गन्यायेनोत्तरोत्तराधिकारिभिः पूर्वपूर्वाधिकारिसापेक्षैर्भवितव्यम्। स्वस्वाधिकारा मर्यादाबद्धा इति बोद्धव्यम्। प्रजाभिरपि प्रतिनिधीनां चयनमात्रेऽधिकारइत्यवगत्य चयनानन्तरमधिकारिणामनुशाशनपालने मतिर्विधेया। अमात्या अपि प्रजाभिस्स्तुता अपि राजान एव वयमिति न मन्येरन्। एवं सति पूर्वोक्तानर्थपरम्परातो राष्ट्रं मुक्तं स्यादित्यभिप्रेत्य 'गुणत्वेन देवतास्तुतिः' इति सूत्रकाराः 'गुणभूते स्तुतिबुध्या दातृत्ववादः' इति च भाष्यकारा वदन्ति।

## भट्टपादीया टुप्टीका

प्रकृतश्रौतविषयस्पष्टीकरणाय न्याय्यं पन्थानमाश्रित्य लोकानां वर्तनाय चिरन्तनात्कालात् परिप्राप्त-परम्परापरिज्ञानाय च नैकविधान्युदाहरणानि प्रदर्शयतां भाष्यकाराणां भाष्यस्य गाम्भीर्यं प्रकटयितुं भट्टपादाः तर्कपादस्य श्लोकवार्तिकम् अर्थवादाधिकरणात् तृतीयाध्यायपर्यन्तं तन्त्रवार्तिकम् तदुपरि द्वादशाध्यायपर्यन्तं टुप्टीकेति च व्याख्यां वितेनिरे। इमास्तिस्रोऽपि व्याख्या व्याख्यासापेक्षा इति पार्थसारथिमिश्र-भट्टसोमेश्वर-भवदेवप्रभृतयोऽनेके विपुलां व्याख्यां प्रणिन्युः। तत्र भट्टपादा विचारका वस्तुतत्त्वपरीक्षका विषयचिन्तकाश्च भाष्यव्याख्यानावसरे भाष्यसमालोचकाश्च। क्वचिद्भाष्यं व्याख्यान्ति क्वचिच्च समालोचयन्ति स्वमतेन च निर्णीतमर्थं प्रदर्शयन्ति। भाष्यसमालोचनमिदं भट्टपादानां भाष्यगाम्भीर्यविद्योतकत्वेन वा मीमांसाशास्त्रस्य परीक्षाशास्त्रत्वद्योतकत्वेन वा प्रवृत्तिरिति स्फोरयति। अथवा विषयानुसन्धानप्रक्रियामवद्योतयति। परीक्षा हि निष्पक्षपातेन परितो दृष्टेः प्रसारणं कथ्यते। मीमांसाशास्त्रं परितो दृष्टिं निपात्य गमनं शिक्षयति। अत एव भट्टपादा भाष्यं व्याचक्षाणा भाष्यगतं न्यूनाधिकभावं समालोचयन्ति। तत्र द्वित्राणि स्थलानि परिशीलयामः—

सप्तमाध्यायारम्भे भाष्यकाराः पूर्वषट्केनोत्तरषट्कस्य सङ्गतिं प्रदर्शयन्तो लिखन्ति—**पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता। उत्तरेणेदानीमविहितेति-कर्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यते'** इति। तदिदं भाष्यं वार्तिककारा 'एतदयुक्तम्' इत्यादिनाक्षिप्य भङ्ग्यन्तरेण सङ्गतिं प्रदर्शयन्ति। तृतीयपञ्चमचतुर्थे सर्वपृष्ठेष्ट्यधिकरणे 'य इन्द्रियकामो वीर्यकामस्स्यात् तमेतया सर्वपृष्ठया याजयेत्' इति विहितायां सर्वपृष्ठेष्टौ स्विष्टकृदिडादिशेषकार्याणि निर्वर्तयितुं पृथक्पृथगवदानानि किं कर्तव्यानि? उत सकृत्? इति विचारः प्रवर्तितः। अत्रायं सन्दर्भः-सर्वपृष्ठेष्टौ द्वादशसु कपालेषु संस्कृत एकः पुरोडाशः, इन्द्रो देवता। सः रथन्तर-बृहद्-वैराज-शाक्वर-रैवताख्यानां साम्नां सम्बन्धेन विशेष्यमाणस्वरूपेणैकोऽपि षोढा भिद्यत इति देवताभेदेन प्रदानभेदेन च तत्र कर्मभेदस्स्वीकृतः। कर्मभेदाच्च प्रतिकर्मातिदेशोऽपि भिद्यते। इयमिष्टिः दर्शपूर्णमासविकृतिः। प्रधानयागानुष्ठानानन्तरं प्रतिपत्तिकर्मानुष्ठानवेलायां सन्देहो जायते-किं स्विष्टकृदाद्यवदानं भेदेन कर्तव्यम्? उत सकृदिति? शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासम्भवात् सकृदेवावदानमिति सिद्धान्तितम्। सोऽयं विचारः पूर्वषट्के वृत्तः। एवं तृतीयाष्टमविंशाधिकरणे श्येनयागे 'दृतिनवनीतमाज्यं भवति' इति वाक्यमुदाहृत्य विचारः प्रवर्तितः। श्येनयागश्च सोमयागविकृतिः। एवञ्च पूर्वषट्केऽविहितेतिकर्तव्यताकानां कर्मणां विचारस्य प्रवर्तितत्वात्कथं भाष्यकारैः पूर्वषट्के प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तितेत्युच्यत इत्याक्षेपः। अत्र वार्तिककारास्सङ्गतिमेवं प्रतिपादयन्ति-'प्रकृतौ विकृतौ चोपदेशश्चिन्तितः पूर्वषट्के, उत्तरषट्के चातिदेश इति। अर्थात् तदित्थं कर्तव्यमिति पूर्वषट्के, तद्वदिदं कर्तव्यमित्युत्तरषट्के इति निष्कर्षः। तेन हेतुहेतुमद्भावस्सङ्गतिरिति निर्गलति।

अत्र भाष्यवार्तिककारयोः कथने को भेदः? इति विमृशाम :—भाष्यपङ्क्तौ 'प्रत्यक्षविहित धर्माणाम्' इति पदमस्ति। तस्य प्रत्यक्षापदिष्टधर्माणामित्यर्थो भवितुमर्हति, 'दध्नोऽङ्गत्वं विधीयते' 'दध्नोऽङ्गत्वमुपदिश्यते' इति समानार्थकतया विहितोपदेशशब्दयोः प्रयोगदर्शनात्। विधानमुपदेशो वा प्रत्यक्षवचनेन यथा भवति, तथाऽनुमितवचनेनापि भवितुमर्हति। इतिकर्तव्यतायाः पूरणेन विना कापि भावना निराकाङ्क्षा न भवति। विकृतिभावनाया धर्माकाङ्क्षायाम् अनुमितवचनेनोपदेशो भवत्येव। वार्तिककाराणां वचनम्—'प्रकृतौ विकृतौ चोपदेशश्चिन्तितः' इति भाष्यमतानुकूलमेव। भाष्यकारैः **'विहित'** इति पदं प्रयुक्तम्, वार्तिककारैश्च 'उपदेश' पदं प्रयुक्तम्। भाष्योपात्त 'प्रत्यक्ष' पदमुपलक्षकम् अनुमित-

वचनस्य। संशयभाष्याध्ययनेनायमर्थः प्रतीयते। तथाहि संशयभाष्यम्—**'तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्मास्ते सर्वकर्मसु विहिता भवन्ति, ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्मवन्त उक्तास्तथा कर्तव्याश्चेति नार्थ उत्तरेण षट्केन। अथ ये यस्य प्रकरण उच्यन्ते ते तत्रैवोक्ता भवन्ति, ततोऽधर्मकाण्यैन्द्राग्नादीनीति तेषु चिन्ता भवति किमेषां धर्मास्सन्ति उत नेति। यदा च सन्ति तदा के? कियन्तो वा? कथञ्चानुष्ठातव्या इति। तदर्थमुत्तरषट्कः प्रवर्तनीयः' इति।**

विकृतिषु धर्मास्सन्तीति सिद्ध एव के ते? कियन्तः? कथमनुष्ठातव्याः? इत्युत्तरषट्कसम्बन्धी विचारो भवितुमर्हति। विकृतिषु धर्मास्सन्तीति कथं ज्ञायताम् इति जिज्ञासायामनुमितवचनोपदेशेनेति वक्तव्यं भवति। एवं क्लेशेन नयनापेक्षया 'प्रकृतौ विकृतौ चोपदेशश्चिन्तितः' इति वार्तिकम्। सर्वत्र भट्टपादानामियं शैली-यदाक्षिप्य समाधानं नाम। भाष्यगतगाम्भीर्यद्योतनाय भट्टपादास्तत्र तत्रेमां शैलीमवलम्बन्ते।

दर्शपूर्णमासप्रकरणे समाम्नातानां धर्माणां सर्वयागार्थत्वम् उत यथाप्रकरणं तेषां व्यवस्थेति विचारप्रसङ्गे 'उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात्' (७·१·२) इति सूत्रं व्याचक्षाणाः शबरस्वामिनो लिखन्ति-'सर्वाण्यपूर्वाणि यजिमन्ति। यजिसंयोगेन च **धर्माश्शिष्यन्ते-यजेरेत्युक्त्वोक्ताः। ते यजौ न सम्भवन्ति, तस्या फलत्वात् तत्रासम्भवन्तस्तत्सम्बद्धेष्वपूर्वेषु विज्ञायन्ते। स च यजिसम्बन्धः सर्वेषामपूर्वाणां तुल्यः। तस्मात्सर्वार्था भवन्ति'** इति।

अत्र पूर्वपक्षी धर्माणां सर्वार्थत्वं व्यवस्थापयितुमभिलषति, सिद्धान्ती च यथाप्रकरणं तेषां व्यवस्थेति साधयति। अस्यां स्थितौ पूर्वपक्षिणो मतप्रकाशनाय प्रवृत्तोऽयं भाष्यसन्दर्भः। अयमाशयो भाष्यसन्दर्भस्य-उत्पत्त्यधिकारविधिस्थलेषु सर्वत्र भावनायाः करणं धात्वर्थ इति भावार्थाधिकरणन्यायसिद्धम्। धात्वर्थाश्च यागदानहोमरूपा नैकविधाः। तत्र धात्वर्थस्यानुग्राहकत्वेन भावना-इतिकर्तव्यतामाकाङ्क्षति। सा चेतिकर्तव्यता करणं धात्वर्थं फलजननसमर्थं यथा स्यात्तथाऽनुगृह्णाति। तया चानुगृहीतोऽपि धात्वर्थः स्वस्य नश्वरत्वेना पूर्वमुत्पादयति। विनापूर्वोत्पादनेन धात्वर्थः फलजननेऽक्षमः। तथा च धात्वर्थापूर्वयोर्नान्तरीयकोऽविनाभावः। यथा यागोऽपूर्वमुत्पादयति, तथा होमदानादयोऽप्युत्पादयन्ति। तदिदम् 'उत्पत्त्यर्थाविभागात्' इति सूत्रांशम् 'उत्पत्तिरिति यजिं ब्रूमः, अपूर्वस्योत्पादनात्। अर्थ इत्यपूर्वं ब्रूमः, यजिप्रयोजनत्वात् तयोरविभागः' इति विवृण्वानाश्शबरस्वामिनस्साधयन्ति-**'सर्वाण्यपूर्वाणि यजिमन्ति'** इति।

तदिदं भाष्यं **'सर्वाण्यपूर्वाणि यजिमन्ति'** इत्यादिः, **'स च यजिसम्बन्धः सर्वापूर्वाणां तुल्यः' इत्येवमन्तोऽयुक्तो ग्रन्थः'** इत्यनूद्य भट्टपादा आक्षिपन्ति। एवमाक्षिपतां तेषां भाष्यमिदमसङ्गतार्थमित्यत्र न तात्पर्यम्। शब्दान्तराधिकरणे यजति ददाति जुहोत्यादीनां शब्दान्तरात् कर्मभेदस्स्थापितः। न केवलं कर्मणामेव भेदः, अपितु-अपूर्वभावनानामपि भेदः शास्त्रकारैस्साधितः। एवञ्च विधीयमानास्सर्व एव धात्वर्था अपूर्वेणाविनाभूताः। तत्र यजिपदोल्लेखनं भाष्यकारस्य होमादीनामुपलक्षकत्वेन नेयम्। तथा च यथा यागाऽपूर्वेणाविनाभूतस्तथा होमादिरपीत्यत्र तात्पर्यं कल्पनीयम्। अत एव भट्टपादा भाष्यस्यैवमुपपत्ति वर्णयन्ति--**'यदपूर्वं नाम न पदार्थान्तरम् किन्तु यागस्यैव शक्तिरपूर्वमुच्यते। शक्तिमति च क्रियमाणा नाश्नुते कृता भवन्ति'** इति। शक्तिमान् यागः। तत्र क्रियमाणा अवघातादिधर्मा अश्नुते कृता न भवन्ति। शक्ति-शक्तिमतोरत्यन्तभेदाभावात्। तस्माद् यजिभावनोद्देशेन विधीयमाना धर्मास्सर्वयागार्था इति सिध्यति। एवञ्च भाष्याशयस्य विशदीकरणायैव 'अयुक्तोऽयं ग्रन्थः' 'इत्यप्ययुक्तम्' 'एतदप्ययुक्तम्' इत्येवं भट्टपादास्तत्र तत्र लिखन्ति।

**वार्तिकाभरणशैली**

टुप्टीका च सङ्क्षिप्ताक्षरैर्गुम्फिता दुरवगाहा। क्वचिन्नैव बोद्धुं शक्यते भट्टपादाः किं वक्तुकामा इति। तेषामाशयस्य विशदीकरणाय श्रीपार्थसारथिमिश्राः 'तन्त्ररत्नम्' इति तदनन्तरं पञ्चषेषु शतकेषु व्यतीतेषु निखिलक्रतुयष्टारः श्रीवेङ्कटेश्वरदीक्षिताश्च 'वार्तिकाभरणम्' इति टुप्टीकाया व्याख्यां प्रणीतवन्तः। वार्तिकाभरणे तत्र तत्र श्रीपार्थसारथिमिश्रान् समर्थयन्ते, क्वचिच्च समालोचयन्ति। समालोचनावसरे वार्तिकाभरणकाराः तान् 'उपाध्यायैः' 'उपाध्यायाः' इति गौरवावहं शब्दं प्रयुञ्जानाः तेषु स्वस्य विद्यमानमादरभावमवद्योतयन्ति।

तथाहि—**'तस्मादन्यथा वर्ण्यते'** इति वार्तिकग्रन्थं तन्त्ररत्ने पार्थसारथिमिश्राः 'सूत्रमन्यथा वर्ण्यते' इति व्याख्यान्ति। तत्र वार्तिकाभरणकृतः **'तदनुपपन्नम्'** (पृ० २०२) इति खण्डयन्ति। अयमत्र सन्दर्भः—फलसाधनत्वेन विहितश्रौतस्मार्तकर्मणामितिकर्तव्यतापेक्षा जायते। करणगतफलजननशक्त्युद्दीपनाय इतिकर्तव्यताः—अङ्गान्यनुष्ठीयन्ते। तानि च क्वचित्प्रत्यक्षोपदिष्टानि क्वचिच्च नोपदिष्टानि। यत्र नोपदिष्टानि तत्र भावनायाः तदाकाङ्क्षास्त्येव। तदर्थं प्रत्यक्षविहितेतिकर्तव्यताककर्मभ्योऽङ्गान्यतिदेशेन नीयन्ते। अस्यां स्थितौ सन्देह उदेति-किं तान्यङ्गानि लौकिकानि-स्मार्तानि ग्राह्याणि? उत वैदिकानि? इति। वैदिकान्येव ग्राह्याणि न लौकिकानीति सिद्धान्ते सति पूर्वपक्षी **'अपि वान्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः'** (जै० सू० ७·४·५) इति सूत्रेण सिद्धान्तिद्वारा प्रदर्शितं लिङ्गं न साधकमिति प्रत्यवतिष्ठते। सिद्धान्ती विकृतियागेषु प्राकृतप्रयाजादिदर्शनबलेन वैदिक्या इतिकर्तव्यताया ग्रहणं साधयति। तथाहि—सौर्ययागे 'प्रयाजे प्रयाजे कृष्णलं जुहोति' पितृयज्ञे 'न होतारं वृणीते' ऐन्द्राबार्हस्पत्ये 'अर्धं बर्हिषो लुनाति अर्धं न' इति श्रुतानि प्रयाजादीनि प्रकृतौ दर्शपूर्णमासयोर्विद्यमानानि वैदिकानि। तान्येव विकृतौ श्रूयन्त इति वैदिक्या एवेतिकर्तव्यताया ग्रहणमुचितमिति सिद्धान्तिनो युक्तिः। अत्र पूर्वपक्षी—वाक्यावबोधितलिङ्गानां दर्शनमात्रेण वैदिक्या इतिकर्तव्यताया ग्रहणमिति निश्चेतुं न शक्यते, किन्त्वत्र **न्यायपूर्वकत्वं** वचनानां साधनीयम्। न्यायश्च विधानेन ज्ञातुं शक्यः। विधानञ्च प्रकृतौ दृश्यते। तत्र विहिताया इतिकर्तव्यताया नियन्त्रणं प्रकरणं करोति अर्थात् प्रकृतिभावनाया आकाङ्क्षापूरणायेमान्यङ्गानीति। विकृतौ च तेषां श्रवणं नित्यानुवादत्वेनाप्युपपद्यते। नित्यानुवादत्वे तेषामानर्थक्यमपि स्वीकरोति। स्वाध्यायाध्ययनविधिगृहीतत्वादानर्थक्यकथनं नोचितमित्यत्र शबरस्वामिनः 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति वाक्यस्य पूर्वपक्षे प्रयाजविशिष्टकृष्णलहोमविधायकत्वेनानर्थक्यं परिहरन्ति। अत्र भट्टपादाः 'प्रयाजे प्रयाजे' इति वाक्यस्य प्रकारान्तरेणोपपत्तिं प्रदर्शयन्तो लिखन्ति—**'तस्मादन्यथा वर्ण्यते'** इति। तदिदं भट्टपादवाक्यं पार्थसारथिमिश्राः तन्त्ररत्ने **'सूत्रमन्यथा वर्ण्यते'** इति व्याचख्युः। अत्र वार्तिकाभरणकृतां कथनं **'तदनुपपन्नमिति**। (पृ० २०२) सूत्रस्यान्यथावर्णनं न कुर्वन्ति, किन्तु प्रयाजे प्रयाजे इति वाक्यमेव भट्टपादा नयन्ति, इति वार्तिकाभरणकृतः। अनेनेदं ज्ञायते—यद्वार्तिकाभरणकृतः पार्थसारथिमिश्राणां ग्रन्थानक्षरशोऽधीत्य टुप्टीकां व्याख्यान्तीति।

अष्टमप्रथमाधिकरणे तन्त्ररत्ने यथावार्तिकं संशयो व्याख्यातः पार्थसारथिमिश्रैः। शास्त्रदीपिकायान्तु तैर्यद्विवृतं तत्र न्यूनतामुद्भावयन्तो वार्तिकाभरणकृतो लिखन्ति—**'तस्माच्छास्त्रदीपिकाग्रन्थस्त्वनास्थामूलक इति द्रष्टव्यम्'** (पृ० २४०) इति।

अत्रायं विषयविवेकः—शास्त्रदीपिकायामष्टमप्रथमाधिकरणे 'किमेकस्मिन् कर्मणि सर्वधर्मातिदेशः? उत न?' इति संशयं निर्दिश्य, पार्थसारथिमिश्राः 'ननु विध्यन्ताधिकरण एव' (७.४.१) इत्यादिना

लौकिकवैदिकधर्मजातानां समुच्चयमाशङ्क्य 'मिथो विप्रतिषेधात्' इति सूत्रेण शङ्का परिहृता। अतः 'तेन गतमेतत्' इति निर्दिश्य, 'सत्यम्' इत्यादिना ग्रन्थेन विध्यन्ताधिकरणे समुच्चयो निराकृतः, अस्मिन्नधिकरणे विकल्पेन प्राप्तिरिति पूर्वपक्षो निराक्रियत इति वदन्ति। अत्र भाष्यकारा विध्यन्ताधिरणे लौकिकवैदिकेति-कर्तव्यता समुच्चयेन प्राप्नोतीति पूर्वपक्षं न कृतवन्तः, अस्मिंश्चाधिकरणे वार्तिककारा अनियमेन सर्वधर्म प्राप्तिं पूर्वपक्षयन्ति। सति चैवं 'तेन गतमेतत्' इति कथमुपपद्यत इत्यतो हेतोर्वार्तिकाभरणकृतो वदन्ति 'अनास्थामूलक' इति।

वार्तिकाभरणकृतः पार्थसारथिमिश्रकृतेः समालोचन एव बुद्धिं न प्रसारयन्ति। तत्र तत्रादरेण तेषां सम्मतिं स्वमतपरिपोषणाय प्रदर्शयन्ति। परीक्षकाः खलु मीमांसकाः। परीक्षावसरे क्वचिन्न्यूनताया अपि स्फुरणं भवत्येव। तेन हेयबुद्धिर्न विधेयेति श्रीदीक्षिता बोधयन्तीव तेषां लेखनशैल्या प्रतीयते। भट्टपादाः तत्र तत्र सुगमत्वात् विचारणीयविषयविशेषाभावाच्च कानिचानाधिकरणानि न व्याख्यान्ति। 'तानि वयं वर्णयामः' इति निर्दिश्य श्रीदीक्षिता अधिकरणस्वरूपं प्रदर्शयन्ति। तत्राष्टमप्रथमचतुर्थाधिरणवर्णनावसरे विकृतीष्टिषु किं सौमिकदार्शपूर्णमासिकविध्यन्तयोरन्यतरः प्रवर्तते? उत दार्शपौर्णमासिक एव? इति भाष्यकार-सन्देहोऽनुपपन्नः, 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' इति साप्तमिकाधिकरणे यस्य लिङ्गं यत्र वर्तते तस्य विध्यन्तस्तत्र प्रवर्तत इत्युक्तत्वात्, इष्टिषु सादृश्यापादकसौमिकलिङ्गाभावात् दार्शपौर्णमासिको वा सौमिको वेति विकल्पेन पूर्वपक्षोत्थितेरसम्भवाच्च इत्युक्त्वा पूर्वोक्तस्यैवायं प्रपञ्चः प्रस्तूयत इत्यधिकरणं रचयन्ति। अत्र च मिश्राणां वाक्यं प्रमाणयन्ति—'अत एव पार्थसारथ्युपाध्यायैः शास्त्रदीपिकायां 'यस्य लिङ्गमित्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम्' (२५० पृ०) इति।

सौर्येष्टौ दार्शपौर्णमासिकधर्माः प्रवर्तन्त इति प्रागभिहितम्। दर्शपूर्णमासयोस्सन्ति षट् प्रधान-यागाः। तेषु कस्य विध्यन्तः प्रवर्तत इति विशेषविचारः प्रवर्तितोऽष्टमप्रथमषोडशाधिकरणे। किं यस्य कस्यचिद्यागस्य विध्यन्तो ग्राह्यः? उताग्नेयस्य? इति विचारशरीरम्। अग्नीषोमीयपुरोडाशस्य द्विदेवताकत्वम्, उपांशुयाजस्याज्यद्रव्यकत्वम् सान्नाय्यस्य दधिपयोद्रव्यकत्वमिति द्रव्यदेवताघटितसादृश्यस्य सौर्येऽभावादाग्नेयेन सह सौर्यस्य तदुभयघटितसादृश्यस्य सत्त्वादाग्नेयविध्यन्त एव प्रवर्तत इति सिद्धान्ते सति पूर्वपक्षी शङ्कते—सूर्यो देवता अस्येति सौर्यः, अग्निर्देवता अस्येत्याग्नेय इति तद्धितेनैकदेवताकत्व-प्रतीतेरुभयोस्सादृश्यमिति सिद्धान्तिनस्तवाशयः, किन्तु अग्नी देवते अस्य अग्नयो देवता अस्येति द्विवचन-बहुवचनान्तादपि तद्धितोत्पत्तिसम्भवेनाग्नेयस्यैकदेवताकत्वानिर्धारणात् कथमाग्नेयेन सह सादृश्यं सौर्यस्येति। अस्याः शङ्कायाः उत्तरम्—द्विवचनबहुवचनान्तयोस्तद्धितवृत्तिः तत्रैव भवति यत्र प्रमाणमस्ति। यत्र च तादृशं प्रमाणं नोपलभ्यते तत्रैकवचनान्तस्यैव तद्धितवृत्तिः प्रातिपादिकार्थानुपपत्त्याऽङ्गीक्रियत इति। अत्र पार्थसारथिमिश्राणामुक्तिं प्रमाणयन्ति—'उक्तञ्च तन्त्ररत्ने पार्थसारथ्युपाध्यायैः 'यत्र प्रमाणमस्ति तत्रैव द्विवचनबहुवचनान्तयोर्वृत्तिः, तदभावे तु प्रातिपदिकानुपपत्त्याक्षिप्तमेकवचनमेवावतिष्ठते' इति। यद्यपि प्राति-पादिकानुपपत्तिः द्विवचनबहुचनाश्रयणेनापि परिहर्तुं शक्या, तथापि प्रथमोपस्थितमेकवचनं परित्यज्य द्विवचन-बहुवचनयोराश्रयणे प्रमाणाभावादेकवचनमेवाश्रयणीयम्। 'आग्नेय' इत्यत्रैकवचनाश्रयणे वाक्यशेषं प्रमाणं प्रदर्श्य वार्तिकाभरणकृतः पार्थसारथिमते प्राप्तं कञ्चन विरोधमाशङ्क्य परिहरन्ति—पार्थसारथिमिश्राः तन्त्ररत्ने तद्धितेन देवताभिधानम् निर्वपतिशब्दः प्रयाजदर्शनञ्चेति लिङ्गं प्रदर्शयन्ति। तत्र प्रयाजदर्शनरूपलिङ्गस्य न धर्मप्रापकत्वं किन्तूपोद्बलकत्वं विध्यन्ताधिकरण एवं निरूपितत्वादित्युक्तवन्तः। तथा च विरोध इत्याशङ्क्य

**'अत्र प्रयाजदर्शनस्योपमानविधया निर्वापादिलिङ्गवद् धर्मप्रापकत्वसम्भवेन विरोधाभावात्'** इति परिहृतवन्तः। (३० पृ०)। अनया विचारशैल्या प्रतिभाति यद् दीक्षितानां मिश्रेषु महानादरभावो वर्तत इति।

## व्याख्याकौशलं श्रीदीक्षितानाम्

सप्तमप्रथमाधिकरणसंशयशरीरे भाष्यकारैः-किं यजिप्रयुक्ता धर्माः? उतापूर्वप्रयुक्ताः? इति संशयः प्रवर्तितः। तत्र भट्टपादा भाष्यं विवृण्वाना **'यजिप्रयुक्ता धर्माः कथम्?** इति प्रश्नमवतार्य **'तत्र केचिद्वर्णयन्ति-प्रकरणाम्नानानुमितेन वाक्येन सम्बन्धः। एतदपरे दूषयन्ति-यः फले चोद्यते स एव कथम्भावाकाङ्क्षी धर्मैस्सम्बध्यते। स च विशेषाकाङ्क्षः तस्मादन्यस्मिन् विशेषान्तरे कुतो धर्मप्राप्तिः'** इत्यादि लिखन्ति।

सन्दर्भस्यायं विवेकः-'यजेत स्वर्गकामः' इत्यादिविधिस्थलेषु विधिस्तावत्पुरुषं प्रवर्तयति। पुरुषप्रवृत्तिरेव विधिभावनायां-शाब्दीभावनायां साध्यत्वेनान्वेति। सैवार्थीभावनेति कथ्यते। सा चाख्यातवाच्या। तस्यास्तिस्र आकाङ्क्षाः-किं केन कथमिति। किमाकाङ्क्षायां वाक्योपात्तं फलम्, केनेति करणाकाङ्क्षायामेकपदोपात्तधात्वर्थः कथमाकाङ्क्षायां प्रकारणाधीताः क्रियारूपाः प्रयाजादयोऽन्वयं प्राप्नुवन्ति। प्रयाजादयो भावनायामन्वयं प्राप्य किमुपकुर्युः। उपकारकरूपेण तेषामन्वयो भवति। प्रवृतिं प्रति ते कीदृशमुपकारं जनयेयुः? अत आर्थीभावना स्वाकाङ्क्षापूरकत्वेन समागतान् प्रयाजादीन् पदार्थान् स्वसाधनीभूतयागमुपकर्तुं प्रेषयति। आर्थीभावनायास्साधनं-करणं धात्वर्थः। तन्निष्ठं साधनत्वञ्च स्वभाव्यनिर्वर्तकत्वरूपम्। स्वम् आर्थीभावना प्रवृत्तिः, तस्यास्साध्यं स्वर्गादिः फलम्, तन्निर्वर्तकत्वं याग इति तदुपकारकत्वं प्रयाजादीनां भवितुमर्हति। प्रवृत्तिस्तु स्वर्गादिफललाभाय पुरुषस्य जायते। पुरुषः फलप्राप्तये साधनमपेक्षते। न ह्यपेक्षामात्रेण फललाभः। तदर्थं तेन किञ्चित्कर्तव्यम्। किं कर्तव्यमित्युपदिशति वेदः-'यजेत स्वर्गकामः' इति। तथा यागः कर्तव्यः, येन स्वर्गप्राप्तिर्भवेत्। तत्र भावना स्वेतिकर्तव्यताकाङ्क्षापूरकत्वेन समागतान् प्रयाजादीन् स्वस्मिन् करणत्वेनान्वितं यागमुपकर्तुं प्रेषयति यतो हि स्वस्मिन् करणत्वेनान्वितो यागः 'नानुपकृतं करणं भवति' इति न्यायेन कैरप्यनुपकृतः फलं साधयितुं न क्षमते। अतः प्रयाजादयो भवन्तो यागमुपकुर्वन्त्विति भावना तान् प्रेषयति। प्रयाजादीननुष्ठाय यागे कृते पुरुषः फलभाग्भवति। अत्रेयं जिज्ञासोदेति-प्रयाजादिधर्माणां प्रयोजकः-अनुष्ठापकः क इति। यदि यागोऽनुष्ठापकः प्रयाजादीनां तर्हि यागं प्रति प्रयाजादिभिरङ्गैर्भवितव्यम्। अङ्गत्वे सिद्धे तदनुष्ठानाय यागोऽङ्गी प्रयोजकस्सिध्यति। प्रयाजादीनामङ्गत्वे सति तैर्यागं भावयेत्, यागेन फलम् इत्येवं यागे प्रयाजनिरूपितोद्देश्यत्वानुवाद्यत्वप्राधान्यानि, फलनिरूपितविधेयत्वोपादेयत्वगुणत्वानि भवेयुः। तथासति वाक्यभेदः। अपि च प्रयाजादिनिष्ठाङ्गताग्राहकं प्रमाणं किमिति प्रश्नोऽपि जायते। तदिदं सर्वं मनसि निधाय भट्टपादाः पृच्छन्ति--**यजिप्रयुक्ता धर्माः कथम्?** इति। यागविधायकं वाक्यम् 'यजेत स्वर्गकामः' इति प्रयाजादिविधायकानि च वाक्यानि 'समिधो यजति' इत्यादीनि। अत्र प्रयाजादिनिष्ठाङ्गताग्राहकप्रमाणेषु श्रुतिलिङ्गवाक्यानामभावात् प्रकरणेन तद्वक्तव्यम्। प्रकरणञ्चोभयाकाङ्क्षारूपम्। प्रयाजादीनां किम्भावाकाङ्क्षायां विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलं परिकल्प्याकाङ्क्षा शमयितुं शम्यते। शङ्काया अस्याः परिहाराय भट्टपादाः 'केचित्' इति 'अपरे' इति च मतद्वयं प्रदर्शितवन्तः, तदौचित्यानौचित्यमपि विचारितवन्तः।

अत्र श्रीवेङ्कटेश्वरदीक्षिता मतद्वयं भाष्यानुसारि-तदननुसारीति विभज्य विशदयन्ति। तस्यायं सारः-भाष्याननुसारिणो धर्माणां प्रयाजादीनां 'यजेत स्वर्गकामः' इति वाक्यविहितयागेन सम्बन्धम्-अङ्गत्वरूपं प्रकरणाम्नानानुमितेनवाक्येन प्रमाणेन कल्पयन्ति। ननु प्रयाजादिनिष्ठाङ्गताग्राहकं वाक्यं

प्रकरणपाठान्यथानुपपत्त्या यदि कल्प्यते तर्हि दर्शपूर्णमासयागार्थत्वमेव प्रयाजानां स्यात् न सर्वार्थत्वमिति चेदुच्यते—'यजेत स्वर्गकामः' इति वाक्यविहितयागोद्देशेन प्रयाजादिषु विधीयमानेषु प्रयाजादिभिः यागं भावयेदिति यागस्योद्देश्यत्वात् तद्गतविशेषणस्य दर्शपूर्णमासपदस्य ग्रहैकत्वन्यायेनाविवक्षितत्वात् सर्वार्थत्व-स्वीकारे धर्माणां न कापि हानिः। तथा च—अन्वाधानप्रभृति ब्राह्मणतर्पणान्ता ये पदार्थास्समाम्नातास्तैरुपकृत्य यागं कुर्यादिति निर्गलति। तत्र यागत्वेन यागानामेकरूपत्वात् प्रयाजादीनां सर्वार्थत्वमुपदेशेनैव प्राप्तिसम्भ-वादतिदेशो न सिध्यति। इदं भाष्याननुसारिणां कथनम्।

भाष्यानुसारिणस्तु—स्वर्गादिफलोद्देशेन विधीयमानो यागः स्वस्य फलसम्पादकत्वसामर्थ्यसिद्धये कथम्भावाकाङ्क्षी सन् धर्मैस्सम्बध्यते। तादृशफलोद्देशेन विधीयमानो यागो दर्शपूर्णमासाख्यः, 'दर्शपूर्णमासा-भ्याम्' इति वाक्येन विहितत्वात्। स चाख्यातोपात्तभावनायां भावार्थाधिकरणन्यायेन करणम्। यद्विधेयं तत्करणं भवति। विधेयगतं विशेषणं विवक्षितं भवति पश्वेकत्वन्यायेन। तथा च दर्शपूर्णमासाख्येन यागेन स्वर्गं सम्पादयेदिति पर्यवस्यति। तत्र 'नानुपकृतं करणं भवति' इति न्यायेन करणस्य यागस्योपकारकपदार्था-पेक्षायां, प्रयाजादिधर्माणामुपकार्यपेक्षायां मिथोऽङ्गाङ्गिभावस्सिध्यति। एवं प्रयाजादिषु दर्शपूर्णमासयोर्नियन्त्रितेषु सौर्यादिषु विकृतिषूपदेशेन धर्मप्राप्तिप्रसक्तिर्नास्तीत्यतिदेश आरब्धव्यः। तस्माद्धर्माणां पारिप्लवपूर्वपक्षकरणम-युक्तमिति। धर्माणामुपदेशेनैव सर्वयागेषु प्राप्तिमङ्गीकुर्वाणा भाष्याननुसारिणः प्रयाजादिनिष्ठाङ्गताग्राहकत्वे-नानुमितवाक्यमुपस्थापयन्ति। तच्च यागसामान्यबोधकमिति धर्माणां परिप्लवत्वं साधयितुं क्षमम्। भाष्या-नुसारिणस्तु दर्शपूर्णमासवाक्यमुपस्थाप्य तस्य धर्मग्राहकत्वं व्यवस्थापयन्ति। विधीयमानस्य यागस्य दर्शपूर्णमास-सम्बन्धित्वेनैव दर्शपूर्णमासवाक्यमङ्गानि गृह्णीयात् न सर्वयागार्थत्वेनेति न धर्माः पारिप्लवा इत्युपपादयन्ति। दर्शपूर्णमासवाक्यमाग्नेयादिवाक्यैः प्राप्तानां षण्णां यागानां फलसम्बन्धबोधनाय प्रवृत्तमधिकारवाक्यं कथ्यते। तथा सति कथमिदं धर्मग्राहकमित्युच्यते भाष्यानुसारिभिरिति चेत्, अयं भाष्यानुसारिणामाशयः—'यदाग्नेयोऽ-ष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इत्यादीनि वाक्यानि फलश्रवणरहितानि षड्यागान् विदधति। फलाकाङ्क्षायां विश्वजिन्न्यायेन कल्पितेन स्वर्गाख्येन फलेन निराकाङ्क्षाणि भवन्ति वाक्यानि। तेन दर्शपूर्णमासवाक्यं फलसम्बन्धबोधकत्वेन न नेतव्यम्। आग्नेयादियागानामुत्पत्तिः पृथग्वाक्यैर्भवतीति दर्शपूर्णमासवाक्यं नोत्पत्तिपरम्। दर्शपूर्णमासवाक्यं न यागोत्पत्तिपरम्, नापि फलसम्बन्धबोधनपरमित्यानर्थक्य प्रसक्तौ प्रयाजाद्यङ्गग्राहकत्वेन नीयते। यथा सत्रे 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिवाक्यं प्रकृतितोऽध्वर्य्वादीनां दीक्षायाश्च प्राप्तत्वेनाविधेयत्वात् क्रमविधिपरमित्याश्रीयते, तथा दर्शपूर्णमासवाक्य-मङ्गग्राहकत्वेन स्वीक्रियते, अन्यस्य तत्र विधेयत्वाभावात्। फलपदञ्चानुवादत्वेनापि नेतुं शक्यते, 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति सार्वकाम्यवाक्येन फलस्य प्राप्तत्वात्। एवञ्च दर्शपूर्णमासवाक्यं प्रयाजादीन्यङ्गानि दर्शपूर्णमासयोर्नियमयतीति सौर्यादिषूपदेशेन धर्माणां न प्राप्तिः, किन्त्वतिदेशेनैव प्राप्तिर्वक्तव्या। एवमादीन् विषयानध्येतृबुद्धिविकासकान् टुप्टीकाव्याख्याव्याजेन निरूपयन्तो वार्तिकाभरणकृतः भाष्यस्य वार्तिकस्य च गाम्भीर्यमवद्योतयन्ति।

अतिसंक्षिप्तैरक्षरैः प्रणीतायाः टुप्टीकाया अध्ययनेन क्वचिन्न ज्ञायते भट्टपादाः किं वक्तुकामा इति। तेषु स्थलेषु श्रीदीक्षिता टुप्टीकायाः प्रतीकग्रहणावसरे 'ननु' इति काञ्चन शङ्कां समुत्थाप्य तत्परि-हाराय प्रतीकमवतारयन्तोऽध्येतॄणां प्रतिभाविवर्धनेन सह विषयान् विशदयन्ति। वार्तिकाभरणे सर्वत्र रीतिमिमामवलोकयामः। अध्येतॄणां चिन्तनाशक्तिवर्धनायैव श्रीदीक्षितेन्द्रैरियं व्याख्या प्रणीतेति प्रतिभाति। न केवलमध्येतार एव चिन्तनाशक्तिमवाप्नुवन्तु, किन्त्वध्यापका अपि विविधाश्शङ्कास्समुत्थाप्य तासां परिहार-पूर्वकमध्यापयन्त्वित्यत्रापि दीक्षितानां प्रवृत्तिरनुभूयते।

२

न्यायनिबन्धनात्मकं मीमांसाशास्त्रं वेदसमुद्भवम्। तच्च वेदवाक्यार्थपरिज्ञानाय प्रवर्तितम्। ज्ञातेषु वेदवाक्यार्थेषु तेषामुपयोगः कर्मणामनुष्ठाने। कर्मानुष्ठानं प्रत्यर्थज्ञानं नियतमङ्गम्, अर्थज्ञानेन विना कर्मणामनुष्ठानमशक्यम्। तत्र च प्रमाणम् इतरानपेक्षं सामर्थ्यम्। शब्दतदर्थज्ञानमात्रेण न कोऽप्युपयोगः। शब्दानां तत्तदर्थे प्रयोगशिक्षणमावश्यकम्। तथैव वाक्यार्थज्ञानमात्रेण न कोऽपि लाभः, किन्तु कर्मणां प्रयोग आवश्यकः। कर्मणां प्रयोगेण च पदार्था निश्चिता भवन्ति। निश्चितेषु तेषु मीमांसाग्रन्थानां लेखने व्याख्याकरणेऽनितरसाधारणं पाटवमुदेति। श्रीवेङ्कटेश्वरदीक्षिताः बहूनां महाक्रतूनां विधिवदनुष्ठातारः। तेषां ग्रन्थान्ते दृश्यमानया पुष्पिकयाऽवगन्तुं शक्यते यदिमे कियतां महाक्रतूनामनुष्ठातार इति। एतेन कर्मणामनुष्ठानं तेषां प्रयोगज्ञानञ्च ग्रन्थलेखनेऽपि कारणमुक्तं भवति। मीमांसान्यायानां पुनः पुनः परिचिन्तनम् श्रौतस्मार्तकर्मणामनुष्ठानम्, क्रत्वनुष्ठानसमये प्रयोगदर्शनम्, वेदभाष्यालोडनम् श्रौतसूत्राध्ययनञ्चेतीमानि मीमांसाग्रन्थलेखने सहायकानि। सत्स्वेतेषु पदार्थोपपादनं ग्रन्थलेखनञ्च विना स्खलनेन प्रमादेन वा भवेत्। मीमांसादर्शने एवैयं न स्थितिः, निखिलेषु दर्शनेषु शास्त्रेषु च यावत्तच्छास्त्रीयान् पदार्थान् स्वजीवनयात्रया सह व्यवहारयोग्यान् न कुर्मः तावदध्ययनस्य ग्रन्थलेखनस्याध्यापनस्य वा क उपयोगः! श्रीवेङ्कटेश्वरदीक्षिताः श्रौतैर्महाक्रतुभिः परमेश्वरं प्रीणयन्तो वार्तिकाभरणं प्राणैषुः। टुप्टीकाव्याख्यया सह दीक्षितेन्द्रास्तत्र तत्र भाष्यग्रन्थमपि प्रतीकग्रहणेन व्याख्यान्ति। यत्र भाष्यवार्तिकयोर्मतभेदस्तत्र भाष्यकारहृदयमुद्धाटयितुं व्याख्यानमावश्यकमिति मन्यमाना भाष्यसन्दर्भं व्याख्यान्तीति प्रतीयते।

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यस्य वाक्यार्थविषये भाष्यवार्तिकयोर्मतभेदः परिलक्ष्यते। प्रयाजाद्यङ्गानामपूर्वार्थत्वमुपसंहृत्य भाष्यकारा लिखन्ति—**'तेषाञ्चापूर्वाणां भेद उक्तः। अतस्तद्भेदात् यथाप्रकरणं व्यवतिष्ठेरन् धर्मा इति। अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागा विशेष्यन्ते? नैवात्र यागो विशेष्यते, किं तर्हि? अपूर्वभावनैवोभयविशिष्टोच्यते। यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति। विषम उपन्यासः। तत्र अन्यद् द्रव्यम् अन्यो गुणः। तेन तत्रोभयपदविशेषणत्वं न युज्यते। उच्यते-इहापि यजेतेति सामान्यम् दर्शपूर्णमासाविति विशेषः। अन्यच्च सामान्यम् अन्यो विशेषः'** इति।

'भाष्यस्यायमर्थः' इत्यादिना दीक्षितैर्वर्णितस्यार्थस्यायं सारः—प्रयाजादीतिकर्तव्यता अपूर्वार्था इति निश्चिते प्रयाजादिभिरपूर्वं भावयेदिति बोधः, न तु यागं भावयेदिति। यागार्थत्वाभावेऽपूर्वार्थत्वं च स्वीकृते शब्दान्तरादिभेदबोधकप्रमाणैरपूर्वाणां भेदस्सिध्यति। तथा च तत्तद्यागजन्यापूर्वभाव्यकभावनानां भिन्नत्वात् दर्शपूर्णमासवाक्यगतभावनार्थास्सन्तः प्रयाजादयो भावनान्तरार्था न भवन्तीति यथाप्रकरणं धर्मा व्यवतिष्ठेरन्, दर्शपूर्णमासपदसमभिव्याहृतापूर्वभावनार्थत्वात्प्रयाजादीनाम्। अत्रैवं शङ्कोदेति—दर्शपूर्णमासपदस्य यागविशेषणत्वमङ्गीकृत्य धर्माणां व्यवस्था साधनीया। यागश्च भावनोपसर्जनीभूतः, 'न ह्यन्योपसर्जनमन्येनान्वेति' इति न्यायेन प्रयाजादीनां यागविशेषणता नोपपद्यत इत्यतः पारिप्लवा धर्मा भवेयुरिति। शङ्कामिमां भाष्यकाराः 'अपूर्वभावनैवोभयविशिष्टोच्यते' इति वदन्तः परिहरन्ति। दर्शपूर्णमासविशिष्टा यागविशिष्टा च भावना दर्शपूर्णसवाक्येन विधीयते। तत्रेयं शङ्का जायते—दर्शपूर्णमासविशेषणस्य व्यावर्त्यं किमिति। दर्शपूर्णमासपदं कर्मणो नामधेयत्वेन प्रसिद्धम्, न हि भावनाया दर्शपूर्णमासपदं नामधेयम्, येन भावनान्तरं व्यावर्तयेत्। शङ्कामिमामरुणान्यायेन परिहरन्ति 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र प्रधानान्वयस्याभ्यर्हितत्वादेकहायनीवद्भावनायामारुण्यस्यापि साक्षादन्वये जाते तत्रारुण्यमनुपकारकं सत् पार्ष्टिकबोधे एकहायन्याऽन्वेति यथा, तथा दर्शपूर्णमासपदमपि प्रथमं भावनायामन्वितं सत् तत्रोपकारालाभेन धात्वर्थेन यागेनान्वेति, तथासति धर्मा यागविशेषे व्यवस्थिता भवन्ति। एवमपि धर्माणां न व्यवस्था सिध्यति। अरुणावाक्ये आरुण्यं गुणः,

एकहायनी च द्रव्यम्। द्रव्यगुणयोर्विशेष्यविशेषणभावो युक्तः यतो हि द्रव्याद्गुणोऽन्यः। प्रकृते दर्शपूर्णमासपदेन तृतीयान्तेन याग एवोच्यते। न हि यागादन्यः पदार्थो दर्शपूर्णमासपदवाच्यः। अतः कथं विशेष्यविशेषणभावः ? एवञ्च धर्माणां व्यवस्थया निवेशः कथम् ? शङ्काम्-**उच्यत** इत्यादिना परिहरन्ति। यजतिपदं यागसामान्यवाचकम् दर्शपूर्णमासपदञ्च यागविशेषवाचकम्। सामान्यमन्यत् विशेषश्चान्यः। सामान्यविशेषयोर्विशेष्यविशेषणभावो नायुक्तः। परिहारभाष्यस्यायमाशयः-एकपदश्रुत्या यागसामान्यसम्बन्धो गृह्यते भावनया, वाक्येन च विशेषसम्बन्धः। अत्र वाक्यशब्दः पदान्तरार्थबोधकः। पदान्तरार्थसम्बन्धो वाक्यार्थविधिरित्युच्यते। 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे' इति न्यायेन श्रुत्यर्थ एव ग्राह्यो न वाक्यार्थ इति विरोधे प्राप्ते पदश्रुत्या यागसामान्यसम्बन्धं परित्यज्य वाक्येन यागविशेषसम्बन्ध एव गृह्यते दर्शपूर्णमासपदानर्थक्यपरिहाराय। पदश्रुत्यपेक्षया दुर्बलस्यापि वाक्यस्यानर्थक्यप्रतिहतत्वात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन वाक्यं प्रबलं भवति। अतो वाक्येन विशेषसम्बन्धपरिग्रह इति।

अत्र भट्टपादाः भावार्थाधिकरणविरोधं वाक्यभेदञ्च प्रदर्श्य **'तस्मादन्यथा वर्ण्यते'** इत्यादिना स्वाभिमतं विशदयन्ति। अत्रत्यं विषयं वार्तिकाभरणकृतो विशेषेणोपपादयन्तो न्यायसञ्चारवैदग्ध्यमाविष्कुर्वन्ति। श्रीवेङ्कटेश्वरदीक्षिता न केवलं सर्वतन्त्रस्वतन्त्राः अपितु महाक्रतूनामनुष्ठातारः, नापि केवलं मीमांसानयतत्त्वविमर्शकाः, सङ्गीतसाहित्यरसज्ञा अपि। इमे सुप्रसिद्धानां सनातनधर्मजीवातूनां निखिलेषु विद्यास्थानेष्वप्रतिहतप्रसरवैदुष्याणां श्रीगोविन्ददीक्षितानाम् श्रीमतीनां नागमाम्बानाञ्च तपःफलभूताः। **श्रीगोविन्ददीक्षितानामयं संक्षिप्तः परिचयः**—कर्णाटकेषु पुण्यसलिलायास्तुङ्गभद्रायाः परिसरे हम्पीक्षेत्रे विजयनगरापरनामधेया सर्ववेदभाष्यप्रणेतॄणां व्याकरणमीमांसावेदान्तादिदर्शनेषु नैकविधग्रन्थनिर्मातॄणां श्रीविद्यारण्यस्वामिचरणानां नाम्ना प्रथिता श्रीविद्यानगरी अद्यापि विराजते। वंशपरम्परया राज्यशासनसूत्रधारिणां महीपतीनां राजधानी श्रीविद्यानगरी। सिंहासनमधिरुह्य शासनसूत्रं धारयतां राज्ञां ललामभूतः नाम्ना श्रीकृष्णदेवरायः सार्वभौमः षोडशशताब्द्या आदौ (१५०९-१५२९) भुवमिमां शशास। तदनु तदनुजः श्री अच्युतदेवरायः शासनसूत्रं जग्राह। तस्य काल इतिहासमर्मज्ञैः परिगणितः (१५२९-१५४२ ई०)। अच्युतरायशासनसमये तस्यां नगर्यां चतुर्षु वेदेषु उपवेदेषु तदङ्गेषु चतुर्षु शास्त्रेषु च कृतभूरिपरिश्रम आहिताग्निर्युवा नाम्ना गोविन्ददीक्षितः सकलैर्नागरिकैरादृतो मितव्ययी वासमकरोत्। तस्य वाग्वैभवं धर्मनिष्ठाञ्चानुभूय काचन वृद्धा नारी स्वसुतस्य जन्मपत्रिकां प्रदर्श्य श्रीगोविन्ददीक्षितं प्रार्थितवती-मत्कुमारस्य चेव्वनाम्नो जन्मपत्रीं परिशील्य फलादेशः कर्तव्य इति। जन्मपत्रिकाञ्चादात्। श्रीदीक्षितः पत्रिकां परिशील्य तव कुमारस्य राजयोगः परिदृश्यते। स मदग्निहोत्रीं परिचरन् मद्गृह एव वसत्विति तामब्रवीत्। ततः प्रभृति चेव्वः दीक्षितगृहे वसन् गां परिचरन् गृहसम्बन्धीनि कार्याणि च साधयन्नासीत्। एवं गच्छति बहुतिथे महीपतिरच्युतरायः प्रजाभिः श्लाघ्यमानान् श्रीगोविन्ददीक्षितान् अश्रौषीत्। तेषां वैदुष्यं धर्मनिष्ठां विशेषेणार्थशास्त्रे धनुर्वेदे कलासु च प्रावीण्यमाकर्ण्याच्युतरायः ससम्मानं दीक्षितानाहूय तैस्सह राजकीयविषयेषु चर्चां विधाय तान् अश्वसेनाधिपत्ये न्ययुङ्क्त। दीक्षिता अपि स्त्रीयानि कर्माणि यथावत्सम्पादयन्तः शनैश्शनैः चेव्वं महिषीणां प्रासादे ताम्बूलकरण्डकवाहकपदे नियुक्तवन्तः। चेव्वोऽपि दीक्षितालम्बनः स्वीयं पदं यथावन्निर्वहन् राजकुले राज्ञः परिवारस्य प्रीतिभाजनमभवत्। राज्ञ्याः सहोदरी काचिद् अनतिक्रान्तशैशवावस्था परिचारकैस्सह क्रीडन्ती अवर्तत। तां सर्वेऽपि सहासं पृच्छन्ति स्म—त्वं कं परिणेतुमिच्छसीति। सापि वारं वारं वदन्ती आसीदहं चेव्वमेव परिणेष्यामीति। कन्येयं यदा प्रगटावयवा जाता तदा राज्ञीं स्वभगिनीं प्रार्थितवती-यदहं राजकुले परिचरन्तं चेव्वं वृणोमि। तेन सह मम विवाहो भवत्विति। महिषी राज्ञा सह संल्लल्प्य यं स्वयं वृणुते भगिनी तेनैव सह विवाहो भवत्विति निश्चित्य वैवाहिकं कर्म निरवर्तयत्। यथाहमत्र महिषी अस्मि तथैव मत्सहोदर्यपि क्वचिद्राज्ये महिषी भवत्विति महिष्या निवेदितो

राजा गोविन्ददीक्षितानन्वयुङ्क्त—समीचीनं स्थानमन्विष्य प्रासादादिकं निर्माय खण्डराज्ये चेव्वरायोऽभिषिच्यतामिति। गोविन्ददीक्षिताः प्रस्थाय सर्वत्र पर्यटय्यान्ते कावेर्याः परिसरे सर्वसस्यसमृद्धे कदलीनारिकेलादिहरितैरनोकहैः परिवृते चोलराज्ये गरुडव्यूहाकारं दुर्गं निर्माय तत्र सिंहासनं परिकल्प्य चेव्वरायं तत्राभ्यषिञ्चन्। चेव्वरायः श्रीगोविन्ददीक्षितान् निर्बन्ध-मां परित्यज्य श्रीमद्भिर्न गन्तव्यम् मयैव सह निवसद्भिः श्रीमद्भिस्साहाय्यं विधेयम्, 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' इत्युक्तदिशा भवद्वाग्विलासेनैवाहं भाग्यवानभवम्, राजयोगस्सफलोऽभवत्, सञ्चरणशीलदैवाः श्रीमन्तः, अग्निहोत्रीं परिचरन्नहमासम् राज्यं चालयितुं कथं शक्नुयाम्। अतः श्रीमद्भिरत्रैव मया सह स्थातव्यमिति। अच्युतरायोऽपि श्रीगोविन्ददीक्षितान् कर्णाटकं परित्यज्य चोलदेशे निवासयितुमनिच्छन्नपि चेव्वरायानुरोधेन तदीयप्रार्थनामन्वमन्यत।

श्रीगोविन्ददीक्षितानां द्वावात्मजौ—श्रीयज्ञनारायणदीक्षितः श्रीवेङ्कटेश्वरदीक्षितश्चेति। वार्तिकाभरणपुष्पिकातोऽवगम्यते-यत् श्रीवेङ्कटेश्वरदीक्षिताः स्वज्येष्ठभ्रातुस्सकाशादेवाधिगतसर्वविद्या इति। तथाहीयं पुष्पिका—

**'इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वपृष्ठाप्तोर्यामयाजिश्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्यावैशद्यस्साग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु टुप्टीकाव्याख्याने वार्तिकाभरणे सप्तमाध्यायस्य तृतीयः पादः'।**

अनया पुष्पिकया स्पष्टमवबुध्यते यत्-कियन्तो महाक्रतवस्त्रिभिरप्यनुष्ठिता इति। अग्निचयनेन सह सप्तसंस्थाकज्योतिष्टोमानुष्ठानं नाम न साधारणं कर्म। तत्रापि श्रीगोविन्ददीक्षितानां राजकीयातिगहनकर्मसु व्यापृतिः, विविधग्रन्थनिर्माणकौशलम्, 'अध्ययनाध्यापनव्यसनञ्चेति कियान् पुरुषकारः कियच्च वैदुष्यमिति न मनसाप्यभ्यूहितुं शक्यते। सत्यमेवेमे राष्ट्रस्यादर्शभूताः देशगौरवसमुन्नायकाश्च। परम्पराप्राप्ताचारपरिपालनम् शास्त्रसंरक्षणम् सन्नीतौ वर्तनञ्चेत्यादिकं संवीक्ष्य तदानीन्तना लोकाः 'यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः' इति श्रुतिचोदिते पथि गच्छन्तः स्खलद्गतयो नाभवन्। देशे च प्रकृतिः प्रकुपिता नासीत्। क्षेमसुभिक्षं राष्ट्रमभवत्।

श्रीगोविन्ददीक्षिताः षट्सु दर्शनेष्वनितरसाधारणं वैदुष्यमावहन्तः कौमारिलं दर्शनं व्याचख्युरिति श्रूयते। दीक्षितवर्याणां सङ्गीतशास्त्रेऽपि परमं पाण्डित्यमासीदिति तैः प्रणीतात् 'सङ्गीतसुधानिधिः' इति ग्रन्थादवगम्यते। श्रीमदप्पय्यदीक्षितेन्द्राः स्वीययादवाभ्युदयव्याख्यायां सङ्गीतसुधानिधेर्वाक्यान्युद्धृत्य प्रकाशयन्ति। गोविन्ददीक्षितानां ज्यायान् पुत्रो यज्ञनारायणदीक्षितः, कनीयांश्च सुतः श्रीवेङ्कटेश्वरदीक्षितः स्वभ्रातुस्सकाशादधीतसकलविद्य इति प्रागवोचम्। श्रीयज्ञनारायणदीक्षितः भाट्टपातञ्जलन्यायाद्वैतदर्शनेषु कृतभूरिश्रमोऽपि कविताकलायामतिनैपुण्यमावहति। स्वयमेव लिखति—

'पातञ्जलं भाट्टमतञ्च तर्कमद्वैतराद्धान्तमवैमि किं तैः।
प्रबन्धसन्दर्भभरैः कवित्वविद्यामिदानीं प्रकटीकरोमि' ॥ इति।

### श्रीवेङ्कटेश्वरदीक्षिताः

टुप्टीकाव्याख्यारूपेण प्रवृत्तस्य वार्तिकाभरणाभिधग्रन्थस्य निर्मातारः श्री वेङ्कटेश्वरदीक्षिताः श्रीवेङ्कटेश्वरमखी, श्रीवेङ्कटेश्वरयज्वा' इत्यादिनामभिव्यवह्रियन्ते। एतेषां शिष्यः सुप्रसिद्धः श्री नीलकण्ठदीक्षितः यश्च श्रीमदप्पय्यदीक्षितेन्द्राणां वंशमुक्तामणिः। सः स्वीये गङ्गावतरणकाव्य उल्लिखति—

वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः ।
श्री वेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते ॥
कुर्वंती श्रवणे वाणी कोमलां यस्य साहितीम् ।
कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥
भान्ति शिष्याः पुरो यस्य पाणिविन्यस्तपुस्तकाः ।
तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः' ॥ इति ।

एभिर्नीलकण्ठदीक्षितपद्यैः स्पष्टमवगम्यते—यद् गुरोः शिष्येषु कियद्वात्सल्यम्, शिष्याणाञ्च गुरौ कियान् भक्तिभावः, गुरोरध्यापनव्यापरात् शिष्याणाञ्चाध्ययनव्यारादृते नान्यः कश्चन व्यापार इति। अधीतानां विषयाणां सम्भूय शिष्यैः क्रियमाणं परिचिन्तनम्, चिन्तितानां विषयाणां गुरोस्सकाशे प्रश्नद्वारा द्रढीकरणम् गुरुकुलपरिचर्या चेति शिष्याणां व्यापाराः, गुरोश्चाध्यापयिष्यमाणविषयाणां पूर्वंपरिचिन्तनम् अध्यापनावसरे गुरोः शिष्यमुखमालिन्यविकासादिनिर्द्धारणम् शिष्यगतचारित्रपरीक्षणञ्चेति भवन्ति व्यापाराः। एतेन शिष्येषु सदाचारसम्पत्तिः, अनुशासनपरिपालनमतिः अधीतविद्यावैशद्यञ्चेति गुणा वर्द्धन्ते। एभिः पद्यैस्तदानीन्तन-रीतिरिति व्यक्तं प्रतीयते ।

## श्री राजचूडामणिदीक्षिताः

यथा नीलकण्ठदीक्षिताः श्रीवेङ्कटेश्वरदीक्षितानामन्तेवासिनः, तथा राजचूडामणिदीक्षिता अपि दीक्षि-तेन्द्राणामादेशकारिणः। श्रीराजचूडामणिदीक्षिताः सुप्रसिद्ध श्रीरत्नखेटदीक्षितानां सुपुत्राः। इमे वार्तिकाभरणस्य 'तन्त्रशिखामणिः' इति नाम्ना टीकां प्रणीतवन्तः। स्वीये तन्त्रशिखामणौ रचितैर्मङ्गलपद्यैः श्रीवेङ्कटेश्वर-दीक्षितप्रणीतानां कतिपयग्रन्थानां नामान्युपलभ्यन्ते। तथाहि—

'अस्ति गोविन्दयज्वेन्द्रनागमाम्बातपः फलम् ।
श्रीवेङ्कटेश्वरमखी सर्वतन्त्रस्वतन्त्रधीः ॥
येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः ।
कृतं साहित्यसाम्राज्यं नाम काव्यमनुत्तमम् ॥
व्यतानि शुल्बमीमांसा तथा कर्मान्तवार्तिकम् ।
टुप्टीकायाः कृता टीका वार्तिकाभरणाभिधा ॥
प्रतिष्ठापितचोलक्ष्माजानेस्तस्य नियोगतः ।
चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम् ॥
गोविन्ददीक्षितचिरन्तनभाग्यराशेः श्रीवेङ्कटेश्वरमखीशितुराज्ञया मे ।
तन्त्रार्णवं तरितुमाहितसाहसस्य सांयात्रिको भवतु तत्करुणाकटाक्षः' ॥

इमान् ग्रन्थान् विहाय श्रीवेङ्कटेश्वरमखिभिः 'चतुर्दण्डिप्रकाशिका' इति सङ्गीतशास्त्रग्रन्थोऽपि विर-चितः। एतेषां परम्परागता सङ्गीतविद्या। श्रीराजचूडामणिदीक्षितैरिमानि पद्यानि सप्तमाध्यायत उपलब्धायां तन्त्रशिखामणिमातृकायामादौ लिखितान्युपलभ्यन्ते। श्रीवेङ्कटेश्वरदीक्षिताः चतुर्थाध्यायतः टुप्टीकाख्यायां वार्तिकाभरणाभिधां प्रणीतवन्तः, तन्त्रशिखामणिग्रन्थोऽपि तत एव प्रणीतस्स्यात् किन्तु नोपलभ्यते सप्तमाध्यायत एवोपलभ्यते, कुत्रचित्प्रच्छन्नेयं मातृका स्यात्। यावान् भाग उपलब्धस्तत्र सप्तमाष्टमाध्याययोर्भागः प्रकाशितः।

तन्त्रशिखामणिकृतो विषयान् परिशोल्य निष्कृष्टमर्थं प्रौढ्या शैल्या निबध्नन्ति। तत्र तत्र 'आहुः' 'आहुः' इति शब्दं प्रयुञ्जाना अवद्योतयन्ति—यद् विचारविषयभूतान् विवादग्रस्तान् प्रत्यक्षतः श्रीवेङ्कटेश्वरदीक्षितेभ्य आकर्ण्य लिखन्तीति। अत एव वार्तिकाभरणस्य प्रतीकं न गृह्णन्ति। तत्तदधिकरणसारांशं विलिख्याधिकरणं 'वृत्तमधिकरणम्' इति समापयन्ति। वार्तिकाभरणसारांशावगमाय तन्त्रशिखामणिरत्यन्तमुपकारकः।

## प्रमाणप्रमेयविषयाः

मीमांसासम्बन्धिनोऽधिकरणविषया बहुभिर्बहुधा चर्चिताः। व्याख्योपव्याख्याभिरतिविस्तरं नीता विद्वदपश्चिमैः। प्रमाणप्रमेयविषये विदुषां लेखोऽल्पीयानेत्र। तदत्र छात्राणामुपकाराय तत्र तत्र लीनान् तांस्तान् विषयान् सङ्ग्रहेण प्रदर्शयितुमभिलषामि। तत्रापि भाट्टमतमेव निरूपयामि।

## प्रतिज्ञा

द्रव्यं गुणः कर्म सामान्यं शक्तिश्चेति पञ्च भावपदार्थाः।

## विशेषसमवाययोरतिरिक्तपदार्थत्वशङ्का

नित्यद्रव्याणां मिथो व्यावर्तकत्वेन विशेषपदार्थः स्वीक्रियते। एवं समानजातिगुणकर्मणाञ्च भेदसिद्धये विशेषपदार्थं आवश्यकः-अयं परमाणुरस्मात्परमाणोर्भिन्नः, विशेषात् पार्थिवपरमाणूनां जलीयपरमाणुभ्यो भेदे तत्तज्जातिमादाय सिद्धेऽपि पार्थिवपरमाणूनां मिथो भेदसाधनाय विशेषस्यावश्यकत्वात्। न चैवं विशेषाणां मिथो भेदसिध्यर्थं विशेषान्तरं स्वीकर्तव्यमिति वाच्यम्, विशेषस्य व्यावृत्तिरूपत्वेन हेत्वन्तरस्यानपेक्षणात्। न च नित्यद्रव्येष्वपि विशेषवत् स्वत एव व्यावृत्तिर्भवतु, कृतं विशेषस्वीकारेणेति वाच्यम्, अत्यन्तासदृशत्वात्। नित्यद्रव्याणि हि एकजातिगुणक्रियत्वेनानुवृत्तप्रत्ययभाञ्जि। विशेषाणान्तु रूपहान्या जात्याद्यभावात् युक्तमन्यानपेक्षत्वम्। न च नित्यद्रव्यगतगुणेष्वपि विशेषापत्तिः, तद्विशेषाश्रयाश्रितत्वेनैव भेदसिद्धेः। तथा चैतत्परमाणुगतैकत्वं तत्परमाणुगतैकत्वाद्भिन्नम् तद्विशेषाश्रयाश्रितत्वादित्यनुमानं सिध्यतीति न विशेषान्तरसिद्धिरिति भावः। अतो विशेषोऽतिरिक्तः पदार्थः।

एवं समवायोऽप्यतिरिक्तः। अयुतसिद्धानामाधाराधेयभूतानाम् इहप्रत्ययकार्यानुमेयस्सम्बन्धस्समवायः। इह तन्तुषु पटसमवायः, इह गवि गोत्वसमवाय इति प्रतीतेः। एभिः प्रत्ययैस्समवायोऽनुमीयते। ययोर्द्वयोरेकमविनश्यदवस्थं सदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। तयोस्संयोगो न भवितुमर्हति। स च युतसिद्धयोरेव। न चायं तादात्म्यसम्बन्धः, प्रत्यक्षाप्रत्यक्षेष्वसम्भवात्। शब्दः प्रत्यक्षः श्रावणत्वात्। आकाशस्त्वप्रत्यक्षः। तत्र शब्दस्याकाशतादात्म्ये स्वीकृते शब्दस्याप्रत्यक्षत्वापत्तिः। तस्मात्पदार्थान्तरमेव समवायः।

## समाधानम्

किं नित्यद्रव्याणां स्वरूपव्यावृत्तौ विशेषोऽपेक्ष्यते? किं वा व्यावृत्तिज्ञाने? नाद्यः, स्वरूपभेदस्य नित्यत्वेन विशेषापेक्षाभावात्। किञ्चायं परमाणुरस्मात्परमाणोर्भिन्नः, विशेषात् इत्यत्र किं विशेषादिति शब्द एव गृह्यते? उत तद्भिन्नो वा? न प्रथमः, शब्दस्य कार्यत्वेन महाप्रलये नाशाद् आकाशादीनां व्यावर्तकाभावेन व्यावृत्तिर्न स्यात्। न द्वितीयः, धर्मिग्राहकमानेन शब्दाश्रयत्वादिना तत्सिद्धौ शब्दभिन्नस्य किं प्रयोजनम्। न

चैवं महाप्रलयेऽव्याप्तिः, शब्दाश्रयत्वस्य शब्दात्यन्ताभावानधिकरणत्वस्वीकारात्। आत्माकाशादीनां व्यावृत्तिः धर्मिग्राहकमानेनैव सिद्धत्वाच्च। नापि व्यावृत्तिज्ञाने विशेषस्योपयोगः, व्यावृत्तिज्ञाने विशेषस्योपयोगे गुणकर्मसमवायादिष्वपि तदापत्तेः। विशेषेषु व्यावृत्तिः कथमिति प्रश्नस्योत्तरं स्वत एवेति वक्तव्यम्, परमाणूनामपि स्वत एव व्यावृत्तिरिति स्वीकारे का हानिः। योगिनां प्रत्यक्षमपि विनैव विशेषेण सम्भवाद्विशेषस्य का आवश्यकता। अयमाशयः-असाधारणधर्मो यत्र वर्तते तत्र तन्मुखेनेतरव्यावृत्तिः। परमाणुत्वसाधारणधर्मस्य कस्यचिददृष्टत्वात् तेषां परस्परव्यावृत्तये कश्चनासाधारणधर्मोऽभ्युपेयः। स एव विशेष इत्यभिधीयते। तेन च पृथिवीपरमाणुर्जलपरमाणोर्भिन्नः एतद्गतविशेषात् इतीतरव्यावर्तकतया नित्यद्रव्यवृत्तितया च विशेषस्सिध्यति। पार्थिवपरमाणुविशेषस्य जलीयपरमाणुविशेषव्यावर्तकत्वेन स्वापेक्षयाऽन्यस्यासाधारणधर्मस्यानभ्युपगमात् तत्रासाधारणधर्माभाववत्सु विशेषेषु परस्परव्यावृत्त्यङ्गीकारेण व्यभिचारः। किञ्च किञ्चिद्दूरं गत्वापि क्वचित्स्वतोव्यावर्तकत्वेन विश्रान्तिर्वाच्या। तत्र विशेष इत्यदृश्यं कञ्चन पदार्थं कल्पयित्वा तस्य स्वतोव्यावर्तकत्वकल्पनापेक्षया क्लृप्तपरमाणूनामेव 'क्लृप्तकल्प्ययोः क्लृप्तस्य प्राबल्यम्' इति न्यायेन स्वतोव्यावर्तकत्वमङ्गीकृत्य तत्रैव विश्रान्तिरुचितेति, अतो विशेषस्य न पदार्थान्तरत्वम्।

एवं समवायोऽपि न भिन्नः पदार्थः। विशिष्टबुद्धिर्विशेष्यविशेषणसम्बन्धावगाहिनी भवतीति रूपवान् क्रियावान् घट इत्यादौ रूपक्रियावतो घटस्य रूपेण क्रियया च सह सम्बन्धः संयोगो न भवतीति समवाय इष्यते परैः। गुणक्रियाविशिष्टबुद्धिः विशेष्यविशेषणसम्बन्धविषया, विशिष्टबुद्धित्वात् दण्डी पुरुष इतिवदिति प्रयोगोऽपि प्रदर्श्यते। तत्र शुक्लो घट इति विशिष्टबुद्धिः विशेषणसम्बन्धविषयेत्यनुमितौ विशेषणसम्बन्धः किं स्वरूपसम्बन्ध इष्यते? उत तद्भिन्नो वा? यदि प्रथमः कल्पः तर्हि सिद्धसाधनम्। द्वितीयः पक्षो यदि तर्हि अभावविशिष्टप्रत्यक्षे व्यभिचारः स्वरूपभिन्नसम्बन्धाभाववति शुक्लाभाववान् घट इत्यभावविशिष्टप्रत्यक्षे हेतोस्सत्त्वात्। अभावविशिष्टप्रत्यक्षवत् स्वरूपसम्बन्धमादाय शुक्लो घट इत्यादिप्रयोगोपपत्तेः कृतं समवायस्वीकारेण। स्वरूपाणामनन्तत्वात्तदपेक्षया लाघवादेकस्समवायो युक्त इति चेत् न, क्लृप्तकल्प्ययोर्मध्ये क्लृप्तग्रहणस्य न्याय्यत्वात्। अतएव विकृतिभावनाया इतिकर्तव्यताकाङ्क्षायां किं प्राकृतेतिकर्तव्यताभिराकाङ्क्षा शमयितव्या? उत विकृतिसन्निधौ पठिताभिः कतिपयेतिकर्तव्यताभिरिति सन्देहे प्राकृतानामितिकर्तव्यतानां प्रकृतौ क्लृप्तोपकारकत्वात् वैकृतानां कल्प्योपकारकत्वात् क्लृप्तोपकारकैः प्राकृतैरेवाङ्गैरितिकर्तव्यताकाङ्क्षाशमनं व्यवस्थापितं सप्तमे। तन्न्यायेन क्लृप्तस्य स्वरूपस्य ग्रहणमेव युक्तम् न कल्प्यस्य समवायस्य। समवायस्यातिरिक्तसम्बन्धत्वकल्पनं प्रसिद्धसंयोगसम्बन्धाद्वैलक्षण्यावबोधाय कर्तव्यं यदि, तर्हि अभावस्थलेऽपि समवाय एव कल्प्यतामिति पर्यनुयोगो भवेत्! 'धर्मिकल्पनातो धर्मकल्पनं वरम्' इति न्यायेन समवाये प्रसिद्धसंयोगसम्बन्धवैलक्षण्यज्ञानायाकाशस्य धर्मिणः शब्दाश्रयत्वहेतुना कल्पनापेक्षया सम्बन्धत्वमेव कल्प्यताम्, तस्य व्यापकत्वान्नित्यत्वाच्च। नित्यसम्बन्धत्वं समवायस्य लक्षणमिष्यते। आकाशसम्बन्धश्च नित्य एवेति समवायः कुतः कल्प्यते, आकाशादेरेव सम्बन्धत्वकल्पने लाघवात् पूर्वोक्तन्यायानुसारेण न्याय्यत्वाच्च। किञ्च नित्यसम्बन्धस्समवाय इत्युक्ते नित्यसंयोगे तद्व्यभिचरितं स्यात्। कालाकाशयोस्संयोगो नित्यः। न चान्यतरकर्माद्यभावात् कालाकाशयोस्संयोग एव नास्तीति वाच्यम्, अन्यतरकर्मजन्यत्वस्य जन्यसंयोगविषयत्वात्।

किञ्च यथा संयोगस्याव्याप्यवृत्तित्वं न सर्वसंयोगे सिध्यति, परमाण्वोस्संयोगे तदभावात्। किन्तु दृश्यसंयोग एवाव्याप्यवृत्तित्वं तस्य, तथा दृश्यसंयोग एव जन्यत्वम् अदृश्यसंयोगे च न जन्यत्वम्। न च घटाकाशसंयोगेऽव्याप्यवृत्तिताऽस्त्येव, संयोगाधिकरणे आकाशे संयोगाभावस्यापि सत्त्ववदव्याप्यवृत्तित्वमिति वाच्यम्, तत्र घटमादाय व्याप्यवृत्तित्वस्यापि सत्त्वात्। ननु विरुद्धयोरुभयोरेकत्र समावेशः कथमिति चेन्न;

यथा 'सोमेन यजेत' इत्यत्राख्याताभिहितभावनायां यागस्य धात्वर्थस्य करणत्वेन साध्यत्वेन चान्वयशङ्कायां विरुद्धत्रिकद्वयमेकत्रापततीति दोषमुद्भाव्य वाक्यभेदस्वीकारेण विना, दोषपरिहारो न भवतीति प्रतिपादितम्। तथाहि-यागस्य करणत्वेनान्वये यागे विधेयत्वोपादेयत्वगुणत्वानि तिष्ठन्ति, तस्य साध्यत्वेनान्वयावसरे यागे-उद्देश्यत्वानुवाद्यत्वप्राधान्यानि तिष्ठन्ति। एतेषामेकत्र समावेशे विरोधः। तमिमं विरोधं परिहर्तुं यागस्याप्राप्ति दशायां विधेयत्वादित्रिकं तिष्ठति, तस्य प्राप्तिदशायामुद्देश्यत्वादित्रिकं तिष्ठति, ततश्च वाक्यभेदः। अतस्सोमेन यजेत इति वाक्यमप्राप्तप्रापकं स्वीकृत्य यागे विधेयत्वादित्रिकमेव तिष्ठति नोद्देश्यत्वादित्रिकमिति प्रतिपाद्यते, तथा प्रकृते व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोस्समावेशे निरूपकभेदेन परिहारस्य सुवचत्वात्। घटनिरूपितसंयोगस्याकाशेऽव्याप्यवृत्तित्वेऽप्याकाशनिरूपितस्संयोगो घटे व्याप्यवृत्तिरेवेति सम्बन्धिभेदेन परिहारात्।

### मीमांसकमते नित्यसंयोगसिद्धिः

आकाशः कालनिष्ठसंयोगाश्रयः, संयोगित्वादित्यनुमानेन कर्मजन्यत्वरूपकारणाभावाद् अनित्यसंयोगबाधे नित्यसंयोगसिद्धिः। यथा हि क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन क्षित्यादिकर्तृतया सिध्यन्नीश्वरो नित्यज्ञानादिमत्वेन सिध्यति। तथाहि-कर्तृत्वञ्चोपादानापरोक्षज्ञानचिकीर्षाकृतिमत्वम् अस्मदादीनां शरीरिणामनित्यज्ञानवतां क्षित्याद्युपादानापरोक्ष्यासम्भवात् न कर्तृत्वं सिध्यतीत्यस्मद्विलक्षणोऽशरीरी क्षित्याद्युपादानापरोक्षज्ञानवत्वेनेश्वरस्साध्यते। तत्रेश्वरज्ञानस्यानित्यत्वे शरीरादिरूपकारणाभावाद् नित्यत्वञ्चेति नित्यज्ञानादिमत्वेन कर्तृसिद्धिः तथा आकाशः कालनिष्ठसंयोगाश्रय इत्यत्राप्यन्यतरकर्मादिरूपानित्यसंयोगकारणाभावात् नित्यसंयोगाश्रयत्वेनाकाशस्सिध्यति। अत्रत्यो विशेषविचारः कमलाकरभट्टीये **मीमांसाशास्त्रकुतूहले** द्रष्टव्यः। एवं समवायस्य नित्यत्वमनित्यत्वं वा एकत्वमनेकत्वं वेति विचारशैली श्लोकवार्तिके न्यायरत्नाकरे च विलोकनीया।

### शक्तिः पञ्चमः पदार्थः

शक्तिविषये महती विप्रतिपत्तिः-वह्निर्दाहानुकूलातीन्द्रियाद्विष्ठधर्मवान् न वेति। वह्निर्दाहानुकूलातीन्द्रियाद्विष्ठधर्मसमवायी दाहजनकत्वाद् अदृष्टवदात्मवत् इत्यनुमानेन शक्तिरतिरिक्तः पदार्थ इति मीमांसकाः। अत्र गौतमीयाः प्रत्यवतिष्ठन्ते-शक्तिर्न पदार्थान्तरम्। किं सा सहजाऽभ्युपेयते ? उताधेयाऽभ्युपेयते। सहजेत्यत्र मानाभावः। ननु प्रतिबन्धकमणिसमवधाने सति वह्नौ दाहो न दृश्यते। अतो वह्निनिष्ठदाहानुकूलशक्तिः प्रतिबन्धकेन-मणिना प्रतिबध्यत इत्येष्टव्यम्, उत्तेजके च मणौ समानीते वह्नौ दाहकत्वमनुभूयते। एवञ्चोत्तेजकस्य प्रतिबन्धकमणिनिष्ठप्रतिबन्धकत्वशक्तिनिवर्तकत्वम्, प्रतिबन्धकमणेश्च वह्निनिष्ठदाहानुकूलशक्तिनिवर्तकत्वञ्चाभ्युपगन्तव्यम्। तथा च वह्निनिष्ठदाहानुकूलशक्तेरेव दाहकत्वं न वह्नेरिति शक्तिस्सिध्यतीति चेत्, न; प्रतिबन्धकाभावरूपकारणविघटनेनैव प्रतिबन्धकत्वोपपत्तेः। नन्वेवं सत्यन्योन्याश्रयः-प्रतिबन्धकाभावस्य कारणत्वग्रहे तद्विघटकत्वेन मणेः प्रतिबन्धकत्वग्रहः, गृहीते च तस्मिन् प्रतियोगिनि तदभावस्य कारणताग्रह इत्यन्योन्याश्रय इति चेत्, न; मण्यादिसंसर्गाभावत्वेनोपस्थितो कारणताग्रहात्। अर्थात् मणेरुत्तेजकस्य चाभावे वह्नौ दाहकत्वानुभवात्। ननु प्रतिबन्धकमणेरुत्तेजकस्य च सत्त्वे कथं दाहः, मण्यभावस्याभावात् इति चेन्न, उत्तेजकाभावविशिष्टमणेरभावस्य दाहं प्रति कारणत्वस्वीकारात्। ननु विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मकत्ववत् विशिष्टाभावस्यापि तत्त्रितयाभावात्मकत्वात् तेषाञ्च कारणत्वे व्यभिचारान्न कारणत्वम्। तथाहि-उत्तेजकाभावविशिष्ट प्रतिबन्धकमण्यभावो विशिष्टाभावः। स च मन्त्रौषध्याद्युत्तेजके सत्यपि मण्यभावाद् उत्तेजकाभावविशिष्टमण्य-

भावो यत्र, तत्र विशेष्याभावरूपः। तथा यत्र उत्तेजको मणिश्चोभयं नास्ति, तत्र विशेष्याभावरूपः, अथवा विशेषणविशेष्यसम्बन्धाभावरूपः। एवंरूपस्य विशिष्टाभावस्य कारणत्वाङ्गीकारे यत्र विशेष्याभावरूपकारणत्वं तत्र विशेषणाभावरूपकारणत्वं नास्ति, यत्र विशेषणाभावरूपकारणत्वं तत्र विशेष्याभावरूपकारणत्वं नास्तीति मिथो व्यभिचार इति चेन्न; विशिष्टाभावस्थाप्यवच्छेदकभेदेन त्रितयातिरिक्तत्वात्। न च प्रतिबन्धकसत्वेऽपि प्रतिबन्धकान्तराभावेन दाहप्रसङ्ग इति वाच्यम्, प्रतिबन्धकासमानाधिकरणप्रतिबन्धकाभावस्य कारणत्वात्। एवञ्च न सहजा शक्तिस्सिध्यति। नाप्याधेया शक्तिः 'व्रीहीन् प्रोक्षति' इत्यत्र व्रीहीणां कर्मत्वात्तस्य च क्रियाजन्यफलशालित्वाभावात्कर्मत्वानुपपत्त्या शक्तिकल्पनमिति तावन्न युक्तम्, जलसंयोगाश्रयत्वेनैव तदुपपत्तेः। जलसंयोग एव प्रोक्षणम् कथं संयोग एव फलमित्युच्यत इति चेत्, तथा सति ग्रामं गच्छतीत्यत्र ग्रामस्य गमनावच्छेदकत्वात्कर्मत्वं न स्यात्। अतो जलसंयोगो न प्रोक्षणान्तर्गतः। ननु गमनस्य पूर्वदेशविभागानुकूलोत्तरदेशसंयोगरूपपादविहारात्मकत्वात् ग्रामसंयोगस्य न गमनात्मकत्वम्, किन्तु तत्फलत्वमेव, जलसंयोगस्य तु प्रोक्षणरूपत्वमेव, अन्यथा जलप्रक्षेपे कृतेऽपि व्रीहिसंयोगाभावे प्रोक्षणं न जातमिति व्यवहारायोगात्। अतस्संयोगस्य प्रोक्षणान्तर्गतत्वान्न फलत्वम् इति शक्तिरेव कल्प्यत इति चेन्न; शिलां प्रोक्षतीत्यत्रापि शक्तिकल्पनापत्तेः। अत ईप्सिततमत्वाद्येव कर्मत्वं स्वीकर्तव्यम्। तस्मात्कारणत्वातिरिक्ता शक्तिर्न सिध्यति।

अत्र ब्रूमः :—तन्तूनां घटं प्रति मृदः पटं प्रति कारणत्वं कुतो न स्वीक्रियत इति प्रश्नस्योत्तरत्वेन वक्तव्यं भवति यददृष्टाभावादिति। अदृष्टमार्गे प्रवेशमिच्छतां शक्तिद्वेषः कुतः। सर्वभावेषु विद्यमानं विलक्षणं सामर्थ्यमेव शक्तिपदाभिधेयम्। वह्नेर्दाहकत्वं प्रत्यक्षमनुभवामः। तेन दाहं प्रति कारणत्वेन वह्निं निश्चिनुमः। किन्तु मणिसमवधानदशायां सत्यपि वह्नौ दाहमेव नानुभवामः न तु वन्ह्यभावम्। एवमुत्तेजके समानीते दाहमनुभवामः। अस्यां दशायां वह्निनिष्ठकारणताग्रहाय कारणतां परिष्कुर्मः उत्तेजकाभावविशिष्टमण्यभावः कारणमिति। एवं परिष्कुर्वन्तो वयं वह्निर्दाहं प्रति कारणमिति कार्यकारणभावं त्यजामः दाहं प्रति उत्तेजकाभावविशिष्टमण्यभावः मण्यभावो वा कारणमिति ब्रूमः। वह्निनिष्ठदाहकत्वशक्तेरेव प्रतिबन्धको मणिः न तु दाहं प्रति कारणीभूतवह्नेः प्रतिबन्धकः। स्वरूपसतो मणेरपि न प्रतिबन्धकत्वम्, शक्तिमत एव तस्य प्रतिबन्धकत्वमेष्टव्यम्, शक्तिहीने मणौ सन्निहिते वह्निर्दहत्येव। उत्तेजकस्यापि मणिनिष्ठप्रतिबन्धकत्वशक्तिनिवर्तकत्वमेव। क्षीणशक्तिके उत्तेजके सन्निहिते प्रतिबन्धकमणिसमवधानदशायां वह्निनिष्ठदाहकत्वमभिभवति। एतदर्थं मणावुत्तेजके च सामर्थ्यं विशेषणीयम्-समर्थोत्तेजकाभावविशिष्टसमर्थमण्यभावः कारणमिति वक्तव्यम्। तादृशविशिष्टाभावस्य त्रैविध्यं कल्पनीयम्। एतादृशकल्पनापरम्परापतनापेक्षया वह्निनिष्ठशक्तेरेव कारणत्वस्वीकारे लाघवं भवति।

किञ्च उत्तेजकाभावविशिष्टेत्यत्र किमिदमुत्तेजकत्वम्? प्रतिबन्धकताविघटकत्वं वा? मणित्वादितत्तद्रूपमेव वा? नाद्यः पक्षः चक्रकापत्तेः। प्रतिबन्धकाभावस्य कारणत्वे गृहीते कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वग्रहः, तद्ग्रहे च प्रतिबन्धकविघटकत्वरूपोत्तेजकत्वग्रहः, तद्ग्रहे च तदभावविशिष्टप्रतिबन्धकाभावस्य कारणताग्रहः। न द्वितीयः पक्षः, संशयोत्तरप्रत्यक्षे विशेषदर्शनस्येव मणिकालिकदाहे उत्तेजकस्यैव विशेषकारणत्वेन प्रतिबन्धकाभावस्य कारणत्वकल्पनायां मानाभावात्। अतस्तत्रोत्तेजकमेव हेतुरिति वक्तव्यम्। अभावस्य हेतुत्वेऽपि महती विप्रतिपत्तिरिति भट्टपादप्रभृतयोऽभावस्य हेतुत्वं न स्वीकुर्वन्तीति किञ्चित्सामग्रीविघटकत्वेनैव प्रतिबन्धकत्वं स्वीकर्तव्यम्। सा च सामग्री शक्तिरूपेति शक्तिस्सिध्यति।

किञ्च पुत्रोत्पत्तौ सपिण्डमरणाद्यैराशौचं पुंसो जायते। तत्र शक्तिं विना नान्या गतिरस्ति। पापादृष्ट-

मेव तदिति वक्तुं न शक्यते पापादृष्टस्य निषिद्धक्रियाजन्यत्वात्कालान्तरभोग्यत्वात्। जननमरणन्त्विहैव भवति। जनने मरणे वा इहैवाशौचं धर्मग्रन्था वदन्ति।

केदारे सद्बीजेषूप्तेष्वङ्कुरोत्पत्तिः, मूषिकाघ्रातबीजेषूप्तेषु नाङ्कुरोत्पत्तिरिति प्रत्यक्षमनुभवामः। तत्राङ्कुरोत्पत्तौ मूषिकाघ्राणाभावः कारणं वक्तव्यम्। घ्राणक्रियोत्तरं तद्ध्वंसादङ्कुरोत्पत्तिः कुतो न भवति? ध्वंसो न कारणम् प्रागभावः कारणमिति वक्तुं न शक्यते, संसर्गाभावस्य कारणत्वस्वीकारात्। क्वचिद्ध्वंसः, क्वचिच्च प्रागभावः कारणमिति न समञ्जसम्, अभावत्वाविशेषात्। प्रागूर्ध्वकालभेदप्रयुक्त एव खलु ध्वंसप्रागभावयोर्भेदः। प्रतियोगिवैजात्येन प्रागभाववैलक्षण्यं यदि कल्प्यते, तद्वरं बीजनिष्ठमेव शक्तिकल्पनम्।

किञ्च 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति वाक्याभ्यां विधीयमानयोर्व्रीहियवयोर्विकल्पः शास्त्रविद्भिः स्वीकृतः 'एकार्थास्तु विकल्पेरन्' इति जैमिनेरनुशासनात्। विकल्पस्तु एकशक्तिमत्त्वेनैव साधयितुं शक्यः। तेन व्रीह्यभावावच्छिन्नयवत्वेन हेतुतेति यदि कल्प्यते तर्हि हेतुतावच्छेदकद्वयापेक्षयैकशक्तिमत्त्वस्यैव लघुत्वात्। एकघटे दण्डद्वयस्य हेतुता न भवति। अत एव विकल्पः। द्वित्वाश्रयत्वेन कारणत्वमिति चेन्न, यववाक्यज्ञाने व्रीहिषु साधनत्वं कथं भायात्? अपेक्षाबुध्यभावेन द्वित्वाज्ञानात्। अतो व्रीहियवयोर्विकल्पस्सिध्यति।

शक्तिरियं नित्या वा अनित्या वेति विशये नित्यैवेति मीमांसकाः। सा च सर्ववह्निवृत्तिरेकैव। ननु एकस्या वह्निव्यक्तेर्मणिसमवधाने वन्ह्यन्तरे दाहः कथमिति चेत्-आश्रयरूपावच्छेदकभेदेन प्रतिबन्धात् वन्ह्यन्तरे दाहो नायुक्तः। शक्तेश्च मणिनाऽभिभव एव प्रतिबन्धः। अभिभवश्चोद्भवाभाव एव। उद्भवश्च कार्याभिमुखं स्वरूपमेव। आभिमुख्यञ्च प्रागभावस्याग्रिमसमयसम्बन्धाभावः। मणिना च शक्तेरभिभवो नाम स्वशक्त्या दाहप्रागभावस्याग्रिमसमयसम्बन्धो जन्यते। स एव प्रतिबन्धः। अत एव तदभावहेतुत्वेनान्यथासिद्धत्वान्न दाहं प्रति मण्यभावो हेतुः। एतेन प्रतिबन्धकाभावो हेतुः वह्निश्चावच्छेदक इति वैपरीत्यशङ्का परास्ता। मणिमन्त्राद्यनेकाभावानां विशिष्टानां हेतुत्वापेक्षया सर्वावच्छिन्नवह्नित्वेन हेतुत्वेऽतिलाघवं भवति। एवं मणिशक्तिप्रतिबन्धकत्वमुत्तेजकत्वमिति धाराशक्तिपक्षस्सिध्यति। न च प्रतिबन्धकासमानाधिकरणप्रतिबन्धकाभावो दाहं प्रति हेतुः, उत्तेजकप्रतिबन्धकस्य दाहप्रतिबन्धकत्वादर्शनात्। न चोत्तेजकस्य प्रतिबन्धकत्वाभावसम्पादकत्वम्, प्रतिबन्धकप्रतिबन्धकत्वेन तदुपपत्तेः। प्रतिबन्धककालवर्तिकार्यं प्रत्युत्तेजकस्यैव सिद्धिकालीनानुमितिं प्रति सिषाधयिषाया इव विशेषहेतुत्वे लाघवात्। विशिष्टाभावकूटस्य हेतुत्वे गौरवात्। तस्मान्नित्यैव शक्तिः। सा च सहजा आधेया पदनिष्ठा चेति त्रिविधा।

सङ्ख्यायाः उपाधेः ज्ञाततायाश्च पदार्थान्तरत्वं साधयतां मतं कमलाकरभट्टेन स्वीये कुतूहले परीक्षितम्, तत्तत एवावगन्तव्यम्।

### द्रव्यलक्षणं विभागश्च

गुणाश्रयत्वं द्रव्यस्य लक्षणम्। ननु एकं बहूनि वा रूपाणि, अयमपरो गन्ध इत्यादिप्रयोगैः एकत्वादिसङ्ख्याया अपरत्वस्य च सत्त्वात् द्रव्यलक्षणमतिव्याप्तं स्यादिति चेन्न; तादात्म्येन गुणाश्रयत्वस्य विवक्षितत्वात्। न च गुणे तादात्म्येन गुणाश्रयत्वं वर्तते। आधेयभूताया एकत्वादिसङ्ख्याया आश्रयभूतगुणत्वात्तत्तादात्म्यमङ्गीक्रियेत तदा आकाशस्य नीरूपत्वात् तदन्तर्भावेण रूपसङ्ख्ययोरसामानाधिकरण्यम् पृथिव्याद्यन्तर्भावे च सामानाधिकरण्यञ्चेति गुणसाङ्कर्यापत्तिः। साङ्कर्यञ्चात्र 'परस्परात्यन्ताभावयोर्धर्मयोरेकत्र समावेश इति न विवक्षितम्, किन्तु द्वयोस्सामानाधिकरण्यमसामानाधिकरण्यञ्च यत्किञ्चिदन्तर्भावेण विद्यत इत्येतावन्मात्रम्। आकाशो एकत्व-

सङ्ख्यायासत्वेऽपि सङ्ख्याया रूपतादात्म्याङ्गीकारे तत्र च रूपाभाव इव सङ्ख्याया अप्यभावापत्तिः। यथा सङ्ख्या रूपे वर्तते तथा सङ्ख्यायामपि रूपापत्तिः, सङ्ख्यायां रूपतादात्म्यस्वीकारात्।

तच्च द्रव्यं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमोरूपेणैकादशविधम्। तमसोऽतिरिक्तद्रव्यत्वं शब्दस्य च द्रव्यत्वमग्रे निरूपयिष्यते।

### पृथिवी

पृथिवीत्ववती पृथिवी, रूपरसगन्धस्पर्शसङ्ख्यापरिमाणसंयोगगुरुत्वद्रवत्वस्नेहसंस्कारवती। तत्र शुक्लादिरूपाणां लाघवादेकत्वं नित्यानित्यत्वञ्च। न च घटादेरप्येकत्वं नित्यत्वञ्च स्यादिति वाच्यम्, तस्य सावयवत्वेनानित्यत्वग्रहात्। पाकस्त्वभिव्यञ्जकः। अन्यथा जलेन क्लिन्नेषु पटादिषु रक्तिमा न स्यात्। एवं शुक्लेषु तृणादिषु जलसेकान्नीलिमा न स्यात्। तस्माद्विनिगमकाभावादुभयोर्व्यञ्जकत्वमेव।

ननु पृथिवीस्पर्शस्यापाकजत्वे गोचण्डालादिस्पर्शयोः विधिनिषेधयोग्यत्वं न स्यात्, स्पर्शस्यैकत्वादिति चेन्न; स्पर्शशब्दस्य संयोगार्थकत्वाद् बाधकाभावात्। अन्यथा गङ्गाकर्मनाशादिस्पर्शविधिनिषेधाभ्यां जलेऽपि पाकजस्पर्शापत्तेः। काठिन्यकोमलत्वादेरुपपत्तिः कथमिति चेत्, काठिन्यकोमलत्वादीनां संयोगविशेषत्वेनोपपत्तेः। दृढावयवसंयोगः काठिन्यम्, शिथिलावयवसंयोगश्च कोमलत्वम्, अन्यथा चाक्षुषत्वं तयोर्न स्यात्। तस्माद्रूपादयो नित्याः। रूपादीनां नित्यत्वादेवासमवायिकारणसापेक्षता नास्तीति मीमांसका आशरते। चित्रं रूपं नाङ्गीकुर्वन्ति मीमांसकाः। सुवर्णस्य पार्थिवत्वमाचक्षते।

### सुवर्णस्य पार्थिवत्वम्

पृथिवी मृत्पाषाणसुवर्णशरीरा। ननु सुवर्णं न पार्थिवम्, अत्यन्तानलसंयोगेऽपि रूपद्रवत्वयोरनुच्छेदात्। पार्थिवे च रूपादिपरिवृत्तिरनुभूयते। न च जलाद्युपष्टम्भेनानुच्छेद इति वाच्यम्, नैमित्तिकद्रवत्वाधिकरणत्वात् जले च तदभावात्। तेन पृथिवीजलवैषम्यात् सुवर्णं तैजसम्। अत्र वदामः—पृथिवीत्वनियतनैमित्तिकद्रवत्व पीतरूपाभ्यां पृथिव्या एवांशैर्जलेन वा रूपादिपरावृत्तिप्रतिबन्धकल्पनात्। अन्यथा तेजसो रूपपरावृत्तिप्रतिबन्धकत्वे घटेऽपि पाकेन परावृत्तिर्न स्यात्। सुवर्णे तैजसत्वं तेजसि नैमित्तिकद्रवत्वं तदनुच्छेदः शुक्लभास्वररूपोष्णस्पर्शयोरभिभवः गुरुत्वञ्चेति कल्पनापरम्परास्वीकारापेक्षया प्रतिबन्धाद्रूपद्रवत्वयोरनुच्छेदमात्रकल्पनाल्लाघवम्। अत एव सुवर्णस्य द्रवीभावहेतुकतुल्यशब्दाभिधेयद्रव्येण द्रवत्वं भस्मीभावश्च दृश्यते, तैजसे तदयोगात्। तस्मात्पार्थिवमेव सुवर्णम्।

### आपः

अप्त्वसामान्यवत्य आपः। गन्धं विहायान्ये पार्थिवगुणा एव। ते च नित्या अनित्याश्च पूर्ववत्। अपां रसो मधुरः। समुद्रजले क्षारत्वं पृथिव्यनुविधानात्। कथमन्यथा तस्यैव मेघमुक्तस्य माधुर्यम्॥

### तेजः

तेजस्त्ववत् तेजः। रूपसङ्ख्यास्पर्शपरिमाणसंयोगसंस्कारवत्। तत् त्रिविधम्—दिव्यं भौममुदर्यञ्चेति। आद्यं सौरादि, द्वितीयं वन्ह्यादि, तृतीयं जाठरानलः। नित्यत्वदिकं पूर्ववत्।

### वायुः

वायुत्वजातिमान् वायुः स्पर्शसंख्यापरिमाणसंयोगवेगवान्। स द्वेधा-नित्योऽनित्यश्च, अणुकार्यभेदात्। स च स्पार्शनप्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात् घटवत् वायुं स्पृशामीत्यनुभवाच्च। ननु नैतद्युक्तम्, वायोरप्रत्यक्ष-

त्वात् । न हि प्रत्यक्षमात्रे स्पर्शाश्रयत्वं प्रयोजकम्, उद्भूतरूपवत्वस्योपाधित्वात् । यद्यपि न द्रव्यप्रत्यक्षमात्रे तत्प्रयोजकम्, आत्मनि साध्याव्यापकत्वात्, तथापि बहिर्द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्व-मुपाधिः । शीतो वायुरिति तूपनीतभानं मानसस्पर्शवत्वारोपो वा । नैवम्; सुवर्णे तप्तवारिस्थतेजसि ग्रीष्मोष्मणि च व्यभिचारात् । स्पार्शनप्रत्यक्षमते तु न कोऽपि दोषः । न च तप्तवारिस्थतेजसि स्पर्श एव प्रत्यक्षो न द्रव्यमिति वाच्यम्, मणिप्रभायां रूपमात्रप्रत्यक्षतापत्तेः घटेऽपि स्पर्शेन घटानुमानापत्तेश्च । न च बहिर्द्रव्यप्रत्यक्षे उद्भूत-रूपविशिष्टं स्पर्शवत्वं हेतुः, रूपविशिष्टस्पर्शतद्विशिष्टरूपयोर्हेतुत्वे नियामकाभावात् । ततश्चाक्षुषत्वे उद्भूतरूप-वत्वम् स्पार्शने चोद्भूतस्पर्शवत्वं प्रत्येकमेव हेतुः । एतेनोद्भूतरूपजन्यत्वं चाक्षुषत्वे प्रत्यक्षत्वे वा नियामकं परास्तम् । अतो वायुः प्रत्यक्षः ।

### आकाशः

अवकाशात्मकमाकाशम् सङ्ख्यापरिमाणसंयोगवत् । न च शब्दोऽप्यस्य गुणः, तस्य द्रव्यान्तरत्वेन शब्दखण्डे साधयिष्यमाणत्वात् । तच्चैकं विभु नित्यञ्च । तच्चाक्षुषम्, नीलं नभ इत्यस्य भ्रान्तत्वे मानाभावात् । अतिविरलत्वेन चान्यत्वानुपलम्भात् रूपान्तरेणाभिभवाद्वा । मेरुमूर्धगतमणीनां प्रभेयमिति प्रवादमात्रम् । माना-भावादित्येके । अन्ये तु दूरत्वदोषेण सागरजले इव नीलत्वावभासः । कटाहवदत्युज्ज्वलत्वं भूतलसंलग्नत्वं भ्रान्तमेव । आकाशे पक्षीति विशिष्टप्रत्ययादेव चाक्षुषत्वमिति । विशदावभासं व्योम चाक्षुषमेवेति तन्त्ररत्ने पार्थसारथिमिश्रः । न च वायोश्चाक्षुषत्वापत्तिः, इह पक्षीति विशिष्टप्रतीत्या हि व्योम चाक्षुषम्, इदानीं घटवत् ज्ञानलक्षणाभावात् अतीन्द्रियस्य स्मृत्योपनीतस्य भानायोगाच्च । अन्यथा परमाणोस्तदापत्तेः । न च वायौ साऽस्ति । अतो व्योम चाक्षुषम् ॥

### कालः

कालोऽतीन्द्रियधीहेतुः । कालकृतपरत्वापरत्वानुमेयश्चेति तार्किकाः । यावज्जीवपादे तन्त्रवार्तिक-टीकायां राणके श्रीसोमेश्वरभट्टैः सूर्योदयः घटः शब्दो वा भूतो वर्तते भविष्यति वेत्यादिसर्वविशेषणतया वर्तमानादि-कालप्रतीतेरतीतसत्तादौ च तदप्रतीतेः सत्ताविषयत्वायोगात् ज्ञानलक्षणानिराकरणाच्चोपनीतभानायोगात् प्रत्यक्षः कालः । तत्रैकपलानेकक्रियाक्षणसमुदायावच्छिन्नो वर्तमानः कालः । एवमुपाधिभेदाद् भूतादिः । अतः षडिन्द्रियवेद्य इत्युक्तम् ।

### दिक्

दिक् प्राच्यादिधीहेतुः दिक्कृतपरत्वापरत्वगम्या च । दूरस्थे हि यूनि परत्वम् समीपस्थे च वृद्धेऽपरत्वं प्रतीयते । कालकृते तु वैपरीत्यम् । ताभ्यां दिक्कालावनुमेयौ । तथाहि बह्वल्पसूर्यस्पन्दान्तरितत्वेन वृद्धयूनोः परत्वापरत्वे प्रतीयेते । सूर्यपरिस्पन्दनस्य च सूर्यसमवेतत्वेन साक्षाद्वृद्धादिशरीरसम्बन्धाभावाच्छरीरसंयुक्त-कालसंयुक्तसूर्यसमवेतत्वरूपः परम्परासम्बन्ध एव हेतुः । तत्सम्बन्धघटकश्च काल एव ।

### आत्मा

आत्मत्ववान् आत्मा । स विभुर्नित्यश्च । न देहरूपः, 'अविनाशी वा अरेऽयमात्मा' इति श्रुतेः, 'अजो नित्यः शाश्वतः' इति स्मृतेश्च । स्तनपाने प्रवृत्तिर्बालस्येष्टहेतुता स्मृतिजन्या, स्मृतिश्च नानुभवं विना, स च नैतद्देहेऽस्तीति जन्मान्तरीयः कल्प्यते । देहरूपत्वे च पूर्वदेहनाशात् स्तनपाने प्रवृत्तिर्न स्यात् न स्याच्च पूर्वजाति-स्मरत्वम् अनुभवाभावात् । किञ्च यमदूतैर्भ्रमान्नीतानां परलोकवृत्तान्तकथनं न स्याच्च । पिशाचादीनां परकायमा-

विश्व गयाश्राद्धादिपावनस्य भ्रमत्वे गयाश्राद्धात् पैशाच्यनाशः पीडानिवृत्तिश्च न स्यात् । स्वर्गसाधनकर्मबोधक-वेदाप्रामाण्यापत्तेः, कृतहानाप्रकृताभ्यागमापत्तेश्च । एतेनानित्यत्वं प्रत्यूढम् ।

तद्गुणाः—सङ्ख्यापरिमाणसंयोगवुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मसंस्काराः । ते च नित्याः । स च 'सत्यं नित्यज्ञानसुखवान् 'ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं' इत्यादिश्रुतेः । नित्यमेव सुखं विषयैरभिव्यज्यते विरोधिगुणैश्चाभिभूयते । 'आनन्दम्' इति मत्वर्थेऽच् प्रत्ययः । तेन ज्ञानवान् न तु ज्ञानसुखात्मकः, ज्ञानवानहं सुखज्ञानहमिति भेदप्रतीतेश्च । तच्च ज्ञानं स्वप्रकाशम् । मोक्षस्वरूपं परस्तात्प्रस्तोष्यते ।

मनः

मनस्त्वयोगान्मनः सङ्ख्यापरिमाणसंयोगवत् । तद्विभु नित्यञ्च । यदि मनो न स्यात् स्वप्नस्मृत्यादि-धीर्न स्यात् । अदृष्टोपवन्धाद्वरं दृष्टमिन्द्रियम् । बाहुचन्दनलेपादौ तदवच्छिन्नसुखप्रतीत्या विभु मनस्सिध्यति । न च विभुत्वे मरणासम्भवः, प्राणवियोगेनोपपत्तेः । पृथिव्यादीनामन्यतमद्द्रव्यान्तरं वेति पार्थसारथिमिश्रः ।

शब्दः

शब्दत्ववान् शब्दः । स द्विधा-ध्वनिर्वर्णात्मकश्च । सङ्ख्यापरिमाणसंयोगवान् । ध्वनौ वेगोऽपि । ध्वनिर्वर्णहेतुस्तदहेतुश्च । वर्णः ककारादिः । तारत्वमन्द्रत्वादिर्ध्वनिधर्म एव वर्णे भासते । वर्णा नित्याः । केचि-च्छब्दवृध्यादीनां त्रिक्षणावस्थायित्वं सङ्गिरन्ते, तन्मीमांसका नाङ्गीकुर्वते । आक्रोशशब्दस्यैकत्वात्स्थिरत्वाच्च । भेरीशब्दो मया श्रुतः, य एव त्वया श्रुतस्स एव मयापीति प्रतीतिश्च । स एवायं गकारस्तमेवानुभवामीति प्रतीतेर्लाघवाच्च । अनन्तककारतत्प्रागभावध्वंसजातीनां कल्पने गौरवाच्च ।

तमसो द्रव्यत्वम्

तमस्त्वजातिमत् तमः, रूपसंख्यापरिमाणसंयोगवेगवत् । तत् त्रिविधम्— अवतमसं सन्तमसम् अन्धतमसञ्चेति । ननु तमसो भावत्वमेवासिद्धम्, कुतस्तरां द्रव्यत्वम् ? आलोकाभाव एव तम इत्युच्यत इति चेत्, अत्र वदामः—यावत्तेजस्संसर्गाभावरूपं चेत्तमः, बहुलतरं तमः बहुलतमं नीलं नीलतरमिति तरतमव्यवहारो न स्यात् । आलोकाभावरूपं तमोऽभविष्यत् तर्हि प्रसिद्धः कविः

'यत्तामिस्रे नरककुहरे यद्वहिश्चक्रवालात्
यत्पाताले यदपि धरणौ वार्षुकीषु क्षपासु ।
रूढं गाढं तम इति समस्तञ्च तच्चिन्त्यमानं
नास्माकान्तःकरणतमसो दासभावेऽपि योग्यम्' ॥

इति तारतम्यं तमसो नावर्णयिष्यत् । तरतमभावश्च तेजोऽनुप्रवेशाननुप्रवेशकृतः । यदि तेजसो यावत्पदं विशेषण-त्वेनानुप्रवेश्यते यावत्तेजोऽभाव इति तर्हि छायादौ यावत्तेजोऽभावाभावेनाव्याप्तेः । एवं रत्नादौ तेजस्सामाना-धिकरण्येन छायाधीर्न स्यात्, रत्नरश्मिच्छायाचिकित्सायाश्शास्त्रसिद्धाया लोपस्स्यात् । क्वचिच्छायायाश्शुचित्वम् क्वचिच्चाशुचित्वं धर्मशास्त्रसिद्धं वितथं स्यात् । गवाश्वयोश्छायायाश्शुचित्वम् चण्डालच्छायाया अशुचित्वम्, अशुचित्वनिवारणाय प्रायश्चित्तञ्च यद्धर्मशास्त्रेषु निर्दिष्टं तस्य का गतिः ? न ह्यालोकाभावमात्रेण धर्मशास्त्रस्य सङ्गतिर्भवितुमर्हति । यदि च तेजोऽभावस्यैव क्वचिदशुचित्वनिवारकतया क्वचिच्च शुचित्वबोधकतया धर्म-शास्त्रवाक्यं नीयते तर्हि 'एकत्र पुनर्वचनं परिसङ्ख्यार्थमि' तिन्यायेन घटाद्यभावस्य सर्वदाऽशुचित्वापत्तिः । नन्वस्पर्शस्य तमसः कथं रूपवत्वमिति चेदित्थम्—वायोरन्यत्र यथा स्पर्शवद् द्रव्यस्य रूपवत्वनियमेऽपि वायौ स्पर्शवत्वाक्षतिः, यथावा धूमादन्यस्य स्पर्शवद्द्रव्यस्य चक्षुःप्रदेशादन्यत्रोपलभ्यमानस्पर्शवत्वनियमेऽपि धूमस्य

चक्षुःप्रदेश एवोपलभ्यमानस्पर्शवत्त्वमिति भङ्गस्तथा निस्पर्शत्वेऽपि तमसो रूपवत्त्वं किं न स्यात् ? न हि नीरूपत्वे निःस्पर्शवत्त्वं प्रयोजकम्। वैपरीत्यस्यापि सुवचत्वेन वायोर्नीरूपत्वात् निःस्पर्शानुमानापत्तेः। अत्रत्यो विशेषः कुतूहलादवगन्तव्यः। एवञ्च तमोरूपवद् द्रव्यं मीमांसकानाम्।

## शब्दस्य द्रव्यत्वम्

एवं शब्दमपि द्रव्यमित्यङ्गीकुर्वन्ति मीमांसकाः। जैमिनिसूत्रारूढमिदं शब्दस्य द्रव्यत्वम्। सप्तमाध्यायस्य तृतीयपादीयमन्तिमं सिद्धान्तसूत्रम्—'अभिधानोपदेशाद्वा विप्रतिषेधात् द्रव्येषु पृष्ठशब्दस्स्यात्' ( जै० सू० ७.३.३३ ) इति। अत्र 'पृष्ठैरुपतिष्ठते' इति विधिगतपृष्ठशब्दस्यार्थो विचारविषयः। किं पृष्ठशब्दश्शरीरावयववाची ? उत मन्त्रवाची ? उपतिष्ठतेरभिधानमर्थः। तदिदमभिधानं शरीरावयवपृष्ठप्रदर्शनपूर्वकं कर्तव्यमित्यर्थः किं वा उत्थानपूर्वकं मन्त्राभिधानमर्थः ? इति विचारशरीरम्। तत्र सूत्रकारः—'द्रव्येषु पृष्ठ शब्दस्स्यात्' इति द्रव्येषु पृष्ठशब्दमभिप्रैति। भाष्यकारः 'द्रव्येषु' इत्यस्य 'ऋग्द्रव्येषु' इति विवृणोति। कुतूहलवृत्तिकारः श्रीवासुदेव दीक्षितः 'द्रव्येषु मन्त्रेषु स्यात्' ( कु० वृ० पृ० १०४९ ) इति लिखति। मन्त्रा वर्णसमूहाः। वर्णाश्च शब्दाः। शब्दानां द्रव्यत्वमभिप्रेतं सूत्रकारस्येति विज्ञायते। इमामेव सरणिमनुसरन्ति भट्टपादपार्थसारथिमिश्रप्रभृतयः। तदुत्तरकालवर्तिनो मीमांसाकाः कमलकरभट्टप्रभृतयोऽनुमानादि प्रदर्शनपुरस्सरं सूत्रकाराभिमतं पक्षं समर्थयन्ते।

## गुणनिरूपणम्

असमवायिकारणमस्पन्दात्मा गुणः। बुध्यादौ तदभावेऽपि द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। स च रूपरसगन्धस्पर्शसङ्ख्यापरिमाणसंयोगगुरुत्वद्रवत्वस्नेहबुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मसंस्कारभेदादष्टादशधा भिन्नः। पृथक्त्वमन्योन्याभाव एव, परत्वमपरत्वञ्च कालदिक्संयोग एव, शब्दस्तु द्रव्यम्, संयोगाभाव एव विभागः द्वेषो ज्ञानविशेषः।

चक्षुर्ग्राह्यो गुणो रूपत्ववद्वा रूपम्। तत् नीलपीतादिरूपेण षड्विधम्। चित्रं रूपसमुदायो नार्थान्तरम्। रूपं नित्यगतं नित्यम् अनित्यगतञ्चानित्यम्। केचन पाकादिनाऽनित्यं मन्यन्ते। पक्षद्वयमिदं वार्तिककारैरुक्तम्। एवं रसस्पर्शादयोऽपि। रसनग्राह्यो गुणो रसः मधुरादिभेदेन षड्विधः। गन्धो घ्राणग्राह्यो गुणः। सुरभ्यसुरभिभेदेन द्विविधः। स्पर्शस्त्वगिन्द्रियग्राह्यो गुणः। स च शीतोष्णानुष्णाशीतभेदेन त्रिविधः। रूपादयश्चत्वारः उद्भूतानुद्भूतभेदाद् द्विविधाः। सङ्ख्या एकत्वादि परार्धपर्यन्ता लोकव्यवहारसिद्धा। केचित्तु द्वित्वादिव्यवहारस्तत्तत्स्वरूपमात्रविश्रान्तबुद्धिपर इति मन्यन्ते। तन्न; एतादृशबुद्धेरप्रतीतेः। सा व्यासज्यवृत्तिरव्यासज्यवृत्तिरिति द्विधा। आद्या द्वित्वादिका अन्त्या चैकत्वरूपा। एवं नित्यानित्यगतत्वेन द्विविधा भवति। तत्रापेक्षाबुद्धिजन्यत्वं द्वित्वादेर्मीमांसका न स्वीकुर्वन्ति, अपेक्षाबुद्धेरभिव्यञ्जकत्वमुपपादयन्ति। घटद्वये पुंसहस्रस्य कालभेदेनापेक्षाबुद्धौ जातायां बुद्धिभेदेन सहस्रद्वित्वापत्तेः। क्लृप्ते प्रत्यक्षसहस्रे द्वित्वस्य हेतुत्वे लाघवात्। समवाय्यसमवायिनिमित्तकल्पनेऽपेक्षाबुद्धिनाशस्य तन्नाशं प्रति हेतुत्वेऽतिगौरवाच्च। अतो द्वित्वादिकं नित्यगतं नित्यम्, कार्यसमवेतस्यैवानित्यत्वनियमात्। अत एवाष्टत्वे द्वित्वत्रित्वादिसत्त्वेऽप्यभिव्यञ्जकापेक्षाबुध्यभावान्नाभिव्यक्तिर्न वा परिच्छेदकाः। तदिदं भट्टपादा आहुः—

'यद्यप्यर्थात्मनास्त्येव सहस्रसङ्ख्यास्ववान्तरा।
अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम्'॥

अत्रार्थे वैश्वानराधिकरणसिद्धन्यायानुसरणं सम्पादितं भवति, अन्यथा तन्न्यायविरोधापत्तेः। तथाहि—श्रौतकर्मानुष्ठातुर्यजमानस्य पुत्रे जाते वैश्वानरेष्टिर्विहिता। तदुत्पत्तिवाक्यं 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्यु-

पक्रम्य 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति' इति मध्य आम्नाय 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्युपसंहृतम्। अत्रोपक्रमोपसंहाराभ्यामेकमिदं वाक्यमिति स्पष्टम्। तत्र 'द्वादशकपालं निर्वपेत्' इति निर्वापक्रियायाः कर्मत्वं द्वादशकपालस्य तावत्प्रत्यक्षम्। तत्र मध्यवर्तिषु वाक्येषु श्रुतानाम्—अष्टत्वनवत्वदशत्वैकादशत्वानां परिच्छेदकत्वेन सम्बन्धो भवति न वेति विशये न भवतीति सिद्धान्तः। तत्र हेतुः—द्वादशकपालस्य द्वितीयान्तस्य निर्वपतिक्रियया यथा सम्बधस्तथा अष्टाकपालादेर्न निर्वपतिक्रियया सम्बन्धः 'अष्टाकपालो भवति, नवकपालो भवति' इत्येवं प्रथमान्तत्वेन तेषां श्रवणात्। द्वादशेऽष्टत्वनत्वादिकमस्तीत्येतवन्मात्रेणाष्टत्वादीनां विधानमयुक्तम्। वाक्यानां मध्यपठितानां किं कार्यमिति जिज्ञासायामिमानि वक्येनार्थवादत्वेन नेयानीति सिद्धान्तितम्। अत्र बहवः पूर्वपक्षास्तेऽत्र न प्रदर्शिताः। केवलं कर्मविशेषणाभावे परिच्छेदकत्वं नास्तीत्यत्र न्यायः प्रदर्शितः। अत एव 'शतं ब्राह्मणास्सोमं भक्षयन्ति' दशानां दशानां ब्राह्मणानाम् एकैकं चमसमिति विभागस्समर्थितो भवति भक्षक्रियाया विशेषणत्वात्।

मानव्यवहारहेतुः परिमाणं गुणः अणुमहत् ह्रस्वदीर्घादिभिन्नः, अणुत्वं त्रसरेणुगतम्। परमपरमिति भेदेन महत्त्वं द्विधा। आद्यं व्योमादौ, अन्त्यं जन्यम्। अपरं परिमाणं पञ्चधा—सङ्ख्याजं त्र्यणुके, परिमाणजं तन्तुमानजं पटे महत्त्वम्, उभयजं बहुभिर्महद्भिश्चारब्धम्, परिमाणप्रचयजं प्रचिताभ्यां महद्भ्यामारब्धम् सङ्ख्यापरिमाणप्रचयजं तैरेव बहुभिर्जन्यम्। दीर्घत्वयोगि दीर्घम् ह्रस्वत्वयोगि ह्रस्वम्।

पृथक्त्वं न गुणः, अन्योन्याभावेनान्यथासिद्धेः। ननु घटात्पटः पृथक् इति पृथक्त्वस्य सावधिकत्वमनुभूयते। अन्योन्याभावे च तन्नास्तीति चेन्न; घटाद्भेद इत्यन्योन्याभावेऽप्यवधिप्रतीतेः।

उत्तरदेशसंयोगफलकपूर्वसंयोगध्वंस एव विभाग इति न विभागो गुणान्तरम्। संयुक्तधीहेतुस्संयोगः। सद्वेधा-नित्योऽनित्यश्च। कालाकाशादेर्नित्यः। अनित्यो द्विधा-अन्यतरकर्मजः उभयकर्मजश्च। श्येनक्रियया स्थाणोस्संयोग आद्यः। मल्लयोर्मेषयोर्वा संयोग उभयकर्मजः। संयोगजसंयोगो नाङ्गीक्रियते। अवयावावयविनोरेकसंयोगेनोपपत्तौ संयोगान्तरस्यावश्यकत्वाभावात् अवयवावयविनोस्तादात्म्याङ्गीकाराच्च। भाट्टमते सम्बन्धिभेदेन संयोगो भिन्नः। शास्त्रदीपिकायास्तर्कपादे पार्थसारथिना विषयोऽयं विशेषेण निरूपितः।

बुद्धिर्ज्ञानम्। सा द्विधा-अनुभवः स्मृतिश्च। अनुभवो यथार्थायथार्थभेदेन द्विविधा। प्रमाणजन्यो यथार्थानुभवः। सैव बुद्धिः प्रमा। तत्र कारणम् अनधिगतार्थगन्तृ प्रमाणम् स्मृतिप्रत्यभिज्ञासङ्ग्रहाय-अबाधितार्थबोधकत्वं प्रमाण्यमिति वा। धारावाहिकज्ञानेऽनधिगतक्षणादेः प्रत्यक्षत्वात् प्रामाण्यं सुलभम्। तानि च प्रमाणानि प्रत्यक्षानुमानोपमानार्थापत्त्यनुपलब्धिशब्दभेदेन षट्।

## प्रत्यक्षम्

सदर्थेन्द्रियसंयोगजं ज्ञानं प्रत्यक्षम्। अर्थासत्वाद् भ्रमो न प्रत्यक्षम्। योगिप्रत्यक्षमिन्द्रियजत्वाभावान्न स्वीक्रियते। तदिदम् 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षम्' इति सूत्रकारेण निरूपितम्। तच्च प्रत्यक्षं निर्विकल्पकं सविकल्पकञ्चेति द्विविधम्। संसर्गानवगाहिज्ञानं निर्विकल्पकम्, वैशिष्ट्यावगाहिज्ञानञ्च सविकल्पकम्। तत्करणमिन्द्रियं न सन्निकर्षादि। सविकल्पकस्यापि हानोपादानापेक्षाबुद्धयः फलम्। तथा च प्रमाणानां त्रैफल्यमुक्तं भट्टपादैः। इन्द्रियाणि घ्राणरसनचक्षुःश्रोत्रत्वङ्मनांसि। सत्सन्निकर्षश्चतुर्धा-संयोगः संयुक्ततादात्म्यम्, संयुक्ततादात्म्यतादात्म्यम् विशेषणविशेष्यभावश्चेति। श्रोत्रेण शब्दग्रहणं संयोगेनैव, शब्दस्य

द्रव्यत्वात्। संयुक्ततादात्म्येन रूपरसादीनां ग्रहणम् शब्दत्वग्रहणञ्च। रूपत्वादिग्रहे संयुक्ततादात्म्यतादात्म्यम्, अभावग्रहे विशेषण वशेष्यभावः। स्थलविशेषेऽनुपलब्ध्याऽभावग्रहणम्।

## अनुमानम्

अनुमितिकरणमनुमानम्। व्याप्तिज्ञानत्वेन तज्जन्यं ज्ञानमनुमितिः। तेन व्याप्तिज्ञानान्नुव्यवसाये नानुमितित्वम् तत्त्वेनाजन्यत्वात्। पर्वतो वह्निमानिति ज्ञाने वह्न्यंशेऽनुमितित्वं, तत्रैव व्याप्तिज्ञानं हेतुः। पर्वतांशे तु इन्द्रियजत्वात्प्रत्यक्षमेव। व्याप्तिश्च-सर्वसाधननिष्ठसाध्यसामानाधिकरण्यम्। अतएवातस्वान्न व्यतिरेकयोर्व्याप्तिः। सा च व्यभिचाराज्ञानसहकारदर्शनाभ्यां गृह्यते। सहचारधीश्च भूयस्सकृद्वा। तच्चानुमानम् अन्वयिरूपमेव, न तु व्यतिरेकिरूपम्। साधनेन साध्यानुमितौ साध्याभावसाधनाभावव्यप्तेरनुपयोगात्। न ह्यभावयोर्व्याप्तौ भावस्य साध्यसामानाधिकरण्यं तत्पक्षधर्मतया वाऽनुमितिर्घटते। व्यतिरेकव्याप्त्या साध्यधीश्चार्थापत्त्या, न त्वनुमानात्।

तच्चानुमानं स्वार्थं परार्थञ्चेति द्विविधम्। परार्थानुमानं त्र्यवयवम् न तु पञ्चावयवम्,। प्रतिज्ञाहेतूदाहरणरूपाः उदाहरणोपनयनिगमनरूपा वा अवयवाः। त्रिभिरेवानुमितिसम्भवेऽधिकस्य वैयर्थ्यात्। भाष्यकाराः त्रीनेवावयवान् प्रदर्शयन्ति, पार्थसारथिमिश्रोऽप्येवमेवोपपादयति।

## उपमानम्

सादृश्यप्रमाकरणमुपमानम्। ग्रामे गां दृष्टवतो वनं गतस्य गवयेन्द्रियसन्निकर्षे जाते गोसदृशोऽयं पिण्ड इति धीरुदेति। सा करणम्। तत एतत्सदृशो मदीया गौरिति गोनिष्ठसादृश्यज्ञानं फलम्। सैवोपमितिः। न चेदं प्रत्यक्षम्, गोरिन्द्रियासन्निकृष्टत्वात्। गवयनिष्ठसादृश्यस्यातल्लिङ्गत्वान्नानुमानम्। यद्यपि मदीया गौरेतत्सदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात्, यो यन्निष्ठसादृश्यप्रतियोगी स तत्सदृशः यथा मैत्रसदृशश्चैत्र इत्यनुमानसम्भवः, तथाप्येतत्सदृशी मदीया गौरित्यनुभवाद् उपमिनोमीत्यनुव्यवसायाद् उपमितेः नियमेन व्याप्तिज्ञानजन्यत्वस्य वक्तुमशक्यत्वाद् उपमितिर्मानान्तरम्। परे हि गवयशब्दवाच्योऽयमित्युपमितिः। तत्करणं गोसादृश्यविशिष्टपिण्डज्ञानमिति वदन्ति। तत्पक्षे शब्दानुविद्धप्रत्यक्षेऽन्तर्भावो भवेदुपमितेः।

किञ्च उपमितिप्रमाणस्वीकारे मीमांसकानां मुख्यमुद्देश्यम्-यत् प्रकृतिविकृतिस्थले सादृश्यात् विकृतौ प्रकृतितो धर्मातिदेश एव। विकृतयो धर्मरहिता भवन्ति। विकृतिविधायकवाक्ये आख्याताभिहिता भावना किं केन कथमित्याकाङ्क्षति। तत्र 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र भावनायाः किमाकाङ्क्षा वाक्योपात्तफलपदेन पूर्यते केनेत्याकाङ्क्षायां समानपदश्रुत्या धात्वर्थेन पूर्यते। कथमाकाङ्क्षायां वाक्ये तद्धितान्तत्वैकदेवतात्वनिर्वपतिघटितत्वादिकमनुभूय तेनाग्नेयवाक्यमुपमीयते। आग्नेयवाक्येऽप्येतेषां सत्वात्। यथा आग्नेयवाक्ये कथमाकाङ्क्षा धर्मैः पूरिता तथा तान् धर्मानत्रादिश्य सौर्यवाक्येऽप्याकाङ्क्षा पूरणीयेति। अत्रत्यो विशेषविचारः कमलाकरभट्टेन स्वीये काव्यप्रकाशव्याख्याने दशमोल्लासे निरूपितः, तस्मादवगन्तव्यः।

## अर्थापत्तिः

उपपाद्यज्ञानादुपपादककल्पनाऽर्थापत्तिः। येन विना यन्नोपपद्यते तदुपपाद्यम्। तज्ज्ञानं करणम्। रात्रिभोजनेन विना दिनेऽभुञ्जानस्य पीनत्वमनुपपन्नम् इत्युपपाद्यम्। अनुपपन्नत्वञ्च तदभावव्यापकाभावप्रतियोगित्वम्। रात्रिभोजनाभावे हि दिनेऽभुञ्जानस्य पीनत्वाभाव इति स व्यापकः। रात्रिभोजनमुपपादकम्। रात्रिभोजनस्य

कल्पनाऽर्थापत्तिः। पीनत्वज्ञानं करणम्, तेनार्थापत्तिः कल्पना यस्मादित्यर्थः। सेयं दृष्टार्थापत्तिः। यत्र यागस्य स्वर्गसाधनत्वं श्रुतं यागस्य क्षणिकत्वेन साधनत्वायोगाद् अपूर्वं कृत्वेति शब्दः कल्प्यते सा श्रुतार्थापत्तिः। यथा जीवंश्चैत्रो गृहे नास्तीति श्रुते गृहासत्वे बहिस्सत्वं कल्प्यते इत्यभिहितानुपपत्तिरित्युच्यते। यत्रार्थाभिधानार्थं द्वारमित्यादौ पिधेहीति पदं कल्प्यते विश्वजिति स्वर्गकाम इति पदं कल्प्यते तत्राभिधानानुपपत्तिः। न चेदमनुमानेऽन्तर्भवति, अन्यथाभावात्। व्यतिरेकी च नानुमानमित्युक्तम्। अर्थापत्तौ नानुमिनोमीत्यनुव्यवसायः, किन्तु कल्पयामीति। अतो गन्धवत्वेनेतरभेदः पृथिव्यामर्थापत्त्यैव।

## अनुपलब्धिः

मानान्तराजन्याभावप्रमाकरणमनुपलब्धिः। अतीन्द्रियधर्माद्यभावप्रमाकरणेऽनुमानेऽतिप्रसङ्गान्मानान्तराजन्येति। अभावस्मृतिहेतौ संस्कारेऽतिप्रसङ्गवारणाय प्रमेति। धर्माद्यनुपलब्ध्या तदभावानिश्चयात् योग्यानुपलब्धिरभावग्राहिका। योग्या चासावनुलब्धिश्चेत्यर्थः। तस्या योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जित प्रतियोगित्वम्। घटाभावस्य प्रतियोगी घटः, तस्य तर्कितं यत्सत्त्वं तेन प्रसञ्जितः-आपादितः प्रतियोगी उपलब्धिरूपो यत्रेत्यर्थः। यद्यत्र घटस्स्यात्तदुपलभ्येतेति यावत्। आत्मनि धर्मादिर्देशान्तरस्थघटादेश्चातीन्द्रियत्वेनोपलम्भापादनाभावान्नानुपलब्ध्याऽभावग्रहः। न चेन्द्रियमेव तत्र हेतुः, तस्याभावेन सन्निकर्षाभावात्। अन्वयव्यतिरेकाभ्यामिन्द्रियस्याधिकरणज्ञानोपक्षीणत्वेनाहेतुत्वात्। अत एव देशान्तरीयघटस्यानुपलब्ध्या नाभावग्रहः, अधिकरणग्रहाभावात् योग्यत्वाभावाच्च। विशेषणत्वादेश्च स्वरूपभिन्नत्वाभावात्। अनुपलब्धेश्चाभावग्रहे हेतुत्वं क्लृप्तम् करणत्वमात्रं कल्प्यम्।

## शब्दस्वरूपनिरूपणम्

अबाधितार्थसंसर्गविषयं वाक्यं शब्दः। वाक्यञ्चाकाङ्क्षायोग्यतासन्निधिमदर्थकानां पदानां समूहः। परस्परजिज्ञासाविषयत्वमाकाङ्क्षात्वम्। क्रियाश्रवणे कारकस्य, कारकश्रवणे च क्रियाया जिज्ञासा भवति। पदानामप्यर्थद्वारैवाकाङ्क्षादिमत्वम्। अतोऽर्थेष्वेवोक्ततात्पर्यम् विषयसंसर्गाबाधो योग्यता। अतएवार्थवादानां वपोत्खननादिप्रतिपादकानां वपोत्खननबाधेऽपि तात्पर्यविषयप्राशस्त्याबाधात् योग्यता स्वीक्रियते। पदोपस्थाप्यत्वं सन्निधित्वम्। अत एव द्वारमित्यादौ शब्दाध्याहारः, न त्वर्थाध्याहारः। शाब्दबोधं प्रति पदजन्यपदार्थज्ञानस्य कारणत्वस्वीकारात्। अर्थाध्याहरपक्षे ऊहोच्छेदापत्तेः। पदं न वर्णसमूहः, अकारादावव्याप्तेः। नापि शक्तं पदम्, घटोत्पादनशक्तिमति दण्डकाष्ठेऽपि तदापत्तेः। नाप्यर्थप्रत्ययानुकूलशक्तिमत्त्वम्, धूमेऽपि वह्निप्रत्ययानुकूलशक्तिमति तदापत्तेः। वर्णत्वे सतीति विशेषणदानेऽपि घटम् इत्यत्र प्रत्येकं प्रकृतिप्रत्यययोः पदत्वापत्तिः। प्रकृतिप्रत्यययोः प्रत्येकमर्थप्रत्ययगमकत्वात्प्रत्येकमेव पदमिति केचनाभिप्रयन्ति। किन्तु 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति न्यायेन केवलायाः प्रकृतेः, केवलप्रत्ययस्य वा प्रयोगोऽसाधुरिति साधुत्वसिद्धये प्रकृतिप्रत्यययोर्मिलितयोरेवार्थप्रत्यायकत्वमङ्गीकर्तव्यमिति पदं सुप्तिङन्तं भवति।

तच्च पदं वर्णात्मकत्वान्नित्यम्, वर्णानां नित्यत्वाङ्गीकारात्। वर्णाश्च न कृतकाः, स एवायं ककार इति प्रत्यभिज्ञया नानात्वानित्यत्वयोर्बाधात्। न च प्रत्यभिज्ञाया जातिविषयत्वम्, अनन्तवर्णतत्प्रागभावध्वंस जातिप्रत्यभिज्ञाभ्रान्तिकल्पनागौरवात्। तारद्रुतमन्द्रत्वादयस्तु न भेदकाः, तेषां वर्णाभिव्यञ्जकध्वनिधर्मत्वात्। भट्टपादा आहुः—

'तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते।
व्यक्तिलभ्यञ्च नादेभ्य इति गत्वादिधीर्मृषा' इति।

वर्णानां क्रमोऽपि ध्वनिकृत एवेति

'तद्दर्शेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः।
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थिताः
वर्णाः अनुपतन्तस्स्युरर्थभेदावबोधकाः' ॥

भट्टपादाः। अतो वर्णात्मकश्शब्दो नित्यः।

### वेदापौरुषेयत्वम

एतेन वेदानामपौरुषेयत्वं साधितं भवति। अर्थमुपलभ्य रचितत्वाभाव एवापौरुषेयत्वम्। शब्दरचना सर्वत्रार्थोपलम्भोत्तरकाले भवति। धर्मस्त्वलौकिकः तद्विषयकं ज्ञानं वेदादेव सिध्यति। ईश्वरस्यापि वेदादृते धर्मरूपार्थज्ञानमसम्भवम्। न चेश्वरज्ञानमेव वेदः, तस्माच्च धर्मसिद्धिः, प्रमाणान्तरेण लब्धसत्ताको हि ज्ञानगोचरो भवति, न तु ज्ञानाद्वस्तुसिद्धिः। वाक्यरचनाया हेतुभूतं तदर्थज्ञानं कल्प्यत इति चेदन्योन्याश्रयः। सकर्तृकत्वे सिद्धे हेतुभूतार्थकल्पना, तथा च सकर्तृकत्वमिति। ननु वाक्यत्वात्सकर्तृकत्वानुमानमिति चेन्न; उपलभ्य रचितत्वाभावेन बाधात्। उपलभ्य रचितत्वस्य साध्यव्यापकत्वेन बालशुकादिवाक्ये साध्यव्यापकत्वेनोपाधित्वाच्च।

किञ्च वेदवाक्यार्थो धर्मो वेदवेद्यः। स च दर्शपूर्णमासादिः तज्जन्यमपूर्वं वा। 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदानां सामवेदोऽस्मि' इति गीतावचनाद् वेदवेद्यत्वमीश्वरस्य वेदरूपत्वञ्च जानीमः। धर्मस्येश्वरस्य च वेदवेद्यत्वेनैकरूपत्वं सिध्यति धर्म एवेश्वर इति। स ईश्वरो वेदरचयिता कथं भवेत्? वेद्यवेदकभावस्य भिन्ननिष्ठत्वात्। स्वयमेव वेदको वेद्यश्च न भवितुमर्हति। अतः प्रवाहनित्यत्वमङ्गीकृत्य गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा ईश्वर उपदिशतीत्येव साधनमुचितम्, न त्वीश्वरोऽर्थमुपलभ्य वेदं रचितवानिनि। अतः प्रवाहानादित्वेन जगतः वेदस्याप्युपदेशक्रमेण नित्यत्वमपौरुषेयत्वञ्च स्वीकर्तव्यम्।

किञ्च सृष्टिप्रलयशब्दौ साकाङ्क्षौ-कस्य सृष्टिः कस्य च प्रलय इति। स्थितस्य प्रलयो भवति, लयंगतस्य च सृष्टिरिति क्रम आश्रिते प्रवाहनित्यत्वमेवाश्रितं भवति। तस्मादपौरुषेयत्वमेव वेदस्य। एतेन शब्दो नित्यः तदर्थश्च नित्य इति साधितं भवति। तयोस्सम्बन्धोऽपि शक्त्याख्यो नित्यः। अत एव जातिरर्थः, न व्यक्तिः, नित्यानित्यसम्बन्धायोगात्। स च सम्बन्धोऽन्त्यवर्णनिष्ठः। 'पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः' इति भाष्योक्तत्वात्। वार्तिककारास्तु सर्ववर्णेषु वाचकत्वशक्तिमङ्गीकुर्वन्ति।

### पदविभागः

तच्च पदम् उपसर्गनिपातनामाख्यातभेदेन चतुर्विधम्। तत्रोपसर्गनिपाता द्योतका न वाचकाः। तथा च वार्तिके—

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः।
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते" ॥ इति।

घटादिपदानां जातौ शक्तिः। शक्तिश्च पदार्थान्तरमित्युक्तम्। व्यक्तीनामानन्त्यात् सर्वासु व्यक्तिषु न शक्तिः। नापि कासुचिद्व्यक्तिषु, असङ्केतितासु प्रयोगात्। सङ्केताभावेऽपि यदि प्रयोग इष्यते तर्हि गवादिपदात् घटादिबोध

आपतेत् । न हि तत्र सामान्यलक्षणा नियामिका, सामान्यस्य वाच्यत्वेन सर्वबोधसम्भवे किमिति व्यक्तेर्वाच्यत्वं-मङ्गीक्रियते । तेन शब्दार्थौ नित्यौ । सन्देहाच्च न व्यक्तौ शक्तिः न हि शब्दस्संशायकः । नागृहीतविशेषणान्यायेन जातिविशिष्टव्यक्तावपि न शक्तिः, लाघवात्प्राथम्याच्च जातेर्वाच्यत्वात् । भट्टपादैरप्युक्तम्—'सर्वत्र ह्यगृहीतेविशेषणाद्विशिष्टे बुद्धिरनिष्टा' 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति ।

## लक्षणा

शक्यसम्बन्धो लक्षणा । तत्र मुख्यार्थबाधो हेतुः, तात्पर्यानुपपत्तिर्बीजम् । लक्षणा च शब्दनिष्ठा वृत्तिः, न त्वर्थनिष्ठा । गङ्गायामिति सप्तम्ययोगात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् तीरस्य प्रकृत्यर्थत्वाभावात् । शब्दवृत्तौ तु लक्षणया तीरस्यापि प्रकृत्यर्थत्वाद् आधारत्वं युक्तम् । 'कर्मणि कुशलः, मण्डपे शेते' इत्यादौ योगार्थबाधान्निरुढा लक्षणा । पङ्कजपदे योगार्थबोधात् योगमात्रे च भेकादौ प्रयोगापत्तेः योगरूढिरेव ।

## गौणी वृत्तिः

सादृश्यसम्बन्धवती गौणी । तदन्यसम्बन्धवती लक्षणा । ननु गौणी न वृत्त्यन्तरम्, मानाभावात् । न च सादृश्यसम्बन्धस्य प्रकारत्वं भेदकम्, गौरयमित्यारोपे सम्बन्धाभावात् इति चेदुच्यते-नारोपितार्थत्वं गौणत्वम् 'खपुष्पं भवत्सिद्धान्त' इत्यादौ खे पुष्पाभावादसत्त्वाच्चारोपायोगात् । गौरयमिति लाङ्गूलादिमत्वाप्रतीतेश्च न लक्षणा । तस्यां सम्बन्धस्याप्रकारत्वात्, गौण्याश्च सत्वात् । एवं भेदे सत्यपि लक्ष्यत्वमङ्गीक्रियेत तर्हि परम्परासम्बन्धेन तीरेऽपि शक्तिरेव स्यात् । गुणानां भेदाभवात् युक्तस्तद्गुणयोगः । तेन सादृश्यसम्बन्धे तस्य प्रकारत्वे उपपदसत्त्वे वा गौणी, न लक्षणा । तदुक्तं वर्तिके—

'अभिधेयाविनाभूते प्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' ॥

प्रतीतिरिति करणे क्तिन्, योगादिति ल्यब्लोपे । गौणीवृत्त्यर्थं जैमिनिना तत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्ग-समवाया इति षट् प्रवृत्तिनिमित्तानि प्रदर्शितानि । इमानि प्रवृत्तिनिमित्तानि श्रुतिवाक्यार्थनिर्णये सहायकानि ।

## समासार्थः

**द्वन्द्वस्येतरेतरयोगः** साहित्यं वार्थः । तत्र शक्तिर्वा लक्षणा वा । तच्चैकक्रियान्वयलभ्यम् । **समाहारद्वन्द्वे** समुदायोऽर्थः । तेन समुदायाभिप्रायमेकत्वम् । **अव्ययीभावे** आधारत्वादिकमर्थः । **कर्मधारये** त्वभेदः । **द्विगौ** समाहारोऽर्थः । **तत्पुरुषे** राजपुरुष इत्यादौ षष्ठ्यर्थे सम्बन्धे तद्धति च लक्षणा । **कर्मधारये** नीलोत्पलमित्यत्र नीलवत्ति यद्यपि लक्षणा तुल्या, तथापि निषादस्थपतिमित्यत्र तदभावात् तत्पुरुषात् बलवत्त्वं निषादस्थपत्यधिकरणन्यायेन सिद्धम् । **बहुव्रीहौ** चित्रा गावो यस्येति विग्रहं केचिद्वदन्ति । वार्तिके तु भट्टपादा राजपुरुषवत् षष्ठ्यन्तस्य पुंसो विशेषणत्वात् प्रथमान्तानां गवां प्राधान्यादानयनं स्यान्न पुंसः । तत्पुरुषवत् षष्ठ्यर्थे लक्षणा च स्यात् । तेन चित्राणां गवामयमिति विग्रहवाक्यं मन्यन्ते । अरुणाधिकरणे तन्त्रवार्तिके विषयोऽयं भट्टपादैर्विशदीकृतः ।

## कारकाणि

कर्म कर्ता च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारका णिपट् ॥

'कारके' इत्यनुवृत्तौ 'अनभिहिते इत्यधिकारः। तिङा कृता चानभिहिते कर्मणि द्वितीया। यथा ओदनं पचति घटं करोति इति। अत्र तिङा कर्मकारकस्यानभिहितत्वात् ओदनं घटमित्यत्र 'कर्मणि द्वितीये' ति द्वितीया। ईप्सितमनीप्सितञ्च कर्म। उभयानुगतं साध्यत्वं द्वितीयार्थः। ईप्सितं कर्म चतुर्धा-उत्पाद्यं प्राप्यं विकार्यं संस्कार्यञ्चेति। मीमांसकाः संस्कारेष्विमान् निवेश्य व्यवहरन्ति-उत्पत्तिसंस्कारः प्राप्तिसंस्कारो विकृतिसंस्कारस्संस्कृतिसंस्कारश्चेति। तत्र दोहस्य पय उत्पाद्यम्, क्रयणस्य 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति विहितस्य सोमः प्राप्यः। 'व्रीहीनवहन्ति' इत्यवघातस्य व्रीहयो विकार्याः। 'स्रुचस्सम्मार्ष्टि' इति विहितस्य सम्मार्गस्य स्रुचो जुहूपभृद्ध्रुवास्रुवाः संस्कार्याः। तिङा कृता वा कर्मण्यभिहिते हरिस्सेव्यते सेवितः, ओदनः पक्तव्यः इत्यादौ प्रातिपदिकमात्रे प्रथमा। गां पयो दोग्धि, अजां ग्रामं नयति इत्यादौ कर्मैक्येऽपि अनुशासनबलाद् द्विकर्मता। एवं तिङाऽनभिहितसङ्ख्ये कर्तरि कृताऽनभिहिते च कर्तरि करणे च तृतीया। लक्ष्म्या हरिस्सव्यते मैत्रेण पच्यते इति अभिहितसङ्ख्ये प्रथमा। मैत्रः पचतीति। कृताऽनभिहिते मैत्रेण घटः कर्तव्य इति तृतीया। तिङाऽनभिहिते दण्डेन करोतीति। कृताऽनभिहिते करणे काष्ठैः पक्तव्य इति। अभिहिते प्रथमा। कर्ता हर्ता इति। कर्तरि करणे च समासे प्रथमा। यथा कृतविश्वो हरिः। धनेन कुलमिति हेतौ तृतीया। तिङाऽन्वये करणत्वम् सुपाऽन्वये हेतुत्वम्। विकारार्थेऽपि तृतीया अक्ष्णा काणः, पादेन खञ्जः। काणरूपाक्षिविकारवान् खञ्जरूपपादविकारवानित्यर्थः। धान्येन धनी गोत्रेण गार्ग्यः इत्यादावभेदार्थेऽपि तृतीया। तिङा कृता वाऽनभिहिते सम्प्रदाने चतुर्थी। विप्राय गां ददाति, मैत्रावरुणाय दण्डं प्रयच्छति इति। दानस्य कर्मणा गवादिना प्रीयमाणो विप्रादिः। दानपदं धात्वर्थमात्रपरम्। विभागाधारयोरपादानम्। ग्रामादागच्छ, वृक्षात्पर्णं पतति इति। अभिहिते तु प्रथमा। यथा निष्क्रष्टविश्व इति। समासेन कृता वाऽनभिहितेऽधिकरणे सप्तमी। यथा कटे आस्ते शेते वा। समासोक्ते प्रथमा। बहुधनं गृहमिति। ग्रामोऽवस्थानमिति कृताऽभिहितत्वात् प्रथमा। करणसम्प्रदानाधिकरणानां तिङाभिधानं नास्ति, तत्रानभिहितत्वमेव। चैत्रः पचति घटो भवतीत्यादौ तिङाभिहितकर्तृसङ्ख्याश्रयत्वाच्चैत्रादेः कर्तृत्वम्। चैत्रगतमेकत्वमेव तिङा सुपा चोच्यते, न तु प्रथमायाः कर्तृत्वमर्थः, प्रातिपदिकार्थमात्रे प्रथमाया विहितत्वात्। अतोऽत्र सुप्तिङोरेकविभक्तित्वाभावेऽपि विरुद्धविभक्तिराहित्ये सति कर्तृसङ्ख्यारूपैकार्थपरत्वात्सामानाधिकरण्यं सिद्धं भवति। तेन लक्षणया कर्तुर्बोधः। भावार्थपादे भट्टपादैर्विषयोऽयं विशदीकृतः। केवलाख्याते तु सामानाधिकरण्याभावान्न लक्षणा।

ननु 'स्वर्गकामो यजेत' इति कर्तृसङ्ख्याश्रयत्वादुक्तसामानाधिकरण्याच्च लक्षणया पुंस एव कर्तृत्वापत्तिरिति चेत्, न; कर्ता गुणभूतो विधेयश्च, स्वर्गकामपदन्तूद्देश्यवाचि कथं कर्ता स्यात्। अतो न तत्र कर्तृगतमेकत्वं वाच्यम्। पुंसस्तु विशेष्यस्य सिद्धत्वात् साध्यत्वे बाधाद्विशेषणस्य स्वर्गस्य साध्यत्वम्। भावनायास्साध्यापेक्षायां लक्षणया कामिपदोक्तस्य कर्मत्वम्। 'नाकर्तुः फलसङ्गतिः' इति न्यायादर्थात्कर्तृत्वं न शाब्दम्। अत एवोद्देश्यगतत्वादेकत्वपुंस्त्वयोरविवक्षा ग्रहैकत्वाधिकरणन्यायेन। तथा च स्त्रिया अप्यधिकारस्सिध्यति। चैत्रः पचतीत्यस्य चैत्रस्योद्देश्यत्वाभावात्कर्तृत्वम्। कामपदे प्रातिपदिकमात्रे प्रथमैकवचनम्। क्वचित्तु 'कर्तृकर्मणोः कृति, इत्यादौ कर्तृत्वाद्यपि षष्ठ्यर्थः। वज्रस्य भर्ता इत्यत्र कर्मणि षष्ठी। तच्च कर्म कृता धात्वर्थस्य, न भावनायाः। कृदभिहितो भावो द्रव्यवद् भवतीति न्यायात्।

## आख्यातार्थो भावना

आख्यातं नाम तिङ्प्रत्ययः, न तु लकारः, नापि तदेशमात्रम्। केवललकारे तदादेशे शतृशानजादौ च भावनाप्रतीत्यभावात् आख्यातेनैव तस्याः प्रतीतेः। पचन् इति शत्रन्ते धात्वर्थो गुणभूतस्तद्भिन्ना वा भावना स्याद् यद्यपि, तथापि न तत्प्राधान्यम्, लिङ्गसङ्ख्यादियोगाद् द्रव्यप्राधान्यमेव, 'भावप्रधानमाख्यातम्' इति

यास्कवचनात्। भावो भावना, न तु शुद्धधात्वर्थः, तस्य धातुबाच्यत्वेनाख्यातार्थत्वाभावात्। अतस्सर्वत्र कृतिरेवाख्यातार्थः। सैवार्थीभावना।

तदुक्तं भट्टपादैः—

'सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते'॥

तिङ्वाच्यः करोत्यर्थः। करोत्यर्थ एवार्थीभावना। इदमत्र मीमांसापरम्परागतं तत्त्वम्—धात्वर्थानां रूपद्वयम्—पाको,यागो गमनमिति व्यावृत्तं विशेषरूपं सिद्धस्वभावं धातुवाच्यमेकम्, सर्वधात्वर्थानुगतं करोति विवरणवेद्यं साध्यरूपमन्योत्पादानुकूलमपरम्। तदिदं द्वितीयमाख्यातवाच्यम्। सर्वत्र तस्य करोतिविवरणेन प्रतीतेः, आख्याताभावे चाप्रतीतेः। 'प्रत्ययार्थः प्राधान्येन' इति न्यायेनाख्यातार्थस्य भावनायाः प्राधान्यमङ्गीकृत्य तत्र पदार्थानामन्वयमिच्छन्ति मीमांसकाः।

'तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः।
प्रत्ययश्रुतिवेलायां भानात्साऽवगम्यते'॥

इति तन्त्रवार्तिकप्रमाणेन प्रत्ययार्थतया 'सा' भावनाऽवगम्यते। तस्यां प्रकृत्यर्थयागादेः द्विधा सम्बन्धः-यागं कुर्यादिति यागेन कुर्यादिति। अयं सम्बन्धः प्राप्ताप्राप्तविवेकपुरस्सरं भवति धात्वर्थस्य प्राप्तस्थले यागं कुर्यादिति, अप्राप्तस्थले च यागेन कुर्यादिति। तदिदं पार्थसारथिमिश्रेणाभिहितम्-'यतो धातोः प्रत्यय उत्पन्नः तदर्थभिन्नैव भावना तत्कर्मिका तत्करणिका वा प्रत्ययेनोच्यते' इति। सा च भावना द्वेधा-शब्दभावना आर्थभावना चेति। प्रेरणाख्यस्य प्रयोजकलिङ्व्यापारस्य प्रवृत्तिरूपभाव्यफलकत्वात् भावनात्वम्। तदिदमग्रे स्पष्टीभविष्यति विध्यर्थविचारे। यत्न एवार्थीभावनेति भट्टसोमेश्वरादयो मन्यन्ते। रथो गच्छतीति वोढृश्वगतयत्नं रथे समारोप्य व्यवहारः। मञ्चाः क्रोशन्तीतिवत्। पचतीत्यत्र यद्यपि स्थाल्यधिश्रयण-फूत्कार-तण्डुलावपनाद्या ओदनानुकूला नाना यत्नाः, तेषां प्रत्येकमाख्यातवाच्यत्वं भावनात्वं वा नास्ति, तथापि यत्नसमुदायः तन्निष्ठमन्योत्पादानुकूलत्वं वा भावना, फूत्कारं तण्डुलावपनं वा कुर्वति देवदत्ते देवदत्तः किं करोतीति प्रश्नस्य पचतीत्युत्तरदर्शनात्। तदुक्तं वार्तिके—

'यदा त्वाद्यपरिस्पन्दात्प्रभृत्याफललाभतः।
यत्नाः पूर्वापरीभूताः क्रिया सा वर्तते तदा'॥ इति।

किञ्च—

'तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यतः।
प्रयत्नश्च करोत्यर्थस्तदन्यानुपलम्भनात्॥
चेतनप्रेरकत्वञ्च विधेस्तद्विषयत्वतः।
काष्ठाद्यप्यन्यथा कस्मान्न प्रेरयति वायुवत्॥
धात्वर्थव्यतिरिक्तातः प्रयत्नाख्यार्थभावना।
यजत्यादिवदाख्यातवाच्यतेति समञ्जसम्'॥

इति भट्टसोमेश्वरः। नन्वेवं यत्नस्य भावनात्वे यत्नस्याकर्मकत्वात् करोतौ कर्माकाङ्क्षा न स्यात् इति चेन्न; अन्योत्पादानुकूलयत्नस्य तत्त्वात्। यत्ननिष्ठमनुकूलत्वं वा भावना। सैव करोत्यर्थः। सा च सकर्मिका सिद्धरूपा च सर्वत्र प्रतीयते। अकर्मकेऽपि धातौ भावनाकर्मास्त्येव। 'स्वास्थ्यकामश्शयीत आसीत वेति प्रयोगात्। यद्यपि

भवतीत्यादौ कर्माभावात्तदसम्भवः, तथापि लडादौ प्रयोज्यव्यापारेण प्रयोजकव्यापाराक्षेपः, अभावितस्य भवनायोगात्। तदुक्तम्—

'भवत्यर्थस्य कर्ता च करोतेः कर्म जायते' इति।

अत एव यत्नस्य करोतिपर्यायत्वम्। तत्सिद्धं प्रयत्नोऽन्योत्पादानुकूलत्वं वा भावनेति। यत्नश्च पाकेऽहं प्रयते, यागेऽहं प्रयते इति धात्वर्थेनैव निरूप्यः। अत्रत्यो विशेषो मीमांसाकुतूहलादवगन्तव्यः।

**विध्यर्थः**

पुरुषस्य द्वेधा प्रवृत्तिर्भवति-कश्चित्स्वेच्छया प्रवर्तते, अपरश्च परप्रेरितः। आचार्यप्रेरितोऽहं गामानयामीति दर्शनात्। आचार्य इच्छाहीनमपि शिष्यं प्रवर्तयति। प्रवर्तकत्वञ्च प्रवर्तनोत्पादकत्वं न तु ज्ञापकत्वम्। गुरुस्त्वां प्रवर्तयतीत्युक्तौ शिष्यस्यापि तत्त्वापत्तेः। प्रवर्तना च प्रवृत्तिहेतुः प्रवर्तयितुर्व्यापारोऽहमेनं प्रवर्तयामीति स्वसंवेद्यः। वेदे तु वक्तुरभावात् लिङः प्रेरणाख्योऽलौकिको धर्मः। अलौकिके शक्तिग्रहः कथमिति चेदित्थम्—व्युत्पित्सुर्बालो रोदनेन स्तन्यपाने मातुः प्रवृत्तिं दृष्ट्वाऽन्यासम्भवात् प्रवर्तनाज्ञानस्यैव हेतुत्वं कल्पयति। लिङादिश्रवणोत्तरप्रवृत्तेस्तस्यैव प्रवर्तनावाचित्वं निश्चिनोति। तत्रापीष्टसाधनतातिरिक्ता केयं प्रवर्तनेति जिज्ञासायामित्थमत्रोपपत्तिः-गामानयेत्युक्ते प्रवृत्तस्य गवानयनाभावेऽपि मदाज्ञामयं कृतवानिति, इतोऽपसरेत्युक्ते-स्वयमनपसृते बलादपसारितेऽपि ममाज्ञामयं न कृतवानिति प्रतीतेर्दर्शनात् अहमेनं प्रवर्तयामि अहं प्रवर्ते इति प्रवृत्त्यनुकूलः प्रवर्तकधर्मः प्रवर्तना नामेति सर्वस्वसंवेद्यम्। स चेष्टहेतुत्वाक्षेपात् प्रवर्तको न स्वत इत्यन्यदेतत्। स च व्यापारः पुंधर्मत्वाल्लोके उत्तमस्य नीचं प्रति प्रैष इति, नीचस्योत्तमं प्रत्येषणा-अभ्यर्थनेति, समं प्रत्यनुज्ञेति, अप्राप्तेऽर्थे उपदेश इति चोच्यते। न च ते विशेषा वाच्याः व्यभिचारात्, किन्तु प्रवर्तनैव। लोके आज्ञाभ्यर्थनयोः कर्मफलं प्रवर्तकनिष्ठम् न नियोज्यनिष्ठम्। अनुज्ञाऽनुप्रवृत्तविषयिणी। तेषु नोपदेशकत्वम्। न हि गामानय मामध्यापय इन्द्रागच्छ, यथेप्सितं तथा कुरु इत्यादीनामुपदेशकत्वम्। न वा सन्ध्यामुपासीत, भिक्षां चर इत्यादौ आज्ञाप्रतीतिः, इष्टसाधनत्वस्याविशेषात्, एषां भेदो न स्यात्। स चोपदेशो वेदेऽपि तुल्यः। औत्पत्तिकसूत्रे सूत्रकारेणोक्तम्—'तस्य ज्ञानमुपदेशः' इति। लोके प्रवर्तनात्वेन सामान्यबोधे वेदे प्रैषादीनां पुंधर्माणां बाधात् पक्षधर्मताबलादाक्षिप्तः प्रेरणाख्योऽलौकिको विशेषो यूपाहवनीयादिवल्लक्षणया प्रतीयते। अतः प्रवर्तनात्वेन शक्तिग्रहः। स च प्रैषादिवत् प्रवर्तयितुर्लिङो धर्मः। तस्य च सन्निधानाल्लिङीयत्वसिद्धेर्न शब्दस्वरूपाभिधानम्। गुर्वादिवल्लिङः फलदातृत्वाल्लिङ्व्यापारे ज्ञातेऽपि कथं प्रवृत्तिरिति चेत्-प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपात्। प्रवर्तना हि यत्नविषया, सा चेच्छाजन्या पुरुषार्थे एव स्वर्गादौ भवन्ती साधनं बिना तदसिद्धेस्तत्र सङ्क्रान्ता। यागादेरिष्टहेतुत्वं विनेच्छाभावे प्रवृत्त्ययोगात्तदाक्षिपति। न च प्रवर्तनाकल्प्येष्टहेतुताधीजन्येच्छयैव प्रवृत्तेः कारणकारणत्वेनान्यथासिद्धेः प्रेरणा व्यर्थेति वाच्यम्, प्रवर्तनाया असिद्धाविष्टहेतुताया असिद्धेः। एवं निषेधे निवर्तनया अनिष्टहेतुत्वं कल्प्यम् निवर्तनाया असिद्धौ अनिष्टहेतुत्वाभावान्निवृत्त्यसिद्धेः। तस्माद्विध्यर्थत्वेन प्रेरणा सिद्धा, सैव च शाब्दीभावना।

**विधिविभागः**

एवं विध्यर्थे प्रदर्शिते विधेः प्रकाराः प्रदर्श्यन्ते-उत्पत्तिविधिः, विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति चतुर्धा भवति। तत्र मानान्तरानवगतकर्मबोधको विधिरुत्पत्तिविधिः। यथा—'अग्निहोत्रं जुहोति' इति। शेषस्य शेषिणा सह सम्बन्धबोधको विनियोगविधिः। यथा—'पयसा जुहोति' दध्ना जुहोति' इत्यादयः। साङ्गकर्मानुष्ठापको विधिः प्रयोगविधिः। स चाङ्गवाक्यैरेकवाक्यताभापन्नेन प्रधानविधिना कल्पनीयो भवति-

समिदादिभिरुपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति। कर्मजन्यफलभोक्तृत्वबोधको विधिरधिकारविधिः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। अयमेव साङ्गं कर्मानुष्ठापयतीत्यत्रैव विधित्रयस्य समावेशो भवितुमर्हति। अपूर्वविधेरेव चैते भेदा इति वक्तुं शक्यते। तथापि तस्य तस्य विधेरुदाहरणानि पृथक्पृथक् क्लृप्तानि। तथाहि—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यं स्वर्गोद्देशेन यागं विदधानो यागस्य स्वर्गस्य चाङ्गाङ्गिभावेन सह साङ्गं कर्मानुष्ठापयत् यागस्य फलसम्बन्धमपि बोधयति। वाक्यमिदं यागोत्पत्तिपरत्वेन नाङ्गीक्रियते, 'सोमेन यजेत' इत्युत्पत्तेस्सिद्धत्वात्। ज्योतिष्टोमवाक्यस्योत्पत्तिविधित्वं सोमवाक्यस्य च गुणविधित्वमिति न शङ्कनीयम्। ज्योतिष्टोमशब्दस्य गुणसमर्पकत्वे सति सोमवाक्येन गुणो विधातुं न शक्यते, उत्पत्तिशिष्टगुणावरोधात्। यदि ज्योतिष्टोमशब्दो नामसमर्पकस्तर्हि सोमवाक्येन कर्म विधातव्यम्। विहितस्य कर्मणो ज्योतिष्टोमशब्दो नामधेयमिति वक्तुं शक्यम्। अतस्सोमवाक्यं न गुणविधायकम् किन्तु कर्मण उत्पत्तिवाक्यम्। 'उद्भिदा यजेत पशुकामः' इति वाक्यं विधिचतुष्टयपरम्। कर्मण उत्पत्तिः, उत्पन्नस्य विनियोगः तस्य फलसम्बन्धः, साङ्गप्रधानप्रयोगश्चेति विधिचतुष्टयकार्यमेकेनैव वाक्येन ज्ञातब्यं भवति। सर्वत्राख्यातार्थभावनायां पदार्थानामन्वयो भवति। तत्र कर्मणोऽ प्राप्ततादशायां धात्वर्थस्य करणत्वं प्राप्तस्थले तस्य साध्यत्वेनान्वयः। यदा धात्वर्थः करणं तदा फलं साध्यम्, यदा च धात्वर्थस्य साध्यता तदा विधेयस्य गुणादेः साधनता। एकदैव धात्वर्थस्य करणत्वेन साध्यत्वेन चान्वयो नेष्यते विरुद्धत्रिकद्वयापत्तेः। गुणविशिष्टधात्वर्थविधानस्थले 'सोमेन यजेत' इत्यादौ सोमविशिष्टस्य धात्वर्थस्य विधानेऽपि सोमस्यार्थिकविधिविधेयत्वम्। श्रूयमाणो विधिस्तत्र न व्याप्रियत इति विशिष्टविधिस्थले न वाक्यभेदः। यदि श्रूयमाणस्यैव विधेः नानापदार्थविधाने व्यापारस्तदैव वाक्यभेदस्यावसरः। तदुक्तम्—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यते'॥ इति।

एवञ्च श्रुतविधौ यागस्य करणत्वमेव, कल्पिते तु विशेषणविधौ यागस्योद्देश्यत्वम्। 'सोमेन यजेत' इत्यत्र कल्पिते विशेषणविधौ सोमस्य करणत्वेन यागं प्रति विधानम्। कारकं विना केवलद्रव्यस्य विधिविषयत्वाभावादिति निर्गलितोऽर्थः। तदुक्तं भट्टपादैः—

विधित्वं श्रौतमार्थं वा भावनाकारकाश्रयम्।
ताभ्यान्तु व्यतिरिक्तेऽर्थे नैकमप्येतदिष्यते'॥ इति।

सोमवाक्येऽयं क्रमः—आदौ यागस्य सोमस्य च करणत्वेन भावनायामन्वयः। पदश्रुत्या यागस्य करणत्वेनान्वयदशायां द्रव्यस्यान्वयायोगात् सोमविशिष्टस्य तदन्वयः। ततो विशेषणसम्बन्धं विना विशिष्टत्वायोगात् यागोद्देशेन सोमविधिः। ततः श्रुतविधौ क्रियान्वयनिर्वाहार्थं करणानुग्रहद्वारा अन्वयं वक्तुं मत्वर्थो लक्ष्यत इति। एवमुत्पत्यादिषु चतुर्षु विधिषु निरूपितेषु—

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते'॥

इति वार्तिकोक्ता अतिरिक्तास्त्रयो विधयः-अपूर्वविधिः, नियमविधिः परिसङ्ख्याविधिश्चेति। इमे च पूर्वोक्तोत्पत्तिविनियोगप्रयोगाधिकारविधिवाक्येष्वेव प्रसरन्ति। तत्रापूर्वविधिरुत्पत्तिप्रयोगाधिकारविधिषु प्रसरति नियमपरिसङ्ख्याविधी च विनियोगविधौ प्रसरत इति साधारणी रीतिः। तत्र 'व्रीहीन् प्रोक्षति' इति वाक्यं विना यागीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोतीत्यप्राप्तप्रापकत्वमस्य वाक्यस्येत्यपूर्वविधिः। 'व्रीहीनवहन्ति' इति विध्यभावे यागीयव्रीहिष्वर्थतोऽवघातः प्राप्त एव। किन्तु नखविदलनमप्यर्थात् पक्षे प्राप्नोति। तत्र

पक्षेऽप्राप्तांशपूरणरूपो नियमः 'व्रीहीनवहन्ति' इति विधिना क्रियते। अत्र फलतश्च नखविदलनादेर्निवृत्तिः। विधिना निवृत्तिर्न क्रियत इति परिसङ्ख्यातो भेदः। चयने 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र परिसङ्ख्याविधिः। इष्टकानिर्माणाय मृत्तिकाहरणं कर्तव्यम्। तदाहरणायाश्वो गर्दभश्च नीयेते। अश्वगर्दभयोर्गलदेशे रशना-रज्जुर्बद्धा भवति। भस्त्रिकायाम् अश्वगर्दभयोरुपरि विद्यमानायां मृत्तिकां प्रपूर्य तयोरानयनावसरे रशनाग्रहणं कर्तव्यमध्वर्युणा। तत्र ग्रहणमन्त्रोऽयम्-'इमामगृभ्णन्' इत्यादिः। तस्यायं विनियोजकं वाक्यम्-'इत्यश्वाभिधानीमादत्ते' इति। 'इत्यश्वाभिधानीमादत्ते' इति विध्यभावे मन्त्रगतरशनासामान्यलिङ्गात् रशनयोस्समुच्चित्यादानं प्राप्तम्। तत्रायं विधिर्गर्दभरशनादानं निवर्तयति। नायमपूर्वविधिः, मन्त्रलिङ्गेन प्राप्तत्वात्। नापि नियमविधिः पाक्षिकप्राप्त्यभावात्। गर्दभरशनादाननिवृत्यर्थमेव विधिः प्रवृत्त इति परिसङ्ख्याविधिः।

**वाक्यार्थः**

एवं सङ्ग्रहेण प्रकृत्यर्थे प्रत्ययार्थे च निरुपिते पदजन्यपदार्थज्ञानात् तत्संसर्गो वाक्यार्थः। तत्र संसर्गे शब्दवृत्त्यभावे शाब्दत्वायोगात् संसर्गे लक्षणां स्वीकुर्वन्ति मीमांसकाः। क्वचित्तां लक्षणां 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादौ वाक्येऽपि साध्वीं मन्यन्ते मीमांसकाः। वाक्यञ्चार्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्' इति सूत्रोक्तं विभागे साकाङ्क्षत्वे सत्येकार्थप्रतिपादकम्। 'भगो वां विभजतु' 'पूषा वां विभजतु' इत्यत्र विभागरूपैकार्थप्रतिपादकत्वेऽपि साकाङ्क्षत्वाभावादेकवाक्यत्वं न स्वीक्रियते। 'स्योनन्ते सदनं कृणोमि' इत्यत्रोत्तरार्धमन्त्रे 'तस्मिन्' इति तच्छब्दात्सर्वस्यैकवाक्यत्वभानेऽपि विभागे साकाङ्क्षत्वेऽपि सदनप्रतिष्ठापनरूपार्थभेदान्नैकवाक्यत्वम्।

प्रथमाध्यायगतानि धर्मप्रमाणानि—विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यानि अष्टौ। द्वितीयाध्यायगतानि कर्मभेदबोधकानि—शब्दान्ताराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तराणि षट्। तृतीय चतुर्थाध्यायगतानि-श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि प्रमाणानि षट्, पञ्चमाध्यायसम्बन्धीनि—श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपाणि प्रमाणानि षट्, षष्ठाध्यायगतानि—अग्निविद्यासामर्थ्यानि प्रमाणानि, अतिदेशोहबाधतन्त्रप्रसङ्गाध्यायसम्बन्धीनि प्रमाणिानि सर्वाण्यपि शब्दसम्बन्धीनि। स च शब्दो वेदाख्यः। प्रत्यक्षादिषु प्रमाणेषु सत्स्वपि मीमांसकानां शब्दप्रमाणे यादृशोऽभिनिवेशस्तादृशोऽन्यत्र न विद्यते। अत एव भाष्यकाराः 'यच्छब्द आह तदस्माकं प्रमाणम्' इति वारं वारं निर्दिशन्ति। तदस्य समर्थनाय वेदस्यपौरुषेयत्वं विशेषेण मीमांसका अस्थिषत।

**प्रामाण्यवादः**

सर्वं ज्ञानं स्वतः प्रमाणम्। विषयस्य याथार्थ्यमेव प्रामाण्यम्। यया सामग्र्या ज्ञानमुत्पद्यते गृह्यते च तयैव प्रामाण्यमपि। कारणगुणसंवादार्थक्रियाज्ञानैः परतः प्रमाण्ये तस्यापि परतस्तस्यापीत्तनवस्था क्वापि प्रामाण्यप्रवृत्तिश्च न स्यात्। प्रामाण्यग्रहो न प्रवृत्तिहेतुरित्युच्येत तर्हि शत्रुचोरादिवाक्यात् प्रवृत्त्यापत्तेः। न च तत्राप्रमाण्यग्रहस्य प्रतिबन्धकत्वमिति युक्तम्, अप्रामाण्यज्ञानस्य प्रतिबन्धकत्वमङ्गीकृत्याप्रामाण्यज्ञानाभावस्य हेतुत्वकल्पनापेक्षया अप्रामाण्यज्ञानप्रतियोगिनः प्रामाण्यज्ञानस्यैव हेतुत्वकल्पने लाघवात्। तदुक्तं न्यायरत्न मालायां पार्थसारथिमिश्रेण—

'आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता।
अर्थस्य च तथाभावः प्रमाण्यमभिधीयते' ॥ इति।

विषयसंवेदनशक्तिः काचन ज्ञाने वर्तते। तया च ज्ञानमनुमीयते, नानुव्यवसायो नाम ज्ञानान्तरम्। घटमहं जानामि घटेन जलमाहरामि इति ज्ञानस्याभिलापमात्रम् इति मीमांसकाः। एवं प्रमाणजन्यो यथार्थानुभव उक्तः।

### अन्यथाख्यातिः

अयथार्थानुभवस्त्रेधा—संशयतर्कविपर्ययभेदात्। एकत्र भासमाने विरोधेऽनेककोटिकं ज्ञानं संशयः। यथा—स्थाणुर्वा पुरुषो वेति। स च निश्चयविरोधी। निश्चयस्त्वेकमात्रकोटिकं ज्ञानं भवति। व्याप्यारोपे व्यापकारोपस्तर्कः। यथा वन्ह्यभावस्य व्याप्यस्यारोपे धूमाभावस्य व्यापकस्यारोपः। स च प्रतियोगिनि धूमे सति न सम्भवतीति इच्छाजन्यत्वादाहार्यः। विशेष्यावृत्तिप्रकारकं ज्ञानं विपर्ययः स एव भ्रमः। यथा शुक्ताविदं रजतमिति। अयमेवान्यथाख्यातिशब्देन व्यवह्रियते। शुक्तौ रजतज्ञानं शुक्तिविषयं शुक्तौ प्रवर्तकज्ञानत्वात् शुक्तिज्ञानवदित्येकं विशिष्टज्ञानं सिध्यति। तत्र रजतांशेऽन्यत्र ज्ञातस्य रजतस्य स्मृत्योपनीतस्य भानमित्यन्यथा-ख्यातिरुच्यते। ननु रजतांशे चक्षुस्सन्निकर्षाभावे कथमपरोक्षत्वमिति चेत्—विशिष्टज्ञाने न विशेषणांशेऽप्यनु-भवत्वं येन प्रत्यासत्तेरपेक्षा स्यात्। किन्तु विशेषणांशे स्मृतित्वं विशेष्यांशे चानुभवत्वमिति द्व्याकारमेकमेव ज्ञानम् इदं रजतमिति। यथा विशिष्टविधिस्थले 'सोमेन यजेत' इत्यादौ विधेर्व्यापरो विशिष्ट एव स्वीक्रियते न विशेषणे सोमे, तस्यार्थिकविधिविषयत्वात् तथा प्रकृतेऽपि। अत एव प्रत्यभिज्ञायां तत्तांशः स्मृत्या भासत इत्यङ्गीकृत्य स्मृतित्वानुभवत्वयोः भ्रमत्वप्रमात्ववदेकं ज्ञानं सिध्यति। एवं ज्ञानलक्षणाप्रत्यासत्तिमनङ्गीकृत्य मीमांसकेषु, भाट्टा अन्यथाख्यातिं साधयन्ति। प्राभाकरमीमांसका अख्यातिमेव स्वीकुर्वन्ति।

द्रव्यविभागे तत्तद्द्रव्यसम्बन्धिनो गुणाः प्रदर्शिताः।

चलतीति प्रत्ययहेतुश्चलनात्मकं कर्मैकम्। उत्क्षेपणादयो विभागा न स्वीक्रियन्ते, संयोगजनकता वच्छेदकत्वेनैकजात्योपपत्तेः। तच्च कर्म नित्यमनित्यञ्च। दर्शपूर्णमासादिकर्मणामैक्यमेव। न हि चैत्रकर्तृक दर्शपूर्णमासयागान्मैत्रकर्तृकस्सः भिन्नो भवति प्रत्यभिज्ञानात्। शक्तिस्त्रिविधा—सहजा आधेया पदशक्तिश्चेति। सा च पूर्वं प्रदर्शिता।

सामान्यमनुगतप्रत्ययहेतुः। तत् त्रिविधम्—परमपरं परापरञ्चेति। अद्यं सत्ता, द्वितीयं घटत्वादि तृतीयं द्रव्यत्वादि। अयं विभागोऽपोहवादे भट्टपादैः प्रदर्शितः।

जातौ न जातिः, अनवस्थापातात्। साङ्कर्यं न दोषः॥

एवं पदार्थतत्त्वज्ञः नित्यानित्यवस्तुविवेकशमदमादिवैराग्यभक्तिसम्पन्नो नित्यनैमित्तिकानि कर्माणि यथावदाचरन् योगाभ्यासेन सगुणब्रह्मोपासनयाऽध्यक्षीकृतब्रह्मतत्त्वः परे ब्रह्मणि लीयते।

### उपसंहारः

मीमांसाभाष्यवर्तिकशास्त्रदीपिकामीमांसशास्त्रकुतूहलादिग्रन्थेभ्यो विषयास्सङ्कलिताः। सर्वोऽपि दार्शनिकः स्वीयपरम्पराप्राप्तपन्थानमाश्रित्य गच्छन् परमतखण्डनेऽपि व्यापृतो भवति। तदिदं खण्डनं न भेद बुद्धिजननाय किन्तु स्वप्रतिपाद्यविषयगतप्राशस्त्यप्रतिपादनायेति न हि निन्दान्यायोऽवबोधयति। प्रबलैस्तर्कैः प्रमाणैश्च खण्डने कृतेऽपि तद्दर्शनं खण्डितमिति न परिगण्यते। अतः खण्डने मतिं परित्यज्य तत्तद्दार्शनिकवस्तु तत्त्वपरिज्ञाने यतितव्यं मानवैस्सुधीभिः। वादविवादगोष्ठ्यां वावदूकेन केनचनान्यस्मिन् पराजितेऽपि न तेन दर्शनस्य न्यूनता सिध्यति। नापि स्वस्य सर्वज्ञत्वं साधितं भवति। अयमेव समन्वयात्मकः पन्था मीमांसकैरा-श्रितः। शाबरभाष्ये भट्टपादवार्तिकग्रन्थे च परिशील्यमानेऽयमेव मीमांसकानां पन्था इत्यवगम्यते। समन्व-

यात्मके पथि समवलम्बिते नास्ति रागद्वेषादीनामवसरः। रागद्वेषाद्यवलम्बनमेव समाजप्रदूषणम्। प्रदूषणस्यास्य निराकरणाय मीमांसकोन्नीतः पन्था एव साधनम्। मीमांसायां प्रत्यधिकरणं पूर्वपक्षी सिद्धान्तिनः पक्षं निराकुर्वन् प्रत्यवतिष्ठते, किन्तु सिद्धान्ती तदीयं तर्कं सम्यगवगत्य यथा पूर्वपक्षी सिद्धान्तिनस्तर्कमवगच्छेत्तथा तं विषयान् ग्राहयति। इमं पन्थानं प्रत्यधिकरणमनुभवामः। पूर्वपक्षं विहाय किमप्यधिकरणं स्वरूपं न लभत इत्यपि शास्त्रेऽस्मिन्ननुभवामः। न केवलमिदमेव, विवादग्रस्तविषयनिर्णयाय प्रवृत्तमधिकरणं परित्यज्य पूर्वोत्तराधिकरणेषु विचार्यनिर्णीतं यत् यत् प्रकृताधिकरणविचाराय प्रवृत्ताभ्यां पूर्वपक्षिसिद्धान्तिभ्यामङ्गीकर्तव्यमिति दृढतरस्समयो मीमांसकानाम्। एतेनेदं सिद्धं भवति—मत् विपक्षं विना सत्ताधारिभिरेव राज्यं शासितुं न शक्यते, विपक्षे सत्येव शासनं सुदृढं भवेदिति। किन्तु उभयोरपि राष्ट्रसमुन्नयनं परममुद्देश्यमिति स्वीकृत्य पक्षप्रतिपक्षसाधने द्वाभ्यां प्रवर्तितव्यम्। राष्ट्रस्वरूपविघटनं यथा न स्यात्तथोभाभ्यां वादविवादः कर्तव्यः। मीमांसका रष्ट्रस्थाने वेदमङ्गीकृत्य तस्यान्यथाभावो यथा न भवेत् तथा पूर्वोत्तरपक्षौ साधयन्ति। वेदे यादृशी भक्तिर्मीमांसकानां तादृशी राष्ट्रे भक्तिरावश्यिकी सत्ताधारिणां विपक्षिणाञ्च। सिद्धान्ती पूर्वपक्षिणं न दण्डेन वारयति किन्तु प्रामाणिकैस्तर्कैः। सेयं रीतिः प्रजातन्त्रावलम्बिभिरप्याश्रयणीया। अधिकरणेषु क्वचित्क्वचिदनुभवामः—यत् पूर्वपक्षिणाऽभिहितम् 'सत्यम्' इति सिद्धान्ती स्वीकृत्य स्वीयं पक्षमुपपादयतीति। तथैव क्वचिद्विपक्षिणां कथनं स्वीकृत्य सत्ताधारिभिर्गन्तव्यं भवति। तेन न कापि हीनता सत्ताधारिणां सिद्धान्तिनो वा। 'युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि' इति खलु न्यायः। एवमनेकान् समाजस्य प्रशासनस्य चोपयोगिनो-न्यायान् प्रदर्शयन्ती भगवती मीमांसा दर्शनेषु मुख्यं स्थानं प्राप्य सर्वैराद्रियमाणा सर्वोत्कर्षेण व्यराजत। सम्प्रत्यपि तस्या आदरे न कापि न्यूनता, किन्त्वध्ययनाध्यापनादौ शैथिल्यं विलोक्यते।

शैथिल्यमिदमनुभूय केन्द्रियशिक्षामन्त्रालयद्वारा प्रवर्तितं श्रीलालबहादुरशास्त्रिकेन्द्रियविद्यापीठं दुर्लभग्रन्थानां प्राक्तनपाण्डुलिपीनाञ्च प्रकाशनरूपं शोभनं कार्यं करोतीति नितरां प्रसीदामि। तत्रापि विशेषेण श्रौतसूत्राणां मीमांसायाश्च ग्रन्थरत्नानि प्रकाशपथमानयतीति हर्षस्य विषयः। तत्र डॉ० **मण्डनमिश्रस्य** विशेषाभिनिवेशमवगत्य तं वैदिकीभिराशीर्भिः परिपूरयामि। ग्रन्थानां प्रकाशनमात्रेण शास्त्ररक्षा न भवेत्, तदध्ययनाय छात्राः प्रोत्साहयितव्याः। तदर्थं प्रतिकेन्द्रियविद्यापीठं द्वौ द्वौ मीमांसाध्यापकौ यथाऽलङ्कुरुतस्तथा मन्त्रालयाधिकारिणः प्रार्थनीयाः। विनाऽध्यापकैश्छात्रा नागच्छेयुः। अतस्सर्वेषु विद्यापीठेषु शिक्षामन्त्रालयसम्बन्धिषु मीमांसाध्यापकस्थानानि कल्पनीयानि। यदि प्रामाणिकमीमांसाध्यापका न प्राप्नुवन्ति, तर्हि मीमांसाध्ययनाध्यापनकार्यं यत्र प्रचलति, तत्र विशेषछात्रवृत्तिप्रदानेन छात्रा अध्येतुं प्रेषणीयाः। तदिदं डॉ०मण्डनमिश्रस्साधयितुं समर्थ इति तं प्रोत्साहयामि यन्-मीमांसाध्ययनाध्यापनव्यापारः सर्वेषु विद्यापीठेषु प्रचलत्विति।

अस्य ग्रन्थस्य प्रकाशने महान् कालो व्यतीतः। तत्र मुद्रणालयशैथिल्यं जराक्रान्तस्य मम शरीरास्वास्थ्यमेव कारणम्। सप्तमाष्टमाध्यायोरेवायं भागः प्रकाशितः, अवशिष्टश्च भागो यावदुपलम्भं शीघ्रमेव प्रकाशयिष्यते। तत्र श्रीचरणानां श्रीकाञ्चीकामकोटिपीठाधीश्वराणां परमाचार्याणामनुग्रह एव मां प्रेरयेदिति विश्वसिमि। सम्पादितेऽस्मिन् ग्रन्थे सन्ति भूयांसि स्खलनानि। तत्र मच्चक्षुश्शक्तेः क्षीणत्वात् मुद्रणालयप्रमादाच्च स्खलनानि सञ्जातानि। अतः पाठकान् सप्रश्रयं प्रार्थये-यत्तानि स्खलनानि संशोध्य मां मर्षयेयुरिति। अत एव शुद्धाशुद्धिपत्रिका पृथङ् न निर्मिता, तत्राप्यशुद्धयो जायेरन्निति। अप्रकाशितोऽयं ग्रन्थः कथमपि सम्पादित इति मां क्षन्तुमर्हन्ति विद्वज्जनाः॥

वाराणसी
१९८४

इति विदुषां विधेयः
**पट्टाभिरामशास्त्री**

श्रीः

श्रीगुरुभ्यो नमः

# टीकाचतुष्टयोपेतशाबरभाष्यस्य सप्तमोऽध्यायः

तत्र

## प्रथमः पादः

१

### श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावस्स्यात् ॥ ७.१.१ ॥

भाष्यम्

सङ्गतिः विषयश्च

पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता। उत्तरेणेदानीमविहितेतिकर्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यते।

भट्टपादीया टुप्टीका

प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तितेति। एतदयुक्तम्, सर्वपृष्ठायां किं सकृदुत्तरार्धात् स्विष्टकृतेऽवदेयमुत भेदेनेति चिन्तितम्, तथा 'दृतिनवनीतमाज्यं भवति' इत्येवमादिषु

श्रीवेङ्कटेशीयं वार्तिकाभरणम्

*तथा एकादशे तन्त्रेण तदपवादभूता (सूत्रा)? वापेन च तन्त्रावापानुनिष्पादिनी प्रयोगेयत्ताचिन्ता फलति। तथा द्वादशे प्रसङ्गेन तदपवादभूततन्त्रावापाभ्याञ्च प्रसङ्गतन्त्रावापानुनिष्पादिनी प्रयोगेयत्ता चिन्ता

श्रीराजचूडामणिदीक्षितीयः तन्त्रशिखामणिः

सर्वस्य प्रकृतेर्यस्मात् समग्रगुणसम्पदः। काङ्क्षितानि लभन्तेऽन्ये तमीडे सोममव्ययम्।
अस्ति गोविन्दयज्वेन्द्र-नागमाम्बातपःफलम्। श्रीवेङ्कटेश्वरमखी सर्वतन्त्रस्वतन्त्रधीः॥

पट्टाभिरामीया भाष्यसन्दर्भयोजिनी

श्रीचिन्नस्वामिपादाब्जमरन्दैकमधुव्रतः।
मीमांसाभाष्यसन्दर्भयोजिनीं तनुते मुदा॥

पूर्वषट्कस्योत्तरषट्केन सह सङ्गतिं प्रदर्शयितुमुपक्रमते भाष्कारः-पूर्वेणेति। प्रत्यक्षविधिभिर्विहिता धर्माः-अङ्गानि येषान्ते दर्शपूर्णमासादयस्तेषाम्। आदिपदेनाग्नीषोमीयपशुज्योतिष्टोमादयो ग्राह्याः। इति-कर्तव्यता-अङ्गकलापः। उत्तरेण षट्केनेति पूरणीयम्। न विहिता अविहिता इतिकर्तव्यता येषान्ते तेषु कर्मसु इष्टि पशु-सोमेष्वित्यर्थः। इष्यते प्रारभ्यत इत्यर्थः।

*अत्र प्रारम्भे ग्रन्थपातः पाण्डुलिप्यामस्ति।

## संशयभाष्यम्

तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्मास्ते सर्वकर्मसु विहिता भवन्ति, ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्मवन्त उक्तास्तथा कर्तव्याश्चेति नार्थ उत्तरेण षट्केन। अथ ये यस्य प्रकरण उच्यन्ते ते तत्रैवोक्ता भवन्ति, ततोऽधर्मकाण्यैन्द्राग्नादीनीति तेषु चिन्ता भवति—किमेषां धर्मास्सन्ति? उत न? इति। यदा च सन्ति, तदा के? कियन्तो वा? कथञ्चानुष्ठातव्याः? इति। तदर्थमुत्तरः षट्कः प्रवर्तनीयः।

## टुप्टीका

प्रत्यक्षधर्मकेष्वपि चिन्ता वृत्ता। अत एवं वाच्यम्—प्रकृतौ विकृतौ चोपदेशश्चिन्तितः। 'सप्तदश प्राजापत्यान्' इत्येवमादिषु प्रत्यक्ष एवोपदेशः। सर्वपृष्ठादिष्वानुमानिकवचनोपदिष्ठानामुपदेश एव चिन्तितः।

## वार्तिकाभरणम्

फलतीति फलाभिप्रायं भाष्यमित्यर्थः। दशमे बाधाभ्युच्चयानुनिष्पादिनी इयत्ताचिन्तेत्युक्त्यैव एकादशे तन्त्रावापानुनिष्पादिनो इयत्ताचिन्ता, द्वादशे प्रसङ्गतन्त्रावापानुनिष्पादिनी इयत्ताचिन्तेत्युक्तप्रायमिति न पृथगुक्तमिति द्रष्टव्यम्।

नन्वेवं सति भाष्ये बाधतन्त्रप्रसङ्गा अध्यायार्था एव कीर्त्यन्ताम्, किं तत्फलकीर्तनेन? इत्याशङ्क्य प्रसङ्गसङ्गतिसिध्यर्थं तत्कीर्तनमित्याह—इयत्ताप्रसङ्गेनेति। दशमे × × × × पदार्थेयत्ताप्रसङ्गेन प्रयोगेयत्ताफलकैकादशाध्यायार्थं इत्यर्थः।

## तन्त्रशिखामणिः

येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः। कृतं साहित्यसाम्राज्यं नाम काव्यमनुत्तमम्॥
व्यतानीच्छुल्बमीमांसां तथा कर्मान्तवार्तिकम्। दुप्टीकायाः कृता टीका वार्तिकाभरणाभिधा।
प्रतिष्ठापितचोलक्ष्मा जानेस्तस्य नियोगतः। चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम्॥
गोविन्ददीक्षितचिरन्तनभाग्यराशेः श्री वेङ्कटेश्वरसखोशितुराज्ञया मे।
तन्त्रार्णवं तरितुमाहितसाहसस्य सांयात्रिकी भवतु तत्करुणाकटाक्षः॥
श्रीमन्मान्ये शकस्याब्दे हायने चेश्वराभिधे। चूडामणिः कलयते यज्वा तन्त्रशिखामणिम्॥

## भाष्यसन्दर्भयोजिनी

संशयं प्रदर्शयितुमारभते-तत्रेति। विहिताविहितेतिकर्तव्यताकेषु कर्मस्वित्यर्थः। यदीति संशयान्यतरपक्षावद्योतकः। विहिता इत्यनेन सम्बध्यते। प्रकरणे अधिकाराख्यप्रकरणे। धर्माः-अङ्गानीत्यर्थः। ततः-एवमङ्गीकारे तैरेव प्रत्यक्षविहितैरेवेत्यर्थः। ऐन्द्राग्नादयोऽपि—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' (तै. सं. २. २. १.) 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत' (तै. सं. २. १. ५) इति विहितेष्टिपश्वादयः। धर्मवन्तः अङ्गवन्तः। तथा कर्तव्याः यथा दर्शपूर्णमासौ कृतौ तथा ऐन्द्राग्नादयः कर्तव्याः। नार्थः न प्रयोजनमित्यर्थः। संशयस्य द्वितीयां कोटिमुत्थापयति-अथेति। अधर्मकाणि अङ्गरहितानि। तेषु ऐन्द्राग्नादिषु। चिन्ता विचारः। संशयस्य कोटिद्वयं प्रदर्शयति-किमेषामिति। तदर्थम् सधर्मका इत्यादिविशेषज्ञानार्थमित्यर्थः। यावद्धि धर्मेयत्तानुष्ठानप्रकारो न ज्ञायेत तावदैन्द्राग्नादिविधायकवाक्यानां प्रवर्तकत्वं कथमिव सिध्येदिति तात्पर्यम्।

## भाष्यम्

तत्र सप्तमेन तावत्सन्ति धर्मा इत्युच्यते, अष्टमेन च इमे अस्येति, इत्थं प्रयोक्तव्या इति नवमेन, दशमैकादशद्वादशैः—एतावन्तः प्रयोक्तव्याः नातोऽधिका इति ।

## टुप्टीका

सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते । अष्टमेन विशेषः । नवमेन विशेषातिदेशः प्रसङ्गेन प्रारभ्यते—किं मन्त्रोऽग्निस्वरूपप्रकाशनार्थमुच्चार्यते ? उताग्निस्वरूपमविवक्षितम् ? तस्मादित्थं प्रयोक्तव्यमित्यतिदेशप्रकार एव चिन्त्यते ? स दशमव्यापारमनुमन्यमान एवात्मानं लभते । दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ता । इयत्ताप्रसङ्गेन चैकादशः प्रयोगेयत्ताविचारार्थमारभ्यते । तन्त्रावापेनेदृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते, अन्यादृशीयत्ताप्रसङ्गेन भवति । यद्यपि तन्त्रावापप्रसङ्गा उभयत्राविशिष्टास्तथापि पूर्वषट्के नैषामवसरः । यावद्भेदो नावधृतस्तावच्छेषशेषिभावो नास्ति, प्रयोजका प्रयोजकत्वञ्च शेषशेषित्वादृते, तथा क्रमः प्रयोजकत्वादृते । तत ईदृशैः कोऽधिक्रियत इत्यधिकारलक्षणमापतति ।

## वार्तिकाभरणम्

नन्वेवं सति इयत्ताप्रसङ्गेनैकादशद्वादशा [ध्याया] र्थंभूतेति वक्तव्ये कथमुच्यते इयत्ताप्रसङ्गेनैकादश इतीत्याशङ्क्य द्वादशस्यैकादशेन सङ्गत्यन्तरसम्भवात् न तथोक्तमित्याशयेनाह—तन्त्रावापेनेति । तन्त्रेण तदपवादभूतावापेन च । एतादृश्याम् तन्त्रावापहेतुकायाम् प्रयोगेयत्तायां प्राप्तायां नैतादृश्येवेयत्ता, किन्तु प्रसङ्गनिबन्धना अन्यादृश्यप्यस्ति प्रयोगेयत्तेत्येवं तदपवादत्वेन द्वादश आरभ्यत इत्यर्थः । यद्यप्यध्यायद्वयस्य दशाध्याय्या एकादशेन द्वादशस्य चोपजीव्योपजीवकभाव एव सङ्गतिः । तथापि अनास्थयेदमुक्तमिति द्रष्टव्यम् ।

## तन्त्रशिखामणिः

सू० श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाऽधिकारं भेदस्स्यात् ।

पूर्वस्मिन्नध्यायषट्के उपदेशात्मकप्रमाणव्यापारश्चिन्तितः । उत्तरस्मिंश्चाध्यायषट्केऽतिदेशात्मकप्रमाणव्यापारश्चिन्तयिष्यते । ततश्च इत्थंकुर्यादित्येकमर्थं विधाय तद्वत्कुर्यादित्यर्थान्तरं विधातव्यमिति उपदेशपूर्वकत्वादतिदेशस्य षट्कयोर्हेतुहेतुमद्भावसङ्गतिः ।

ननु सर्वपृष्ठायां किं सकृदुत्तरार्धात् स्विष्टकृतेऽवदेयम्, उत कर्मभेदात्प्रतिकर्म तत्तदवदानस्य उत्तरार्धादवदेयमित्यतिदिष्टसकृदवदानरूपस्तृतीये चिन्तित इति कथं पूर्वषट्के उपदेशविचार इत्युक्तमिति चेन्न; सर्वपृष्ठायां हि नातिदेशविचार्थः, किन्तु 'उत्तरार्धात् स्विष्टकृतेऽवद्यति' इत्युपदेशः किं प्रधानावदानस्य उत्तरार्धादवदानं विधत्ते, किंवा कृतकरस्य द्रव्यस्य उत्तरार्धादिति । स चायमुपदेशार्थविचारः प्रकृतावपि सम्भवात् सर्वथा त्वनुष्ठान-

## भाष्यसन्दर्भयोजिनी

एवन्तावत्पूर्वषट्कोत्तरषट्कयोस्सङ्गतिं प्रदर्श्य सम्प्रति षष्ठसप्तमाध्याययोस्सङ्गतिप्रदर्शनेन सहोत्तरषट्कगताध्यायानां विषयान् निर्दिशति तत्रेत्यादिना । सप्तमाध्याये ऐन्द्राग्नादियागा धर्मवन्तः, अष्टमे चाध्याये अमुकस्य यागस्य अमी विशेषधर्माः, नवमे च ते विशेषधर्मा एवमनुष्ठेयाः, अवशिष्टेषु त्रिष्वध्यायेषु तांस्तान् धर्मान् परिगणय्य इयन्तो धर्मा अत्र प्रयोक्तव्या नाधिका इति उत्तरषट्के विषया इति भावः । इत्थं प्रयोक्तव्याः ऊहितपाठेन मन्त्राः प्रयोक्तव्याः, ऊहितरूपेण सामानि गेयानि, ऊहितेनैव च संस्काराः कर्तव्या इति मन्त्रसाम-संस्कारगतप्रकारपदस्यार्थः । प्रकृतितो विकृतिषु प्राप्तानामङ्गानाम्-दशमे अर्थलोपात् प्रत्याम्ननात्

## भाष्यम्

तत्रेदं विचार्यते—किं यजिप्रयुक्ता एते धर्माः कथं यजिर्गुणवान् स्यादित्येवमर्थमाम्नायन्ते ? आहोस्विदपूर्वप्रयुक्ताः—कथमपूर्वं स्यादिति ? यदि यजिप्रयुक्तास्ततस्सर्वार्थाः, अथापूर्वं प्रयुक्तास्ततो यथाप्रकरणं व्यवतिष्ठन्ते ?

## टुप्टीका

न च षष्ठसप्तयोर्मध्ये तन्त्रावापप्रसङ्गानामवसरः। कथम् ? अधिकारानन्तरमिदं विपरिवर्तते—किं धर्मैर्यागोऽधिक्रियते ? उत न ? किं वापूर्वम् ? इत्यनेन प्रसङ्गेन सप्तमाध्यमारभ्यते। अथवा सौर्यादयः प्राकृते-

## वार्तिकाभरणम्

ननु तन्त्रावापप्रसङ्गानामुपदिष्टातिदिष्टपदार्थसाधारण्यमेकादशाध्याये दर्शपूर्णमासयोरुपदिष्टानां प्रयाजादीनामाग्नेयादियागेषु तन्त्रत्वं त्रिकद्वये चावृत्तिरिति विकृतिभूतेषु वरुणप्रघासेष्वतिदिष्टानां प्रयाजादीनां विहारद्वयेऽप्यावृत्तिः ब्रह्मादीनां तन्त्रत्वमिति। तथा द्वादशाध्याये दर्शपूर्णमासयोरुपदिष्टानां वैकल्पिकानां व्रीहियवादीनां प्रसङ्गः, विकृतिभूते पशावतिदिष्टानां प्रयाजादीनां पशुपुरोडाशे प्रसङ्ग इति प्रतिपादनात्। तथा च कथं तन्त्रावापप्रसङ्गानां उत्तरषट्के निरूपणम् ? पूर्वषट्के वा किं न स्यात् ? इत्याभिप्रायेण शङ्कते—यद्यपीति। तन्त्रावापप्रसङ्गानामुभयसाधारण्येऽपि पूर्वषट्केऽवसराभावात् परिशेषादुत्तरषट्के निरूपणमिति परिहरति—तथापीति। ××××××अवसर×××इत्याशङ्कायां मानाधीना मेयसिद्धिरिति न्यायेन कृत्स्नस्य शास्त्रस्य प्रमाणाधीनत्वेन प्रथमं प्रमाणनिरूपणस्यावश्यकत्वात् तन्त्रावापप्रसङ्गानां प्रमाणनिरूपण-

## तन्त्रशिखामणिः

साम्यात् तत्र न कृतस्तस्मात् सर्वपृष्ठायामतिदेशप्राप्तस्य वचनस्यार्थं औपदेशिक एव चिन्तितः। न चैवं अगन्मेति विचार औपदेशिकार्थविचार एवेति पूर्वषट्क एव स्यान्न तु नवम इति चेत्सत्यम्, उपदेशविचारोऽप्यसौ विकृतिष्वेव अनुष्ठानविशेषं फलतीति विकृतिषु विशेषातिदेशविचारानन्तरं करिष्यते। यद्यप्येवं सर्वपृष्ठायामपि स्विष्टकृदवदानविचारोऽपि विशेषातिदेशाधीन एव, तथाऽपि विशेषकर्मविषयत्वात् शेषविचारात्मकत्वाच्च तृतीये कृतः।

नन्वेवमपि उत्तरषट्केऽपि औपदेशिकार्थविचारात् तत्रातिदेशश्चिन्तयिष्यते। तच्चासङ्गतमिति चेन्न; प्रायेणोपदेशातिदेशात्मकप्रमाणद्वयव्यापारनिरूपणपरं षट्कद्वयमित्यत्र तात्पर्यमित्यदोषः। अत एव प्रमाणविचारस्य उपदेशातिदेशसाधारण्यात् उपदेशविचारः पूर्वषट्क इत्युक्तं युक्तम्। तथा प्रयाजादीनामाग्नेयादित्रिके

## भाष्यसन्दर्भयोजिनी

प्रतिषेधाच्च बाधे जाते, एकादशे तन्त्रानुष्ठानेन द्वादशे च प्रसङ्गानुष्ठानेन पदार्थैयत्ता साधिता भवतीत्यर्थः।

स्थूलश उत्तरषट्कविषयाणां सङ्गतिं प्रदर्श्येदानीं सप्तमोक्ताधिकरणविचारप्रदर्शनायोपक्रमते—**तत्रेदं विचार्यते** इति। **किं यजिप्रयुक्ता** इति। किं प्रयाजादीनामङ्गानां प्रकरणाधीतानां प्रयोजकः—अनुष्ठापको यजिः-धात्वर्थः; तेन प्रयुक्ता एते प्रयाजादयः यजेः गुणवत्त्वं ज्ञापयितुं प्रकरणे समाम्नायन्ते इत्यनेन पूर्वपक्षकोटिर्दर्शिता। **आहोस्वित्** इत्यादिना उत्तरां कोटिं दर्शयति। **अपूर्वप्रयुक्ता** अपूर्वनिष्ठप्रयोजकतानिरूपित प्रयोज्यतावन्त इत्यर्थः। अर्थात् प्रयाजादीनामनुष्ठापकमपूर्वं तच्च कथं स्यादित्येवमर्थमपूर्वप्रयुक्तत्वकोटिः। कोटिद्वयस्य फलफलिभावं दर्शयति यदीत्यादिना। प्रकृतिविकृतिसाधारण्याद्यजेः प्रयोजकत्वे प्रयाजादयः **सर्वार्थाः**

## भाष्यम्

किं पुनरत्र युक्तम् ? अपूर्वप्रयुक्ता इति। अपूर्वं हि फलवत्। अफलो यजिः। फलवति च प्रयासो विधीयमानोऽर्थवान् भवति। तस्मादपूर्वप्रयुक्ता धर्मा इति। अतः परम् आचार्यस्य सूत्रोपन्यासः—'श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यादिति।

## टुप्टीका

धर्मैरधिक्रियन्तेऽतिदेशेन ? किं वा न ? इत्यनेन प्रसङ्गेन सप्तमोऽध्याय आरभ्यते। तद्बलेन विशेषातिदेशोह बाधानामारम्भः। पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते।

## वार्तिकाभरणम्

परप्रथमाध्यायात् पूर्वभावो न सम्भवतीति सिद्धं कृत्वा तदनन्तरं चतुर्थपर्यन्तं तेषां नावसर इत्याह—यावदिति। तन्त्रावापप्रसङ्गाः प्रयोगविशेषरूपाः, ते च प्रयाजादीनां प्रयोज्यानामेव भवन्ति। प्रयोज्यावधारणं च प्रयोजकत्वनिरूपणपरेण चतुर्थाध्यायेन भवति। प्रयोजकाप्रयोजकत्वं च शेषशेषिभावाधीनम्। यद्यपि तुषोपवापदि शेष्यपि पुरोडाशकपालादिकं न प्रयुङ्क्ते; तथापि शेषित्वे सत्येव प्रयोजकत्वात् सर्वेषां प्रयोजकः शेषी भवतीति शेषशेषित्वनिरूपणपरतृतीयानन्तर्यं प्रयोजकाप्रयोजकत्वरूपनिरूपणात्मकस्य चतुर्थाध्यायस्यावश्यं वाच्यम्। शेषशेषित्वं च भेदनिबन्धनम्, भिन्नानां हि तद्भवति नाभिन्नानामिति शेषशेषित्वनिरूपणपरस्य तृतीयाध्यायस्य भेदनिरूपणपरद्वितीयाध्यायानन्तर्यमवर्जनीयम्। एवञ्च प्रमाणभेदशेषत्वप्रयुक्तिविचारात्मकाध्यायचतुष्टयपर्यन्तं तन्त्रावापप्रसङ्गानां नावसर इत्यर्थः।

## तन्त्रशिखामणिः

तन्त्रत्वं, त्रिकद्वये चावृत्तिस्तथाऽतिदिष्टानां वरुणप्रघासेष्टिप्रयाजादीनां विहारद्वयेऽप्यावृत्तिः, ब्रह्मादीनां च तन्त्रत्वमित्येकादशे करिष्यमाणः प्रसङ्गविचारः, तथाऽमावास्यायां रात्रौ कर्तव्यायां निशीष्टावुपदिष्टानां प्रयाजादीनां प्रसङ्गः पशावतिदिष्टानां प्रयाजादीनां पशुपुरोडाशे प्रसङ्ग इति द्वादशे करिष्यमाणः प्रसङ्गविचारोऽप्युपदिष्टातिदिष्टसाधारण इति अतिदेशविचार उत्तरषट्क इत्यपि युक्तमित्यपास्तम्। प्रायेण उपदेशातिदेशद्वयविचारपरं षट्कद्वयमित्यत्र तात्पर्यादिति दिक्।

अधिकारे चिन्तिते ऽपौ स्यात्-किं प्राकृतैर्धर्मैरतिदेशप्रमाणेनाधिक्रियन्ते किं वा नेति जिज्ञासोदयादधिकारविचारानन्तर्यमतिदेशविचारस्य इत्यध्याययोस्सङ्गतिः। यथाऽन्यत्र पूर्वोत्तराध्याययोस्सङ्गतावुक्तायां पूर्वाध्यायान्त्यपादेन उत्तराध्यायाद्यपादस्य सङ्गतिर्न पृथग्वक्तव्या, तथा षट्कयोस्सङ्गतावुक्तायां न पूर्वषट्कान्त्याध्यायेन उत्तरषट्काद्याध्यायस्य सङ्गतिर्वक्तव्येति षष्ठसप्तमयोः पृथक् सङ्गतिर्न वक्तव्येति प्रपञ्चितं वार्तिका-

## भाष्यसन्दर्भयोजिनी

प्रकृतिविकृत्यर्था भवन्ति। द्वितयकोटौ तु अपूर्वस्य प्रयोजकत्वेन सर्वसाधारण्यं न स्यात् किन्तु तत्तद्यागोपकारकत्वमेवाङ्गानामिति व्यवस्था स्यादित्याह—यथाप्रकरणमिति। प्रकरणमनतिक्रम्येत्यर्थः। अयं भावः—यजिः स्वस्वरूपनिष्पादनायोपकारकपदार्थानाकाङ्क्षमाणः प्रयाजादीनुपकारकत्वेन स्वीकरोति। तेऽपि प्रयोजकेच्छानुसारेण व्याप्रियन्ते, तत्स्वरूपञ्च सम्पाद्य विरता भवन्ति। तथैवान्येऽपि यजतयः यजित्वसामान्येनेमानेवोपकारकत्वेन स्वीकृत्य स्वस्वस्वरूपसम्पादनं साधयेयुरिति प्रयाजादयस्सर्वार्था भवेयुः। अपूर्वप्रयुक्तत्वे तु पूर्वोक्तं

## भाष्यम्

मुख्यान्यपूर्वाणि। तानि हि फलवत्त्वात्प्रधानानि। प्रधाने च मुख्यशब्दः। तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः। तस्मिन् मुख्यभेदे सति यथाधिकारं भावः स्याच्छेषाणाम्। ये यस्यापूर्वस्याधिकारे प्रकरणे शिष्यन्ते, ते तस्यैव भवेयुः, श्रुतिप्रमाणत्वात्। अयमस्यापूर्वस्य

## टुप्टीका

'श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावस्स्यादि'ति। करणेतिकर्तव्यतानामपदविशिष्टा भावना विधीयते। तत्र यदस्यां करणमितिकर्तव्यता वा तदन्यत्र न भवति कर्मान्तिरत्वात्। 'शब्दान्तरे कर्मभेदः' (जै सू. २ १.) इत्युक्तम्। इतिकर्तव्यता च भावनयाकाङ्क्षिता-किं केन कथमिति न यागापूर्वफलानां स्वयमित्थमित्याकाङ्क्षास्ति। तस्माद् भावनया सम्बन्धः।

## वार्तिकाभरणम्

नन्वेवमपि चतुर्थानन्तरं तन्त्रावापप्रसङ्गानां अवसरोऽस्त्वत्यत आह—क्रम इति। क्रमो हि प्रयोज्य-धर्मः। प्रयोज्यावधारणञ्च प्रयोजकत्वाप्रयोजकत्वनिरूपणपरचतुर्थाध्यायाधीनम् [अतः] चतुर्थानन्तरं क्रम एव निरूपयितुं युक्तो न तन्त्रावापप्रसङ्गा इत्यर्थः।

ननु तन्त्रावापप्रसङ्गानां क्रमतुल्ययोगक्षेमत्वाद्विनिगमनाविरहात् तेषां वा चतुर्थानन्तर्यं किं न स्यादिति चेन्न; क्रमो हि प्रयाजादिवदङ्गं प्रयोज्यपदार्थधर्मश्च। तन्त्रावापप्रसङ्गास्तु नाङ्गम्। नापि प्रयोज्य-धर्मः। किन्तु प्रयाजादिलक्षणप्रयोज्यपदार्थगोचरप्रयोगधर्मरूपाः। ततश्च क्रम [स्या] ङ्गत्वात्प्रयोज्यपदार्थधर्म-त्वाच्च तन्त्रावापप्रसङ्गापेक्षया प्रबलत्वात् प्रयोज्यवर्गनिर्णयानन्तरं प्रयोज्यधर्मविचारस्यैवान्तरङ्गतया युक्तत्वाच्च चतुर्थानन्तरं क्रमविचारस्यैव प्राप्तावसरतया तन्त्रावापप्रसङ्गानां चतुर्थानन्तरमवसराभावात्।

## तन्त्रशिखामणिः

भरणे। तत्तत्रैवामुसन्धेयम्। तत्र प्रथमं तावत् अतिदेशादिविचारोपोद्घातत्वेनेदमधिकरणम्। तत्र संशयः। किमुत्तरषट्कमनारम्भणीयमुतारम्भणीयमिति? तदर्थञ्च किं दर्शपूर्णमासप्रकरणे श्रुताः प्रयाजादयो धर्माः, ज्योतिष्टोमप्रकरणे श्रुता दीक्षणीयादयश्च उपदेशेनैव सौर्यश्येनादिष्वपि भवन्ति, किमतिदेशेनेति चिन्ता। तदर्थं च किमिमे धर्माः पारिप्लवा उत यथाप्रकरणं व्यवस्थिता इति। तदर्थं च किमेते यजिप्रयुक्ता उतापूर्वप्रयुक्ता इति। तदर्थं च किमेते यज्यर्था उतापूर्वार्था इति; तदर्थं च किमेते यजिकर्मिकां भावनामुद्दिश्य विधीयन्ते किंवा करणवदपूर्वभावनया सहैव विधीयन्त इति। तत्र यदीमे यजिकर्मिकां भावनामुद्दिश्य विधियेरन् तदा उद्देश्य-विशेषासंभवात् यजिभावनामात्रमुद्दिश्य विहिता यजिमात्रार्था यजिमात्रप्रयुक्ताः पारिप्लवा भवन्तस्सौर्यादिष्व-

## भाष्यसन्दर्भयोजिनी

साधारण्यं न सिध्येत्। सर्वोऽपि यागः स्वस्वफलसाधनाय प्रवृत्तः स्वस्य च नश्वरत्वं जानन् फलप्राक्क्षणपर्यन्तं वर्तितुं योग्यं किञ्चिदपेक्षते। तदेवापूर्वमिति कथ्यते। तच्च प्रतिप्रकरणं व्यवस्थितम्। तस्य प्रयोजकत्वे दर्श-पूर्णमासयागजन्यस्यापूर्वस्य सौर्ययागजन्यस्य च तस्य न साधारण्यं प्रकरणभेदादिति प्रयाजादीनां न सर्वार्थत्वं सिध्यतीति। अनयोः पक्षयोः कतर उचित इति पृच्छति-किं पुनरिति। उत्तरयति-अपूर्वप्रयुक्ता इति। फल जननप्राक्क्षणेऽपूर्वमेव तिष्ठति। तदेव फलवदित्याह-अपूर्वं हि फलवदिति। फलकाले यजेरभावेन सोऽफलः। अपूर्वप्रयुक्तत्वमुपसंहरति—तस्मादिति। आचार्यस्य जैमिनेः। सूत्रं पठति—श्रुतिप्रमाणत्वादिति।

## भाष्यम्

**शेषोऽयमस्येत्यत्र श्रुतिरेव प्रमाणं क्रमते, न प्रत्यक्षादीनामन्यतमम्। श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते ते तस्यैव भवितुमर्हन्ति। न चान्यस्योक्तोऽर्थोऽन्यस्य भवति। न हि यत् देवदत्तस्य ग्रासाच्छादनादिकं तद्यज्ञदत्तस्य भवति। तस्माद्यथाप्रकरणं व्यवस्था धर्माणाम् ॥ १ ॥**

## टुप्टीका

**यजिप्रयुक्ता धर्माः कथम्? तत्र केचिद्वर्णयन्ति। प्रकरणाम्नानुमितेन वाक्येन सम्बन्धः। एतदपरे दूषयन्ति। यः फले चोद्यते स एव कथम्भावाकाङ्क्षी धर्मैस्सम्बध्यते। स च विशेषस्साकाङ्क्षः। तस्मादन्यस्मिन्**

## वार्तिकाभरणम्

नन्वेवमपि क्रमविचारानन्तरं तन्त्रावापप्रसङ्गानामवसरोऽस्त्वित्यत आह—तत इति। ततः क्रमनिरूपणानन्तरं ईदृशैः भेदाभेदशेषशेषिभावप्रयोजकाप्रयोजकत्वक्रमयुक्तैः कर्मभिः कोऽधिक्रियत इत्यनुष्ठेयत्ववर्गसाङ्गप्रधानकर्मजाते अधिकारापेक्षायाम् अनेन कर्मणा असौ पुरुषोऽधिक्रियत इत्यधिकारनिरूपणपरः षष्ठाध्याय आपतति। ततश्च पञ्चमानन्तरं तन्त्रावापप्रसङ्गानां अनवसर इत्यर्थः। ननु क्रमस्य तन्त्रावापप्रसङ्गानां प्रयोज्यनिर्णयाधीनत्वमविशिष्टम्। ततः प्रबलक्रमनिरूपणात्मकपञ्चमाध्यायानन्तरं षष्ठात् प्राक् तन्त्रावापप्रसङ्गानां अवसरः सम्भवतीति चेत्—अत्रोत्तरमनुपदमाचार्यां वक्ष्यन्ति।

ननु मास्तूक्तरीत्या तन्त्रावापप्रसङ्गानां पूर्णषट्के अवसरः, तथापि पूर्वोत्तरषट्कयोर्मध्ये अवसरः किं न स्यादित्य आह—न चेति। अनेन कर्मणाऽसौ पुरुषोऽधिक्रियत इत्यधिकारनिरूपणानन्तरं किं प्रयाजादिभि-

## तन्त्रशिखामणिः

व्युपदेशेनेव भवन्तीत्यतिदेशविचारः तदधीन ऊह-बाधविचारः, अतिदिष्टपदार्थविषयकतन्त्रावापप्रसङ्गविचारश्च न कर्तव्य इत्युत्तरषट्कमनारम्भणीयम्।

यदि च करणवदपूर्वभावनया सहैव विधीयेरन् तदा अपूर्वार्था अपूर्वप्रयुक्ता यथाप्रकरणं व्यवस्थिता भवन्तस्सौर्यादिष्वतिदेशेनैव प्राप्नुयुरित्यतिदेशादिविचारः कर्तव्य इत्युत्तरषट्कमारम्भणीयमिति फलफलिभावः। तत्र सौर्यादिषु यतः कुतश्चित् वैदिकात्कर्मणोऽतिदेशेन धर्मप्राप्तिरिति सामान्यतोऽतिदेशस्सप्तमेन प्रतिपाद्यते। अष्टमेन तु दर्शपूर्णमासाभ्यामिष्टीनां धर्मप्राप्तिः अग्निष्टोमादेकाहादीनामित्येवं विशेषातिदेशः। नवमेन तु अतिदेशेन प्राप्यमाणानां 'अग्नये जुष्टं निर्वपामि' इत्यादिमन्त्राणां नाविकारेण प्राप्तिः, किन्तु सूर्याय जुष्टं

## भाष्यसन्दर्भयोजिनी

सूत्रगतमुख्यशब्दार्थविवरणायोपक्रमते-मुख्यान्यपूर्वाणीति। फलसाधनत्वादपूर्वाणां मुख्यत्वम्। यानि फलसाधनानि तानि भवन्ति प्रधानानि। अतो मुख्यशब्दः प्रधाने वर्तत इत्यर्थः। तेषां मुख्यानाम्। शब्दान्तरादिभिरित्यादिशब्देन-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणि ग्राह्याणि। इदमत्र बोध्यम्—'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इति सूत्रे 'कर्मभेदः' इत्यत्र कर्मपदं यागदानहोमरूपकर्मबोधकमिति प्रतिभाति, किन्तु तत्पदं भावनाबोधकमिति स्वीकर्तव्यम्। यतो हि भावनाया एव साध्यसाधनेतिकर्तव्यताकाङ्क्षा भवति। सा च भावनाख्यातवाच्येति भावार्थाधिकरणे निर्णीतम्। आख्यातपदन्तु सर्वत्राविशिष्टम्-यजेत, जुहुयात्, दद्यादित्यादौ। अविशिष्टत्वेऽपि प्रत्ययस्य प्रकृत्यर्थानुरञ्जितस्य भेद एव वक्तव्यः। विशेषणभेदाद्विशिष्टं भिन्नं भवति। समुदितेभ्यो

## भाष्यम्

**उत्पत्त्यर्थविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ ७.१.२. ॥ (पू)**

## टुप्टीका

**विशेषान्तरे कुतो धर्मप्राप्तिः ? अयं यजिविशेषः श्रुत्या वाक्येन प्रकरणेन च सम्बध्यते। तत्र प्रयोगवाक्यं धर्मसम्बन्धित्वेनोदाहरन्ति-यागोत्पत्तिर्नानेन क्रियते, वाक्यान्तरैकत्वापन्नत्वात्। फलसम्बन्धश्च। विश्वजिन्न्यायेन**

## वार्तिकाभरणम्

रङ्गजातैर्यागोऽधिक्रियते; उतापूर्वमित्यधिकारप्रसङ्गेन सप्तमाद्य एवापततीति तन्त्रावापप्रसङ्गानां षष्ठसप्तमयोर्मध्ये नास्त्यवसर इत्यर्थः।

सप्तमाद्याधिकरणस्य षष्ठेन प्रसङ्गसङ्गतिमुक्त्वा सप्तमाध्यायस्यैव प्रसङ्गसङ्गतिमाह—अथवेति। कर्मण्यधिकारे निरूपिते सौर्यादिकर्माणि किमतिदेशेन प्रमाणेन प्राकृतैर्धर्मैरधिक्रियन्ते उतोपदेशेनाम्नातैर्धर्मैरधिक्रियन्त इत्यधिकारप्रसङ्गेन सप्तमाध्याय आपतति। तथा च प्रसङ्गसङ्गत्या सप्तमाध्यायस्यैव षष्ठानन्तर्यसिद्धेः न षट्कानन्तरं तन्त्रावापप्रसङ्गानामवसर इत्यर्थः।

अथ तर्हि सप्तमानन्तरं तन्त्रावापप्रसङ्गानामवसरोऽस्त्विति चेन्न; अनिदेशे निरूपिते अतिदेशोपजीवकस्य विशेषानिर्देशस्य विशेषातिदेशप्रमाणपदार्थगोचरस्य प्रयोगविकारात्मकस्योहस्यातिदेश (प्रमाण) प्राप्यमाणपदार्थगोचरस्य निवृत्यात्मस्य बाधस्य च बद्धक्रमत्वेन मध्ये तन्त्रावापप्रसङ्गानामवसराभावात्।

## तन्त्रशिखामणिः

निर्वपामि इति विकारेण प्राप्तिरिति प्राप्तिविशेषरूप ऊहश्चिन्त्यते। दशमेन तु कृष्णलादिषु आतिदेशिकानां अवघातादीनां वितुषीकरणार्थलोपादीनां बाधं तदभावरूपमभ्युच्चयं चोक्त्वाऽङ्गेयत्ताकारणमुच्यते। एकादशेन तु पदार्थेयत्ताप्रसङ्गात् तन्त्रावापात्मिका पदार्थेयत्ता चिन्त्यते। द्वादशेन तु तन्त्रावापात्मिकैव प्रयोगेयत्ता, किन्तु अन्यार्थमप्यनुष्ठितमङ्गमन्यस्योपकरोति न पुनस्तदन्यदप्यनुष्ठातव्यमित्यनादृश्यपि ? प्रसङ्गात्मिका प्रयोगेयत्ताऽस्तीति चिन्त्यते।

ननु प्रयोगविशेषविचारात्मकं तन्त्रादिकं प्रयोगविशेषविचारात्मकस्य च कर्तव्यानन्तरमेवारभ्यतां चतुर्थे हि शेषिण एव शेषाणां प्रयोजका इति निरूपिते यत्रानेके शेषिणस्समप्रधानभूतास्तत्र ते किं शेषमावृत्त्या प्रयोजयन्ति उत सकृदेवाकाङ्क्षासम्भवेन प्रसक्तिसंभवात् इति चेत्-सत्यम्, यथैव ह्युक्तरीत्या चतुर्थानन्तरं

## भाष्यसन्दर्भयोजिनी

धातुभ्यो नात्र प्रत्ययः श्रूयते, यजिपरः श्रूयमाणः प्रत्ययः यागकरणिकां भावनामाचष्टे, जुहोतिपरः श्रूयमाणस्सः होमकरणिकां तां वदति इति यागानुरक्तभावनायाः होमानुरक्तभावनायाश्च भेदस्सिध्यतीति सूत्रगतं कर्मपदं प्राधान्येन भावनाबोधकमित्येष्टव्यम्, तथापि करणीभूता यागादयोऽपूर्वं कृत्वैव करणीभवितुमर्हन्ति। भावना भाव्यस्वर्गादिनिर्वर्तकत्वेनैव यागादीनां करणत्वम्, न स्वर्गादिजनकत्वेन साक्षात्। तादृशनिर्वर्तकत्वञ्चापूर्वद्वारैवेत्यपूर्वस्य प्राधान्यमभिहितं भाष्यकारेण। तथा च क्वचिद् भावनाभेदः, क्वचिच्चापूर्वभेदः, क्वचित्तु धात्वर्थभेदः कर्मभेदशब्देन प्रत्येतव्यमिति। एवं मुख्यस्यापूर्वस्य भेदे सति प्रयाजादीन्यङ्गानि **यथाधिकारं** अधिकारं प्रकरणमनतिक्रम्यावतिष्ठन्ते। तदिदमुपपादयाति-**ये यस्येत्यादिना**। **अधिकारे** इत्यस्य विवरणं **प्रकरणे** इति। **शिष्यन्ते** उपदिश्यन्ते। अत्र हेतुः-**श्रुतिप्रमाणत्वादिति**। **न चेति**। दर्शपूर्णमासार्थत्वेनोक्तोऽङ्गकलापः सौर्यार्थो न भवितुमर्हति, तयोर्भेदात्। **यथाप्रकरणं** प्रकरणमनतिक्रम्य।

## भाष्यम्

### पूर्वपक्षः

अथवा नैतदेवम्-यथाप्रकरणं धर्माणां व्यवस्थेति। कथं तर्हि? ऐकधर्म्यं स्यादिति। समानधर्मता-सर्वे धर्मास्सर्वार्थाः। कुतः? उत्पत्त्यर्थाविभागात्। उत्पत्तिरिति यजिं ब्रूमः,

## टुप्टीका

प्राप्तत्वात्। पारिशेष्यादितिकर्तव्यतासम्बन्धायेदम्। यथा 'अध्वर्युर्गृहपतिं दीक्षयित्वा' (श. ब्रा. १२. १. १. १-१०) इति दीक्षाक्रमपरं वाक्यम्। तत्रोद्दिश्यमानत्वाद्यागस्य स्वपदगतं पदान्तरगतञ्च विशेषणमवि-

## वार्तिकाभरणम्

ननु पुरुषस्य कर्मण्यधिकारे निरूपिते किमाग्नेयादय आवृत्तैः प्रयाजैरधिक्रियन्ते? उत सकृदनुष्ठितैः प्रयाजादिभिः अधिक्रियन्त इत्येतादृशप्रसङ्गः तन्त्रावापप्रसङ्गानामपि सम्भवतीति प्रसङ्गसङ्गत्यविशेषाद्वा [षष्ठा] नन्तर्यं किं न स्यादित्यस्वरसात् परिहारान्तरमाह–पर्यनुयोगेति। तन्त्रावापप्रसङ्गा उपदिष्टातिदिष्टसाधारणा अपि पर्यनुयोगाविशेषाद् दशमानन्तरं प्रस्तोष्यन्ते। यद्यपि तन्त्रादय उपदिष्टांशेन पूर्वषट्केऽप्यारब्धुं शक्यन्ते, अतिदिष्टांशेन उत्तरषट्केऽप्यारब्धुं शक्यन्ते। तद्यदि पूर्वषट्के किमिति नारभ्यन्त इति पर्यनुयुज्यते; ततः

## तन्त्रशिखामणिः

संभवत्यारम्भः तथैवेयत्ताप्रसङ्गाद्दशमानन्तरमपि सम्भवत्यारम्भ इत्यलं तिन्त्रिणीचोद्यपरिहारप्रयासेनेत्याहुः। तत्र शब्दान्तरादिभिर्भावनानां तदनुनिष्पादितया अपूर्वाणाञ्च भेदस्य द्वितीय एव स्थितत्वात् यस्या अपूर्वभावनायाः प्रकरणे ये धर्मा विहितास्ते तस्या एव भवेयुर्नान्यासामन्यार्थाश्रितत्वमिति लिङ्गादिविनियोजकप्रमाणाभावादिति सिद्धान्तेनोपक्रमः। ननु करणानुग्राहिणीतिकर्तव्यता करणेनैव सम्बन्धमर्हति न भावनयेति चेन्न; यागेन स्वर्गं भावयेदित्युक्ते कथमिति भावनाया एवेतिकर्तव्यतापेक्षितत्वात् तयैव सम्बन्धो युक्तः न तु करणेन। किंच व्यापारविशेषरूपाया इतिकर्तव्यताया व्यापारसामान्यात्मकभावनान्वय एवोचितः, न सिद्धरूपकरणा-

## भाष्यसन्दर्भयोजिनी

सूत्रक्रमानुसारेण पूर्वपक्षमुत्थापयति—अथवा इत्यादिना। व्यवस्थेति नैतदेवम् इति सम्बन्धः। एकः-समानो धर्मो येषान्ते एकधर्माः तेषां भाव ऐकधर्म्यम्। अस्य विवरणं समानधर्मतेति। कस्यचन यजेस्सन्निधौ पठिता अपि धर्मा सर्वयजिभिस्सम्बध्यन्त इति यावत्। अत्र सौत्रं हेतुमुपन्यस्यति—उत्पत्त्यर्थाविभागात्। हेत्वन्तर्गतोत्पत्तिशब्दार्थमाह-उत्पत्तिरितीति। कथमुत्पत्तिशब्दस्य यजिरर्थ इति चेदित्थम्—'उत्पद्यतेऽनेनापूर्वमित्युत्पत्तिर्यागः, अर्थशब्दोऽपूर्वपरः। अनयोरविभागः-अविनाभाव इति उत्पत्त्यर्थाविभागादित्यस्यार्थः। अयमाशयः—भावनायाः करणं धात्वर्थ इति न्यायतस्सिद्धम्। करणस्य धात्वर्थस्यानुग्राहत्वेन भावना इतिकर्तव्यतामाकाङ्क्षति। सा चेतिकर्तव्यता करणं फलजननसमर्थं यथा स्यात्तथानुगृह्णाति। तया चानुगृहीतोऽपि धात्वर्थः स्वस्य नश्वरत्वेनापूर्वमुत्पादयति। विनापूर्वोत्पत्त्या फलजनने धात्वर्थोऽकिञ्चित्कर इति तावदेष्टव्यम्। तथा च यागापूर्वयोः नान्तरीयकोऽविनाभावः। इतिकर्तव्यता धात्वर्थस्य यावदनुग्राहिका तावदपूर्वस्यापीति सिद्धे उत्पत्तेर्यागस्य अर्थस्यापूर्वस्य चाविभागः पर्यवस्यति। तेन यथा यजिस्साधारणस्तथापूर्वमपि साधारणमिति धर्माणां सर्वार्थत्वम्। कस्मिंश्चिद्यजतौ धर्माः कामं श्रूयन्ताम्। ते सर्वेषु यजिमत्सु सम्बद्धुमर्हाः, तथैवापूर्वेष्वपि भवेयुरिति।

## भाष्यम्

अपूर्वस्योत्पादनात् । अर्थ इत्यपूर्वं ब्रूमः, यजिप्रयोजनत्वात् तयोरविभागः । सर्वाण्यपूर्वाणि यजिमन्ति । यजिसंयोगेन च धर्माश्शिष्यन्ते-यजेतेत्युक्त्वोक्ताः । ते यजौ न सम्भवन्ति, तस्याफलत्वात् । तत्रासम्भवन्तस्तत्तत्सम्बद्धेष्वपूर्वेषु विज्ञायन्ते । स च यजिसम्बन्धः सर्वेषामपूर्वाणां

## टुप्टीका

वक्षितम् । तस्मात्सर्वयागेषु धर्माः । न च दर्शपूर्णमासपदेन सम्बध्यन्ते, अत्यन्तवाक्यत्वात् । यागे विधीयमाने तु धात्वर्थे किञ्चिद्विधानाच्छ्रुतिः ।

## वार्तिकाभरणम्

विपरीतमपि शक्यं पर्यनुयोक्तुमुत्तरषट्के किमिति नारभ्यन्त इति । तस्मात् पर्यनुयोगाविशेषात् दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तोष्यन्त इत्यर्थः । यदुक्तं पञ्चमानन्तरं तन्त्रावापप्रसङ्गानां किमिति निरूपणं न स्यादिति तदपि पर्यनुयोगाविशेषादेव परिहृतम् । प्रयोगविशेषविचारात्मकतया तन्त्रावापप्रसङ्गविचारस्य पञ्चमानन्तर्यवत् इयत्ताविचारात्मकतया दशमानन्तर्यस्यापि सम्भवात् क्रमस्योपदिष्टातिदिष्टसाधारण्येऽपि प्रयाजादिवदङ्गत्वादधिकारस्य च साङ्गप्रधानकर्मगोचरत्वेन साङ्गप्रधानकर्मनिरूपणं विना अधिकारनिरूपणासम्भवात् क्रमस्य षष्ठप्रागभावोऽवर्जनीय इति पूर्वषट्क एव निर्देश इति द्रष्टव्यम् ॥ १ ॥

अत्र प्रथमं तावदतिदेशविचारोपोद्घातत्वेन इदं विचार्यते—ये धर्मा दर्शपूर्णमासयोः ज्योतिष्टोमे च समाम्नाताः ते यजिप्रयुक्ता यज्यर्थाः प्रथमं यजिकर्मकभावनोद्देशेन विहितास्सन्तः पश्चाद्यजिकरणकापूर्वभाव्यक-

## तन्त्रशिखामणिः

न्वयः । न चैवमितिकर्तव्यताया व्यापारविशेषरूपत्वे द्रव्यदेवतयोरितिकर्तव्यतात्वं न स्यादिति चेत्सत्यम्, तयोर्व्यापारविशेषसम्पादकत्वेन इतिकर्तव्यतात्वं न स्वरूपेणेत्यदोषः । नन्वेवं भावनार्थत्वे कथं धर्माणामपूर्वार्थत्वोक्तिरिति चेदुच्यते । भाव्यनिष्ठत्वाद् भावनायास्तत्सम्बद्धधर्मजातं भाव्यप्रयुक्तं भवति । भाव्यं चापूर्वमित्यपूर्वप्रयुक्तत्वाभिधानं न तु स्वरूपेणापूर्वस्य धर्मसम्बन्धः, नहि भवतीत्थमपूर्वमिति सम्बन्धः किन्तु इत्थमपूर्वं कर्तव्यमिति तत्सम्बन्धः । नन्वेवं सति यदि भाव्यप्रयुक्तेतिकर्तव्यता तदा फलस्यैव श्रुतत्वपुरुषार्थत्वाभ्यां भाव्यतया तत्प्रयुक्तैवेतिकर्तव्यतायास्स्यादिति चेन्न; यजेत स्वर्गकाम इत्यादौ यागेन स्वर्गं भावयेदिति प्रथमं प्रतिपद्यते, पश्चाद्विनश्वरस्य यागस्य कालान्तरभावि स्वर्गसाधनत्वानुपपत्तिज्ञाने सति यागेनापूर्वं कृत्वेति प्रतिपद्यते । तस्मिंश्चापूर्वे कृते तत एव कालान्तरे स्वर्गो भवतीति तत एवापूर्वं चिकीर्षति, ततः कथन्तत्कर्तव्यमित्याकाङ्क्षति

## भाष्यसन्दर्भयोजिनी

उत्पत्तिशब्दस्य अर्थशब्दस्य च तत्तदर्थत्वे क्रमेण हेतू निर्दिशति—अपूर्वस्योत्पादनादिति, यजिप्रयोजनत्वादिति । अत एव तयोरविभागः-अविनाभाव इत्यर्थः । अविनाभावादेव सर्वेषामपूर्वाणां यजिमत्त्वम् । अङ्गानामाम्नानं 'यजेत' इत्यारभ्यैव दृश्यते । तेन यजिसंयोगस्तेषां नियत इत्याह—यजिसंयोगेनेति । यजिसंबन्धेन शिष्टानामपि तेषां तत्स्वरूपार्थत्वं नाङ्गीकर्तुं शक्यम्, आनर्थक्यात् । तत्र यजौ अनुष्ठीयमानानां तेषां क्व तर्हि सम्बन्धः? इति चेदाह-तत्सम्बद्धेषु-यजिसम्बद्धेषु । एतादृशस्सम्बन्धः सर्वापूर्वसाधारण इत्याह-स चेति । एवञ्च यजिसम्बन्धेन

## भाष्यम्

तुल्यः । तस्मात्सर्वार्था भवन्ति । सत्त्वधर्मवत् । यथा सत्त्वधर्माः-गौर्न पदा स्प्रष्टव्य इति गोत्वसम्बन्धेन श्रूयमाणास्तत्रासम्भवन्तस्तत्सम्बद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसम्बन्धस्याविशेषात्सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । एवमिहापि ।

## टुप्टीका

एतदप्ययुक्तम् । प्रयाजादीनामप्यनेन न्यायेन फलसम्बन्धः स्यात् । ततश्च कतरे धर्माश्चिन्त्यन्ते ।

## वार्तिकाभरणम्

भावनया यागद्वारेण सङ्गंस्यन्ते ? उतापूर्वप्रयुक्ता अपूर्वार्थाः प्रथममपूर्वभाव्यकभावनया इत्थम्भावेन सङ्गतास्सन्तः पश्चात्करणभूतयजेरनुग्राहका भवन्तीति । तत्र सिद्धान्तसूत्रमाह—श्रुतिप्रमाणत्वात् शेषाणां मुख्यभेदे यथाधिकारं भावःस्यात् इति ॥

सूत्रस्यार्थमाह—करणेति । दर्शपूर्णमासविशिष्टयागकरणिका प्रयजादिधर्मप्रकारिका भावना दर्शपूर्णमासवाक्येन विधीयत इत्यर्थः । नन्वेतावता धर्मसाङ्कर्याभावे किमायातमित्यत आह—तत्रेति । दर्शपूर्णमासवाक्ये प्रत्ययवाच्यायां भावनायां यत्करणञ्चेतिकर्तव्यता प्रयाजादिः, तदुभयमप्यन्यत्र भावनान्तरे न भवति । तथा च धर्माणां दर्शपूर्णसासवाक्यविहितभावनार्थत्वान्न सर्वभावनार्थत्वमिति न धर्मसाङ्कर्यमित्यर्थः । अत्र यथा करणस्य न सर्वभावनार्थत्वं तथा धर्माणामपीति दृष्टान्तार्थं करणपदं निर्दिष्टमिति द्रष्टव्यम् ।

## तन्त्रशिखामणिः

तस्यामाकाङ्क्षायामुपदिश्यमानधर्मजातमपूर्वप्रयुक्तं भवति इत्यर्थस्य नवमे वक्ष्यमाणत्वात् । न चैवं यागेनापूर्वं कृत्वेति कथ्यमाने यागस्य श्रुतं स्वर्गकारणत्वं हीयेतेति वाच्यम् । यथा गोमयैः पचन्तीत्यत्र गोमयसाध्याग्निसाध्ये पाके न गोमयानां कारणत्वहानिः तथा अत्राप्युपपत्तेरिति दिक् ॥१॥

अथ पूर्वपक्षमाह

सू० उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ।

यदुक्तमपूर्वभावनयैव धर्माणामन्वयात्तद्भेदेन यथाप्रकरणं व्यवस्थेति तदयुक्तम् । अपूर्वभावना हि करणानुग्रहार्थमेव इतिकर्तव्यतां स्वीकरोति न साक्षादात्मार्थम्, इतिकर्तव्यतायाः करणानुग्राहकतयैव लोके दृष्टत्वादतस्तेनैव साक्षात्सम्बद्धयतां किं परम्परया । न च करणस्य सिद्धरूपस्याकर्तव्यतया न तेनेतिकर्तव्यतासम्बन्ध इति वाच्यम् । नासाधितं करणं भवतीत्यर्थात्तस्यापि कर्तव्यतासंभवात् । नचैवमपि यजिकर्मिकाया

## भाष्यसन्दर्भयोजिनी

विधीयमाना धर्माः तत्स्वरूपसम्पादन आनर्थक्यं भजमानाः यजिसम्बद्धापूर्वेषूपयुज्यमानाः सर्वार्था भवन्तीति पूर्वपक्षिण आशयः । सौत्रं दृष्टान्तमुपपादयति—यथा सत्त्वधर्मा इत्यादिना । सत्त्वं प्राणी, तदुद्दशेन विधीयमाना धर्मा इत्यर्थः । 'गौर्न पदा स्प्रष्टव्यः' इत्यत्र गोपदार्थस्य पादस्पर्शे प्राप्ते निषिध्यतेऽनेन । गोपदस्यार्थस्तु गोत्वम्, आकृत्यधिकरणन्यायात् । गोत्वन्तु जातिः, तत्र न पादस्पर्शनस्य प्राप्तिः, अप्राप्ते च तादृशस्पर्शे कथं निषेधः ? तत्रासम्भवन्निषेधस्तत्सम्बद्धे द्रव्ये प्रसरतीति स्वीकार्यम् । तदिदमाह - पिण्डेषु विज्ञायन्ते इति । पिण्डेषु-व्यक्तिषु ।

## भाष्यम्

उच्यते—विषम उपन्यासः। तत्र गोसामान्यसम्बन्धेन धर्मा विधीयन्ते-गौर्नं पदा स्प्रष्टव्य इति। इह पुनर्यजिविशेषसम्बन्धेन धर्मा विधीयन्ते 'दर्शपूर्णमासाभ्यां यजेत' 'ज्योतिष्टोमेन यजेतेति' विशिष्टयजिसम्बद्ध एवापूर्वं भवितुमर्हन्ति, न सर्वत्रेति।

## टुप्टीका

विश्वजिति अन्यथानुपपत्या फलकल्पना। इह तु शब्दवत्वात्फलस्यान्यथानुपपत्तिः क्षीणा। तस्मात्प्रथममेव व्याख्यानं युक्तम्। यः फले चोद्यते स इतिकर्तव्यतया सम्बध्यमान इतिकर्तव्यतां प्रति प्रधानम्। प्रधानस्य

## वार्तिकाभरणम्

ननु दर्शपूर्णमासविहितभावनायाः वाक्यान्तरविहितभावनायाश्च एकत्वात् कथं न धर्मसाङ्कर्यमित्यत आह—कर्मान्तरत्वादिति। भावनानन्तरत्वादित्यर्थः। कथं भावनान्तरत्वमित्याशङ्क्य शब्दान्तरादिप्रमाणैः द्वितीयाध्याये भावनाभेदस्य साधितत्वादस्ति दर्शपूर्णमासादिवाक्यविहितभावनापेक्षया सौर्यादिवाक्यविहित-भावनाया भेद इत्याह—शब्दान्तर इति।

नन्वितिकर्तव्यताया भावनार्थत्वमुक्तम्; तदनुपपन्नम्—इतिकर्तव्यतायाः करणानुग्राहकत्वेन यागार्थ-त्वात्तथा भाष्यकारेणेतिकर्तव्यताया अपूर्वार्थत्वेनोक्तत्वा इतिकर्तव्यताया अपूर्वार्थस्यैव वक्तव्यत्वात्। तथा

## तन्त्रशिखामणिः

भावनाया निर्ज्ञातप्रकारत्वात् नेतिकर्तव्यताकाङ्क्षेति वाच्यम्। फलभावनाकरणत्वेन यागस्य विहिततया तेन रूपेण तस्याप्यलौकिकत्वात् अस्त्येवेतिकर्तव्यताकाङ्क्षा। तस्मात् प्रथमं यजिभावनया सम्बद्धा धर्माः पश्चाद्वैयर्थ्यपरिहारायापूर्वस्योपकुर्वन्ति। यथा आधानमग्निद्वारेण क्रतूनाम्।

ननु भवत्वेवं तथाऽपि धर्माणां यजिसम्बन्धबोधकं प्रमाणं न पश्याम इति चेदत्र भाष्यानुसारिणः-दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यमेवानन्यार्थं सत् यज्युद्देशेन समिदादिधर्मविधायकम्। यथा 'अध्वर्युः गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यादिवाक्यमनन्यपरं सत् क्रमपरं तद्वत्। तथाहि न तावदिदं कर्मोत्पत्तिपरम्, यदाग्नेयोऽष्टाकपाल इत्यादि वाक्यैरेव कर्मोत्पत्तेः। न चानेन दर्शपूर्णमासयजिकर्मिका भावना विधीयतामिति

## भाष्यसन्दर्भयोजिनी

एवमिहापीति। यथा पादस्पर्शनिषेधः नीलगवि प्रसरेत् तर्हि कपिलगोः पादस्पर्शे जाते निषेधो न प्रसरेत्। अतो निषेधस्य गोत्वसामान्येन सम्बन्धो वक्तव्यः। गोत्वसामान्ये च निषेधोऽनुपपन्न इति तदवच्छिन्नसर्वगवीषु निषेधः प्रसरतीति यथा, तथैव यागोद्देशेन विधीयमाना धर्मा उद्देश्यभूतयागस्य धर्मविधायकवाक्येष्वनुपात्तत्वेनोपस्थित्य-भावात् अफलत्वाच्च तस्य तत्रासम्बद्धाः यागसम्बद्धेष्वपूर्वेषु फलवत्सु सम्बध्यन्त इति भावः।

व्यवस्थावादी वदति-उच्यत इत्यादिना। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं प्रतिपादयति-तत्रेति। गोव्यति-रिक्तं गोत्वं गवि समवेतमस्ति। तदवच्छिन्नाः खण्डितमुण्डिता अपि सर्वे गाव एव भवन्ति। प्रकृते तु न तथा, यं यागमुद्दिश्य धर्मा विधीयन्ते स यागो विशेषरूपो वर्तते प्रकरणादिना। अतो धर्मा विशेषयजिना सम्बध्यन्ते। यजेर्विशेषत्वं नाम्ना सिध्यति। दर्शपूर्णमासाभ्यां ज्योतिष्टोमेन इत्यादीनि नामानि यजेर्विशेषणानि। विशेषणा-

## भाष्यम्

अत्र ब्रूमः—दर्शपूर्णमासाभ्यां यजेतेत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम्। किं कारणम्? यदा यजौ धर्मा विधीयन्ते तदा यजिरनूद्यते-यजेतेत्थमिति। यदि यजिर्विधीयेत न धर्मैस्सम्बध्येत। न हि द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवति। अनुवादश्च सन्नविशेषात्सर्वयागानुवादः। तस्मात्सर्वार्था धर्माः।

## टुप्टीका

चोद्दिश्यमानस्य विशेषणमविवक्षितम्। प्रकरणाम्नानानुमितेनपि वाक्येन स्वशक्त्या सर्वयागानां धर्मसम्बन्धः।

## वार्तिकाभरणम्

सर्वस्यापि फलार्थत्वेन धर्माणामपि फलार्थत्वमित्यत आह—इतिकर्तव्यतेति। इतिकर्तव्यतां भावनैवाकाङ्क्षतीत्यर्थः। कथमाकाङ्क्षतीत्याशङ्कायामाह—किमिति। यथा किं भावयेत्, केन भावयेत्, इति भाव्यं करणं चाकाङ्क्षति तथा कथं भावयेदितीतिकर्तव्यतामप्याकङ्क्षति। कथमिति प्रकारापेक्षेयम्। सामान्यस्य च भेदको विशेषः प्रकारः। तस्मात् व्यापारसामान्यरूपा भावना प्रकारविशेषमपेक्षते। न हि कीदृशेन यागेन कर्तव्यमिति यागस्य विशेषाकाङ्क्षास्ति; नापि कीदृशमपूर्वमित्यपूर्वस्य विशेषाकाङ्क्षास्ति; न वा कीदृशं फलमिति फलस्य विशेषाकाङ्क्षास्ति, किं तर्हि कुर्यादित्यनेन व्यापारसामान्यरूपेण प्रत्ययाभिहिता भावना कीदृशोऽयं

## तन्त्रशिखामणिः

वाच्यम्। नासाधितं करणं भवतीत्यर्थादेव तद्विधिसिद्धेः। किंच तथासति कर्मभूतयागवाचिना यजेतेत्यनेन तृतीयान्तस्य दर्शपूर्णमासपदस्य न सामानाधिकरण्येन सम्बन्धः, वैयधिकरण्ये च दर्शपूर्णमासौ यजेः करणं प्रसज्येयाताम्। न चैतदिष्टम्। नन्वाग्नेयादीनां फलाकाङ्क्षिणां फलसम्बन्धार्थमिदं वाक्यम्। न च विश्वजिन्न्यायेनैव स्वर्गफलकत्वसिद्धिरिति वाच्यम्। तर्हि समिदादीनामपि तेनैव न्यायेन फलसम्बन्धसिद्धेरङ्गत्वासंभवात्। पारिप्लवा व्यवस्थिता वेति कतरे धर्माश्चिन्त्यन्ते? किञ्च फलसम्बन्धपरेऽस्मिन् वाक्ये प्रत्यक्षेऽन्यथानुपपत्त्यभावेन विश्वजिन्न्यायानवतारात्। तस्मात् फलपरमेवेदं वाक्यमिति चेन्न; 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासविति' वाक्येनैव सर्वफलत्वप्रतिपादकेन स्वर्गफलकत्वस्यापि सिद्धेः केवलं धर्मसंबधपरमेवेदं वाक्यम्। न चैवमपि कथं पारिप्लवा

## भाष्यसन्दर्भयोजिनी

नामितरव्यावर्तकत्वं सिद्धम्। दर्शपूर्णमासजन्यमपूर्वं ज्योतिष्टोमजन्यादपूर्वाद् भिन्नमेव भवेत्। अतो ये धर्मा दर्शपूर्णमासयागसम्बन्ध्यपूर्वेण सम्बद्धाः न ते ज्योतिष्टोमजन्यापूर्वेण सम्बद्धुमर्हन्ति इति व्यवस्थयैव धर्मा अवतिष्ठन्ते।

सर्वधर्मत्ववादी वदति—**अत्र ब्रूमः**। दर्शपूर्णमासपदं ज्योतिष्टोमपदं वा नामधेयमिति तु सत्यम्। तच्चेतरव्यावर्तकमित्यपि सत्यम्। किन्तु तानि वाक्यानि किं यजिमनूद्य धर्मान् विदधति? किं वा यजिमेव विदधति? इति विकल्प्य दूषयति-**यदा यजौ** इत्यादिना। यदि प्रथमः पक्षस्तर्हि दर्शपूर्णमासज्योतिष्टोमादिवाक्येषु यजतेरनुवादकत्वं वक्तव्यम्। तच्च न सम्भवति, यजेः प्रापकस्य शास्त्रान्तरस्याभावात्। यदि वा द्वितीयः पक्षः तर्हि धात्वर्थमात्रविधानेन चरितार्थानि तानि वाक्यानि, धर्माणां तैस्सह कुतस्सम्बन्धः? यदि च तैर्वाक्यैः यजिर्विधीयते, तच्चानूद्य धर्मा इत्युभयविधानं स्वीक्रियत इत्युच्यते, तर्हि तन्न सम्भवतीत्याह-**न हीति**। विधीय-

## भाष्यम्

**ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति। न दर्शपूर्णमासशब्दः शक्नोति यागं विशेष्टुम्। अयं हि विधिर्वा स्यादनुवादो वा? यदानुवादस्तदा धर्मसम्बन्धार्थः। स च धर्मसम्बन्धो यागानुवादेनैव तयोस्सिद्धः।**

## टुप्टीका

उत्पत्तिस्तुकरणानुग्राहिणीतिकर्तव्यता लोके दृष्टा। सा तथैवेहापि भवितुमर्हति। सर्वाण्यपूर्वाणि यजिमन्तीत्येव-

## वार्तिकाभरणम्

प्रत्ययाभिहितो व्यापार इति विशेषमपेक्षते। विशेषश्च प्रकारः। स च यागानुरक्तफलानुकूलव्यापारविशेषात्मक इति व्यापाररूपभावनाया एव प्रकारविशेषापेक्षा। तस्मात् यागापूर्वफलानां स्वयमित्थमाकाङ्क्षा भवनावदन्या काचिन्नास्ति। तस्मात् भावनया धर्माणां सम्बन्ध इत्यर्थः। ननु धर्माणां भावनार्थत्वे अपूर्वमवान्तरव्यापारः शक्तिस्थानीयं वेति भाष्यकारेणाप्यत्रैवाधिकरणे—'ऋविभागात्तु नैवं स्यात्' इति सूत्रं (जै०सू० ७.१.५) व्याचक्षाणेन 'फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः 'स्वर्गकामो यजेत' इति आनुमनिकोऽपूर्वेण। अनुमानाच्च प्रत्यक्षं बलवत्। तस्माद्यज्यर्था धर्माः। ननु यजेर्भङ्गित्वात्कालान्तरे फलं दातुमसमर्थः। तत्र श्रुता धर्मा अनर्थका भवन्तीत्युक्तम्। अत्र स्थितस्य न्यायस्य आक्षेपेग प्रत्यवस्थानं क्रियते-तैलपानवत् एतत् भविष्यतीति। यथा तैलपानं घृतपानं वा

## तन्त्रशिखामणिः

धर्मा यावता दर्शपूर्णमासपदविशेषितेन यजिनाऽऽग्नेयादय एवोद्दिश्यन्त इति वाच्यम्। हविरुभयत्ववदुद्देश्यविशेषणस्यापि विवक्षितत्वात्। तस्मादविशेषितेन यजिना सर्वयागोद्देशात् सर्वयागेषु धर्माः भवन्ति तद्द्वारेण च सर्वेष्वपूर्वेषु। यद्यपि होमाद्यपूर्वेषु न यजिद्वारकत्वसम्भवः, तथाऽपि सर्वेषु यज्यपूर्वेषु भवति। ननु दर्शपूर्णमासपदमेव उद्देश्यसमर्पकमस्तु, ततश्च यज्यर्थत्वेऽपि धर्माणामाग्नेयादिषु व्यवस्थितेः न पारिप्लवतेति चेन्न; नामार्थे रूपधर्मसंबन्धे यजेतेत्यनेन विधीयमाने परपदसंबन्धविधानादत्यन्तं श्रुतिः पीडिता स्यात्, यज्युद्देशेन धर्मसंबन्ध विधौ धात्वर्थे किञ्चिद्विधानात् श्रुतिरनुग्रहीष्यत इति न दर्शपूर्णमासपदमुद्देश्यसमर्पकम्। ननु तर्हि नानेन विधिना दर्शपूर्णमासयोर्धर्मा विधीयन्ते, किन्तु दर्शपूर्णमासपदेनाग्नेयादीनुद्दिश्य समिदादिवाक्यगतैरेव विधिभिस्समिदादयो विधीयन्ताम्। एवं च धात्वर्थस्यान्यत्र विधानादत्यन्तं श्रुत्यनुग्रहो भवति दर्शपूर्णमासशब्दश्च नाविव-

## भाष्यसन्दर्भयोजिनी

मानस्य यजेः धर्मैस्सह कुतस्सम्बन्धः? सम्बन्धबोधकसामग्र्या अभावात्। अनुवादावसरे च विशेषयागः कुतोऽनूद्येत। सर्वयागानुवादे च कः प्रत्यूहः? अतो धर्मास्सर्वार्था इति भावः।

धर्मव्यवस्थावादी शङ्कते-नन्विति। दर्शपूर्णमासशब्देन व्यवह्रियमाणो यजिर्यागान्तराद् भिन्नोऽवगम्यते। न हि यागमात्रस्य दर्शपूर्णमासशब्दोऽवबोधकः। तेन च धर्माणां विशेषयज्यर्थत्वं सिध्यति। विधेयार्थ परिच्छेदकतया नाम्नां प्रयोजनवत्वमेव प्रथमचतुर्थप्रथमेऽवधृतम्, न विधेयत्वम्। यदि विधेयत्वं स्यात्तर्हि यजिं विशेष्टुं शक्नुयात्। अतो नाम्नां न विधिः। यद्यनुवादत्वं तर्हि सोऽनुवादः किंप्रयोजनकस्स्यादृते धर्मसम्बन्धात्। धर्मसम्बन्धश्च यागानुवादेनैव सिध्यतीत्युत्तरमाह-न **दर्शपूर्णमासेति**। **तयोः** नामधर्मयोः।

## भाष्यम्

**ननु निवृत्तिकरो भविष्यति-दर्शपूर्णमासावेवेत्थं कुर्यान्नान्यानिति । नैवं शक्यम् । यत्कारणम् न तस्यान्यनिवृत्तिरर्थः ।**

## टुप्टीका

मादिः । स च यजिसम्बन्धः सर्वापूर्वाणां तुल्य **इत्येवमन्तोऽयुक्तो ग्रन्थः । यागोऽपूर्वेणाविनाभूतो नापूर्वं यागेन ।**

## वार्तिकाभरणम्

भङ्गित्वेऽपि सति कलान्तरे मेधाबलधृतिपुष्ट्यादीनि फलानि करोति, एवं यजिरपि करिष्यति । किं नोऽदृष्टेनापूर्वेणाश्रुतेन कल्पितेनेति अपूर्वाधिकरणोक्ताक्षेपेणेह चोद्यं कृत्वा **उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च धर्मभेदः स्यात्** इति सूत्रं व्याचक्षाणेन हेत्वभावान्न तत्प्रयुक्तं धर्मजातम् । अपूर्वन्तु यागेनापूर्वं कृत्वा फलं भावयेदिति श्रुतानुमितैकदेशनिष्पन्नेन वाक्येन प्रतीतं प्रयोगसमवेतं तदानीं कर्तव्यं भवितुमर्हतीति स्वभावेनेतिकर्तव्यताकाङ्क्षया सम्बध्यमानं धर्मजातं तत्प्रयुक्तमेव भवितुमर्हतीति न फलप्रयुक्तम् । अथ श्रुतफलपरित्यागेनाश्रुतापूर्वस्य भाव्यत्वाभ्युपगमे श्रुतहान्यश्रुतकल्पनादोषः स्यादिति चेत्—स्यादेतदेवम् । यदि सर्वात्मना फलं परित्यज्यापूर्वं भाव्यत्वेन कल्प्येत; न चैवमस्ति; किन्तु श्रुतस्य फलस्य कालान्तरभावित्वेन यागं प्रति भाव्यत्वासम्भवात् श्रुतफलस्य यागं प्रति भाव्यत्वसिध्यर्थमेव अपूर्वं भव्यभूतमवान्तरव्यापारत्वेन कल्प्यते; न तु स्वातन्त्र्येणापूर्वं भाव्यमिति कल्प्यत इति न श्रुतहान्यश्रुतकल्पनादोषः । व्युत्पादितं चापूर्वाधिकरणेऽपूर्वम् । तस्मादपूर्वप्रयुक्ताः यागश्च करणं न भाव्यः । तथा च यागस्य भाव्यत्वाभावेनापूर्वार्थित्वस्यैव वक्तव्यत्वात् । न च धर्माणां यागानुग्राहकत्वात् यागार्थत्वमेव युज्यत इति वाच्यम्; यागस्याप्यपूर्वभावनार्थत्वेन प्रधान्याभावात् । अथ यदि भाव्यप्रयुक्ता धर्मा इत्यभ्युपगम्येत तर्हि फलार्था एव भवन्तु धर्माः

## तन्त्रशिखामणिः

क्षिप्तः, यजिस्तु नित्यानुवादः यागत्वाद्दर्शपूर्णमासयोरिति चेन्न ; कर्तव्यतया प्रतीतैरेवेतिकर्तव्यता संबध्यते न करणतया प्रतीतैस्तृतीयान्तेन । दर्शपूर्णमासपदेन चाग्नेयादयः करणतयैव प्रतीयन्त इति नाग्नेयादिभिरिति कर्तव्यतायास्सम्बन्धस्स्यात् । तस्माद् यजिनैवोद्दिश्य सर्वान् यागान् धर्मा विधीयन्त इत्याहुः ।

अत्र केचित् । एवं सति दर्शपूर्णमासशब्दः प्रायिकानुवादस्स्यात् नक्षत्रेष्ट्याद्यतिरिक्तानामेव यागानां दर्शपूर्णमासकालत्वात् तथा सप्तम्यर्थे च तृतीया लक्षणया व्याख्येया, स्वर्गकामपदं च फलकाममात्रोपलक्षकं वाच्यम् । न चैतद्युक्तम् । तस्मात् सामान्यवचनेन सेत्स्यदपि स्वर्गफलकत्वमनेन विशेषवचनेन प्रागेव प्रतिपाद्यते । 'सर्वेभ्यः कामेभ्य' इति सामान्यवचने तु गोबलीवर्दन्यायेन फलान्तरपरमित्येव युक्तम् । एवं च समिदादीनामुपकार्या-

## भाष्यसन्दर्भयोजिनी

व्यवस्थावदी पुनश्शङ्कते—**नन्विति** । **निवृत्तिकरः** व्यावर्तकः । व्यावृत्तिमेव प्रदर्शयति-**दर्शपूर्णमासावेवेति** । निरस्यति-**नैवं शक्यमिति** । निवृत्तिकरत्वेन नाम्नां विधेयता स्वीकार्या । यश्च विधेयः स करणं भवति, विधेयत्वकरणत्वयोस्सामानाधिकरण्यात् । यत्करणं तदन्यनिवृत्त्यर्थकमिति क्वचिन्न दृश्यत इत्यर्थः ।

## भाष्यम्

**ननु परिसङ्ख्यया करिष्यति। नात्र परिसङ्ख्या युज्यते। यद्यनेन वाक्येन यागमात्रे**

## वार्तिकाभरणम्

फलस्य श्रुतत्वात् पुरुषार्थत्वाच्च। न त्वपूर्वार्थाः तस्याश्रुतत्वात् अपुरुषार्थत्वाच्च। तस्माद्धर्माः फलार्था एवेति वक्तुं युक्तमिति चेत्। सत्यम्; फलं श्रुतत्वात् पुरुषार्थत्वाच्च प्रथमं भाव्यांशे समुपनिपततीति। तथापि फलं कालान्तरभावित्वेन कर्मप्रयोगसम्बन्धाभावात् कर्तव्यतां न प्रतिपद्यत इति न भाव्यम्। कर्तव्यस्य इतिकर्तव्यतया सम्बन्धो नाकर्तव्यस्य। तेन फलस्येदानीं कर्तव्यत्वात् कथं भाष्यकारेण धर्माणामपूर्वार्थत्वं सिद्धान्तितमिति चेन्न। भाव्यनिष्ठत्वाद्भावनायाः भाव्यस्य चापूर्वत्वेन भावनाद्वारा धर्माणां भाव्यभूतापूर्वार्थत्वव्यवस्थापनसम्भवात्।

ननु व्यापारसामान्यरूपा भावना व्यापारविशेषात्मिकामेवेतिकर्तव्यतामाकाङ्क्षतीत्युक्तम्। तदनुपपन्नम्। द्रव्यदेवतयोः सिद्धरूपत्वेन व्यापारविशेषात्मकत्वाभावात् भावनां प्रति तयोरितिकर्तव्यतात्वाभावादिति चेत्-सत्यम्; द्रव्यदेवते न व्यापारविशेषौ, तथापि तयोर्व्यापारविशेषापादकत्वात् तद्द्वारा इतिकर्तव्यतात्वव्यवहार इति न कश्चिद्दोषः।

अथ धर्माणां साक्षादपूर्वसम्बन्धाभावेऽपि भावनाद्वारा अपूर्वसम्बन्ध इत्यभ्युपगमे भावनाद्वारा यागार्थत्वं वा किं न स्यात्? इति चेन्न; धर्माः तावद् भाव्यप्रयुक्ताः; भाव्यस्यैव सिषाधयिषितत्वाद् भाव्यत्वम्।

## तन्त्रशिखामणिः

काङ्क्षायाम् आग्नेयादीनाम् चेतिकर्तव्यताकाङ्क्षायां उभयाकाङ्क्षालक्षणप्रकरणपरिकल्पितेन वाक्येन धर्माणां यजिसंबन्धः। न चैवं यः फले चोद्यते स एवेतिकर्तव्यताकाङ्क्षी इत्याग्नेयादिभिरेव धर्मास्संबद्धेयरन् इति न पारिप्लवार्थत्वमिति वाच्यम्। प्रकरणं हि न स्वयमेव विनियोजकं वाक्यकल्पनया। वाक्ये च कल्प्यमाने समिदादिभिर्दर्शपूर्णमासयोरुपकुर्यात् इत्येव कल्पयितुं न युक्तं येनाग्नेयादिष्वेव धर्मा व्यवतिष्ठेरन् दर्शपूर्णमासपदस्य कर्तव्यभूतार्थासमर्पकत्वेन कर्तव्यताविशेषरूपाया इतिकर्तव्यतायास्तदन्वयायोग्यत्वात् किन्तु यजेतेत्याख्यातमेव कल्प्यम्, तच्च स्वशक्त्या सर्वान् यागानभिधत्त इति पारिप्लवा धर्माः।

ननु नात्र यजेतेत्युद्देशकं पदं कल्प्यते, किन्तु समिदादिवाक्यैरेकवाक्यतापन्नं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यमेवाग्नेयादीन् फले विधत्ते तांश्च धर्मान्विधत्ते इति न पारिप्लवतेति चेन्न; तथा सत्याग्नेयादीनां फलं प्रत्युपादेयत्वविधेयत्वगुणत्वापत्त्या धर्मांश्च प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वापत्त्या च विरुद्धत्रिकद्वयापत्तेः। तस्मात् कल्पितयज्युद्देशेनैव धर्मा विधेया इति कथं पारिप्लवाः। न चैवमपि प्रकरणाद्यजेर्विशेषणात् न पारिप्लवत्वमिति वाच्यम्। आकाङ्क्षालक्षणं प्रकरणं हि द्वयोस्संबन्धबोधे परं समर्थं न तूद्देश्यविशेषण

## भाष्यसन्दर्भयोजिनी

पुनश्शङ्कते व्यवस्थावादी-**नन्विति**। नामधेयं यज्यन्तराणि परिसङ्ख्ष्टे इति भावः। परिसङ्ख्यां निरस्यति-**नात्रेति**। प्राप्तिपूर्वकत्वात्परिसङ्ख्यायाः, प्राप्तेः प्रसङ्गोऽनेनैव वाक्येन वक्तव्यः, तथा सत्येकमिदं वाक्यं यजिसामान्ये धर्मप्रसङ्गं बोधयति यज्यन्तरपरिसङ्ख्यां च करोतीति दर्शपूर्णमासवाक्यस्यातिगौरवं स्यादित्यर्थः।

## वार्त्तिकाभरणम्

यच्च यजेः प्रत्ययः फले गुणभाव इति साधनमनादृत्य अपूर्वं प्रति प्राणाडिको विज्ञायते। प्रणाड्यापि च येन क्रियते तत्करणं भवति। यथा गोमयैः पचति तुषपक्वा भवन्तीति।

यत्तु तैलपानवद्यजेः तत्फलं भविष्यतीति, तत्र ब्रूमः—तैलपानस्यापि न कालान्तरे फलं भविष्यति भवति च धातुसाम्यं तस्य फलम्। तच्च तत्कालमेव। यच्च बलपुष्ट्यादि तच्च सम्यगाहारपरिणामाद् भवति। तस्माद् विषम उपन्यास इति परिहृतम्। तस्मात् न श्रुतहान्यश्रुतकल्पनादोष इत्यपूर्वार्था धर्माः; ततश्च (दर्शपूर्णमासार्थे) दर्शपूर्णमासापूर्वे विहिता धर्माः सौर्याद्यपूर्वे न भवन्तीति तत्र धर्मसिध्यर्थमतिदेश आरब्धव्य इति॥ १॥

पूर्वपक्षसूत्रमाह—

उत्पत्यर्थाविभागाद्वा सत्ववदैककर्म्यं स्यात्॥२॥

सूत्रं सङ्क्षेपतो व्याचष्टे—यजीति। भाष्याननुसारिणां मतं दूषयितुं तन्मतमनुवदति-तत्रेति। सम्बन्ध इत्यत्र धर्माणामिति शब्द इति शब्दश्चाध्याहार्यौ। अत्र केन सम्बन्ध इत्यपेक्षायां यजिना सम्बन्ध इत्यर्थाल्लभ्यत इति यजिपदं न प्रयुक्तम्। तथा च प्रकरणाम्नानकल्पितेनाग्न्यन्वाधान [प्रभृति समिष्ट] यजुरादिभिरुपकृत्य यागं कुर्यादिति ईदृशेन वाक्येन धर्माणां यजिसम्बन्ध इति भाष्याननुसारिणो वर्णयन्तीत्यर्थः। दूषयति—एतदिति। एतद्भाष्याननुसारिणां मतम् अपरे भाष्यानुसारिणो दूषयन्तीत्यर्थः। दूषणप्रकारमेवाह—यः फल इति। यो यागः फले चोद्यते स एव कथम्भावाकाङ्क्षी सन् धर्मैः सम्बध्यत इत्यर्थः।

नन्वेतावता तन्मते किं दूषणमुक्तं भवतीत्यत आह—स चेति। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्येन स्वर्गलक्षणफले चोदितः दर्शपूर्णमासाख्यो विशेषरूपो यागः। सः 'नानुपकृतं करणमि'ति न्यायेन स्वस्य फलकारणत्वसिध्यर्थं धर्माकाङ्क्षः धर्मैस्सह सम्बध्यत इत्यर्थः। एतावता वा किं दूषणमुक्तं भवतीत्यत

## तन्त्रशिखामणिः

इति नवमे वक्ष्यामः। न च तथाऽपि सन्निधेराग्नेयादीनामेव यजिनोद्देश इति वाच्यम्। यजिश्रुतिजनिताविशेषप्रत्ययविरोधात् तदेव दर्शपूर्णमासाभ्यामेव इति वाक्यमेव यज्युद्देशेन धर्मविधायकमिति भाष्याननुसारिणां पूर्वपक्षः। तदनुसारिणां तु प्रकरणकल्पितं यजेतेति पदमेव धर्मविधायकमिति पूर्वः पक्ष इति द्वेधा पूर्वः पक्षः॥२॥

चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात्॥

स्यादेवं यदि यज्युद्देशेन धर्मा विधीयेरन्। न त्वेवम्, देवतोद्देश्यकद्रव्यत्यागात्मकयागस्य निर्ज्ञातप्रकारत्वेनेतिकर्तव्यताकाङ्क्षाविरहेण तदुद्देशेन धर्मविध्ययोगात्। न च फलभावनासाधनत्वाकारेण यागस्याप्यलौकिकत्वादस्तीतिकर्तव्यताकाङ्क्षेति वाच्यम्। तथा सति प्राप्ताप्राप्तविवेकेन फलभावनाया एव तदाकाङ्क्षा न यागस्येति पर्यवस्यति। किं च दर्शपूर्णमासवाक्यस्थयजेरुद्देशकत्वे दर्शपूर्णमासस्वर्गकामपदयोरविवक्षितार्थत्वे एकदेशानुवादकत्वप्रसङ्गः। प्रकरणवशेन वाक्यकल्पनपक्षे च तत्कल्पनमेव दोषः। ननु फलभावनयैव धर्मसम्बन्ध इति सिद्धान्तेन प्रकरणवशेनाऽपि वाक्यकल्पना कर्तव्येति चेन्न; .................. किं च स्थितयोरेव प्रयाजादिवाक्यदर्शपूर्णमासवाक्ययोरेकवाक्यतामात्रं प्रकरणात्कल्प्यते। तथाहि दर्शपूर्णमासाभ्यां स्वर्गापूर्वं व्याप्रियेतेत्युक्ते परशुगतोद्यमननिपतनरूपव्यापारानुष्ठानेनैव छेदनरूपफलदर्शनात् साधनगतव्यापारविशेषानुष्ठानादेव सर्वत्र फलं साधितं भवतीति कोऽसौ

## वार्तिकाभरणम्

आह—तस्मादिति। तस्मात् प्रकरणेन धर्माणां प्रकृतदर्शपूर्णमासाख्ययागसम्बन्धात् अन्यस्मिन् सौर्यादौ उपदेशेन धर्मप्राप्तेः प्रसक्तिरेव नास्ति। तथा च सर्वत्रोपदेशेन धर्मप्राप्त्यसम्भवात् धर्माः पारिप्लवा इति पूर्वपक्षकरणं भाष्याननुसारिणां मतेऽयुक्तमित्यर्थः।

ननु प्रकरणेन धर्माणां प्रकृतदर्शपूर्णमासार्थत्वमित्युक्तम्, तदयुक्तम्। न हि प्रकरणं साक्षाद्विनियोजकम्, किन्तु प्रकरणेन कल्पिते वाक्यश्रुती विनियोजिके। ते च सामान्यविषयतया प्रयाजादिभिर्यागं कुर्यादित्येतादृशे कल्प्येयाताम्। तथा च धर्माणां सर्वयागार्थत्वमिति धर्माः पारिप्लवा इति पूर्वपक्षकरणमुपपद्यत इत्यत आह—**अयमिति**। दर्शपूर्णमासौ विधाय तत्प्रकरणे 'व्रीहीन् प्रोक्षति' 'व्रीहीनवहन्ति' 'समिधो यजति' इत्याद्यङ्गं विधाय आम्नायते। ततश्च विशेषविषयेण दर्शपूर्णमासप्रकरणेन कल्प्ये विशेषविषये एव वाक्यश्रुती कल्पनीये, न तु यागसामान्यविषये। तथा च धर्माणां यागविशेषेण सम्बन्धाद् उपदेशेन प्रकृतौ विकृतौ च सर्वत्र धर्मप्राप्तेरसम्भवात् पारिप्लवा धर्मा इति पूर्वपक्षकरणं अयुक्तमित्यर्थः। भाष्यानुसारिणस्तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति प्रयोगवाक्यं धर्मसम्बन्धविधायकत्वेनोदाहरन्तीत्याह—**तत्रेति**। ननु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यं यागोत्पत्तिपरम्, कथमिदं धर्मसम्बन्धविधायकमित्यत आह—**यागोत्पत्तिरिति**। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिवाक्यैष्षण्णां यागानामुत्पन्नत्वात् नानेन वाक्येन यागोत्पत्तिः क्रियत इत्यर्थः। ननु आग्नेयादिवाक्यैः यागोत्पत्तिसिद्धावपि फलसम्बन्धार्थमेवेदं वाक्यमावश्यकमित्यत आह—**फलसम्बन्धश्चेति**। यदाग्नेयादिवाक्यैरुत्पन्नानामश्रूयमाणफलकानामाग्नेयादीनाम् 'सः स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्' इति विश्वजिन्न्यायेन फलसम्बन्धस्य प्राप्तत्वात् नेदं वाक्यं फलसम्बन्धपरमित्यर्थः। 'दर्शपूर्णमासाभ्यां

## तन्त्रशिखामणिः

व्यापारः? यस्मिन्न्यायगतेऽनुष्ठिते यागात् स्वर्गो भवतीति भवति साधनगतव्यापारविशेषाकाङ्क्षा, तथा समिदादिभिर्व्याप्रियेतेत्यत्र भवति प्रयोजनाकाङ्क्षा, ततश्चोभयाकाङ्क्षालक्षणेन प्रत्यक्षमेवैकवाक्यत्वं कल्प्यते समिदादिभिर्दर्शपूर्णमासौ व्याप्रियेतेति। तस्मात्फलभावनाशेषत्वादितिकर्तव्यताया न करणसम्बन्धः। नन्वङ्गानामपि करणवत् फलभावनयैव संबन्धे तुल्यत्वात् करणानुग्राहकता स्यादिति चेन्न। भावना हि किं मे फलं किंतस्य करणं तस्य च को वाऽनुग्राहक इत्यंशत्रयं परस्परासंयुक्तमेवापेक्षते। यथापेक्षं च संबन्ध इति भावनान्वयेऽप्यङ्गानां न करणानुग्राहकतानुपपत्तिः। अतो दर्शपूर्णमासभावनयैव गृहीतत्वात् तत्करणयोर्दर्शपूर्णमासयोरेव व्यवस्थापकत्वान्न पारिप्लवत्वं धर्माणाम्। ननु धर्मविधौ भावनाया अप्युद्देश्यत्वात् कथं दर्शपूर्णमासकरणत्वेन सा विशेषणतेति चेन्न; न हि वयं भावनामुद्दिश्य धर्मा विधीयन्त इति ब्रूमः, किन्तु विधीयमानैव भावना करणेतिकर्तव्यतानामपदविशिष्टैव विधीयत इति ब्रूमः। नन्वेवं करणेतिकर्तव्यतानामपदविशिष्टभावनाविधौ विधानावस्थायां दर्शपूर्णमासपदविशेषितस्यैव यजेर्भावनान्वयात्स [वं] यागानां करणता स्यात् करणानुग्राहिणीतिकर्तव्यता च सर्वयागेषु चेन्न; यथा-अरुणयैकहायन्या क्रीणातीत्यारुण्यैकहायनीविशिष्टभावनाविधावरुणैकहायनी क्रयस्य करणं न त्वेकहायनीमात्रम्, तथा दर्शपूर्णमासयजिविशिष्टभावनाविधौ दर्शपूर्णमासात्मक एव यागः करणं भवति न तु यागमात्रमिति न सर्वयागेषु धर्मास्स्युः। ननु यजेतेत्ययं शब्दः श्रुतिमात्रात् प्रकृतमप्रकृतञ्च सर्वमपि यागं प्रतिपादयन्नेकवाक्यगतदर्शपूर्णमासपदसामानाधिकरण्यपर्यालोचना विलम्बेन विशेषेष्वाग्नेयादिषु व्यवस्थाप्यते। ततश्च श्रुतिमात्रलभ्यस्य सर्वयागवचनत्वस्य विलम्बं विना प्रकृतमात्रवचनत्वबाधकत्वेन सर्वयागानामेवात्र करणत्वं युक्तमिति चेन्न; प्रकृतेषु हि यागेषु फलाकाङ्क्षिषु सत्सु यजेतेत्ययं शब्दोऽप्रकृतानामपि

## वार्तिकाभरणम्

स्वर्गकामो यजेत' इत्यादिवाक्ये यागस्य फलस्य च वाक्यान्तरप्राप्तत्वात् वाक्यस्यानर्थक्यपरिहारार्थं विधायकत्वावश्यम्भावात् परिशेषात् प्रयाजादिधर्मसम्बन्धविधायकमेवेदं वाक्यमित्याह—**परिशेषादिति**। दृष्टान्तमाह—**यथेति**। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यत्र दीक्षास्वरूपं न विधीयते तस्य चोदकतः प्राप्तत्वात् नापि ब्रह्मादीनां दीक्षा विधीयते, यजमानत्वादेव तेषां दीक्षायाश्चोदकतः प्राप्तत्वात्। न वा दीक्षायामध्वर्योः कर्तृत्वम्, अध्वर्योः दीक्षाकर्तृत्वस्यापि चोदकप्राप्तत्वात्। परिशेषात् गृहपतिदीक्षानन्तरं ब्रह्मणो दीक्षेत्येवं यथा क्रमो विधीयते, एवमिहापीत्यर्थः। नन्वत्र वाक्ये 'गृहपतिं दीक्षायित्वा ब्रह्माणं दीक्षयति' इति क्त्वाप्रत्ययेन क्रमस्य प्रतीयमानत्वात् क्रमविधायकत्वं तद्वाक्यस्य युक्तम् दर्शपूर्णमासवाक्ये तु धर्मसम्बन्धस्याप्रतीयमानत्वात् कथं धर्मसम्बन्धविधायकत्वं तद्वाक्यस्येति चेन्न; दर्शपूर्णमासवाक्ये धर्मसम्बन्धालाभेऽपि प्रकरणेन धर्मसम्बन्धलाभात्। ननु भाष्यानुसारिणां मते प्रकरणेन धर्मसम्बन्धानभ्युपगमात् कथं प्रकरणेन धर्मसम्बन्धलाभ इति चेत्-स्यादेवं यदि भाष्याननुसारिणां मते प्रकरणं सर्वथा त्वनपेक्षितं स्यात्। न त्वेवमस्ति। तन्मते तर्हि दर्शपूर्णमासवाक्ये धर्मसम्बन्धाश्रवणात् समिदादिवाक्यैकवाक्यतामवलम्ब्य दर्शपूर्णमासवाक्येन धर्मसम्बन्धो विधीयत इति वक्तव्यम्। सा चैकवाक्यता दर्शपूर्णमासयागानां फलार्थानां फलं प्रति करणत्वनिर्वाहार्थमनुग्राहकधर्माकाङ्क्षया प्रयाजादीनां फलकाङ्क्षया च भवति। इयमेव च परस्पराकाङ्क्षा प्रकरणमित्युच्यते। तथा च भाष्यानुसारिमतेऽप्येकवाक्यतासिध्यर्थं प्रकरणमपेक्षितमेव।

इयांस्तु विशेषः। भाष्याननुसारिमते प्रकरणमेव वाक्यलिङ्गश्रुतिकल्पनाद्वारा विनियोगपर्यन्तं व्याप्रियते। भाष्यानुसारिमते च प्रकरणमेकवाक्यतासम्पादकं सत् विनियोजकवाक्यस्य सहायमात्रम् न स्वयं विनियोगपर्यन्तं व्याप्रियत इति।

## तन्त्रशिखामणिः

फलं विधातुमभियुक्त इत्यत्र न किञ्चित्प्रामाणिकश्रुतिरिति चेन्न; श्रुत्या हि सामान्यमभिधीयते, तेन विशेषासु व्यक्तिषु वक्ष्यमाणासु न प्रकृतातिक्रमकारणमस्ति, सामान्यस्य प्रतिव्यक्तिपर्याप्तिवृत्तित्वेन प्रकृतेष्वपि साकल्येन वृत्तेः। तत्रापि दर्शपूर्णमासपदसामानाधिकरण्यादाग्नेयादीनेवाभिधत्ते न तु प्रकृतानपि प्रयाजादीन्। न चैवं यजिश्रुतेस्साध( ारण्यमि )ति वाच्यम्। दर्शपूर्णमासयोरपि यजिविशेषात्मकत्वाद् यजिविशेषे च सामान्यस्यापि सम्भवात्। तस्माद् भावनागृहीतमितिकर्तव्यताजातं तत्करणेष्वेवाग्नेयादिषु व्यवतिष्ठत इति न पारिप्लवं भवति। इदञ्च वस्तुगतिमनुरुध्योक्तम्, यज्युद्देशेन धर्मविधावपि न पारिप्लवत्वम्। तथाहि-यागानुवादेन हि धर्मा विधीयन्ते। अनुवादश्च सन्निहितविषयस्सन्निहिताश्चात्राग्नेयादय इतिकर्तव्यताकाङ्क्षिणः। न चोद्दिश्यमानस्य विशेषणस्वीकारे वाक्यभेद इति वाच्यम्, यजेरेव सन्निधानाद् विशेषावगाहित्वात्। न च श्रुतिजनिताविशेषप्रत्ययविरोध इति वाच्यम्, अनुवादस्य सन्निहितविशेषविषयत्वव्युत्पत्तेः अविशेषप्रत्ययस्यैवानुत्पत्तेरित्याहुः।

नन्वेवमपि ये तावद् द्रव्यार्थाः प्रोक्षणावघातादयः ये च देवतार्थाः स्विष्टकृदंशादयः ये च मन्त्रार्था उपांशुत्वादयस्ते तावद्यज्यर्था इत्यविवादम्। देवतोद्देशेन मन्त्रेण द्रव्यत्यागात्मकत्वाद्यागस्य। ततश्च तत्सामान्यात् प्रयाजादयोऽपि यज्यर्था एव युक्ता इति चेन्न; प्रोक्षणादीनामपि यज्यर्थत्वाभावात्। तथाहि-यद्यपि प्रोक्षणादयो द्रव्यादिषु श्रूयन्ते क्रियन्ते च, तथापि ते न तदर्थाः, अनर्थत्वप्रसङ्गात्। ( किन्त्वपूर्वार्थाः ) यथा वासो रञ्जयेदिति-श्रूयमाणः क्रियमाणोऽपि रागो न वासोऽर्थः, किन्तु पुरुषार्थः तद्वत्। न चैवमपूर्वार्थस्य धर्मस्य यागे करणं विरुद्धमिति वाच्यम्, शक्तिशक्तिमतोरत्यन्तभेदाभावेन शक्तिमति यागे क्रियमाणोऽपि शक्तावपूर्वं एव कृतो भवतीत्य-

## वार्तिकाभरणम्

नन्वेवं सति प्रकरणेन धर्मसम्बन्धाविशेषात् भाष्याननुसारिपक्ष इवात्रापि पक्षे पारिप्लवत्वं न सिध्येदिति चेत्—मैवम्; भाष्याननुसारिपक्षे प्रकरणेन शब्दं कल्पयित्वा धर्मसम्बन्धो वक्तव्यः प्रकरणेन च कल्प्यः प्रकृतयागविषय एव कल्पनीय इति न तत्र पारिप्लवत्वम्। इह तु श्रुतस्य शब्दस्य प्रकरणेनैकवाक्यतामात्रम् श्रुतश्च शब्दः सर्वयजिसाधारण इति पारिप्लवत्वसिद्धिरिति वैषम्यात्। ननु दर्शपूर्णमासवाक्येन सम्बन्धविधानेऽपि पारिप्लवत्वं न सिध्यति। दर्शपूर्णमासपदविशेषितेन यजिना आग्नेयादीनामेव उद्देशादित्यत आह—तत्रेति। दर्शपूर्णमासवाक्ये यागस्योद्देश्यत्वात् दर्शपूर्णमासाभ्यामिति पदान्तरगतं विशेषणमविवक्षितम्। 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र यथा पदान्तरगतमुभयत्वमविवक्षितं तद्वदित्यर्थः। यद्यपि प्रकृते पदान्तरगतविशेषणं न विवक्षितमित्येव वक्तुं युक्तम्; तथापि यथा 'ग्रहं सम्मार्ष्टि' इत्यत्रोद्देश्यविशेषणं स्वपदोक्तं न विवक्षितम्, तथेदमपीति न्यायसाम्यात् स्वपदगतमित्युक्तमिति ध्येयम्।

नन्वनेन वाक्येन [न] यागोद्देशेन धर्मा विधीयन्ते; येन पारिप्लवत्वं स्यात्; किन्त्वनेन वाक्येन दर्शपूर्णमासाख्ययजिकर्मिका भावना विधीयते। तया च धर्माः प्रकरणेन सम्बध्यन्ते; प्रकरणेन च धर्मसम्बन्धात् पूर्ववत् पारिप्लवत्वं न सिध्यति इति चेन्न; यागकर्मकभावनाया निर्ज्ञातप्रकारत्वेन कथं यागः कर्तव्य इति इतिकर्तव्यताकाङ्क्षाभावेन तस्या आकाङ्क्षालक्षणप्रकरणाभावात्। ननु न यजिशब्देन यागमुद्दिश्य धर्माः विधीयन्ते, किन्तु दर्शपूर्णमासशब्देन यागमुद्दिश्य धर्मा विधीयन्ते। ततश्च दर्शपूर्णमासपदाभिधेयेषु आग्नेयादिष्वेव धर्मा भवन्ति; न सर्वेष्वित्यत आह—न चेति। न हि दर्शपूर्णमासपदाभिहितेनाग्नेयादियागेन धर्माः सम्बध्यन्ते। अत्यन्तवाक्यत्वान्नामपदाभिहिताग्नेयादियागमुद्दिश्य दर्शपूर्णमासवाक्यस्थितयजिगतप्रत्ययेन वाक्यान्तरगतसमि-

## तन्त्रशिखामणिः

विरोधात्। ननु यद्यपि प्रयाजादयो भावनाविशेषं प्रति श्रूयन्ते, तथापि सर्वार्थास्स्युः भावनान्तराणामपि तत्सामान्यात्। यथा बाल्हीकोऽयमतिथिर्यवान्नेन परिवेष्टव्य इत्युक्ते यद्यपि बाल्हीकविशेषं प्रति यवान्नपरिवेषण- (माश्रीयते) तथापि अन्येषामपि बाल्हीकानां यवान्नपरिवेषणं गम्यते तद्वदिति चेन्न; बाल्हीकानामन्वयव्यतिरेकादिना यवान्नप्रियतोपगमात् विशेषं प्रत्युपदेशस्यापि बाल्हीकत्वपुरस्कारात् सर्वसाधारण्यपरत्वावधारणेऽपि शब्दैकप्रमाणभावनाविशेषान्वये शब्देनावगम्यमाने पारिप्लवत्वोक्तेः साधारणमात्रत्वात्। तस्माद् यथाप्रकरणं व्यवस्थिता धर्माः। ततश्चानुपदिष्टधर्मकेषु सौर्यादिषु अतिदेशेन धर्मप्राप्ति प्राप्तानां च विकारेयत्तां प्रयोगेयत्तां च चिन्तयितुं उत्तरषट्कमारम्भणीयमिति सिद्धम्।

तत्रातिदेशो नाम अतिक्रम्य देशयति प्रापयतीति व्युत्पत्त्या अन्यत्र स्थितस्य पदार्थस्य उपकारस्य वा तत्सम्बन्धाबाधेन ततोऽन्यत्र प्राप्तिर्येन व्यापारेण भवति स उच्यते। अत्र 'विश्वजित् सर्वपृष्ठोऽतिरात्र' इत्यत्र षाडहिकानां पृष्ठस्तोत्रसाधनानां रथन्तरादिसाम्नां पदार्थानामेवान्यत्र विश्वजित्यतिदेशः। अत्राव्याप्तिवारणार्थं पदार्थग्रहणम्। प्रकृतिवद् विकृतिः कर्तव्येत्युपकारातिदेशे चाव्याप्तिवारणायोपकारग्रहणम्। दर्शपूर्णमासप्रकरणाम्नातस्य पूषानुमन्त्रणमन्त्रस्यान्यत्र प्रापकेऽनुमन्त्रणसमाख्यासनाथलिङ्गकल्प्यश्रुतिव्यापारेऽतिव्याप्तिवारणाय तत्सम्बन्धाबाधेनेत्युक्तम्। तत्र दर्शपूर्णमाससम्बन्धबाधेनैवान्यत्र प्रापणमिति न तत्रातिव्याप्तिः। अन्यस्य धर्मस्य सतोऽन्यत्र प्रापकः शास्त्रव्यापारोऽतिदेश इति पर्यवसितोऽर्थः। तदुक्तम्—

प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्मृतः॥ इति।

## वार्तिकाभरणम्

दादियागेषु विधीयमानेषु पदान्तराभिहितयागे वाक्यान्तरगतसमिदादिविधानेनोद्देश्यसमर्पकस्य विधेयसमर्पकस्य वा विधायकप्रत्ययेन समानपदत्वाभावात् पदश्रुतिः पीडिता स्यात्। स्वपदोपात्तं यागसामान्यमुद्दिश्य वाक्यान्तरगतसमिदादियागेषु विधीयमानेषु उद्देश्यस्यैकपदोपात्तत्वात् पदश्रुतिरनुगृहीता भवतीत्यर्थः।

ननु दर्शपूर्णमासवाक्यगतप्रत्ययेन धर्मा न विधीयन्ते किन्तु दर्शपूर्णमासवाक्यगतेन दर्शपूर्णमासपदेन आग्नेयादियागानुद्दिश्य वाक्यान्तरगतसमिधो यजतीत्यादिप्रत्ययेन समानपदोपात्ताः समिदादियागा विधीयन्ते। तथा च विधायकप्रत्ययसमानपदोपात्तस्य धात्वर्थस्य दर्शपूर्णमासपदाभिहिते यागेऽन्यत्र विधानेन विधेयसमर्पकस्य विधायकप्रत्ययसमानपदत्वेनोद्देश्यसमर्पकस्य समानपदत्वापेक्षया विधेयसमर्पकस्य समानपदत्वस्य ज्यायस्त्वेनात्यन्तश्रुत्यनुग्रहो भवति। एवञ्च दर्शपूर्णमासशब्दस्य उद्देश्यसमर्पकत्वेन विवक्षितत्वात् यजिप्रयुक्तत्वेऽपि धर्माणां न पारिप्लवत्वं सिध्यति; यजेतेति च नित्यानुवादः। दर्शपूर्णमासपदाभिहितानामाग्नेयादीनामपि यजित्वादिति चेत्, उच्यते न हि दर्शपूर्णमासशब्दः उद्देश्यसमर्पकः तस्य तृतीयान्तत्वेन करणवाचितया कर्तव्यार्थकत्वाभावात् कर्तव्यार्थस्य च विशेषणमितिकर्तव्यता नाकर्तव्यार्थस्य। तथा च विधीयमानाया इतिकर्तव्यतायाः कर्तव्यार्थेनैवान्वयावश्यम्भावेन दर्शपूर्णमासपदेन करणतयाभिहितेन यागेनान्वयो न सम्भवति। ननु यजेतेत्यनेनापि यागस्य फलकरणतया चोदितत्वेन कर्तव्यत्वावगमाभावात् कथं पुनर्यागोद्देशेन इतिकर्तव्यताया विधानमिति चेत्—सत्यम् यागः फलकरणत्वेन चोद्यत इति, तथापि कुतः सोऽपि नास्तीति "पुनःकरणमिवाञ्जनम्" इति न्यायेन असाधितस्य करणत्वानुपपत्तेः करणत्वसिध्यर्थमेव आर्थिकी कर्तव्यतास्तीति अभ्युपगन्तव्यम्। तथा च या आर्थिकी कर्तव्यता यागस्य तां यजेतेत्यनेनानूद्य दर्शपूर्णमासवाक्यगतेनैव प्रत्ययेन धर्मा विधीयन्ते; यागं कुर्यादिति यत्

## तन्त्रशिखामणिः

यस्मादाग्नेयादेः प्राकृतात् कर्मणः तत्समानेषु धर्मप्रदेशो येन व्यापारेण स्यात् सोऽतिदेश इत्यन्वयः।

अत्र चान्यस्मादन्यधर्मप्रदेशो येन स्यात् सोऽतिदेश इत्येव लक्षणम्। कस्माद् भवतीत्यपेक्षायामुक्तम् प्राकृतात् समानेष्विति। इदं च प्रायिकाभिप्रायम्। वाचनिकनामातिदेशयोः प्रकृतिविकृतिभावानपेक्षणादिति ध्येयम्। स चातिदेशो द्विविधः-वचनात् नामधेयाच्चेति। वचनञ्च द्विविधम्-प्रत्यक्षमानुमानिकं चेति। ननु यदि प्रत्यक्षेणैव वचनेनान्यधर्मा अन्यत्र विधीयन्ते तदा तेषामौपदेशिकत्वमेव स्यान्नातिदेशिकत्वमिति चेत्-सत्यम्; नहि प्रत्यक्षविहितत्वमेवौपदेशिकत्वम्। तथा सति विश्वजिदादौ फलसम्बन्धस्याश्रितस्योपदेशिकत्वं न स्यात्, किन्त्वन्यसम्बन्धानपेक्षमेव धर्माणां प्रकारस्य वा प्रत्यायकं प्रत्यक्षमानुमानिकं वा यत् शास्त्रं तत् सर्वमुपदेशः। तत्प्रमेयत्वं चौपदेशिकत्वम्। तदुक्तम्-'यदन्यसम्बन्धमनादृत्य गृह्णीयात्। श्रुत्यार्थाद्वा गम्यते तदौपदेशिकमि'ति। तत्र 'समानमितरच्छ्येनेन' इत्यादिकमतिदेशकं वचनं प्रत्यक्षश्रुतम्। अनुमानपदेन च अनु पश्चान्नीयतेऽनेनेति अर्थापत्तिरेवोच्यते। ततश्च श्रुतार्थापत्तिकल्पितं वचनमानुमानिकम्। यथा 'सौर्यं चरुं निर्वपेत्' इत्यादावाकांक्षितेतिकर्तव्यतासमर्पकं श्रुतार्थापत्तिकल्पितं प्रकृतिवद्विकृतिः कर्तव्या इति वचनम्। ननु येन विनाश्रितानां शिष्टानां न परिपूर्णाभिधायित्वं तदेवार्थापत्त्या कल्पनीयम् अर्थेन च विना न परिपूर्णाभिधायित्वम् न वचनेनेति कथमानुमानिकं वचनमुच्यते इति चेन्न, यद्यर्थ एवाध्याह्रियेत तदा सौर्यचरावतिदेशतः प्राप्ते 'अग्नये जुष्टं निर्वपामी'ति मन्त्रे अग्निपदे समवेताभिधायित्वाभावेन निवृत्ते सूर्यादिपदप्रक्षेपो न स्यात्। अर्थमात्राध्याहारेणैव मन्त्रस्य परिपूर्णाभिधानसिद्धेः। न च प्रकृतौ शब्देनैव देवतास्मृतेरिहापि तेनैव देवता स्मर्त्तव्या इति शब्दकल्पनमिति वाच्यम्, प्रकृतौ मन्त्रविशेषाम्नानवैयर्थ्यपरिहाराय मन्त्रेणैव स्मरणम् नियतम्। शब्दस्मरणं तु मन्त्रस्य शब्दात्मकत्वादा-

## वार्तिकाभरणम्

तत्समिधो यजतीत्थमिति। नच दर्शपूर्णमासपदेन यागो विशेष्यते, ततश्च न पारिप्लवत्वमिति वाच्यम्। उद्देश्यविशेषणस्याविवक्षितत्वात् यागो विशेष्टुं न शक्यत इति प्रागेवोक्तत्वात्।

वस्तुतस्तु यजेतेत्यस्य कर्मवाचित्वेन तृतीयान्तस्य दर्शपूर्णमासपदस्य सामानाधिकरण्येन तद्विशेषणत्वं न सम्भवतीति वैय्यधिकरण्येन तद्विशेषणत्वाभ्युपगमे च दर्शपूर्णमासौ यजिं प्रति करणमिति वक्तव्यम्। तत्र यो दर्शपूर्णमासयोः करणत्वं वदति स वक्तव्यः, किं दर्शपूर्णमासाभ्याम् इति पदं तयोः करणत्वमनुवदति? उताहो विधत्त इति। न तावदाद्यः, वाक्यान्तरेण दर्शपूर्णमासयोः यजिं प्रति करणत्वस्याप्राप्तत्वेन अनुवादासम्भवात्। न द्वितीयः, यागोद्देशेन दर्शपूर्णमासपदाभिहितकरणत्वस्य प्रयाजादिधर्माणां च विधौ वाक्यभेदप्रसङ्गात्। नच विशिष्टविधिः, सामानाधिकारण्येन षष्ठ्या वा प्रयाजादिधर्माणां करणस्य च सम्बन्धानवगमात्। तस्मात् दर्शपूर्णमासयोः यजिविशेषणत्वासम्भवेन दर्शपूर्णमासपदेन यागस्य विशेष्टुमशक्यत्वात् यागसामान्यानुवादेन प्रयाजादिधर्मा विधीयन्त इति धर्माणां पारिप्लवत्वं सिध्यति। दर्शपूर्णमासशब्दस्तु 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वचनेन प्रायेण यागानां दर्शपूर्णमासकालत्वानुवादः तृतीया च सप्तम्यर्थे व्याख्येया। न चानुवादे लक्षणा दुष्यति। स्वर्गशब्दोऽपि सर्वकर्मसाधारण्येन फलमात्रोपलक्षणार्थः। तथा चायं निर्गलितोऽर्थः—फलकामी दर्शपूर्णमासयोर्हि कालयोर्यागं कुर्यादिति यत् तत्समिधो यजतीत्थमिति भाष्यानुसारिणां पूर्वपक्षमुपपाद्य स्वयमिदानीं तद्दूषयितुं प्रतिजानीते—**एतदप्ययुक्तमिति**। भाष्याननुसारिणां मतं धर्माणां पारिप्लवत्वासिध्या न युक्तमिति प्रागेव दूषितत्वात् एतदपीत्युक्तं दूषयति—**प्रयाजेति**। यदि विश्वजिन्न्यायेनाग्नेयादीनां यागानां फलसम्बन्धः स्यात्, तदा प्रयाजादियागानामप्यश्रुतफलत्वाविशेषात् तेषामपि फलसम्बन्धस्स्यात्। ततश्चाग्नेयादियागानां प्रयाजादीनाञ्च सर्वेषामपि फलवत्त्वाद् आग्नेयादयः प्रधानाः

## तन्त्रशिखामणिः

र्थिकम्। अत एव प्रतिनिधिविचारप्रस्तावे मन्त्रविनाशे शब्दान्तरं न प्रतिनिधेयम् शब्दस्मरणस्याशास्त्रीयत्वादित्युक्तम्। ततश्चार्थिकस्यापि चोदकतः प्राप्त्यभावात् सूर्यपदाध्याहारो न स्यादिति शब्द एवाध्याहरणीयः। प्रपञ्चितं चास्माभिः शब्दसन्निधिरेवान्वयबोधप्रयोजकः न सन्निधिमात्रमिति **मणिदर्पण इति दिक्**।

नामधेयं च द्विविधमतिदेशकं कर्मनामधेयं संस्कारनामधेयं चेति। तत्र 'मासमग्निहोत्रं जुहोती'ति श्रुते होमे श्रूयमाणमग्निहोत्रमिति कर्मनामधेयं तस्मिन् होमे नैयमिकाग्निहोत्रधर्मातिदेशकम्। यत्र तु कर्मान्तरे श्रूयमाणमपि नामधेयं योगात् तत्र वर्तितुमर्हति, तत्र क्लृप्तावयवशक्त्यैव वृत्तिसम्भवे गौणवृत्त्याश्रयणे न धर्मातिदेशकम्। यथाधानप्रकरणे तूष्णीमग्निहोत्रं जुहोतीति विहिते तूष्णींहोमे श्रूयमाणमप्यग्निहोत्रपदमग्निसंस्कारार्थो होम इत्यप्यवयवशक्त्या तत्र वृत्तिसम्भवान्न धर्मातिदेशकः। अयं चार्थः पञ्चमे **तन्त्ररत्ने स्पष्टः**, वक्ष्यते चास्माभिः दशमे। औदुम्बरो यूपो भवतीत्यादौ संस्कारनामधेयं यूपपदमतिदेशकम्। यौगिकं तु प्रायणीयादिनामधेयं नातिदेशकम् प्रयन्त्यनेनेति येनैव योगेन द्वादशाहे प्रायणीयशब्दः प्रवृत्तः तेनैव योगेन गवामयनेऽपि वृत्त्यैव प्रवृत्तिसम्भवेन धर्मलक्षणाया अयोगात्। यत्र तु द्वितीयादावहनि प्रायणीयशब्दः तत्र योगासम्भवात् यौगिकमप्यातिदेशकमिति वक्ष्यते। नन्वग्नये होत्रमस्मिन्निति अग्निहोत्रादिनाम्नामपि यौगिकत्वात् तेषां प्रायणीयादिनामवत् पृथगतिदेशानुपपत्तिरिति-चेत् सत्यम्; अग्निहोत्रादिनामं पङ्कजादिवत् रूढेरप्यङ्गीकारात् न पृथङ् निर्देशानुपपत्तिः इत्याहुः।

एकदेशिनस्तु पूर्वस्मिन्नध्यायषट्के ह्यौपदेशिकः पदार्थो विचारितः तत्र ग्रन्थसन्दर्भसन्निहितोऽग्निहोत्रविश्वजित्प्राजापत्यपश्वादिः ग्रन्थोक्तापर्यवसानसन्निहितो (?) विश्वजिदादौ नियोज्यादिश्चौपदेशिक इत्युच्यते। उत्तरस्मिन्न-

## वार्तिकाभरणम्

प्रयाजादयस्त्वङ्गभूता इति निर्णेतुं न शक्यत इत्यर्थः। एतावता प्रकृते किं दूषणमुक्तं भवतीत्यत आह—कतर इति। सत्स्वङ्गभूतधर्मेषु इमे धर्माः पारिप्लवा न पारिप्लवा इति चिन्ता घटते। सर्वेषां फलवत्त्वेनाङ्गभूतधर्माभावात्कतरे धर्माश्चिन्त्यन्ते। तथा च विचार एवानुपपन्नस्स्यादित्यर्थः। यद्यप्यारादुपकारकप्रयाजादीनां विश्वजिन्न्यायेन फलवत्त्वेन प्रधान्येऽपि दृष्टार्थावघातादिधर्माणां फलवत्त्वाभावेन प्रधान्याभावादवघातादिधर्माः पारिप्लवा न पारिप्लवा इति चिन्ता घटत इति न विचारानुपपत्तिः, तथापि प्रयाजादीनामुदाहरणत्वं न स्यादित्यभिप्रायेण कतरे धर्मांश्चिन्त्यन्त इत्युक्तम्।

नन्वस्मिन्नधिकरणे आरादुपकारका एव विषयः। सन्निपातिनस्तु नवमाद्यस्य विषयः। तथाचारादुपकारकाणां विश्वजिन्न्यायेन फलवत्वेनाङ्गत्वाभावात् सन्निपातिनाञ्च विषयत्वाभावाद् विचारानुपपत्तिस्तदवस्थेति चेत्—स्यादेतदेवम्, यदि सन्निपातिनोऽस्याधिकरणस्य विषया न भवेयुः ; न त्वेवमस्ति। सन्निपातिनामेतदधिकरणविषयत्वाभावे आरादुपकारकाणामेव व्यवस्थासिध्या सन्निपतिनां सर्वेषां सौर्यादावप्युपदेशेनैव प्राप्ते रारादुपकारकाणामेवातिदेशेन प्राप्यमाणत्वात्तेषाञ्चादृष्टार्थत्वेनाग्नेयसान्नाय्यसाधारण्यात् सौर्यादावाग्नेयधर्मा एव भवन्ति ; न सान्नाय्यधर्मा इति सन्निपातिविषयधर्मव्यवस्थासिद्धान्तो व्याहन्येत। तस्मात्सन्निपातिनामप्येतदधिकरणविषयत्वम्।

ननु सन्निपातिनामेतदधिकरणविषयत्वाभावेनापूर्वार्थत्वाभावेऽपि व्रीह्युद्देशेन विधीयमाना अवघातादयो धर्माः सन्निहितदर्शपूर्णमाससम्बन्धिव्रीह्यर्था एवावतिष्ठन्ते, अनुवादस्य सति सम्भवे सन्निहितगामित्वात्। तथा चापूर्वार्थत्वाभावेऽपि सन्निपातिनामवघातादीनां प्रकृतौ व्यवस्थितत्वेन साङ्कर्याभावात्तेषामतिदेशेन सौर्यादौ

## तन्त्रशिखामणिः

ध्यायषट्के करणोपकारात्मककार्योपस्थितिसन्निहितः पदार्थो विचार्यते। तथाहि-सप्तमे करणोपकारकधर्मातिदेशचिन्ता। ननूपकारान्वितनियोगावगतेरुपकारजनकधर्मातिदेशं विना पर्यवसानाभावात् धर्मातिदेशोऽप्यौपदेशिक एव स्यात्। नियोगावगत्यपर्यवसानलभ्यस्याप्रकृतस्य विश्वजिदादौ नियोज्यादेरिवौपदेशिकत्वादिति चेन्न; स्वावगतिपर्यवसानाय नियोगोपस्थाप्यत्वमेवौपदेशिकत्वम्। प्रकृते चोपकारेणैव स्वजनकधर्मोपस्थितिसिद्धेः तदुपस्थितौ नियोग उदास्त इति न धर्मातिदेशस्यौपदेशिकत्वमित्याहुः। अष्टमेऽपि सप्तमसिद्धं करणोपकारतो धर्मातिदेशं प्रत्येव विशेषनिर्वाहमात्रं क्रियत इति कार्योपस्थित्यधीनैव चिन्ता। नवमेऽपि कारकान्तरसञ्चारे विकृतिप्रयोगनियामक ऊहोऽपि द्वारकार्यपरामर्शत एव चिन्त्यते। तथा दशमेऽपि कृष्णलेषु द्वारकार्यलोपादेवावघातादिबाधश्चिन्त्यत इति कार्योपस्थित्यधीनैव चिन्ता। एवमेकादशेऽप्यवान्तरकार्यभेदानवगतेः प्रयाजाद्यनुष्ठानतन्त्रतेति कार्योपस्थित्यधीनैव चिन्ता। तथा द्वादशेऽपि कार्यत एव प्रसङ्गचिन्तेत्युत्तरस्मिन्नध्यायषट्केऽपि कार्योपस्थित्यधीनैव चिन्ता। ततश्च उपदेशः कार्यरूपप्रमाणयोर्भेदेन षट्कयोर्भेदः उपदेशाधीनकार्यावगतिपूर्वकत्वादतिदेशविचारस्य षट्कयोर्हेतुहेतुमद्भावसङ्गतिः। उपदेशस्याधिकारान्तत्वात् अतिदेशस्य च सप्तमोपक्रमत्वात् सप्तमस्य षष्ठानन्तर्यम्। पारिप्लवत्वे धर्माणामुत्तरषट्कमतिदेशार्थमनारम्भणीयम्। व्यवस्थितत्वे त्वारम्भणीयमित्युत्तरषट्कोपोद्घाततया चास्याधिकरणस्य प्राथम्यम्।

पूर्वपक्षस्तु समिधो यजतीत्यादौ तावत् समिधादिविषयकं कार्यं प्रथमत एव प्रतीयते। न च तेष्वधिकाराश्रवणात् कथं कार्यप्रतीतिरिति वाच्यम्, विषयत्वयोग्ययजरूपभावार्थश्रवणाच्च कार्यप्रतीतेरप्रत्यूहत्वात्। तच्च कार्यं स्वविषयानुष्ठानं विना स्वस्य प्रतीतकार्यतानिर्वाहासम्भवात् स्वस्य च निरधिकारतया तदनुष्ठाप-

## वार्तिकाभरणम्

प्राप्तिसम्भवान्नाष्टमिकाधिकरणविरोध इति चेत्—तथासत्यारादुपकारकप्रयाजादयो यागोद्देशेन विधीयमाना अपि सन्निहितदर्शपूर्णमासयागार्था एवावतिष्ठेरन् 'अनुवादस्य सति सम्भवे सन्निहितगामित्वात्' इति न्यायस्य तुल्यत्वात्। तथा चेदमधिकरणं व्यर्थमेव स्यात्। न चोभयत्रापि सन्निहितत्वविशिष्टयागस्य सन्निहितत्वविशिष्टयागसम्बन्धिव्रीह्यादेश्चोद्देशाद्वाक्यभेदः स्यादिति वाच्यम्, यजेरेव सन्निधिवशेन विशेषपरत्वात्। न हि सन्निधिलब्धोऽर्थो वाक्यं भिनत्ति, किन्तु विशेषणविशेषित एव। तस्मात्सन्निपातिनामप्येतदधिकरणविषयत्वमभ्युपगन्तव्यम्। अत एव "अविभागात्तु नैवं स्यात्" इति सूत्रव्याख्याने 'नैतदेवम् अपूर्वप्रयुक्ता धर्मा इति यजिप्रयुक्ता एव। कुतः? अविभागात्। यजिना त्वविभागो धर्माणां प्रत्यक्षः केचिद्द्रव्ये श्रूयन्ते, केचिद्देवतायाम्। केचिन्मन्त्रेषु। स एष यजिः यद्देवतामुद्दिश्य द्रव्यं मन्त्रेण त्यज्यते, स एष प्रत्यक्षो यजिना सम्बन्धो धर्माणाम्, अपूर्वेण त्वानुमानिक' इति भाष्यकारेण सन्निपातिनां यजिसम्बन्धो दर्शितः। तथा पार्थसारथ्युपाध्यायाश्च दर्शपूर्णमासयोः ज्योतिष्टोमस्य च प्रकरणे समाम्नाताः प्रयाजादयो दीक्षणीयादयश्चेति आरादुपकारकाणां सन्निपत्योपकारकाणां चोदाहरणत्वं प्रदर्श्य धर्माणामपूर्वार्थत्वं नास्ति, किन्तु यज्यर्थत्वमित्युक्त्वा, किञ्च व्रीह्यादिभिर्द्रव्यैः प्रत्यक्षं यजिर्निवर्त्यते, नापूर्वम्; अवघातादयोऽपि यजिनिर्वृत्तावेव व्रीह्यादीनामुपकुर्वन्ति, तस्मात्ते तावद्यज्यर्थाः। 'तस्मात् तत्सामान्यादितरेषु तथात्वम्' इति शास्त्रदीपिकायामेतदधिकरणपूर्वपक्षे सन्निपत्योपकारकाणामारादुपकारकाणाञ्च यज्यर्थत्वं प्रदर्शितवन्तः। अत्यल्पमिदमुच्यते; आचार्या एव वक्ष्यन्ति। 'अविभागात्तु नैवं स्यादित्यनेन सन्निपत्योपकारकास्तदर्था उच्यन्त' इति। विश्वजिन्न्यायेन फलसम्बन्धान्वारोहे दूषणमुक्त्वा प्रकृते विश्वजिन्न्याय एव नावतरतीत्याह—**विश्वजितीति**। "विश्वजिता यजेत" इत्यत्र फलस्याश्रवणात् फलवत्त्वाभावे च प्रवृत्त्यनुपपत्त्या विध्यानर्थक्यरूपान्यथानुपपत्त्या विश्वजिति फलं कल्प्यते। इह तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये शाब्देन स्वर्गलक्षणफलेन प्रकृतयागस्य फलवत्त्वेन प्रवृत्त्युपपत्त्या अन्यथानुपपत्तिरेव नास्ति। अन्यथानुपपत्त्यभावाच्च फलं न कल्प्यते। एवञ्च दर्शपूर्णमासवाक्यमेव फलसम्बन्ध

## तन्त्रशिखामणिः

कत्वाक्षमत्वात् सन्निहितदर्शपूर्णमासवाक्यसमर्पितं दूरस्थं सर्वञ्च साधिकारं यजिमुद्दिश्य स्वविषयं विधत्ते। ततश्चाधिकारवत् यज्युद्देशेन विधानात् तदधिकारापूर्वमेव समिदादियागान् प्रयुङ्क्ते। ततश्चाध्यापनविधिप्रयुक्तस्वविषयानुष्ठानाध्ययनविधिवदिहान्यप्रयुक्तस्वविषयानुष्ठाने विश्वजिदादिवन् नाधिकारकल्पनं युक्तम्। तस्मात् साधिकारसकलयज्युद्देशेन विधानात् पारिप्लवाः समिदादय इति।

सिद्धान्तस्तु दर्शपूर्णमासवाक्यं हि न दूरस्थसाधिकारसकलयज्युद्देशपरम् दर्शपूर्णमासपदस्वर्गपदासामञ्जस्यात्, किन्त्वाधिकारापूर्वपरम्। ततश्च साधिकारविधिसन्निधिसमाम्नातेषु समिदादिवाक्येषु व्रीहीनवहन्तीत्यादाविवाधिकारापूर्वानुवादशङ्कया न प्रथमं स्वनिष्ठकार्यान्तरावगतिः (?) तदेवं सांशयिके प्रत्ययार्थे प्रकृत्यर्थमधिकारविधिरात्मार्थतया स्वीकरोति। स्वीकृते तस्मिन् क्षणिकस्यापूर्वमन्तरेण तादर्थ्यानुपपत्तेः कल्पितमवान्तरापूर्वं लिङभिधेयमपि न स्वतन्त्रं भवितुमर्हति विनियुक्तविषयत्वात्। तेन सन्निधिसमाम्नातसाधिकारविधिग्रस्तत्वात् धर्मजातस्य न पारिप्लवत्वमिति वदन्ति।

अत्र ब्रूमः-तत्र यदुक्तमुपदेशकार्यरूपं प्रमाणद्वयमिति तत् तावदयुक्तम्। तयोः सङ्कीर्णविषयत्वेन मिथः प्रतिपक्षत्वाभावात्। तथाहि कार्यप्रमेयस्य तन्त्रादेरप्यौपदेशिकत्वात्। न चाश्रितस्य तस्य कथमौपदेशिकत्वमिति वाच्यम्। नहि श्रुतत्वमेवौपदेशिकत्वम् विश्वजित्यधिकारस्य फलस्य नियोज्यविशेषणत्वबललभ्यस्य कर्मसम्बन्धस्य

## वार्तिकाभरणम्

परमित्यर्थः। यस्मात् द्वितीयं भाष्यानुसारिव्याख्यानं दुष्टं तस्मात् प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध इति भाष्याननुसारि प्रथममेव व्याख्यानं युक्तमित्युपसंहरति—**तस्मादिति**।

ननु प्रागेव दर्शपूर्णमासवाक्येन यजिकर्मिका भावना विधीयते। धर्मास्तु तया भावनया प्रकरणेन सम्बध्यन्ते, न वाक्यात्। तथा च पूर्ववत् पारिप्लवत्वं न सिध्यतीत्याशङ्क्य यजिकर्मकभावनायाः निर्ज्ञातप्रकारत्वेनाकाङ्क्षालक्षणप्रकरणाभावादित्युक्तम्। एवञ्चोक्तरीत्या प्रकरणस्याभावात् कथं प्रकरणाम्नानुमितेन वाक्येन धर्मसम्बन्ध इति प्रथमव्याख्यानमेव युक्तमित्युच्यते इति चेत्—स्यादेतदेवम् यदि यजिकर्मिका भावना दर्शपूर्णमासवाक्येन विधीयेत, तदा निष्फलस्य यागमात्रस्य कर्तव्यताकाङ्क्षालक्षणं प्रकरणं न स्यात्। न त्वेवमस्ति। किन्तु दर्शपूर्णमासवाक्येन यागः फलकरणत्वेन विधीयते, यागस्य स्वरूपेण लौकिकत्वादाकाङ्क्षाया अभावेऽपि फलसाधनत्वेन रूपेण यागस्यालौकिकत्वादस्त्येव इतिकर्तव्यताकाङ्क्षालक्षणम्। तस्मात् प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध उपपद्यत इति न कोऽपि दोषः।

ननूक्तरीत्या दर्शपूर्णमासवाक्यस्य यागकरणकफलभाव्यकभावनाविधायकत्वेऽनेन वाक्येन यजिभावनोद्देशेन धर्मविधानाभावात् केन पुनर्यजिभावनोद्देशेन धर्मा विधीयन्त इति चेन्न; प्रकरणाम्नानानुमितेन वाक्येन यजिभावनोद्देशेन धर्मविधानमित्युक्तत्वेन धर्माणां यज्यर्थत्वसम्भवात्। यत् प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध इति प्रथमव्याख्यानदूषणावसरे यः फले चोद्यते स कथम्भावाकाङ्क्षी धर्मैस्सम्बध्यते। स च विशेष इत्यादिना धर्माणां पारिप्लवत्वं न सिध्यतीति प्रागुक्तदूषणं तदुद्धरति—**यः फले चोद्यत** इति। यः फलोद्देशेन विशेषरूपो यागो विहितः सः असाधितस्य तत्त्वानुपपत्तेः फलजननोन्मुखं यत्स्वरूपं तत्सिध्यर्थमनुग्राहकापेक्षायामितिकर्तव्यतया सम्बध्यमानस्य इतिकर्तव्यतां प्रति प्रधानम् यागोद्देशेनेतिकर्तव्यताया विधानादित्यर्थः।

नन्वेतावता धर्माणां पारिप्लवत्वसिद्धौ किमुक्तं भवतीत्यत आह—**प्रधानस्येति**। न हि दर्शपूर्णमासपदविशेषितं यजेतेति पदमुद्देश्यसमर्पकम् येन यागविशेषोद्देशेन विधानाद्धर्माणां पारिप्लवत्वं न स्यात्। न त्वेवमस्ति। किन्तु यजेतेति पदमात्रमुद्देश्यसमर्पकम् दर्शपूर्णमासपदेन यजतौ विशेष्यमाणे वाक्यं भिद्येत। तस्माद्धविरुभयत्ववद् दर्शपूर्णमासपदमुद्देश्यविशेषणत्वादविवक्षितम्। तथा च धर्माणां पारिप्लवत्वं सिध्यतीत्यर्थः।

## तन्त्रशिखामणिः

चानौपदेशिकत्वप्रसङ्गात्। तस्मादन्यसम्बन्धानादरेण ग्रन्थेन श्रुत्यार्थाद्वा गम्यमानमेवौपदेशिकत्वमिति तन्त्रादिकमपि कार्यद्वारेण ग्रन्थादेव गम्यत इत्यौपदेशिकम्। अतः सङ्कीर्णविषयतयोपदेशप्रतिपक्षत्वाभावेन न कार्यं प्रमाणान्तरम्। अतिदेशस्तु अन्यधर्मस्यान्यत्र प्रदेशरूपान्यसम्बन्धानपेक्षमेव प्रत्यायकस्योपदेशस्यासङ्कीर्णविषयतया भवति प्रतिपक्ष इति स एव प्रमाणान्तरं युक्तम्। यदप्यपूर्वस्य वाच्यतामङ्गीकृत्य पूर्वपक्षकथनं तदप्ययुक्तम्, स्वपदस्थितेन वापूर्वेण तादर्थ्येन स्थित्यान्वितस्य यागस्य वाक्यान्तरस्थितसाधिकारयज्यन्वयस्याशङ्कितुमप्ययुक्तत्वाद् वाक्याद्यपेक्षया श्रुतेर्बलीयस्त्वात्। अतः श्रुत्यनुग्रहाय नियोज्यकल्पनमेव युक्तम् न तु तद्विपरीतमङ्गत्वकल्पनम्। एवं सिद्धान्तोऽपि न युक्तः श्रुतिविरोधादेव। समिदादिवाक्येष्वधिकारवाक्य इव प्रकृत्यर्थविशिष्टप्रधानभूत कार्यावगतेर्यागस्य ग्राहकग्रहणासम्भवात्। न च प्रत्ययार्थः सन्दिग्ध इति वाच्यम्। सन्देहेऽपि नियोगान्तरकोटौ श्रुतिविरोधशङ्कया ग्राहकग्रहणसम्भवात्। अत एव 'दीर्घसोमे सन्तृद्याद् धृत्या' इत्यादीनां न सन्निहित ज्योतिष्टोमग्राहकग्रहणम्। वस्तुतस्तु नात्र सन्देहः, अनुबन्धभेदेन समिदादिष्वपूर्वभेदस्य द्वितीये स्थितत्वात्। न

४

## वार्तिकाभरणम्

ननु सामान्यवाचिना यजतिना यागमुद्दिश्य दर्शपूर्णमासशब्देन न विशिष्मः किन्तु प्रकरणात् प्रकृतमेवाग्नेयादियागमुद्दिशामः। तथा च कथं पारिप्लवत्वमित्यत आह— **प्रकरणेति**। न हि प्रकरणेन यागरूपोऽर्थः कल्प्यते। किन्तु यागस्येतिकर्तव्यतया सम्बन्धसिद्ध्यर्थं कर्तव्यभूतः यागवाचकः शब्दः कल्प्यते। श्रुतार्थापत्तिस्थले शब्दस्यैवाध्याहारः नार्थस्येति व्यवस्थापितत्वात्। स च कल्प्यमानश्शब्दः यजत इति शब्द एव। तस्याख्यातार्थत्वेन कर्तव्यार्थसमर्पकत्वान्न दर्शपूर्णमासशब्दः, तस्याख्यातान्तत्वाभावेन कर्तव्यार्थसमर्पकत्वाभावात्। कर्तव्यताविशेषो हीतिकर्तव्यता। सा च कर्तव्यार्थाभिधायिना आख्यातान्तेन यजत इत्यनेनैव सम्बध्यते; नाकर्तव्यार्थाभिधायिना दर्शपूर्णमासशब्देन। कल्पितश्च यजेतेतिशब्दः स्वशक्तिस्वाभाव्यात् सर्वान् यागान् अभिधत्ते, न यागविशेषम्। तथा च सर्वयज्यर्थत्वात् तत्तद्धर्माणां पारिप्लवत्वं सिध्यतीति प्रथमव्याख्यानमेव युक्तमित्यर्थः। कथं तर्हि भाष्यानुसारिद्वितीयव्याख्यानस्योपपत्तिः। यद्यप्युक्तरीत्या विश्वजिन्न्यायेन फलं कल्पयितुं न शक्यते तथापि 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति सामान्यवचनेनाग्नेयादीनां सर्वफलकत्वं प्रतिपादयता स्वर्गफलकत्वं सिद्धमिति दर्शपूर्णमासवाक्येन धर्मसम्बन्धो विधीयत इति द्वितीयव्याख्यानमुपपन्नम्।

ननु दर्शपूर्णमासवाक्यस्य धर्मसम्बन्धपरत्वाभ्युपगमे तद्वाक्यगतं दर्शपूर्णमासपदं सर्वयागानां 'य इष्ट्या पशुनेति' वाक्यप्राप्तकालसम्बन्धानुवादकम्; स्वर्गकामपदं च सर्वेषां यागानां तत्तद्यागजन्यफलोपलक्षणं स्यात्। प्रकरणाम्नानानुमितवाक्येन धर्मसम्बन्धे तु दर्शपूर्णमासवाक्यस्य फलोद्देशेन यागविधायकत्वाद् दर्शपूर्णमासपदं यागविशेषत्वेन विवक्षितम्। स्वर्गकामपदं चाहत्य स्वर्गरूपफलपरत्वेन विवक्षितम्। तस्मात् प्रथमव्याख्यानमेव युक्तमिति चेत्—सत्यम् दर्शपूर्णमासपदं स्वर्गकामपदं चाविवक्षितं भवति; अथापि प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्धपक्षे 'सर्वेभ्यः कामेभ्य' इति सामान्यवचनेनैव स्वर्गलक्षणफलस्य प्राप्तिसम्भवे दर्शपूर्णमासाभ्यामिति प्रयोगवाक्यमेवानर्थकं स्यात्, वाक्यानर्थक्याद्वरं पदाविवक्षितत्वम्। तस्माद्द्वितीयव्याख्यानमपि युक्तम्। ननु आचार्यैः द्वितीयव्याख्याने दूषणमुपपाद्य प्रथममेव व्याख्यानं युक्तमित्युपसंहृतत्वेन वार्तिकविरुद्धत्वात् द्वितीयव्याख्यानमपि युक्तमिति कथमुच्यते इति चेन्न; अस्मिन्नधिकरणे प्रथमव्याख्यानानुसारेण पूर्वपक्षमुपपाद्य नवमाद्ये टुप्-टीकामीमांसावार्तिके द्वितीयव्याख्यानानुसारेण पूर्वपक्षकरणेनाचार्याणां व्याख्यानद्वयस्यापि सम्मतत्वात्। अत एव पार्थसारथ्युपाध्यायैः तन्त्ररत्ने शास्त्रदीपिकायां चास्मिन्नधिकरणे व्याख्यानद्वयानुसरणेनैव द्वावपि पूर्वपक्षौ दर्शितौ। तस्माद्व्याख्यानद्वयमपि युक्तम्।

## तन्त्रशिखामणिः

च सन्निपातित्वशङ्कयानुबन्धत्वमेव समिदादीनां सन्दिग्धमिति वाच्यम्, समिदादिपदानां देवताविधित्वस्य नवमे निराकरिष्यमाणत्वेन प्रधानान्वयिद्रव्यदेवतासंस्पर्शाभावेन संनिपातित्वशङ्कानवकाशात्। किञ्चापूर्वस्यावाच्यत्वेन तद्वाच्यताङ्गीकारेणाधिकरणप्रवृत्तिरनुपपन्ना। न च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति श्रुतं कालान्तरभावि फलसाधनत्वं विनश्वरस्य यागस्य न सम्भवतीति तत्साधनतानिर्वाहकमपूर्वं लिङभिधेयमित्यभ्युपगन्तव्यमिति वाच्यम्। तर्हि 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोम' इत्यादौ ज्योतिष्टोमादिपदमपूर्वाभिधायकं स्यात्। यदि चान्यत्र रूढस्य शब्दस्यापूर्वेऽपि शक्तिकल्पने नानार्थत्वप्रसङ्गात् तत्रापूर्वाध्याहारेणैव वाक्यार्थप्रतीतिः समर्थ्येत, तदा लोके क्रियाकार्यताविधायिनो लिङः कार्याभिधायित्वकल्पनमयुक्तम् इति ज्योतिष्टोमवाक्येऽपि वाक्यार्थप्रतीतिरपूर्वाध्याहारेणैव समर्थ्यताम् अश्रुतस्याप्यपूर्वस्य सर्वकामवाक्य इव धर्मप्रयोजकत्वमपि नानुप-

## वार्तिकाभरणम्

ननु इतिकर्तव्यताया यज्यर्थत्वं नोपपद्यते यागस्य निर्ज्ञातप्रकारत्वेनेतिकर्तव्यताकाङ्क्षाया अभावात्। किन्तु अपूर्वभावनार्थत्वम्, तस्या अलौकिकत्वेनेतिकर्तव्यताकाङ्क्षासद्भावात्। तथा च कथं धर्माणां यज्यर्थत्वं सिद्धवत्कृत्य प्रकरणाम्नानानुमितेन वाक्येन वा प्रयोगवाक्येन वा धर्मसम्बन्ध इति पूर्वपक्षद्वयवर्णनमित्याशङ्क्य धर्माणां यज्यर्थत्वे उपपत्तिमाह **उपपत्तिस्त्विति**। सत्यम्-अपूर्वभावना इतिकर्तव्यतामाकाङ्क्षतीति। तथापि यथा लोके 'परशुना वृक्षं छिनत्ति' इत्यादौ साध्यभूता छिदिक्रिया स्वं प्रति परशोः करणत्वसिध्यर्थं करणानुग्राहिणी-मुद्यमननिपतनादीतिकर्तव्यतामाकाङ्क्षति न स्वार्थम्; तथा अपूर्वभावनापि स्व प्रति यागस्य करणत्वसिध्यर्थं करणानुग्राहिणीं प्रयाजादीतिकर्तव्यतामाकाङ्क्षति, न स्वार्थम्। तथा च यदर्थमितिकर्तव्यता आकाङ्क्षिता तेनैव प्रथमं सम्बध्यताम्; किं परम्परया अपूर्वभावनान्वयेन। तस्माद्यज्यन्विता धर्मा यागद्वारेण अपूर्वस्योपकुर्वन्ति, यथा आधानमग्निद्वारेण क्रतूनामिति। यज्यर्था एव धर्मा इत्यर्थः। एतत्सूत्रव्याख्यानावसरे 'सर्वाण्यपूर्वाणि यजिमन्ति। यजिसंयोगेन च धर्माः शिष्यन्ते 'यजेत स्वर्गकाम' इत्युक्त्वोक्ताः ते यजौ न सम्भवन्ति तस्या-फलत्वात्तत्रासम्भवन्तः तत्तत्सम्बद्धेषु अपूर्वेषु विज्ञान्ते। स च यजिसम्बन्धः सर्वापूर्वाणां तुल्य' इति प्रवृत्तं भाष्यमाक्षेप्तुमाद्यन्तग्रहणपूर्वकमनुवदति—**सर्वाणीति**। सर्वाण्यपूर्वाणि यागजन्यत्वेन यागाविनाभूतानि। यागप्रकरणे समाम्नाता अवघातादयो धर्मा : यागनिर्वर्तकत्वेन यागार्थाः; यागस्य फलवत्वाभावेन तत्रासम्भवन्तो धर्माः यागद्वारेण तज्जन्यापूर्वेषु विज्ञायन्ते। यजिसम्बन्धस्तु सर्वापूर्वाणां तुल्य इति यागानामप्यपूर्वसाधनत्वेन रूपेणालौकिकतया इतिकर्तव्यतान्वययोग्यत्वाद्धर्माणां यज्यर्थत्वं (युज्यत इति) उपपद्यत इति भाष्याभिप्रायं भाष्यमाक्षेप्तुं प्रतिजानीते—**अयुक्त इति**। आक्षिपति—**याग इति**। सत्यम् यागोऽपूर्वेणाविनाभूतः सर्वयजीनामपूर्व-साधनत्वात् अपूर्वन्तु यागाविनाभूतं न भवति। विना यागेन होमादिष्वपि अपूर्वसद्भावात्। तस्मात् सर्वेषाम-पूर्वाणां यजिसम्बन्धप्रतिपादनपरं भाष्यमनुपपन्नमित्यर्थः। पूर्वपक्षभाष्याक्षेपप्रसङ्गात्सिद्धान्ते भाष्यकारेण "अविभागात्तु नैवं स्यात्" इति गुणसूत्रव्याख्यानावसरे 'नैतदेवम्, अपूर्वप्रयुक्ता धर्मा इति यजिप्रयुक्ता एव। कुतः अविभागात्। यजिना त्वविभागो धर्माणां प्रत्यक्षः केचिच्च द्रव्ये श्रूयन्ते; केचिद्देवतायाम्; केचिमन्त्रेषु। य एव यजिः यद्देवतामुद्दिश्य द्रव्यं मन्त्रेण त्यज्यते स एव प्रत्यक्षो यजिना सम्बन्धो धर्माणाम्; अपूर्वेण त्वानुमानिकः इत्यवघातादीनां धर्माणां यज्यर्थत्वमेव नापूर्वार्थत्वम् इत्याशङ्क्य 'उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्। ततश्च धर्मभेदः स्यात्।' (जै० सू० ७. १. ७) इत्युक्तशङ्कापरिहारार्थंगुणसूत्रव्याख्यानावसरे—'यत्तु

## तन्त्रशिखामणिः

पन्नम्। प्रपञ्चितं चास्माभिरपूर्वस्यानभिधेयत्वं **मणिदर्पणे**। तस्मादपूर्ववाच्यताङ्गीकारेण परेषां अधिकरण-प्रवृत्तिरयुक्तेत्यास्ताम्।

**अस्मत्पितामहचरणा भवस्वामिभट्टास्तु** यज्युद्देशेन धर्मा विधीयन्त इति मतद्वयेऽपि पूर्वपक्षो न युक्तः यजेर्निर्ज्ञातप्रकारत्वेन धर्माकाङ्क्षाविरहात्, किन्तु धर्माणामपूर्वार्थतामङ्गीकृत्यैव पूर्वपक्षो वर्णनीयः। तदुच्यते-किमन्वाधानादयो धर्माः पारिप्लवाः? उत व्यवस्थिताः? तदर्थं च किममी यागकरणिकामपूर्वभावना-मुद्दिश्य विधीयन्ते उताहो अपूर्वभावनया सहैव विधीयन्त इति संशयः। तत्र करणेतिकर्तव्यताविशिष्टभावना-विधौ करणेतिकर्तव्यतयोस्तुल्यकक्षत्वापत्त्या करणानुग्राहकत्वमितिकर्तव्यताया न स्यात्। अतः प्रकरणानुमितेन दर्शपूर्णमासवाक्यस्थेन वा यजेतेत्यनेन यागकरणिकामपूर्वभावनामुद्दिश्य विधीयमाना धर्माः सर्वापूर्वार्थाः। न

## वार्तिकाभरणम्

प्रत्यक्षो यजिना सम्बन्धो धर्माणामिति, अत्र ब्रूमः—उत्पत्तौ विध्यभावात्। उत्पत्तिरिति यजिं ब्रूमः, अपूर्वस्योपादानात्। उत्पत्तौ यजौ नास्ति विधिः यज्यर्था धर्मा इति केवलं यजौ श्रूयन्ते, क्रियन्ते च। न चैतावता तदर्था भवन्ति। यथा वाससि रागः श्रूयते-वासो रञ्जयेदिति वाससि च क्रियते। न चासौ तदर्थः, किन्तु स्त्र्यर्थः पुरुषार्थो वा भवति। एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्च अपूर्वार्था भवेयुः—अर्थवत्वात्। ततश्च धर्मभेदः स्यात्। अतोऽपूर्वार्था भवन्तीति न यज्यर्थत्वं धर्माणाम्, किन्त्वपूर्वार्थत्वमेवेति' परिहृतम्। तत्र 'केवलं यजौ श्रूयन्ते; अर्थवत्वादि'त्यन्तस्यायमर्थः प्रतीयते। सत्यम्—अवघातादयो धर्मा यजिमधिकृत्य श्रूयन्ते, क्रियन्ते च। तथापि न यज्यर्थाः यथा वासो रञ्जयेदिति वाससि श्रूयमाणः तत्र क्रियमाणश्च रागो न वासोऽर्थः, किन्तु स्त्र्यर्थः पुरुषार्थो वा भवति। एवमिहापि यजौ श्रूयमाणा अवघातादयो यागनिर्वर्तकत्वेन यग एव क्रियन्ते, तथापि न यज्यर्थाः—यजेः फलवत्वाभावात्; किन्तु तत्र क्रियमाणा अप्यपूर्वार्था भवेयुः, अपूर्वस्य फलवत्वात् इति। अयं च प्रतीयमानार्थः तावदनुपपन्नः। यदर्था अवघातादयो धर्माः तत्रैव क्रियन्ताम्; किमर्थं यागे क्रियन्ते? इति शङ्कासद्भावात्। तस्मात् अपूर्वार्था अपि धर्माः अपूर्वस्यामूर्तत्वेन अपूर्वे चासम्भवन्तः तदीये यागे क्रियन्त इति भाष्यतात्पर्यार्थं शब्दान्तरेणानुवदति—**अपूर्वे चेति**। दृष्टान्तेऽप्येवमेवार्थः स्त्र्यर्थः पुरुषार्थो वा रागः तत्रासम्भवंस्तदीये वाससि क्रियत इति दूषयति—**इत्यप्ययुक्तमिति**। अपूर्वे चासम्भवतां धर्माणां यागे कर्तव्यताभ्युपगमे अन्यत्रापूर्वे तादर्थ्येन श्रुता धर्मा अन्यत्र यागे कृता भवन्ति। न चैतद्युक्तमित्यर्थः। ननु वासःपुरुषयोर्भेदेऽपि पुरुषार्थस्य रागस्य यथा वाससि करणं तद्वदिहापीति चेत्—विषम उपन्यासः; वाससि श्रुतस्य रागस्य वाससः स्वतः प्रीत्यभावेन तदाश्रयोभूतपुरुषाद्यर्थत्वस्य लोकसिद्धत्वाद्वाससि करणं युज्यते। इह तु लोकसिद्धत्वाभावात् अपूर्वे श्रूयमाणानां धर्माणां यागे करणमनुपपन्नमिति द्रष्टव्यम्। प्राथमिकाक्षेपं समाधत्ते—**अविनाभावमिति**। यागजन्यापूर्वाणां यागाविनाभावमङ्गीकृत्य सर्वाण्यपूर्वाणि यजिमन्ति ब्रवीति भाष्यकार इत्यर्थः। अत्रत्यसर्वशब्दः यागाविनाभूतसर्वापूर्वपरः; न तु सकलापूर्वपरः। एवं च 'सर्वाण्यपूर्वाणि यजिमन्तीत्यादिसर्वापूर्वाणां तुल्य' इत्यन्तं भाष्यं यागाविनाभूतसर्वापूर्वपरतया व्याख्येयमित्युक्तं भवति। द्वितीयाक्षेपं समाधत्ते—**अपूर्वे चेति**। अपूर्वे चासम्भवन्त इत्यादिना यदुक्तं तद्युक्तमिति शेषः। कथमित्यत आह—**यागस्येति**। अपूर्वं नाम न पदार्थान्तरम्; किन्तु यागस्यैव शक्तिः फलजननानुकूलो यागनिष्ठो धर्म इति यावत्। इति हेतौ। यतः यागस्य शक्तिरेवापूर्वमतः कारणात् शक्तिमति यागे क्रियमाणा अवघातादिधर्माः अश्रुते कृता न भवन्ति-शक्तिशक्तिमतोरत्यन्तभेदाभावात्। तस्माद् यजिभावनोद्देशेन विधीयमाना धर्माः सर्वयागार्था इत्यर्थः। ननूक्तरीत्या

## तन्त्रशिखामणिः

च समिदादियागकरणिकभावनाया अपि यागकरणिकभावनात्वाविशेषेण उद्देश्यकोटिप्रविष्टत्वेन कतरे धर्मा विचार्याः स्युरिति वाच्यम्। अयागात्मकानामग्न्यन्वाधानादीनां नारिष्टादिहोमानां च विचार्यत्वाविरोधात्। न चैवं तत्तदनन्तयागसन्निध्याम्नातानां धर्माणां कल्पितेन यजेतेत्यनेन विधीयमानानामविशेषेण सर्वयागार्थत्वापत्त्या साङ्गस्य कस्यापि कर्मणोऽनुष्ठातुमशक्यतया तत्तद्विधीयमानम[न]नुष्ठापकत्वलक्षणमप्रामाण्यं स्यादिति वाच्यम्। अगत्या यथाशक्त्यनुष्ठानेऽप्यप्रामाण्याभावात्। तस्मात् सर्वार्था धर्मा इति पूर्वः पक्षः। सिद्धान्तस्तु विशिष्टभावनाभिधानात् न पारिप्लवा धर्मा इति पूर्ववदेवेत्याहुः ॥२॥

वृत्तमधिकरणम्

## भाष्यम्

धर्मप्रसङ्गः कुतस्स्यात् तत एतत्पुनर्वचनं परिसङ्ख्यां कुर्यात्। अथ पुनरसति प्रसङ्गेऽनेनैव प्रसङ्गोऽनेनैव निवृत्तिरित्यतिभार एतस्यैव वाक्यस्य भवति। एवं तर्हि नात्र यजेतेति शब्दो धर्मविधिभिस्सम्बध्यते, यजेत इत्थमिति। केन तर्हि? दर्शपूर्णमासशब्देन।

## टुप्टीका

अपूर्वे चासम्भवन्तो यागे क्रियन्ते इत्यप्ययुक्तम्, अन्यत्र श्रुता अन्यत्र कृतास्स्युः। अविनाभावमङ्गीकृत्य सर्वाण्यपूर्वाणि यजिमन्ति इति ब्रवीति। अपूर्वे चासम्भवन्त इति यागस्यैव शक्तिरपूर्वमित्युच्यते। शक्तिमति च क्रियमाणा नाश्नुते कृता भवन्ति ॥ २ ॥

## वार्तिकाभरणम्

प्रकृतौ विकृतौ चाम्नातानां सर्वेषां धर्माणामुपदेशेनैव प्रकृतौ विकृतौ च प्राप्तिसम्भवेन सर्वेषां सर्वत्रानुष्ठानमावश्यकम्। तस्याशक्यत्वेन न कोऽपि प्रवर्तेत। तथा चाननुष्ठानलक्षणमप्रामाण्यं स्यात् इति चेन्न; न हि विधिरप्रमाणं भविष्यतीत्येतावता वाक्यस्य न्यायलब्धार्थस्तावदन्यथयितुं शक्यते। भवतु नाम विधिरप्रमाणम्। किं नश्छिन्नम्। यद्वा 'तस्यां तु स्यात् प्रयाजवत्' (जै. सू. १०.१.६.) इति दाशमिकाधिकरणेऽन्वारम्भणीयायामप्यन्वारम्भणीयाकरणे अनवस्था स्यादित्याशङ्क्य एकस्मिन् अहनि यावत्यो अन्वारम्भणीयाः कर्तुं शक्यन्ते तावत्यः कर्तव्या इति पूर्वपक्षे व्यवस्थापितत्वात् तन्न्यायेनात्रापि एकदिनसाध्ये कर्मणि यावन्त्यङ्गानि कर्तुं शक्यन्ते तावन्त्यङ्गानि कर्तव्यानि; दिनद्वयसाध्ये कर्मणि यावन्त्यङ्गानि कर्तुं शक्यन्ते तावन्त्यङ्गानि कर्तव्यानि। एवञ्च यस्मिन् कर्मणि यावन्त्यहानि चोदितानि तस्मिन् तावत्स्वहस्सु यावन्त्याङ्गानि कर्तुं शक्यन्ते तावन्ति कर्तव्यानीत्यशक्यार्थविधानाभावेनाप्रमाण्याभावात्! नन्वेवमपि समानेऽहनि प्रथममनुष्ठीयमानाया अन्वारम्भणीयायाः नैमित्तिकत्वेन तत्र "सर्वशक्तौ प्रवृत्तिः स्यात्तथा भूतोपदेशः स्यात्" (जै सू. ६.३.१) इति षष्ठाधिकरणन्यायेनाङ्गलोपमङ्गीकृत्यापि पूर्वपक्षप्रवृत्तिमभ्युपगच्छामः। काम्यभूतविकृतिषु 'काम्येषु चैवमर्थित्वात्' इति (जै. सू. ६.३.८) तदुपरितनाधिकरणन्यायेन सर्वाङ्गोपसंहारस्यावश्यकत्वेन यथाशक्त्यङ्गोपसंहारस्यायुक्तत्वात् कथं सर्वत्र प्रकृतौ विकृतौ यथाशक्त्यङ्गोपसंहार इत्युक्तमिति चेत्—सत्यम् अस्ति तदधिकरणविरोधः। तदधिकरणाक्षेपेणैवेदमधिकरणमारभ्यत इति न कोऽपि दोषः ॥२॥

## भाष्यसन्दर्भयोजिनी

परिसङ्ख्यापक्षं परित्यज्य धर्मव्यवस्थावादी पक्षान्तरमुपस्थापयति-एवं तर्हीति। अङ्गसम्बन्धप्रसङ्गः परिसङ्ख्या चेत्युभयत्र वाक्यस्य यदि व्यापारे स्वीक्रियमाणे गौरवमापादयसि, तर्हीत्यर्थः। कथं गौरवान्मुक्तिरिति चेदाह—नात्रेति। धर्मसम्बन्धप्रसङ्गं बोधयितुं नायं विधिः प्रवृत्तः किन्तु स्वसन्निहितदर्शपूर्णमासशब्देनायं सम्बध्नाति। तथासति दर्शपूर्णमासौ कुर्यादित्यर्थमभिधाय वाक्यं चरितार्थं भवति, दर्शपूर्णमासातिरिक्तयागा-

## भाष्यम्

**प्रत्यक्षो हि तेनास्य संयोगः—दर्शपूर्णमासाभ्यां यजेतेति । परोक्षो धर्मविधिभिः । कस्तदा वाक्यार्थः ? दर्शपूर्णमासौ कुर्यादिति । नैवं शक्यम्, एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति । कथं कृत्वा ? येयमाख्यातिकी विभक्तिर्यजेतेति सा दर्शपूर्णमासयोः कर्तव्यतां विदधाति । तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्धस्स्यात् ? विधायिका विभक्तिर्नास्तीत्यसम्बद्धा धर्मा भवन्ति । नैष दोषः, न वयं वाक्येन धर्माणां सम्बन्धं करिष्यामः । केन तर्हि ? प्रकरणेन । कथम् ? कर्तव्यतायां चोदितायामितिकर्तव्यताकाङ्क्षा भवति-कथं कुर्यादिति । प्रकरणेन धर्मास्सम्बध्यन्ते-इत्थं कुर्यादिति । नैवं शक्यम्, यदा हि दर्शपूर्णमासौ कर्तव्यतया चोद्यते तदेतिकर्तव्यताकाङ्क्षैव नास्ति, प्रज्ञातेतिकर्तव्यतात्वात्तयोः । असत्याञ्चे-तिकर्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति । एवंह्युक्तम्—'असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्' (जै. सू. ३.४.११) इति ।**

## भाष्यसन्दर्भयोजिनी

नामर्थाद् व्यावृत्तिस्सिध्यतीत्यर्थः । तमिमं पक्षं न सहतेऽव्यवस्थावादी **नैवं शक्यम्** इत्यभिदधानः । तस्यायं भावः—दर्शपूर्णमासशब्दसहकृतो 'यजेत' इति विधायकः शब्दः दर्शपूर्णमासयोः कर्तव्यतामवबोधयन् चरितार्थश्चेत् प्रयाजानूयाजादीनां दर्शपूर्णमासयागविशेषेण वा यागसामान्येन वा सम्बन्धोऽस्तीति कथमवगतं स्यात् ? यागविशेषेण वा सामान्येन वा सम्बन्धं बोधयितुं नियामकः कोऽपि नास्तीति धर्माणामसम्बन्धो वा स्यात् सर्वसम्बन्धो वा स्यादिति । तमिममव्यवस्थावादिनः पक्षं निरस्यति व्यवस्थावादी-**नैष दोष** इति । अस्यैव दर्शपूर्णमासवाक्यस्य धर्मसम्बन्धबोधनेऽपि व्यापार इति स्वीकारे सङ्कटस्यास्य प्रसरस्स्यात् । धर्मसम्बन्धे प्रकरणं प्रमाणमुपन्यस्यत इति न सङ्कटं किञ्चिदित्यर्थः । प्रकरणस्य कथं धर्मसम्बन्धकत्वमिति चेदुपपादयति-**कर्तव्यतायां** यागस्येति शेषः । **चोदितायां** विहितायाम् । **इतिकर्तव्यताकाङ्क्षा भवति** भावनायाः । तदा प्रकरणेन-उभया-काङ्क्षारूपेण प्रयाजादिधर्मास्सम्बध्यन्ते-आकाङ्क्षाशामकत्वेनान्वयं लभन्त इत्यर्थः ।

अव्यवस्थावादी खण्डयति—**नैवं शक्यमिति** । आग्नेयादिवाक्यैरुत्पन्ना दर्शपूर्णमासयागाः । तेषां कर्तव्यत्वं तैस्तैर्वाक्यैर्बोधितम् । तस्मिन्नवसरे तेषामितिकर्तव्यताकाङ्क्षा नास्ति, उत्पत्तिवाक्येषु तादृशाकाङ्क्षाया विस्पष्ट-मनुत्थानात् । तदिदमाह—**तदेतिकर्तव्यताकाङ्क्षैव नास्ति** । साधारणतया यागस्वरूपसम्पादनरूपाया इति-कर्तव्यतायाः प्रज्ञातत्वात् । **तयोः** दर्शपूर्णमासयोः । **असत्याञ्च** तादृशाकाङ्क्षायां प्रकरणस्य क्वावसरः ? अतः प्रकरणेन धर्मास्सम्बध्यन्त इति वक्तुं नैव शक्यमित्यर्थः । एवं प्रकरणमितिकर्तव्यताकाङ्क्षाञ्चानङ्गीकुर्वाणमव्य-वस्थावादिनं व्यवस्थावादी स्मारयति—**एवंह्युक्तमिति** । प्रकरणाधिकरण इति शेषः । तत्रत्यं सूत्रं निर्दिशति—**असंयुक्तमिति** । अङ्गाङ्गिभावबोधकतया श्रुतिः लिङ्गं वाक्यञ्चेति त्रीणि प्रमाणानि प्रदर्शितानि । तैरसंयुक्तं यदङ्गजातं प्रयाजादि तत् प्रकरणाद्विनियुज्यते । प्रकरणादित्यस्यैव विवरणम् 'इतिकर्तव्यतार्थित्वात्' इति । करणगतशक्त्याधायको व्यापार इतिकर्तव्यता । तामर्थयतेऽपेक्षते यत् तदितिकर्तव्यतार्थि । तस्य भावः,

## भाष्यम्

**एवं तर्हि नैवात्र यागे धर्मा विधीयन्ते । नापि दर्शपूर्णमासयोः कर्तव्यतोच्यते । किं तर्हि ? दर्शपूर्णमासाभ्यां यजेतेति पदद्वयेन विशिष्टं यागमनूद्य धर्मा विधीयन्ते—दर्शपूर्णमासाभ्यां यजेतेत्थमिति । एवमपि दर्शपूर्णमासाभ्यामित्यनुवादो न युज्यते, तृतीयार्थस्यासिद्धत्वात् । पूर्ववाननुवादो भवति अपूर्वश्च तृतीयार्थः । सोऽवश्यं विधातव्यः । तस्मिंश्च विधीययमानेऽन्यदेवा-सम्बद्धमापद्यते दर्शपूर्णमासौ यजेः करणमिति । तस्मात्स एव प्रथमः पक्षोऽस्तु यागानुवादेन धर्माणां विधिरिति ।**

**ननु तत्रापि दर्शपूर्णमासाभ्यामित्येतन्न सम्बध्यते । ननु सम्भन्त्स्यते, कालवचनस्सन् प्रायिको नित्यानुवादो भविष्यति, प्रायेण यागानां दर्शपूर्णमासकालत्वात् । तृतीया च कालस्यार्थ-कृतं गुणभावमालोच्योपपद्यते । तथा चेत्सर्वे धर्मास्सर्वार्था भवन्ति ॥२॥**

## भाष्यसन्दर्भयोजिनी

तत्त्वमिति सूत्रार्थः । एवञ्चाकाङ्क्षापूर्वकं प्रकरणं स्वीकर्तव्यमिति सिद्धम् । एवं सति दर्शपूर्णमासवाक्यस्य को व्यापार इति प्रदर्शयितुं व्यवस्थावादिन एव ग्रन्थः—**एवं तर्हीत्यादिः** । एवं सतीत्यर्थः । अत्र दर्शपूर्णमासवाक्ये । **यागे** यागोद्देशेन धर्मा नैव विधीयन्त इत्यन्वयः । एवं दर्शपूर्णमासयोः कर्तव्यतापि नोच्यत इत्याह—**नापीति** । न धर्मान् विदधाति, नापि दर्शपूर्णमासयोः कर्तव्यतामवबोधयति, किमस्य कार्यमवशिष्यत इत्यत आह—**दर्शपूर्णमासाभ्यामिति** । अङ्गानां व्यवस्थासिद्धये दर्शपूर्णमासविशिष्टयागमनूद्य धर्मविधायकत्वेनास्य चारि-तार्थ्यमित्यर्थः । **इत्थं दर्शपूर्णमासाभ्यां यजेतेति** वाक्यार्थप्रदर्शनम् ।

अत्राव्यवस्थावादी पृच्छति—**एवमपीति** । दर्शपूर्णमासविशिष्टयागस्यानुवादकोटौ समावेशे सति दर्शपूर्णमासाभ्यामिति तृतीया विभक्तिरनुपपन्ना स्यात् । तृतीया हि करणत्ववाचिनी । 'नासाधितं करणम्' इति न्यायेनासिद्धस्य तस्य करणत्वं कथमुपपद्येत ? यागविशेषणत्वेन दर्शपूर्णमासयोर्निवेशः क्रियते यागश्चात्रानूद्यते । तद्विशेषणस्याप्यनुवादकोटौ प्रवेशः । तृतीयार्थस्त्वप्राप्तार्थविद्योतकः । अनुवादस्तु **पूर्ववान्** प्राप्तार्थावबोधकः । अप्राप्तार्थस्य च विधानं न्याय्यम् । **तस्मिंश्च विधीयमाने**-अप्राप्ततृतीयार्थे विधीयमानेऽसम्बद्धो वाक्यार्थस्स्यात् इति दर्शयति-**दर्शपूर्णमासौ यजेः करणमिति** । अतोऽव्यवस्थावादी स्वाभिमतमर्थं साधयति—**स एव प्रथमः पक्षोऽस्त्विति** । तदीयपक्षस्याकारं दर्शयति-**यागानुवादेन धर्माणां विधिरिति** ।

तृतीयाविभक्तेर्यामनुपपत्तिं दर्शितवानव्यवस्थावादी तामेव व्यवस्थावाद्यपि दर्शयन् निगृह्णाति-**नन्विति** । **तत्रापि** यागानुवादेन धर्माणां विधिरिति पक्षेऽपि तृतीयायास्सम्बन्धो न घटत इत्यर्थः । उत्तरयत्यव्यवस्थावादी-**ननु सम्भन्त्स्यत इति** । दर्शपूर्णमासपदं यदि कर्मवाचकं तर्हि तृतीयाया अनुपपत्तिः, **कालवाचकस्सन्** कालस्यानुवादको भवितुमर्हति । इष्टिपशुसोमानां पर्वकालानुष्ठेयत्वं 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति प्राप्तपर्वकालानुष्ठेयत्वस्यानुवादकोऽयं दर्शपूर्णमासशब्द इति स्वीकारे न काप्यनुपपत्तिरिति भावः । **तृतीया च** दर्शपूर्णमासाभ्यामिति तृतीया । कालस्तु सर्वत्र गुण एवार्थात् सिध्यति । तेन धर्माः सर्वार्था इति ॥२॥

### भाष्यम्

**चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥७.१.३॥**

**कर्मचोदनायाः शेषभूतो धर्मसमवायः, एकदेशभूत इत्यर्थः । 'दर्शपूर्णमासाभ्यां यजेत' अनयाग्न्यन्वाधानादिकयेतिकर्तव्यतयेति । तस्यां चोदनायां यजेर्गुणभावः श्रूयते-दर्शपूर्णमासाभ्यामिति । दर्शपूर्णमासशब्दो हि यागवचनः । करणभावोऽत्र यजेः श्रूयते दर्शपूर्णमासाख्येन यागसमुदायेनान्यत्कुर्यादिति । यत्ततोऽन्यत् तत्कर्तव्यतया चोद्यते न यजिः । अपूर्वञ्च तत् ।**

**ननु फलमत्र वाक्ये श्रूयते-स्वर्गकामो यजेतेति । तत्कर्तव्यं स्यात् । सत्यं श्रूयते, न तु तद्यजिना क्रियते । विनष्टे यजौ तद्भवति । अपूर्वन्तु तेन क्रियते । तस्मात्तस्य कर्तव्यतोच्यते ।**

### टुप्टीका

भावनाशेषभावादित्यर्थः । तद्भेदाद्व्यवतिष्ठेरन्-भावनाभेदाद्व्यवतिष्ठेरन् । उत्पत्तेर्गुणभूतत्वात् ।

### वार्तिकाभरणम्

सिद्धान्तसूत्रमाह—चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥३॥

चोदनाशब्दार्थकथनपुरस्सरं सूत्रं योजयति—**भावनेति**। चोद्यत इति व्युत्पत्या चोदनाशब्दो भावनावचनः तच्छेषभावाद्धर्मा व्यवस्थिता इत्यर्थः। भावनार्थत्वे कथं धर्मा व्यवस्थिता भवन्तीत्यत आह—**तद्भेदादिति**। द्वितीयाध्याये शब्दान्तरादिभिर्भावनाभेदस्य साधितत्वेन भावनाया भिन्नत्वात् तदर्थधर्मा व्यवस्थिता भवन्तीत्यर्थः।

### भाष्यसन्दर्भयोजिनी

सिद्धान्तिनस्सूत्रमिदम् । सूत्रं विवृणोति-**कर्मचोदनाया इति** । कर्मविधेरित्यर्थः । **धर्मसमवायः** अङ्गकलापः । **शेषभूत** इत्यस्य भावार्थं प्रदर्शयति-**एकदेशभूत इति** । निष्पन्नं वाक्यार्थं निर्दिशति-**दर्शपूर्णमासेति** । **इतिकर्तव्यतया** सह दर्शपूर्णमासाभ्यां यजेतेत्यन्वयः । **गुणभावः श्रूयते** प्रत्ययार्थभावनापेक्षया यागजन्यापूर्वापेक्षया वा । गुणभावसाधिका विभक्तिः-**दर्शपूर्णमासाभ्यामिति** । **हि** यतः दर्शपूर्णमासशब्दो यागवचनः न कालवचन इत्यर्थः। यजेः करणत्वाद् दर्शपूर्णमासशब्दवाच्ययागसमुदायेन किञ्चित्सम्पादनीयम् । किं तत् किञ्चित् यत्सम्पादकतया यजिश्चोद्यते, तदाह—**अपूर्वञ्च तत्** । अङ्गकलापेन सत्यं यजिस्साध्यते, किन्तु अङ्गकलापसहितेन यजिना किञ्चित्साधनीयत्वेन विधिः प्रवृत्तः । स च विधिरितिकर्तव्यतासहितं यागं विधत्त इत्यङ्गीकारे विधीयमानस्य यागस्य करणत्वं तद्गतशक्त्याधायकत्वेनाङ्गानामितिकर्तव्यता च सिध्यतीति भावः । यजिरपूर्वसम्पादक इति किमुच्यते ? फलसम्पादको यजिरिति किं नोच्यत इति शङ्कते—**नन्विति** । 'स्वर्गकामो यजेत' इति

## भाष्यम्

**यस्य कर्तव्यता तदितिकर्तव्यतया सम्बध्यते। तस्मादपूर्वार्था धर्माः। तेषाञ्चापूर्वाणां भेद उक्तः।**

## टुप्टीका

**उत्पत्तिः यागः, तस्याः करणत्वेनोपादीयमानत्वाद् गुणभूतः। तस्मान्न धर्मैस्सम्बध्यते। सम्बध्यमाने च स्वार्थ-**

## वार्तिकाभरणम्

ननु धर्माणां यागानुग्राहकत्वेन यागार्थत्वमेव युक्तं न भावनार्थत्वमित्यत आह—**उत्पत्तेरिति**। उत्पत्तेर्गुण-भूतत्वादित्यंशं व्याचष्टे—**उत्पत्तिरिति**। तस्याः भावनायाः यागो गुणभूतः करणत्वेनोपादीयमानत्वात् इत्यर्थः। ततः किमित्यत आह—**नेति**। स यागः गुणभूतत्वादेव धर्मैर्न सम्बध्यत इत्यर्थः।

ननु यागस्य गुणभूतत्वेऽपि धर्माणां तत्सम्बन्धोऽस्त्वित्यत-आह—**सम्बध्यमान इति**। भावनां प्रत्युपादीयमाने यागे धर्मैरुद्देश्यतया सम्बध्यमाने सति यागशब्दस्य स्वार्थपरार्थता-स्वार्थतयोच्चारणं परार्थतयोच्चारणं च स्यात्। तथा हि—यागस्य फलाय करणतया विधानादुपादेयत्वम्, विधेयत्वं गुणत्वञ्च वक्तव्यम्। ततश्च स्वस्य विधेयत्वसिध्यर्थमुच्चारणात् स्वार्थमुच्चारणं स्यात्। इतिकर्तव्यतां प्रति यागस्योद्देश्यत्वमनुवाद्यत्वं प्राधान्यञ्च वक्तव्यम्। ततश्चेतिकर्तव्यताविधानार्थं स्वस्योचारणं परार्थमुच्चारणं स्यात्। ततश्च उच्चारणावृत्तिप्रसङ्गाद्वाक्यभेदः स्यात्। न हि सकृदुच्चारणे यागेन स्वर्गं कुर्यात् यागं चेत्थं कुर्यादित्यर्थद्वयं सम्भवति। नन्वनेन वाक्येन धर्मसम्बन्ध एव विधीयते, फलसम्बन्धस्तु 'सर्वेभ्यो दर्शपूर्णमासौ' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिभिरेव। इतरथा दर्शपूर्णमासवाक्यमेवानर्थकं स्यादिति प्रागेवोक्तत्वात् अनेनैव धर्मसम्बन्धः, अनेनैव फलसम्बन्धः। ततश्च वाक्यभेद इति कथमापाद्यते इति चेन्न; 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यस्य स्वर्गलक्षणफलविशेषशास्त्रत्वेन सर्वफलसम्बन्धबोधकसार्वकाम्यवाक्यरूपसामान्यशास्त्रापेक्षया शीघ्रप्रवृत्तिकत्वेन सम्बन्धद्वयावश्यम्भावेन वाक्यभेदस्य दुर्वारत्वात्। तस्माद्भावनां प्रति यागस्य गुणभूततया धर्माणां तत्सम्बन्धासम्भवात् न यागार्थत्वं सम्भवतीत्यर्थः। तथाच प्रयोगवाक्येन सम्बन्ध इति पक्षोऽनुपपन्नः। प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध इति पूर्वपक्षोऽपि वाक्यभेददोषादेव निरस्तः। यद्यप्यत्र सम्बन्धद्वयविधाननिबन्धनो वाक्यभेदो नास्ति, तथाप्येकेनैव वाक्येन धर्मसम्बन्धबोधनलाभात् भिन्नं वाक्यं किमर्थं कल्पनीयम्, गौरवात्। यागस्य च निर्ज्ञातप्रकारत्वेन शास्त्रीयेतिकर्तव्यतापेक्षा नास्ति। अतस्तत्सम्बन्धेऽनपेक्षितसम्बन्धापत्तिस्स्यात्। आकाङ्क्षाया अभावादेवाकाङ्क्षालक्षणप्रकरणाभावेन मूलोच्छेदात्। प्रकरणेन वाक्यकल्पनमेव नास्ति, प्रकरणाम्नानुमितेन वाक्येन धर्मसम्बन्धो विधीयते इत्यादिः कथं शब्दार्थः?

ननु पूर्वपक्षे यागस्य निर्ज्ञातप्रकारत्वेऽपि फलसाधनत्वेनालौकिकत्वादितिकर्तव्यताकाङ्क्षोत्थितेः सत्त्वात्कथमनपेक्षितसम्बन्धापत्तिः, कथं वा मूलोच्छेदात् प्रकरणेन वाक्यकल्पनमेव न सम्भवतीत्युच्यत इति चेन्न;

## भाष्यसन्दर्भयोजिनी

यच्छ्रूयते फलं तदेव यजिना सम्पादनीयम्। अङ्गीकृत्योत्तरयति-सत्यमिति। श्रूयमाणस्यापि तस्य यागकर्तव्यता नास्ति, यतश्च नष्टे यागे तद्भवति। श्रुत्युपदिष्टस्वनिष्ठसाधनत्वोपपत्त्यर्थं यजिनाऽपूर्वं कल्पनीयमेव। तथा सति विशिष्टविधिपक्षे फलभावनाया अलौकिकत्वेन स्वत एवेतिकर्तव्यताकाङ्क्षायां सम्भवत्यां फलसाधनत्वाकारेण

## भाष्यम्

**अतस्तद्भेदाद्यथाप्रकरणं व्यवतिष्ठन्ते धर्मा इति ।**

## टुप्टीका

**परार्थता, वाक्यभेददोषश्च । अतः सर्वविशेषणविशिष्टा भावना विधीयते । अर्थात्परस्परनियमः ।**

## वार्तिकाभरणम्

यागस्यालौकिकत्वं सम्पाद्य प्रणाड्याकाङ्क्षाकल्पनस्यान्याय्यत्वात् । ननु वाक्यकल्पनागौरवदोषः प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध इति पूर्वपक्ष एवोपन्यस्तः । तदनुपपन्नम् । प्रयोगवाक्येन धर्मसम्बन्ध इति पक्षेऽपि प्रयोगवाक्ये धर्मविधायकप्रत्ययसद्भावेऽपि प्रयोगवाक्यस्य प्रयाजादिवाक्यानाञ्चैकवाक्यत्वाभावे वाक्यान्तरश्रुतानां प्रयाजादीनां प्रयोगवाक्येन विधानासम्भवात् विधिसिध्यर्थमेव परस्परमेकवाक्यता वक्तव्या । एकवाक्यता च प्रकरणादिति वक्तव्यम् । प्रकरणञ्च शब्दकल्पनापुरस्सरमेवैकवाक्यतां सम्पादयति, न स्वातन्त्र्येण । तथा च प्रयोगवाक्येन धर्मसम्बन्ध इति पक्षेऽपि वाक्यान्तरकल्पनागौरवं तुल्यम् । तथा च प्रकरणाम्नानानुमितवाक्येन धर्मसम्बन्ध इति पक्ष एवायं दोषः कथमुद्भाव्य इति चेन्न; यागस्य फलसाधनत्वेनेतिकर्तव्यताकाङ्क्षायां समिदादीनां प्रयोजनापेक्षायामुभयाकाङ्क्षालक्षणं प्रकरणमस्ति । प्रकरणे च फलसाधनीभूतं यागं प्रयाजादिभिः कुर्यादित्येतादृशकल्पनापुरस्सरं दर्शपूर्णमासवाक्यस्य प्रयाजादिवाक्यानां च प्रत्यक्षमप्येकवाक्यत्वं कल्प्यत इति वाक्यान्तरकल्पनाभावात् । एतादृशी चैकवाक्यता सिद्धान्तेऽपि तुल्या । तथाहि—'दर्शपूर्णमासाभ्यां' इति वाक्ये समिदादिवाक्ये च यच्छब्दाद्युपबन्धविधुराख्यातद्वयसद्भावाभावात् स्वतन्त्रमेवार्थद्वयं प्रतीयते । तत्र दर्शपूर्णमासयागो विशेष्यम्, समिदादियागो विशेषणमिति 'वारवन्तीयमग्निष्टोमसाम कृत्वेति'वत् समिदादिभिर्दर्शपूर्णमासयोः उपकुर्यादिति विधानाभावात् विशेषणविशेष्यभावो न प्रतीयते । असत्यां च विशेषणविशेष्याभावावगतौ परस्परसम्बन्धाभावात् तयोः सत्यां चैकवाक्यतायां प्रयाजादीतिकर्तव्यताका यागकरणिका स्वर्गभाव्यका भावना विधीयत इति विशिष्टविधिर्नोपपद्यत इति दर्शपूर्णमासाभ्यां स्वर्गापूर्वार्थं व्याप्रियेतेत्युक्ते न ज्ञायते—कथं व्याप्रियेत ? कोऽसौ यागगतो व्यापार इति । ततश्च भवति प्रकारविशेषाकाङ्क्षा । सर्वत्र हि साधनगतव्यापारानुष्ठानादेव साधनस्य फलजनकत्वम्, यथा परशुना वृक्षं छिन्धीत्युक्ते परशुगतोद्यमननिपतनादिव्यापारानुष्ठानादेव परशोः छेदनसाधनत्वं भवति, नेतरथा । तस्मात् यागेन व्याप्रियेतेत्युक्तेऽस्ति प्रकाराकाङ्क्षा । तत्र दर्शपूर्णमासयागस्य प्रकाराकाङ्क्षित्वात् समिदादियागस्य च प्रयोजनाकाङ्क्षित्वात् उभयाकाङ्क्षालक्षणप्रकरणमस्ति । तेन च प्रकरणेन समिदादिभिः दर्शपूर्णमासयागं प्रति स्वर्गापूर्वार्थं व्याप्रियेतेत्येतादृशशब्दकल्पनापुरस्सरमप्रत्यक्षमप्येकवाक्यत्वं कल्प्यते; यथा लोके कीदृशं देवदत्तस्य गृहमिति प्रश्ने द्वारस्थितकदलीद्वययुक्तं निष्कुटस्थितबहुचम्पकमित्युत्तरिते एतादृशं देवदत्तस्य गृहमित्यभिधानत एवैकवाक्यता भवति, यदि च तस्मिन्नेव प्रश्ने द्वार-

## भाष्यसन्दर्भयोजिनी

यजेस्तदर्थत्वमेव न फलार्थतेति भावः । अपूर्वस्य कर्तव्यत्वे सिद्धे तस्येतिकर्तव्यतया सह सम्बन्धोऽङ्गीकार्य इत्याह—**यस्य कर्तव्यतेति । अपूर्वार्था धर्माः** अपूर्वमेवार्थः प्रयोजनं येषान्ते । **भेद उक्तः** शब्दान्तरादिप्रमाणे द्वितीये । अपूर्वभेदेन प्रकरणभेदः तद्भेदेन च धर्माणां व्यवस्थेति ।

### भाष्यम्

अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते ? उच्यते-नैवात्र यागो विशे-

### टुप्टीका

एवमपि श्रुत्या सामान्यस्य भावना, वाक्याद्विशेषस्य। न चैतद्युगपद् भवतीत्ययुक्तोऽयं ग्रन्थः।

### वार्तिकाभरणम्

प्रदेशे कदलीद्वयं तिष्ठति, तिष्कुटे च बहुचम्पकास्तिष्ठन्ति, इत्येवमुत्तरं ब्रूयात्तदा प्रकरणादेवैतादृशं देवदत्तस्य गृहमिति दृक्शब्दकल्पनापुरस्सरमप्रत्यक्षमप्येकवाक्यत्वं कल्प्यते। तस्मात् प्रकृते वाक्यान्तरं न कल्पनीयम्। उपसंहरति—**अतस्सर्वविशेषणेति**। यज्युद्देशेन सर्वविधानमिति पक्षस्य दूषितत्वात्। यच्च फलं यो यागः दर्शपूर्णमास [ शब्द ] विशेषितः, यश्च प्रयाजादिधर्मः भावनाविशेषणत्वेन प्रतीयते तत्सर्वविशेषणविशिष्टा भावना विधीयते। विधीयमाना हि भावना सर्वैरंशैः सम्बध्यते। इदमनेनेत्थं कुर्यादित्यर्थः।

ननु भावनया फलसाधनप्रयाजादिधर्माणां सम्बन्धे परस्परसम्बन्धो न स्यात्। तथा च फलस्य यागसाध्यत्वं यागस्य फलसाधनत्वं धर्माणां करणानुग्राहकत्वञ्च न स्यादित्यत आह—**अर्थादिति**। यथा 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इत्यत्र अरुणैकहायन्योः क्रयान्वयानन्तरं मिथः परिच्छेद्यपरिच्छेदकभावरूपः सम्बन्धः तद्वदिहाप्यर्थात् ऐककर्म्यात् एकक्रियान्वयादिति यावत्। त्रयाणामप्येकभावनान्वयानन्तरं परस्परनियमः फलयागयोः साध्यसाधनभावरूपः यागप्रयाजादिधर्मयोरनुग्राह्यानुग्राहकभावरूपस्सिध्यतीत्यर्थः। न हि भावनोद्देशेन धर्मविधानम्, येन यागे विरुद्धत्रिकद्वयापत्या वाक्यभेदः स्यात्। न चान्येनैव वाक्येन भावना विधीयते। अनेन वाक्येन तु भावनोद्देशेन धर्मा विधीयन्ते। तथा च विरुद्धत्रिकद्वयापत्यभावात् न वाक्यभेद इति वाच्यम्। तथा सति 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र विद्यमानेन यजेतेत्यनेन भावनोद्देश इति वक्तव्यम्। यजेतेति शब्दस्य विशेषेण च स्वशक्त्या यागमात्रकरणकभावनोपस्थापकत्वेन होमादिकरणकभावनाव्यतिरिक्तसर्वयागकरणकभावनासु धर्माणां प्राप्त्या पारिप्लवत्वतादवस्थ्यात्। विशिष्टविधिपक्षे तु यजेतेत्यनेन धर्मविशिष्टभावना विधीयते। विधीयमानायाः भावनायाः दर्शपूर्णमासपदविशेषितयागकरणकत्वात् तादर्थ्येन विधीयमानाः धर्माः न पारिप्लवा भवन्ति। ननु यागानुवादेन वा धर्मविधानेऽपि पारिप्लवत्वं नास्ति। अनुवादस्य सति सम्भवे सन्निहितगामित्वादिति न्यायेन यजेतेति पदस्य सन्निहिताग्नेयादियागानुवादकत्वात्, यागानुवादेन विधीयमाना अपि धर्माः सन्निहिताग्नेयादियागान् सर्वकामवाक्यलब्धफलानीतिकर्तव्यताकाङ्क्षिण एवावलम्बन्ते; न सर्वान्। तथा च धर्माणां पारिप्लवत्वं न सिध्यति। तथापि कथं विशिष्टविधिपक्ष एव न पारिप्लवत्वमित्युच्यत इति चेत्—सत्यमुभयथापि पारिप्लवत्वं नास्ति; तथापि यागानुवादेन भावनानुवादेन धर्मविधानमिति पक्षस्य सर्वकामवाक्यलब्धफलसम्बन्धाधीनत्वात् तद्वाक्येन च फलसम्बन्धस्य प्रागेव दूषितत्वात् विशिष्टविधिपक्ष एवाङ्गीकृत इति न दोषः।

### भाष्यसन्दर्भयोजिनी

अत्र शङ्कते—**अथैतस्मिन्निति**। यागविशेषणीभूतस्य दर्शपूर्णमासशब्दस्योपपत्तिः केति शङ्कार्थः। उत्तरयति—**उच्यत इति**। दर्शपूर्णमासशब्दो न यागस्य विशेषणं किन्तु यथा यागो विधीयमानापूर्वभावनाया विशेषणं तथा दर्शपूर्णमासशब्दोऽपि भावनाविशेषणम्। **उभयपदेति**। दर्शपूर्णमासपदं यजिपदञ्च। तथा च

## भाष्यम्

ष्यते । किं तर्हि ? अपूर्वभावनैवोभयपदविशिष्टोच्यते । यथा-'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति ।

## वार्त्तिकाभरणम्

सिद्धान्ते भाष्यकारेण—'तस्मादपूर्वार्था धर्माः, तेषां चापूर्वाणां भेद उक्तः । अतस्तद्भेदाद्यथाप्रकरणं व्यवतिष्ठेरन्धर्माः इति । अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते ? नैवात्र यागो विशेष्यते ! किं तर्हि अपूर्वभावनैवोभयपदविशिष्टोच्यते । यथा 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति । विषम उपन्यासः । तत्र ह्यन्यत् द्रव्यम्, अन्यो गुणः । तेन तत्रोभयपदविशेषणत्वं न युज्यते । उच्यते—इहापि यजेतेति सामान्यम् दर्शपूर्णमासाविति विशेषः । अन्यच्च सामान्यमन्यो विशेषः' इत्याक्षेपसमाधानानि कृत्वा पुनरपि'एवमपि श्रुत्या सामान्येन भावना वाक्याद्विशेषेण, न चैतद्युगपद्भवती'त्याक्षिप्य, 'एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते; किं तर्हि वाक्यार्थः' इति समाहितम् । तत्र 'तस्मादि'त्यारभ्य'अन्यो विशेष' इत्यन्तस्य भाष्यस्यायमर्थः । तस्माद्यागस्याकर्तव्यत्वेनापूर्वस्यैव कर्तव्यत्वात्, कर्तव्यताविशेषितत्वाच्चेतिकर्तव्यतायाः प्रयाजादीतिकर्तव्यता अपूर्वार्था इत्यर्थः । नन्वेतावता प्रकृते किमायातमित्यत आह—तेषामिति तेषामपूर्वाणाम् अपूर्वभाव्यकभावनानां शब्दान्तरादिभिः द्वितीयाध्याय एव भेद उक्त इत्यर्थः । ततः किमित्यत आह—अत इति । अतः भावनानां भिन्नत्वात् दर्शपूर्णमासवाक्यस्थभावनार्थाः धर्माः भावनान्तरार्था न भवन्ति । तथा च यथाप्रकरणं धर्माः व्यवस्थिता भवन्तीत्यर्थः । स्यादेतदेवम्, यदि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र दुर्बलप्रमाणेनापि वाक्येन दर्शपूर्णमासपदविशेषितयागविशेषस्यैव भावनासम्बन्धः स्यात् । न त्वेवमस्ति । किन्तु प्रबलया श्रुत्या यागसामान्यस्यैव भावनासम्बन्धः । तथा च यागसामान्यस्यैव भावनाकरणत्वेन दर्शपूर्णमासपदसमभिव्याहार-लभ्यस्य यागविशेषस्य करणात्वाभावादत्र यागसामान्यविशिष्टा भावना विधीयते । तथा च यागसामान्य-करणकभावनार्थाः धर्माः सौर्यादिभावनानामपि यागकरणकत्वाविशेषात् सर्वभावनासु प्राप्नुवन्तीति विशिष्ट-विधिपक्षेऽपि धर्माणां पारिप्लवत्वं तदवस्थमिति शङ्कते—अथेति । परिहरति—नैवात्रेति । न हि दर्शपूर्णमासपदं साक्षाद्यागं विशिनष्टि येन दर्शपूर्णमासपदसमभिव्याहारलब्धयागविशेषवचनत्वस्य यजेर्भावनासम्बन्धो दुर्बलः स्यादिति यागसामान्यस्यैव भावनासम्बन्धे धर्माणां पारिप्लवत्वं स्यात् । न त्वेवमस्ति । किं तर्हि दर्शपूर्णमास-विशिष्टा यागविशिष्टा च भावना विधीयते । तथा च यागसामान्यस्य दर्शपूर्णमासयोश्च भावनान्वयानन्तरं मिथो विशेषणविशेष्यभावस्सम्बन्धः यथा अरुणैकहायन्योः क्रयान्वयानन्तरं परस्परसम्बन्धः । तथा च दर्शपूर्ण-मासात्मकयागविशेषणस्यैव भावनाकरणत्वेन यागविशेषणकरणकभावनार्था धर्मा न भावनान्तरेषु प्राप्नुवन्तीति धर्माणां न पारिप्लवत्वमित्यर्थः । वैषम्यं शङ्कते—विषम इति । 'अरुणया क्रीणाति' इत्यत्र एकहायन्या

## भाष्यसन्दर्भयोजिनी

दर्शपूर्णमासयागविशिष्टा भावनैव दर्शपूर्णमासवाक्येनोच्यते । अत्र दृष्टान्तः—**अरुणयेति** । पृथक्तृतीयाविभक्ति-श्रवणात् प्रतीयमानतत्तत्करणत्वोपपत्तय आरुण्यादिक्रयविशिष्टा भावना यथा विधीयते तथेत्यर्थः ।

आरुण्यदृष्टान्तो विषम इति प्रत्यवतिष्ठते-**विषम** इति । वैषम्यं प्रतिपादयति-**तत्रेति** । आरुण्यं गुणः एकहायनी द्रव्यमिति उभयविशेषणत्वे न काचिद्धानिः । इह पुनः दर्शपूर्णमासवाक्ये यागस्य दर्शपूर्णमासयोश्च

## भाष्यम्

विषम उपन्यासः। तत्र ह्यन्यद् द्रव्यम् अन्यो गुणः। तेन तत्रोभयविशेषणत्वं युज्यते।

## टुप्टीका

उपश्लेषलक्षणया श्रुत्या धातुना सम्बन्धः, तृतीयया तादर्थ्येन दर्शपूर्णमासयोः। तत्रोपश्लेषलक्षणया तादर्थ्यं

## वार्तिकाभरणम्

द्रव्यत्वादारुण्यस्य च गुणत्वादुभयोरपि पदयोः क्रयं प्रति विशेषणत्वं युज्यते। इह च याग एव दर्शपूर्णमासौ नान्यः। तथा चोभयोरप्येकत्वेन उभयोः पदयोर्विशेषणत्वं न युज्यते। तथा च दर्शपूर्णमासयोर्यागस्य च भेद एव नास्ति। कथं भेदनिबन्धनः सम्बन्धो भवेत्? एवं च विषमो दृष्टान्तः। ×××× परिहरति उच्यत इति। यजेतेत्यनेन यागसामान्यमुच्यते। दर्शपूर्णमासशब्देन यागविशेष एवाभिधीयते। तथा च सामान्यस्य विशेषस्य च भिन्नत्वात् यजिपददर्शपूर्णमासपदयोः भावनां प्रति विशेषणत्वम् परस्परसम्बन्धश्च उपपद्यत इति न विषमो दृष्टान्त इत्यर्थ इति। नन्वस्तूक्तरीत्या दर्शपूर्णमासयोर्यागस्य च भेदः, तथापि न तयोर्युगपद्भावनासम्बन्धस्सम्भवतीति। 'एवमपी'त्यादि 'युगपद्भवती'त्यन्तेन पुनराशङ्कितं भाष्यकारेण। तद्भाष्यमाक्षेप्तुं श्रुत्या सामान्येन भावना वाक्याद्विशेषेणेति भाष्यस्य सम्बन्ध इति पदाध्याहारसापेक्षत्वात् सामान्येन विशेषेणेति तृतीययोः षष्ठ्यर्थत्वपरिकल्पने षष्ठ्या सम्बन्धप्रतीतेरध्याहारमन्तरेणैव वाक्यार्थप्रतीतिरुपपद्यत इत्यभिप्रेत्य षष्ठ्यन्तेन पदद्वययुक्ततया चोद्य भाष्यमनुवदति—एवमपीति। चोद्यभाष्यस्यायमर्थः। भवतु नाम दर्शपूर्णमासयोर्यागस्य च भेदः। तथापि यजेतेति पदश्रुत्या सामान्यस्य यागमात्रस्य भावना, यागमात्रसम्बन्धिनी भावनेति यावत्। वाक्यात्—वाक्यलक्षणप्रमाणेन विशेषस्य दर्शपूर्णमासात्मकतया यागविशेषस्य भावना दर्शपूर्णमासात्मकयागसम्बन्धिनी भावनेति यावत्। तथा च भावनायाः श्रुत्या यागमात्रसम्बन्धः वाक्येन यागविशेषसम्बन्ध इत्यर्थः। ततः किमायातमित्यत आह—न चैतदिति। श्रुत्या वाक्येन च द्वयोरपि भावनासम्बन्ध इत्येतद्युगपन्न सम्भवति। वाक्यापेक्षया श्रुतेः शीघ्रप्रवृत्तिकत्वात्। नापि पर्यायेण श्रुत्या यागे साधनत्वेनान्वितेनैव निराकाङ्क्षाद्वाक्याद्यागविशेषस्यासमर्पणात्। तस्माद्यागमात्रस्यैव भावनासम्बन्धः। अरुणया क्रीणातीत्यत्र तु अरुणस्य चैकहायनीद्रव्यस्य च वाक्यविनियोज्यत्वेन युगपत् क्रयान्वयः सम्भवतीत्यस्ति वैषम्यमित्यर्थ इति चोद्यभाष्यमाक्षिपति—**इत्ययुक्त इत्यादिना**। इति ग्रन्थ अयुक्त इति योजना। अत्र भावनापदं षष्ठ्यन्ततया विपरिणतमनुषज्यते। धातुना प्रकृत्यर्थेन यागसामान्येन भावनायास्सम्बन्धः अभिधानरूपया श्रुत्या न भवति, किन्तु उपश्लेषलक्षणया विशेषणविशेष्यभावमात्रप्रतिपादिकया समानपदोपादानलक्षणया श्रुत्येत्यर्थः। ततः प्रकृते किमायातमित्यत आह—**तृतीययेति**। अत्रापि भावनापदं तृतीयान्ततया विपरिणतम्। सम्बन्धपदं चानुषज्यते। दर्शपूर्णमासयोः दर्शपूर्णमासपदवाच्ययागविशेषस्य भावनया सम्बन्धः तृतीयया अभिधात्र्या **तादर्थ्येन** करणत्वेन। तथा च भावनां प्रति यागविशेषकरणत्वं तृतीयाश्रुत्या शाब्दमित्यर्थः।

## भाष्यसन्दर्भयोजिनी

स्थितिरन्यादृशी। आरुण्यवाक्ये पार्ष्ठिकबोधे द्रव्यगुणयोः परस्परनियमो युक्तः, प्रकृते य एव यागः स एव दर्शपूर्णमासपदवाच्य इति कः केनान्वियात्। अत उभयपदविशेषणत्वं न घटत इत्यर्थः। समाधत्ते-**उच्यत इति**। सामान्यविशेषभावेनोभयपदविशेषणत्वं घटत एव। तदिदमाह-**यजेतेति**। यजतिः यागसामान्यबोधकः दर्श-

## भाष्यम्

**इह पुनर्याग एव तौ दर्शपूर्णमासौ। तेनेहोभयपदविशेषणत्वं न युज्यते। उच्यते-इहापि यजेतेति**

## टुप्टीका

**कल्प्यम्। यदि दर्शपूर्णमासौ भावनया सम्बध्यमानौ यागवद्भाव्यस्य करणतां प्रतिपद्येयाताम्, ततो विरोधे श्रुत्या वाक्यं बाध्येत। इह विरोध एव नास्ति। यदि चेदृश्यः श्रुतयः परिगृह्यन्ते ततो नामपदानामसम्बन्धात् केवलान्याख्यातान्यवतिष्ठेरन्।** एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते। किन्तर्हि ? वाक्यार्थं **इत्यप्ययुक्तम्, भावार्था-**

## वार्तिकाभरणम्

नन्वेवःबता वा प्रकृते किमायातमित्यत आह—**तत्रेति**। तत्र यागसामान्ये उपश्लेषलक्षणया पदश्रुत्या तादर्थ्यं भावनां प्रति करणत्वमशाब्दं प्रकृतिप्रत्ययसमभिव्याहारकल्प्यमिति यावत्। तथा च प्रत्यासत्तिश्रुत्यपेक्षया अभिधानश्रुतेः शीघ्रप्रतीतिकत्वेन प्रबलत्वात् यागविशेषस्यैव करणत्वं न सामान्यस्य। एवं च यदुक्तम्-पदश्रुतेः प्राबल्यमिति तद्विपरीतम्-पदश्रुत्यपेक्षया अभिधानश्रुतेः बलीयस्त्वादित्यर्थः। किञ्च—यो हि पदश्रुत्या यागस्यैव ( भावनां प्रति ) भावनासम्बन्धः, न वाक्यात्, दर्शपूर्णमासवाक्ययोरितिवदिति (?)। स वक्तव्यः किं दर्शपूर्णमासशब्दस्य यागविशेषवाचकत्वात् तस्य च यागसामान्यरूपकरणान्तरावरुद्धायां भावनायां विरोधेन करणत्वेनान्वयो न सम्भवतीत्यभिमानः ? किं वा विरोधाभावेऽपि नामार्थस्य वाक्यरूपदुर्बलप्रमाणविनियोज्यत्वान्न भावनान्वय इत्यभिमानः ? नाद्य इत्याह—**यदीति**। यदि दर्शपूर्णमासौ यागवत् फलभाव्यकभावनायां करणतां प्रतिपाद्येयाताम् तत उक्तरीत्या विरोधे सति पदश्रुतिर्वाक्यं बाधेत। न हि दर्शपूर्णमासशब्दो यागविशेषवचनो विवक्षितः येन विरोधः स्यात्। किन्तु कालवचनः। तथा च तृतीयान्तस्यापि दर्शपूर्णमासशब्दस्य सोमेनेतिवदितिकर्तव्यतात्वेन भावनान्वयसम्भवादित्यर्थः। न द्वितीय इत्याह—**यदि चेति**। यदि चेदृश्यो ह्यविरोधिन्यः पदश्रुतयो वाक्यार्थबाधकत्वेन परिगृह्यन्ते ततो 'दशापवित्रेण ग्रहं सम्मार्ष्टि' 'सोमेन यजेत' इत्यादिषु पदश्रुत्या प्रबलया सम्मार्गयागादिसम्बद्धायां भावनायां दुर्बलेन वाक्यलक्षणप्रमाणेन विधेयानां दशापवित्रसोमादीनां नामार्थानां सम्बन्धासम्भवात् केवलान्याख्यातानि सम्मार्ष्टि, यजेतेत्येवमादीन्येवावतिष्ठेरन्; नेतराणि नामपदानीति नामपदानामनर्थक्यापत्तिरित्यर्थः।

चोद्यभाष्यमाक्षिप्य परिहारभाष्यमाक्षेप्तुं अनुवदति—**एवं तर्हीति**। परिहारभाष्यस्यायमर्थः एवं तर्हि परस्परविरोधेन युगपदन्वयासम्भवे। अत्र-अस्मिन् वाक्ये श्रुत्यर्थः पदश्रुत्या प्रतीयमानः यागसामान्यस्य भावनासम्बन्धरूपोऽर्थः नैव परिगृह्यते। किं तर्हि ? वाक्यार्थः दुर्बलवाक्यलक्षणप्रमाणगम्योऽपि दर्शपूर्णमासपद वाच्ययागविशेषस्य भावनासम्बन्धरूपोऽर्थः, परिगृह्यते। पदश्रुत्या यागसम्बन्धेऽभ्युपगम्यमाने दर्शपूर्णमासशब्दोऽनर्थको भवति। तथा च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति न्यायेन वाक्यार्थं एव भावनासम्बन्धित्वेन

## भाष्यसन्दर्भयोजिनी

पूर्णमासौ तु विशेषः। अक्षिपति-**एवमपीति**। सामान्यविशेषभावेन भेदे साधितेऽपीत्यर्थः। **श्रुत्या** एकपदश्रुत्या। **वाक्यात्** दर्शपूर्णमासाविति भिन्नपदादित्यर्थः। **न चैतदिति**। श्रुत्या वाक्येन च लब्धस्यार्थस्यैकत्र समावेशो न भवितुमर्हतीत्यर्थः। विरोधादिति भावः। परिहारभाष्यम्—**एवं तर्हीति**। विरुद्धयोः श्रुतिवाक्ययोरेकत्र समावेशो न भवतीति चेदुच्यते तर्हीत्यर्थः। श्रुत्यर्थस्त्यज्यते सामान्यम्, वाक्यार्थस्स्वीक्रियते विशेष इत्यर्थः।

## भाष्यम्

**सामान्यम्, दर्शपूर्णमासाविति विशेषः। अन्यच्च सामान्यम् अन्यो विशेषः।**

## टुप्टीका

**धिकरणविपरीतत्वात्। किञ्च यागसामानाधिकरण्याद्यागवचनोऽयम्। तच्च यागफलसम्बन्धे भवति। तस्मान्न ज्ञायते किमनेनोच्यते? अपि च फले विधीयमानस्याश्रयो देयः क्रिया। सा च गोदोहनादिवन्न लभ्यते,**

## वार्तिकाभरणम्

परिगृह्यते। न च यजिपदमनर्थकम्; तस्यानुवादत्वेनाप्युपपत्तेरिति परिहारभाष्यमाक्षिपति—**अयुक्तमित्या-दिना**। इति यत् तदयुक्तमिति शेषः। वाक्यार्थ एव भावनासम्बन्धित्वेन परिगृह्यते इत्येतदयुक्तम्—भावार्थाधि-करणे भावार्थानामेव फलभावनाकरणत्वं न नामार्थानामित्युक्तत्वेन तदधिकरणविरुद्धत्वादित्यर्थः।

तत्रैव दूषणान्तरमाह—**किञ्चेति**। दर्शपूर्णमासशब्दस्य यागविशेषवचनत्वं यागसामानाधिकरण्ये सति भवति। तत्सामानाधिकरण्यं च यागस्य फलभावनासम्बन्ध एवोपपद्यते त्वदुक्तरीत्या यागसामान्यस्य फलसाधनत्वाभावे दर्शपूर्णमासपदस्य यागनामधेयत्वं न स्यात्, किन्तु गुणविधित्वमेव स्यात्। **तस्मान्न ज्ञायते किमनेन** परिहारभाष्येणोच्यत इत्यर्थः।

अत्र यद्यप्यधिकारवाक्यस्थयजेः फलभावनासम्बन्धाभावेऽपि पौर्णमास्यधिकरणोक्तरीत्या दर्शपूर्णमास-पदस्य नामधेयत्वं उपपद्यते; तथापि भावार्थाधिकरणसिद्धान्तमुल्लङ्घ्य अस्मिन् वाक्ये वाक्यार्थविधानाभ्युपगमे 'तत्सामान्यादितरेषु तथात्वमि'ति न्यायेन सर्वेष्वपि वाक्येषु वाक्यार्थस्यैव विधानं स्यात्। तथा च विद्वद्वाक्येऽपि यजेर्भावनासम्बन्धो न स्यात् इति तत्सामानाधिकरण्यं न स्यात्। तत्सामानाधिकरण्याभावादेव विद्वद्वाक्यस्थ-दर्शपूर्णमासपदमपि नामधेयं न स्यात्। तथा च विद्वद्वाक्ये नामधेयस्यासिद्धत्वात् अधिकारवाक्यस्थदर्शपूर्ण-मासपदं कथमपि नामधेयं न भवेदित्यभिप्रायेणोक्तमिति द्रष्टव्यम्। यद्वा अधिकारवाक्ये यजेर्भावनासम्बन्धा-भावेऽपि प्रमाणान्तरेण दर्शपूर्णमासपदस्य नामधेयत्वसम्भवेऽपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यस्याप्ये तदधिकरणविषयत्वात् तत्र प्रमाणान्तरेण ज्योतिष्टोमपदस्य नामधेयत्वासम्भवात् ज्योतिष्टोमवाक्ये यजेर्भावना-सम्बन्धाभावे ज्योतिष्टोमपदं नामधेयं न स्यात् इत्याभिप्रायेणोक्तमिति ध्येयम्।

वाक्यार्थविधानपक्षे वाक्यभेददोषमप्याह—**अपि चेति**। फले विधीयमानस्य दर्शपूर्णमासरूपस्य गुणस्य क्रियारूप आश्रयो देयः। निष्क्रियस्य गुणस्य फलसाधनत्वानुपपत्तेरित्यर्थः। दीयतां गोदोहनादाविव याग एवाश्रय इत्यत आह—**सा चेति**। 'गोदोहनेन पशुकामस्ये'त्यत्र पशुलक्षणफलाय गोदोहनं विधातुं शक्यते; 'चमसेनापः प्रणयेत्' इति प्रकृतेऽस्य प्रणयनस्य आश्रयत्वसम्भवात्। प्रकृते च वाक्यान्तरेण यागस्याविहितत्वात् प्रकरणादाश्रयलाभो न सम्भवति। ततश्चानेनैव वाक्येन देयः, आश्रयगुणसम्बन्धोऽप्यनेनैव वाक्येन देय इति वाक्यभेदः स्यात्। तस्मान्नामार्थस्यैव भावनासम्बन्धित्वेन विधानमनुपपन्नमित्यर्थः। न च यदाग्नेयादिवाक्ये

## भाष्यसन्दर्भयोजिनी

विशेषार्थस्वीकारे कारणम्—**श्रुत्यर्थे इत्यादि**। श्रुत्यर्थस्य सामान्यस्य परिग्रहे न केवलं दर्शपूर्णमासशब्दस्यानर्थक्यं किन्तु यजतेरनुवादत्वं तत्समानाधिकरणदर्शपूर्णमासशब्दस्याप्यनुवादत्वमिति दोषा भवेयुरिति भावः।

## भाष्यम्

**एवमपि श्रुत्या सामान्यस्य भावना, वाक्याद्विशेषस्य। न चैतद्युगपद् भवतीति। एवं**

## टुप्टीका

**अविहितत्वाद्यागस्य। ततश्चाश्रयो वाक्येन देयः। तत्र वाक्यभेदः। तस्मादन्यथा वर्ण्यते।** एवमपीति **नोपश्लेष-लक्षणां श्रुतिमभिप्रेत्य। किं तर्हि? अभिधात्रीम्। यजेतेत्ययं प्रकृताप्रकृतयागं भावनासम्बन्धित्वेन प्रतिपादयति। दर्शपूर्णमासपदेन प्रकृते स्थाप्यते। तत्र प्रकृतत्वाविशेषेऽपि विशिष्टेष्वेव प्रकृतेषु स्थाप्यते, न प्रयाजादिष्वपि।**

## वार्तिकाभरणम्

अनेकगुणश्रवणेन गुणविधित्वासम्भवेनानेकगुणविशिष्टयागविधायकत्वस्यावश्यकत्वात् तद्यागस्य च प्रकृतत्वेन प्रकरणादाश्रयलाभस्सम्भवतीति वाच्यम्। भावार्थाधिकरणसिद्धान्तोल्लङ्घनेन फलवाक्ये नामार्थविधिपक्षे तत्सामान्यादितरेषु तथात्वमिति न्यायेन यदाग्नेयादिवाक्येऽपि धात्वर्थविधानसम्भवेन आश्रयलाभाभावात्। चोद्यस्य भाष्यस्य परिहारभाष्यस्य च यथाश्रुतार्थे गृह्यमाणे यस्माद्दोषः तस्मादन्यथार्थो वर्ण्यत इति प्रति जानीते—**तस्मादिति**। तत्र प्रथमं 'एवमपि श्रुत्या सामान्येन भावने'ति चोद्यभाष्यं व्याख्यातुं तत्प्रतीकं गृह्णाति—**एवमपीति**। एवमपि श्रुत्या सामान्येन भावनेति भाष्यमुपश्लेषलक्षणं प्रकृतिप्रत्ययसमभिव्याहारलक्षणं श्रुतिमभि-प्रेत्य न प्रवृत्तम्; किं तर्हि अभिधात्रीश्रुतिमभिप्रेत्य प्रवृत्तमित्यर्थः।

ननु 'यजेतेत्यत्र तृतीयादिश्रुतेरभावात् अभिधात्रीश्रुतिमभिप्रेत्येदं भाष्यं प्रवृत्तमिति कथमुच्यत इत्यत आह—**यजेतेति**। यजेतेत्ययं शब्दः अभिधात्र्या श्रुत्या प्रकृतं दर्शपूर्णमासाख्यमप्रकृतं सौर्यादिकं च यागं यजिशब्देन प्रतिपादितमेव पदश्रुत्या भावनासम्बन्धित्वेन प्रतिपादयतीत्यर्थः। अत्र यजिशब्दस्य यागसामान्य-परत्वमभिधात्र्या श्रुत्येत्यभिप्रायेणाभिधात्रीमित्युक्तम्। वाक्याद्विशेषस्येति भाष्यस्यार्थमाह—**दर्शपूर्णमासेति**। अत्र यजिशब्दोऽध्याहर्तव्यः। यजेतेत्ययं भावनासम्बन्धित्वेन प्रतिपादयतीत्येतत् सर्वमनुषज्यते। अध्याहृतो यजिः याग-सामान्यवचनोऽपि यदाग्नेयादिवाक्यविहितकालसम्बन्धपुरस्कारेण प्रवृत्तदर्शपूर्णमासनामधेयेन सामानाधिकरण्येन यागविशेषेऽवस्थाप्यते; कुत्र विशेष इत्यपेक्षायामुक्तमेवार्थं विवृणोति—**तत्रेति**। **प्रकृतत्वाविशेषेऽपि** तत्र आग्नेया-दिषु पौर्णमास्यमावास्याकाल**विशिष्टेष्वेवावस्थाप्येत न प्रयाजादिष्वपि**; तेषां कालसंयोगाभावात् इत्यर्थः। ननु यागसामान्यस्येव यागविशेषस्यापि यजिपदोपस्थाप्यत्वाविशेषादुभयोरपि भावनासम्बन्धः पदश्रुत्यैवेति जातम्। तथा च कथमेकं वाक्यगम्यमपरं श्रुतिगम्यमित्युच्यत इत्यत आह—**तस्मादिति**। यजेः शक्त्यैव पदान्तरसमभि-व्याहारनैरपेक्ष्येण यागसामान्यपरत्वे सिद्धे तस्य भावनासम्बन्ध इति श्रुतित्वव्यपदेशः। यजेर्यागविशेषपरत्वं दर्शपूर्णमासपदसमभिव्याहारेण भवति। समभिव्याहारेण च यागविशेषपरत्वे सिद्धे तदनन्तरं तस्य भावनान्वय इतीदं **विलम्बितं दृष्ट्वा वाक्यमित्युक्तमित्यर्थः**। नन्वभिधानश्रुतिगम्यस्यापि यागसामान्यस्य समभिव्याहार-लक्षणवाक्यगम्यस्यापि यागविशेषस्य पदश्रुत्या भावनासम्बन्धस्य तुल्यत्वात् तयोर्युगपदेव भावनान्वयोऽस्त्वित्या-

## भाष्यसन्दर्भयोजिनी

अत्रत्यचोद्यपरिहारभाष्यसन्दर्भस्यायं विषयसङ्ग्रहः—'चोदनाशेषभावाद्वा' इति सूत्रेण प्रयाजाद्यङ्गानां सर्वयागार्थत्वं निराकृत्य विशेषयागार्थत्वं व्यवस्थापनीयम्। सूत्रगत 'चोदना' शब्दस्य 'कर्मचोदना' इति भाष्यकारेण विवरणं क्रियते। का सा कर्मचोदना, यस्याः शेषभावमवाप्य धर्मा व्यवस्थिता भवेयुः? तत्रोच्यते—

## भाष्यम्

तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते । किन्तर्हि ? वाक्यार्थः । किं करणम् ? श्रुत्यर्थे परिगृह्यमाणे

## टुप्टीका

तस्मादिदं विलम्बितं दृष्ट्वा वाक्यमित्युक्तम् । न च सकृदुच्चरितः प्रकृताप्रकृतवचनः वाक्यात्प्रकृतवचनश्च सम्भवति ।

इतरस्त्वाह—य एव यागा विपरिवर्तन्ते त एव फलेन सम्बध्यन्ते । कुतः ? रूपवतां सन्निधावरूपः

## वार्तिकाभरणम्

शङ्कायां प्रवृत्तस्य न चैतद्युगपद्भवतीति भाष्यस्यार्थमाह—न चेति । सकृदुच्चारितो यजिरभिधात्र्या श्रुत्या प्रकृताप्रकृतसर्वयागवचनस्सन् पुनरपि समभिव्याहारलक्षणवाक्यवशेन प्रकृतमात्रवचोऽपि भवति; अभिधानश्रुति लब्धस्य यागसासामान्यवचनस्य शीघ्रत्वेन समभिव्याहारलक्षणवाक्यलब्धस्य यागविशेषवचनत्वस्य विलम्बितत्वात् । तथा चोभयोः पदश्रुत्या भावनासम्बन्धस्य तुल्यत्वेऽपि यागसामान्यवचनत्वस्य शीघ्रत्वेन यागसामान्यस्य भावनया सम्बन्धस्य शीघ्रत्वात् यागविशेषवचनत्वस्य विलम्बितत्वेन यागविशेषस्य च भावनया सम्बन्धस्य विलम्बितत्वात् न तयोः युगपद्भावनान्वयः सम्भवति । एवं च प्रबलप्रमाणेन यागसामान्ये भावनायां करणत्वेनान्विते सति नैराकाङ्क्ष्यात् यागविशेषस्य करणत्वेनान्वयासम्भवात्, यागसामान्यस्यैव भावनाकरणत्वमित्यर्थः ।

चोद्यभाष्यस्याभिप्रायमुक्त्वा परिहारभाष्यस्याभिप्रायमाह—इतरस्त्विति । इतर इति चोदयितृपेक्षया इतरः परिहर्तेत्यर्थः । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्यसन्निधौ यदाग्नेयादिवाक्यविहिता य एवाग्नेयादयो यागाः फलाकांक्षिणस्सन्तो मनसि विपरिवर्तन्ते त एव फलेन सम्बध्यन्ते; न सर्वे यागा इत्यर्थः । ननु कथं यागविशेषस्य भावनासम्बन्ध इति पृच्छति—कुत इति । उत्तरमाह—रूपेति । रूपवतां लब्धद्रव्यदेवतानामाग्नेयादीनां सन्निधावरूपो द्रव्यदेवताहीनो यजिश्शिष्यमाणः स्वस्य यागत्वसिध्यर्थमेव प्रकृतयागग्राहकः प्रकृताग्नेयादियागविशेषरूपो भवतीत्यर्थः । ननु यजेतेत्यत्र विद्यमानोऽपि यजिः रूप [ वान् ] 'अग्निर्मूर्धा दिवः ककुत्' इत्यादिमन्त्रलब्धाग्न्यादिदेवताभिः प्रकरणगतवाक्यलब्धद्रव्येण च रूपलाभात् इत्यत आह—

## भाष्यसन्दर्भयोजिनी

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । इदञ्च वाक्यमाग्नेयादीन् षड्यागान्विधाय तेषां फलविशेषसम्बन्धं बोधयितुं प्रवृत्तम् । फलस्य रागतः प्राप्तत्वादविधेयत्वं तावत्स्पष्टम् । फलोद्देशेन यागो विधेयः । स च तत्तदुत्पत्तिवाक्येन विहितः । विहितस्यापि तस्य फलसम्बन्धबोधनाय पुनर्विधानमङ्गीकर्तव्यम् । पुनर्विधानावसर एव चोद्यानि परिहाराश्चापतन्ति । फलोद्देशेन यजेर्विधाने तस्य भङ्गित्वात् फलसाधनत्वं न सेत्स्यतीत्यपूर्वमेष्टव्यम् । तस्यैव कर्तव्यता समापतति—कथं यागेनापूर्वं कर्तव्यमिति । आकाङ्क्षाया अस्याश्शमनाय वक्तव्यम्-प्रयाजादिभिरुपकृतेन यागेनापूर्वं सम्पादनीयमिति । अपूर्वञ्च फलस्थानापन्नम्, फलस्य स्वर्गादेः कालान्तरभावित्वात् । अपूर्वस्य कर्तव्यतायां सिद्धायां प्रयाजादयो धर्मास्तदर्था भवन्ति । अपूर्वाणां भेदश्शब्दान्तरादिभिः प्रमाणैस्सिद्ध इति धर्माणां व्यवस्था सिध्यति । अत्रैव प्रश्न उदेति-कर्मचोदनायामस्यां दर्शपूर्णमासाभ्याम् इत्यस्य शब्दस्य को व्यापारः ? यदि यागस्य विशेषणमित्युच्यते, तर्हि नोपपद्यते, यागस्यापूर्वं प्रति गुणभूतत्वात्तद्विशेषणमिदं

## भाष्यम्

**दर्शपूर्णमासशब्दोऽनर्थको भवति। यजतिश्चानुवादः। यजत्यात्मकत्वाद्दर्शपूर्णमासयोः।**

## टुप्टीका

**शिष्यमाणः प्रकृतग्राहकः। यजेतेति चायमरूपः। तत्र प्रकृतत्वाविशेषात्सर्वयागेषु प्रसक्तेषु दर्शपूर्णमासशब्द-**

## वार्तिकाभरणम्

**यजेतेति।** "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति वाक्येन कथञ्चित् द्रव्यलाभेऽपि 'अग्निर्मूर्धा दिव'इत्यादिमन्त्राणां क्रमप्रकरणाभ्मामाग्नेयादियागेष्वेव विनियुक्तत्वात् तद्वशेन देवतालाभाभावादयं यजिररूप एवेत्यर्थः। नन्वस्मिन् प्रकरणे ये यागा विहिताः तेषामाग्नेयादीनां प्रयाजादीनां च सर्वेषामपि प्रकृतत्वाविशेषात्सर्व-यागपरत्वं यजेः स्यादित्यत आह—**तत्रेति।** यद्यपि प्रयाजादयोऽपि यागाः प्रकृतास्तथाप्ययं यजिर्दर्शपूर्णमासपद-सामानाधिकरण्याद्ये दर्शपूर्णमाससंज्ञका आग्नेयादियागास्तानेव गृह्णाति; न प्रयाजादीन्। तथा च दर्शपूर्णमास-पदवाच्या एवाग्नेयादयः फले विधीयन्त इत्यर्थः। दर्शपूर्णमासशब्दो हि प्रसिद्धार्थत्वात् शक्नोति सामान्यवाचिनं यजिं स्वविषयेऽवस्थापयितुम्-इत्युक्तं चतुर्थे। ननु अविशेषेण श्रुत्या प्रवृत्तस्य यजेः प्रकृतयागपरत्वे श्रुतिर्बाध्येतेति चेत्—स्यादेतदेवम्। यदि यजिर्लक्षणया अर्थान्तरपरः स्यात्; न त्वेवमस्ति। किं तर्हि यजिः यजिविशेषपर इत्यङ्गीक्रियते। एवं च यथा गोत्वसामान्यं प्रति गोव्यक्ति समान्ये प्रवर्तते, एवं यजिसामान्यस्य प्रतिविशेषं समाप्तत्वेन न श्रुत्या प्रतीयमानं यागसामान्यं बाध्यत इति न श्रुतिबाधः। ननूक्तरीत्या यजिरेव यागविशेषार्थ-कत्वपरिकल्पनेन श्रुत्यर्थस्यैव विधानात् कथं वाक्यार्थविधानमिति सिद्धान्त इति चेन्न; यजेर्यागविशेषार्थकत्वस्य पदान्तरसमभिव्याहारलभ्यत्वेन तदभिप्रायेण वाक्यार्थविधानमिति प्रागेवोक्तत्वात्। एवं तर्हि 'नैवात्र श्रुत्यर्थः परिगृह्यते। किं तर्हि वाक्यार्थः' इति परिहारभाष्यस्य किं कारणम्? 'श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽ-नर्थको भवति; यजतिश्चानुवादः, यजत्यात्मकत्वात् दर्शपूर्णमासयोः यजतिसामानाधिकरण्याच्च दर्शपूर्णमास-शब्दस्ये'ति तत्समर्थनपरभाष्यस्य चायमर्थः-एवं तर्हि श्रुत्यर्थवाक्यार्थयोः युगपदन्वयासम्भवेनैवात्र श्रुत्यर्थः परिगृह्यते; श्रुतिमात्रोपनिपातियागमात्रं न विधीयते; किं तर्हि वाक्यार्थः? नामधेयैकवाक्यताबलेनाग्नेयादि यागविशेषा एव फले विधीयन्ते इत्यर्थः। वाक्यार्थविधाने कारणं किं इति पृच्छति—**किं कारणमिति।** उत्तर-माह—**श्रुत्यर्थे इति।** सर्वात्मना वाक्यार्थं विधाय श्रुत्यर्थयागमात्रे विधीयमाने दर्शपूर्णमासपदस्याग्नेयादि-नामधेयत्वेन सर्वयागनामधेयत्वेनान्वयासम्भवादानर्थक्यं स्यात्। तथा चानर्थक्यपरिहारार्थं वाक्यार्थस्यैव विधानमङ्गीकर्तव्यमित्यर्थः। **यजतिश्चानुवाद इति** भाष्यस्यायमर्थः-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यत्र विद्यमानो यजिर्न कर्मान्तरविधायकः, तस्यारूपत्वात्। अतः दर्शपूर्णमासपदविशेषितेन षड्यागाननूद्य फल-

## भाष्यसन्दर्भयोजिनी

कथं स्यात्? 'गुणानाञ्च परार्थत्वात्' इति न्यायेन यागविशेषणं दर्शपूर्णमासपदं न स्यादिति। अत्रेदं परिहार भाष्यम्—'नैवात्र यागो विशेष्यते, किं तर्हि? अपूर्वभावनैवोभयपदविशिष्टोच्यते' इति। अपूर्वभाव्यकभावनैव दर्शपूर्णमासयागोभयविशिष्टा विधीयत इति। अत्रैवारुणावाक्यदृष्टान्तः। यथाऽऽरुण्यपिङ्गाक्षित्वादिक्रयविशिष्ट-भावना विधीयते, तथा दर्शपूर्णमासयागोभयपदविशिष्टापूर्वभावना विधीयत इति। दृष्टान्तदार्ष्टान्तिकयो-र्वैषम्यं चोदितम्-अरुणाशब्दो गुणवाची, ततोऽन्यद् द्रव्यमुच्यते पिङ्गाक्ष्यादिशब्देन। तादृशी स्थितिर्दर्शपूर्णमास-

## भाष्यम्

**यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य ॥ ३ ॥**

## टुप्टीका

**वाच्या एव फले विधीयन्ते। यजतिसामानधिकरण्याच्च दर्शपूर्णमासशब्दस्य। अतो भावयेद्यागेन करणेन दर्शपूर्णमाससंज्ञकेनेति। दर्शपूर्णमासाभ्यां स्वर्गमिति फलेनोपसंहृतं भाष्यकारेण ॥ ३ ॥**

## वार्तिकाभरणम्

सम्बन्धमात्रमनेन वाक्येन विधीयते। तथा च प्रकृतयागानुवादेन फलसम्बन्धविधानात् प्रकृतविषयत्वं यजेरित्यर्थः। ननु यागविशेषस्यैव फलसम्बन्धित्वेन विधाने यजिश्रुतिर्बाधिता स्यादित्यत आह—यजत्यात्मकत्वादिति। यागविशेषरूपयोरपि दर्शपूर्णमासयोः यजत्यात्मकत्वान्न यजिश्रुतेर्बाधः। सामान्यस्य च विशेषकत्वासम्भवात् इति प्रागेवोक्तत्वादित्यर्थः। कथं दर्शपूर्णमासयोः यजत्यात्मकत्वम् इत्याशङ्क्य तत्र हेतुमाह—यजेतेति। सामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य दर्शपूर्णमासयोः यजत्यात्मकत्वमित्यर्थ इति परिहारभाष्यस्य तात्पर्यार्थमुक्त्वा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति' वाक्यस्यार्थमाह—**अत इति** यतो भाष्यस्यैवमर्थः अतः कारणात् भावयेत् स्वर्गम् केन करणेन यागेन तत्रापि न सर्वेण यागेन किन्तु दर्शपूर्णमाससंज्ञकेनेत्यर्थः। तेन धात्वर्थस्यैव फलसाधनत्वात् भावार्थाधिकरणविरोधादिदोषः परिहृतो भवति। नन्वेवं तर्हि भाष्यकारेण कथमेकादशाद्ये दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति नामार्थस्यैव फलसम्बन्धो दर्शित इत्यत आह—**दर्शपूर्णमासाभ्यामिति**। वस्तुतो यागविशेषस्यैव फलसाधनत्वात् तदभिप्रायेण दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् इति फलितं दर्शितं भाष्यकारेणेत्यर्थः ॥ ३ ॥

## भाष्यसन्दर्भयोजिनी

वाक्ये नास्ति। यजतिना योऽर्थ उच्यते यागः, स एवार्थो दर्शपूर्णमासशब्दस्यापीति वैषम्यम्। तदस्य चोद्यस्य सामान्यविशेषरूपं भेदमाश्रित्य परिहारभाष्यं प्रवृत्तम्। सामान्यविशेषरूपेण सत्यपि भेदे 'यजेत' इत्येकपदश्रुत्या सामान्यस्य तद्भिन्नपदोपात्तयोः दर्शपूर्णमासयोर्वाक्येन च युगपदेकत्र समावेशः कथम्, विरोधात्, वाक्यापेक्षया श्रुतेर्बलीयस्त्वेन वाक्ये बाधिते उभयपदवैशिष्ट्यं कथं सिध्यतीति चोद्ये सति परिहारभाष्यं प्रवृत्तम्—'नैवात्र श्रुत्यर्थः परिगृह्यत इति'। श्रुत्यर्थपरिग्रहाभावे न भाष्यकारस्य तात्पर्यम्। श्रुत्यर्थं यागं परित्यज्य नामार्थस्य वाक्यार्थस्य परिग्रहे नाम्नो वाक्यार्थस्य भावनायां करणत्वेनान्वयो वक्तव्यस्स्यात्। तथा सति भावार्थाधिकरणस्य विरोध आपद्येत। तत्र हि भावनायां करणत्वेन धात्वर्थस्यैकपदश्रुत्याऽन्वयस्साधितः। एकादशाद्ये तन्त्राधिकरणे भाष्यकारः—'अथ यागः स्वर्गकामार्थः ततोऽसौ पुरुषस्योपकरोति। तं पुरुषः स्वार्थेन करोति। तथा कर्मचोदना अर्थवती भवति। अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः। तस्माद्यागः स्वर्गकामस्योपकारकः' (पू० मी० ११.१.१; शाबरभाष्यम्) इति कथयन् अत्र कथं श्रुत्यर्थपरिग्रहाभावं ब्रूयात्। श्रुत्यर्थपरिग्रहाभावे तात्पर्यान्तरं कल्पनीयम्। किन्तद् भवत्विति चेत्-शङ्काकर्तुर्मुखमुद्रणे तात्पर्यं कल्पनीयम्। यदा हि वाक्यार्थरूपेणोपस्थितं दर्शपूर्णमासाख्यं नाम गृह्णीमः तदा नामी स्वयं गृहीतो भवतीति श्रुतिवाक्ययोर्विरोध एव नापततीति ॥३॥

## भाष्यम्

### सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ।। ७.१.४ ।।

यत्तु सत्त्ववदिति, अत्र गवाकृतौ धर्मः श्रूयते, आकृतेः पदार्थत्वात् । न च तत्र सम्भवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था विज्ञायते । यथा गङ्गायां घोष इति । तच्च साहचर्यं सर्वपिण्डानामविशिष्टमिति सर्वपिण्डेषु विहितं भवति । तस्मात् सार्वत्रिकं प्रतीयेत ।

## टुप्टीका

सत्त्वं लक्षयित्वा यो धर्म उच्यते स सार्वत्रिकः । गवादयश्चोपदिश्यन्ते । उपादीयमाने विपरीतम् । न च तत्र सम्भवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था । अयुक्तमिदम् । 'पशुमालभेत' इत्यत्राप्येक-

## वार्तिकाभरणम्

उत्पत्त्यविभागाद्वा सत्ववदेकधर्म्यं स्यादिति पूर्वपक्षसूत्रे 'सत्ववदेकधर्म्यं' इति सूत्रावयवः । तस्मात् सर्वार्था भवन्ति; सत्वधर्मवत् । यथा सत्वधर्मो 'गौर्नपदा स्प्रष्टव्य' इति गोत्वसम्बन्धेन श्रूयमाणः तत्रासम्भवात् सम्बद्धेषु पिण्डेषु विज्ञायत इति व्याख्यातो भाष्यकारेण दृष्टान्तो विषम इति वक्तुं सिद्धान्ते 'सत्वे लक्षण-संयोगात्सार्वत्रिकं प्रतीयेत, इति सूत्रं प्रवृत्तम् । तच्च सूत्रं 'यत्तु सत्ववत्' इति । यत्र गवाकृतौ धर्मः श्रूयते आकृतेः पदार्थत्वात् । न च तत्र सम्भवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था विज्ञायत इति व्याख्यातं भाष्यकारेण । तद्व्याख्यानं दुष्टमित्यन्यथा व्याख्यातम् । तत्सूत्रं पठति—'सत्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत' । सूत्रं स्वयं व्याचष्टे—**लक्षयित्वेति** । लक्षयित्वा-उद्दिश्य यो धर्मः विधीयते सः सार्वत्रिको भवति । अयमर्थः-यथा 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहोद्देशेन विधीयमानः सम्मार्गलक्षणो धर्मः सर्वेषामपि ग्रहाणां भवति उद्देश्यगतविशेषण-स्यैकत्वस्याविवक्षितत्वात् । तथा सर्वत्रापि किञ्चिदुद्दिश्य विधीयमानाः धर्माः तत्सजातीयेषु सर्वेषु भवन्तीति । तथा च प्रकृते किमायातमित्यत आह—**गवादय इति** । गौर्न पदा स्प्रष्टव्य इत्यत्र गामुद्दिश्य स्पर्शप्रतिषेधस्य विधीयमानत्वेन तत्र विशिष्टविधिर्नाङ्गीक्रियते । तथा च गोरेवोद्देश्यत्वेन तद्विशेषणस्य एकत्वस्याविवक्षितत्वात् सर्वगवीषु विज्ञायते स्पर्शप्रतिषेध इत्यर्थः । एतावता वा प्रकृते किमायातमित्यत आह **उपादीयमान** इति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र तूद्दिश्य विधानस्य प्रागेव दूषितत्वान्न यागोद्देशेन धर्मा विधीयन्ते; किन्तु यागो धर्माश्च फलभावनायामुपादीयन्ते; फलभावनान्वयानन्तरं च करणभूतयागविशेषस्य धर्माणां चैककर्म्यात् परस्परं नियमः । तथा च प्रकृतयागार्थं धर्मजातं न सर्वयागार्थमित्युपादीयमाने यागे तदर्थं धर्मजातं विपरीतम्; न सार्वत्रिकम् इत्यर्थः । स्वयं सूत्रं व्याख्याय भाष्यं दूषयितुं तदनुवदति—**न चेति** । भाष्यस्या-यमर्थः—तत्र गोत्वजातौ श्रूयमाणः स्पर्शप्रतिषेधो न सम्भवति । जातेरमूर्ततया स्पर्शप्रसक्त्यभावेन तत्प्रतिषेधा-सम्भवात् । तस्मात् असौ गोत्वजातिः यस्सहचारिव्यक्तिरूपपिण्डः आश्रयत्वेन जातिमात्रसमनियतः तल्लक्षणार्थः ।

## भाष्यसन्दर्भयोजिनी

पूर्वपक्षिणा 'सत्त्ववत्' इति दृष्टान्तयता धर्माणां सर्वार्थत्वमुक्तं तत्परीक्षते-**यस्त्विति** । आकृत्यधिकरण-न्यायेनाकृतेः पदार्थत्वाद् गवाकृतौ श्रूयमाणस्सर्वगोव्यक्तिषु सम्भन्त्स्यते, तद्वैषम्यं दर्शयति-**इहत्विति** । **गुणभावेन**

## भाष्यम्

इह तु यजेर्गुणभावेन श्रवणान्नैव यजौ धर्माः श्रूयन्ते। किं तर्हि? अपूर्वं इति। एवमपदिष्टो हेतुः। तस्मादनुपन्यासः सत्त्ववदिति ॥ ४ ॥

# अविभागात्तु नैवं स्यात् ॥ ७.१.५ ॥

अथ तुशब्दः पक्षव्यावृत्तौ। नैतदेवम्-अपूर्वप्रयुक्ता धर्मा इति। यजिप्रयुक्ता एव। कुतः? अविभागात्। यजिनाविभागो धर्माणाम्। प्रत्यक्षं केचिद् द्रव्ये श्रूयन्ते, केचिद्देवतायाम्, केचिन्म-

## टुप्टीका

स्यालम्भो न स्यात्। अनेन न्यायेनाकृतिलक्षितासु व्यक्तिषु सम्भवात्। शक्यते वाकृतिः स्प्रष्टुम्। तस्मादनेन न्यायेन यत्सार्वत्रिकमुक्तं तदतिप्रसज्यते ॥ ४ ॥

अनेन सन्निपत्योपकारकास्तदर्था उच्यन्ते। तन्मध्यपातात् प्रयाजादीनामर्थादङ्गतामाह ॥ ५, ६ ॥

## वार्तिकाभरणम्

तथा च गोशब्दस्य लक्षणया व्यक्त्यर्थकत्वात् गोत्ववैशिष्ट्यस्याविशेषात् सर्वासु व्यक्तिषु प्रतिषेधः सम्भवतीत्यर्थः। भाष्यं दूषयति—**अयुक्तमित्यादिना**। इति यदुक्तं तदिदमयुक्तम्। कथम् यदि जातौ श्रूयमाणाः धर्माः तत्र असम्भवात् व्यक्तिषु विज्ञायन्त इत्यङ्गीक्रियते तदा अनेन उक्तेन तत्रासम्भवात् इति न्यायेन स्पर्शप्रतिषेधवत् सर्वत्र जातौ श्रूयमाणस्य धर्मस्य तल्लक्षितासु सर्वासु व्यक्तिषु सम्भवात् पशुमालभेतेत्यत्रापि पशुत्वजातौ श्रूयमाण आलम्भः स्पर्शः जातिविशिष्टासु सर्वासु व्यक्तिषु भवतीति सर्वेषां पशूनामालम्भः स्यात्। न त्वेकस्य पशोरित्यर्थः। तत्रासम्भवादन्यत्र कर्तव्यमित्येदभ्युपगम्यातिप्रसङ्गमुक्त्वा असम्भव एव नास्तीत्याह—**शक्यते चेति**। गौर्न पदा स्प्रष्टव्य इत्यत्र स्पर्शप्रसक्तिः। 'पशुमालभेत' इत्यादौ स्पर्शश्चाकृतावेव सम्भवति; जाति-व्यक्त्योः अत्यन्तभेदाभावात् इत्यर्थः। पूर्वोक्तदूषणमुपसंहरति—**तस्मादिति**। अनेन न्यायेन सार्वत्रिकमिति भावप्रधानो निर्देशः। जातौ श्रूयमाणानां यत्सार्वत्रिकत्वमुक्तं तत् 'पशुमालभेत' इत्यादावतिप्रसज्यते। तस्मात् प्रथमव्याख्यानमेव युक्तम्। एवं च पशुमालभेतेत्यत्र पशोरुपादीयमानत्वेन तद्गतसङ्ख्याया विवक्षितत्वेन एकस्यैव पशोरालम्भ इति नातिप्रसङ्गः। गौर्न पदा स्प्रष्टव्य इत्यत्र गामुद्दिश्य प्रतिषेधविधानादुद्देश्यगतसङ्ख्याया अवि-वक्षितत्वात् स्पर्शप्रतिषेधः सर्वगवीषु विज्ञायते। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र तु विशिष्टविधानेन यागस्यापि विधेयत्वेन भावनान्वयद्वारा विधेययागविशेषार्थतैव धर्माणां स्यात्; न सर्वयागार्थत्वमित्यर्थः ॥ ४ ॥

## भाष्यसन्दर्भयोजिनी

भावनोपसर्जनत्वेन। किमुद्दिश्य धर्मा विधीयन्त इत्यत्राह-**अपूर्वं इतीति**। सत्त्ववदिति दृष्टान्तेन धर्माणां सर्वार्थत्व-मिति यो **हेतुः सोऽपदिष्टः** निराकृतः। उपसंहरति-**तस्मादिति** ॥ ४ ॥

शङ्कासूत्रमिदम्। धर्माणामपूर्वप्रयुक्तत्वं यदुक्तं व्यवस्थावादिना, तत्र शङ्कते-**नैतदेवम्**। यजिप्रयुक्तत्वे

### भाष्यम्

न्त्रेषु । एवञ्च यजिः यद्द्रव्यं देवतामुद्दिश्य मन्त्रेण त्यज्यते स एव प्रत्यक्षो यजिना सम्बन्धो धर्माणाम् । अपूर्वेण त्वानुमानिकः । फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः 'स्वर्गकामो यजेत' इति । आनुमानिकोऽपूर्वेण । अनुमानाच्च प्रत्यक्षं बलीयः । तस्माद्यज्यर्था धर्माः ।

ननु यजिर्भङ्गित्वात्कालान्तरे फलं दातुमसमर्थः । तत्र कृता धर्मा अनर्थका एव भवन्तीत्युक्तम् । अत्र स्थितस्य न्यायस्याक्षेपेण प्रत्यवस्थानं क्रियते । तैलपानवदेतद् भविष्यति । यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधा-स्मृति-बल-पुष्ट्यादीनि फलानि करोति । एवं यजिरपि करिष्यति । किं नोऽदृष्टाश्रुतेनापूर्वेण कल्पितेनेति ।। ५ ।।

## द्व्यर्थत्वञ्च विप्रतिषिद्धम् ॥ ७.१.६ ॥

एवञ्च सति सर्वे धर्मास्सर्वार्था भवन्ति । तथा चैन्द्राग्नादिषु प्रयाजादयस्सन्ति । तत्र सौर्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते-'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति । इतरथा प्रयाजाश्च विधातव्याः, प्रयाजेषु च कृष्णलहोमः । तथा च द्व्यर्थं तत्स्यात् । द्व्यर्थत्वञ्च विप्रतिषिद्धम् ।

### भाष्यर्थयोजिनी

सौत्रं हेतुं विवृणोति–**यजिनेति** । यागेन साकं धर्माणां विभागाभावादित्यर्थः । अविभागमेव दर्शयति-**प्रत्यक्षमिति** । यागस्य रूपद्वयम्-द्रव्यं देवता च । देवतायै द्रव्ये प्रक्षिप्यमाणे मन्त्रस्याप्यावश्यकतेति यागशरीर इमे त्रयस्सन्ति । यागेन सह धर्माणां प्रत्यक्षस्सम्बन्धः, विना धर्मैः यागशरीरं सम्पादयितुमाशक्यत्वात् । यागे कृतेऽपूर्वं जायते, तेन सह धर्माणां सम्बन्ध **आनुमानिकः**-पारम्परिकः । यथा धर्माणां यजिना सह सम्बन्धः प्रत्यक्षः, तथैव फलेनापि सहेत्याह-**फलेऽपीति** । अतो यज्यर्था धर्माः ।। ४ ।।

नन्वित्यादि भाष्यं स्पष्टार्थम् । **अत्र स्थितस्येति** । अत्र-अपूर्वविषये **स्थितस्य न्यायस्य**-अपूर्वाधिकरणेन सिद्धस्येत्यर्थः । **प्रत्यवस्थानं** विरोधः । दृष्टान्तमुपपादयति-**यथेति** । तैलपानं घृतपानं वा क्रियारूपम् । तन्नाशेऽपि कालान्तरे मेधादीनि फलानि जायन्त एव, तथैव यागे ध्वस्तेऽपि कालान्तरे फलं यागध्वंसः करिष्यति । किं नः प्रयोजनमदृष्टस्याश्रुतस्य चापूर्वस्य कल्पनेनेत्यर्थः । एतेन यागध्वंसस्य फलं प्रति कारणत्वमुक्तं भवति ।। ५ ।।

**एवञ्च सति**-एवमङ्गीकारे सर्वार्थत्वं धर्माणां सिद्धं भवति । अस्मिन्नर्थे साधकं लिङ्गमुदाहरति-**तथाचेति** । अथवा-यागशरीरे प्रदर्शिता द्रव्यदेवतामन्त्राः सन्निपत्योपकारकाण्येवाङ्गानि बोधयन्ति, न त्वारादुपकाणीति चेदाह—**तथाचेति** । तथा च विकृतिषु सौर्यादियागेषु प्रयाजाननूद्य तत्र कृष्णलसम्बन्धः प्रदर्शितः । तेन ज्ञायते विकृतिषु प्रयाजानामङ्गत्वमिति । यदि सर्वार्था धर्मा न स्युः तर्हि प्रयाजदर्शनमत्र कथमुपपद्येत । अतः यथा सन्निपत्योपकारकाणि सर्वार्थानि, तथाऽऽरादुपकारकाण्यपीति सिध्यतीति । कृष्णलः-सुवर्णखण्डः । प्रतिप्रयाजं कृष्णलहोमः । **इतरथा** आरादुपकारकाणां सर्वार्थत्वाभावे । प्रयाजानां विधानं तत्र कृष्णलहोमश्च विधेय इति-

भाष्यम्

तस्माद्यजिप्रयुक्ता धर्मा इति ॥ ६ ॥

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिस्स्यात्ततश्च कर्मभेदस्स्यात् ॥ ७.१.७ ॥

नैतदेवम्-यजिप्रयुक्ता धर्मा इति। चोदनायां प्रवृत्तिस्स्यात्। चोदनेत्यपूर्वं ब्रूमः। चोदनार्थत्वात्-अपूर्वार्थत्वादपूर्वप्रयुक्ता धर्माः। फलवत्त्वादित्युक्तो हेतुः। यत्तु प्रत्यक्षो यजिसम्बन्धो धर्माणामिति, अत्र ब्रूमः-उत्पत्तौ विध्यभावात्। उत्पत्तिरिति यजिं ब्रूमः। उत्पत्तौ यजौ नास्ति विधिः-यज्यर्था धर्मा इति। केवलं यजौ श्रूयन्ते क्रियन्ते च। नैतावता तदर्था भवन्ति। यथा वाससि रागः श्रूयते वासो रञ्जयतीति वासांसि क्रियन्ते। न चासौ तदर्थः, स्त्र्यर्थः पुरुषार्थो वा भवति। एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्चापूर्वार्था भवेयुरर्थवत्वाय। ततश्च धर्मभेदस्स्यात्, यतोऽपूर्वार्था इति।

यश्च यजेः प्रत्यक्षः फले गुणभाव इति, स नाक्कृत्वापूर्वं भवतीति प्राणालिको विज्ञायते। प्रणाड्यापि च येन क्रियते तत्कारणं भवति। यथा-गोमयैः पचति, तुषपक्वा भवन्तीति। यत्तु

भाष्यसंदर्भंयोखिनी

द्रव्यर्थं तत्स्यात्-प्रयाजकृष्णलद्वयविधानार्थत्वं स्यात् तच्च विप्रतिषिद्धम् गौरवादिति भावः। सर्वार्थत्वमुपसंहरति-तस्मादिति ॥ ६ ॥

शङ्कापरिहारसूत्रमिदम्। कृतां शङ्कां परिहरति-नैतदेवमिति। इतीत्यनेनान्वयः। यजिप्रयुक्ता धर्मा इति नैतदेवम्। यजिप्रयुक्तत्वाभावे सौत्रं कारणमाह-चोदनायां प्रवृत्तिस्स्यात्। यागे प्रवृत्तोऽपि पुरुषः यागस्य भङ्गित्वेन पुरुषस्य चोदनायामपूर्वे प्रवृत्तिस्स्यादित्यर्थः। चोद्यते-प्रेर्यतेऽनेनेति चोदनाऽपूर्वम्। यजेतपदे सत्यपि यागेनापूर्वमेव सम्पादनीयमित्यपूर्वार्थत्वेनैव प्रवृत्तिरिति भावः। अपूर्वार्थत्वात्तत्प्रयुक्ता धर्मा भवेयुः। फलवत्वात् अपूर्वस्यैव फलोत्पत्तिप्राक्काले वर्तमानत्वात् तदेव फलवदिति भावः। धर्माणां यजिसम्बन्धः प्रत्यक्ष इति यदुक्तं तत्रोत्तरयति-अत्र ब्रूम इति। 'दर्शपूर्णभासाभ्यां यजेत' इत्यत्र प्रयाजादीनां यजिसम्बन्धोऽस्तीति विधिर्नास्ति, येन यज्यर्थत्वं धर्माणामवगम्येतेत्याह-उत्पत्ताविति। यजिं प्रकृत्य श्रूयन्तेऽनुष्ठीयन्ते च धर्माः। श्रवणानुष्ठानमात्रेण यज्यर्थत्वं न निर्णेतुं शक्यमित्यत्र दृष्टान्तयति-यथेति। वासो रञ्जयतीति वाससि रागः श्रूयते, वासांसि चोत्पाद्यन्ते। तावता रागो न वासोऽर्थो भवति। किमर्थत्वं रागस्येत्यत्राह-स्त्र्यर्थः पुरुषार्थो वेति। स्त्रियः पुरुषा वा रक्तवस्त्रं धारयितुमिच्छन्ति, अतो वासांसि रञ्जयन्ति तन्तुवायाः। एवं प्रकृतेऽपीत्याह-एवमिहापीति। अर्थवत्वाय प्रयोजनवत्वाय। यतोऽपूर्वार्थाः ततश्च धर्मभेद इत्यन्वयः।

यत्तूक्तं यागस्य फलेन साकं साक्षात् सम्बन्धः 'यजेत स्वर्गकामः' इति, तत्समाधीयते-स नाक्कृत्वापूर्वमित्यादिना। यजेः फलेन साकं गुणभावे सत्यपि सः यजिः अकृत्वापूर्वं अपूर्वमनुत्पाद्य गुणभावं नावाप्नोति। अतः प्राणालिकः गुणभावः परम्परयेत्यर्थः। परम्परया कारणत्वे दृष्टान्तः-गोमयैः पचति, तुषपक्वा भवन्ति। अग्नि-

### भाष्यम्

तैलपानवद्यजितः फलं भविष्यतीति, अत्र ब्रूमः-तैलपानस्यापि न कालान्तरे फलं भवति। धातुसाम्यं तस्य फलम्, तच्च तत्कालमेव। यच्च फलं बलपुष्ट्यादि तत्सम्यगाहारपरिणामाद् भवति। तस्माद्विषम उपन्यासः ॥ ७ ॥

## यदि वात्यभिधानवत्सामान्यात्सर्वधर्मस्स्यात् ॥ ७.१.८

यद्यप्यपूर्वं प्रयोजकं धर्माणाम्, तथापि सर्वधर्मस्स्यात् स स पदार्थः। अभिधानवत्सामान्यात्। अभिधानं तावदेतेषां समानम्। अपूर्वमित्यभिधानवत् धर्मेणाप्यस्य समानेन भवितव्यम्, वाहीकवत्। यथा-वाहीकोऽतिथिरागतः यवान्नमस्मै प्रक्रियतामित्युक्ते यो यो वाहीकस्तस्य तस्य यवान्नं क्रियते। यथावा-अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यमिति। सर्वत्र हि अक्ष्यामये मुद्गौदनो भुज्यते उदरामयेऽपि पयः पीयते। एवमिहाप्येकस्यापूर्वस्य ये धर्माः श्रुतास्ते सर्वापूर्वाणां भवितुमर्हन्ति।

अपि चारुणपराशरा नाम शाखिनः। तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति-'ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य च इत्यारभ्य यावत्सर्वाः प्रकृतिविकृतयोऽनुक्रान्ताः' इति। तच्चानुक्रमणमेतमेव न्यायं सूचयति। तस्मादपूर्वप्रयुक्तत्वेऽपि सर्वे धर्मास्सर्वार्था इति ॥ ८ ॥

### भाष्यसंदर्भयोजिनी

मनुत्पाद्य गोमयानां पाकसाधनत्वमनुपपन्नमिति प्राणालिकस्साधनभावो यथा तथा प्रकृतेऽपि। तैलपानवदिति दृष्टान्तं निरस्यति **अत्र ब्रूमः** इत्यादिना। तैलपानस्य बलपुष्ट्यादि न फलम्, किन्तु **धातुसाम्यम्** वातपित्तकफानां साम्यसम्पादनम्। अत्र तैलपदमेरण्डतैलपरं तदेव पिबन्ति शिशून् पाययन्ति च। बलं पुष्टिर्वा भुक्ताहारस्य सम्यग्जरणादिनैव भवति। अतो दृष्टान्तवैषम्यम् ॥ ७ ॥

अपूर्वप्रयुक्तत्वं धर्माणामङ्गीकृत्य पूर्वपक्षी प्रत्यवतिष्ठते-**यद्यपीति**। **तथापि** अपूर्वस्य प्रयोजकत्वेऽपि। **स स पदार्थः** प्रयाजादिः। अभिधानवत्सामान्यात् इति सूत्रखण्डं विवृणोति-**अभिधानमिति**। पूर्वं न भवतीत्यपूर्वम् इति **एतेषां** अपूर्वाणां समानम्। यथा समानमभिधानं तथा धर्मोऽपि समान एव। अत्र दृष्टान्तः-**वाहीकवत्**। वाहीकदेशोद्भवो वाहीकः। एकं वाहीकमुद्दिश्य यवान्नमस्मै परिवेष्टव्यमित्युक्ते यो यो वाहीकः सर्वेभ्योऽपि यवान्नपरिवेषणं सिध्यति, सामान्यात्। उदाहरणान्तरं प्रदर्शयति-**अक्ष्यामये** अक्षिपीडायाम्। उदरपीडायां **पयः** जलम्। यत्र यत्रामयाविमौ भवतः तत्र तत्र मुद्गौदनभक्षणपयःपाने भवतः, अनेन दृष्टान्तेन **एकस्यापूर्वस्य** सिद्धये ये धर्माः श्रुतास्ते सर्वेषामपूर्वाणामिति सर्वार्था धर्माः।

धर्माणां सर्वार्थत्वे प्रमाणमेवोपस्थापयति-**अपिचेति**। **तेषां परिचरेषु**-सूत्रेषु। **स्मृतिरूपं ब्राह्मणं** न तु ब्राह्मणभागः। **यावत्सर्वाः** यावत्यः प्रकृतयो विकृतयश्च तास्सर्वा इत्यर्थः। इयं स्मृतिरेव धर्माणां सर्वार्थत्वे प्रमाणम्। अतोऽपूर्वप्रयुक्ता अपि धर्माः सर्वार्था भवन्तीत्युपसंहरति-**तस्मादिति** ॥ ८ ॥

## वार्त्तिकाभरणम्

भाष्यकारेण 'अविभागात्तु नैवं स्यात्' इति पूर्वपक्षिशङ्कासूत्रव्याख्यानावसरे 'अविभागात् यजिना त्वविभागो धर्माणाम् प्रत्यक्षं केचिद्द्रव्ये श्रूयन्ते, केचित् देवतायाम्, केचिन्मन्त्रेषु, स एष यजिर्यद्देवतामुद्दिश्य द्रव्यं मन्त्रेण त्यज्यते स एष प्रत्यक्षो यजिना सम्बन्धो धर्माणामि'ति यजिना सम्बन्धात् प्रोक्षणावघातादीनां यागार्थत्वमेव नापूर्वार्थत्वमित्याशङ्क्य 'द्व्यर्थत्वञ्च विप्रतिषिद्धम्' इत्यादिलिङ्गदर्शनसूत्रव्याख्यानावसरे 'एवं च सति सर्वे धर्माः सर्वार्था भवन्ति । तथा चैन्द्राग्नादिषु प्रयाजादयस्सन्ति । तत्र सौर्ये कर्मणि प्रयाजादीनां दर्शनमुपपद्यते । 'प्रयाजे प्रयाजे कृष्णलं जुहोतीति' इतरथा प्रयाजाश्च विधातव्याः प्रयाजेषु कृष्णलहोमश्चे'त्यारादुपकारकाणां यज्यर्थत्वे लिङ्गदर्शनमुक्तम् । इदमनुपपन्नम् । शङ्कासूत्रे आरादुपकारकाणां यज्यर्थत्वस्यानुक्तत्वेन तत्र लिङ्गदर्शनोपन्यासस्यायुक्तत्वात् । तस्माद्यथाश्रुतभाष्यं यथाश्रुतसूत्रद्वयं चानुपपन्नं मत्वा शङ्कासूत्रस्य तद्भाष्यस्य च तात्पर्यं वक्तुं तत्सूत्रं पठति—'अविभागात्तु नैवं स्यात्' इति । तात्पर्यमाह—**अनेनेति** । अनेन सूत्रेण सन्निपातिनः अवघातप्रोक्षणादयो यागार्थत्वेनोच्यन्ते । सन्निपातिनां यजिना सम्बन्धस्य प्रत्यक्षत्वादित्यर्थः । नन्वेतावता आरादुपकारकाणां यज्यर्थत्वे किमायातमित्यत आह—**तन्मध्यपातादिति** । प्रयाजादीनामारादुपकारकाणामपि तन्मध्यपातात् प्रोक्षणावघातादीनां प्राचीनानां स्विष्टकृदादीनां पाश्चात्यानां सन्निपातिनां मध्यपातात् सन्दंशोपग्रहात् सन्दंशात्मकग्राहकग्रहणादिदं सूत्रमारादुपकारकाणामपि यागाङ्गत्वमाहेत्यर्थः । अत्र 'अनेन' इतिपदं विपरिणतमनुषज्यते । वक्ष्यन्ति चाचार्यादशमे तृतीयपादाद्याधिकरणे टुप्-टीका-मीमांसावार्तिके नक्षत्रेष्टावाम्नातानां 'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा' इत्येवमादीनामुपहोमानां सन्दंशोपग्रहेणाङ्गत्वम् । ननु श्रुत्याद्यभावादनङ्गत्वमेवोपहोमानां प्राप्नोति । उच्यते—सत्यम् श्रुत्याद्यभावः । किन्तु सन्दंशोपग्रहेण तेषां ग्रहणम् । पूर्वेऽपि पदार्थाः प्राकृताः श्रूयन्ते उपहोमानामपरेऽपि, मध्ये उपहोमास्तस्मात्तेषां ग्रहणमिति । ननु विकृतौ प्रकरणाभावाद्युक्तमुपहोमानां सन्दंशोपग्रहेणाङ्गत्वमिह तु प्रकरणादेव प्रयाजादीनामङ्गत्वात् सन्दंशोपग्रहेणाङ्गत्वमिति कथमुक्तमिति चेत्, सत्यम् प्रकरणादेव प्रयाजादीनामङ्गत्वम् । तत्तु प्रकरणमपूर्वाङ्गत्वे यज्यङ्गत्वे च साधारणम् । तत्र श्रुत्यादीनामुभयसाधारणतया अङ्गत्वेन प्रतीतानामपि सन्निपातिनां यजिना प्रत्यक्षसम्बन्धाद्यज्यङ्गत्वे व्यवस्थिते तन्मध्यपठितानां प्रयाजादीनामपि सन्दंशन्यायेन यज्यङ्गत्वं व्यवस्थाप्यत इति न कोऽपि दोषः । अङ्गतामाहेत्युक्तिरप्यङ्गत्वव्यवस्थापकत्वाभिप्रायेणेति ध्येयम् ।

अत्र शङ्कासूत्रस्य लिङ्गदर्शनसूत्रस्य च विरोधपरिहारस्य कृतत्वादेव 'द्व्यर्थत्वं च विप्रतिषिद्धमि'ति सूत्रं व्याख्यातप्रायमिति मत्वा न पृथग्व्याख्यातमिति द्रष्टव्यम् । **'अविभागात्तु नैवं स्यात्'** इति शङ्कासूत्रस्य **'उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्; ततश्च कर्मभेदः स्यात्'** इति परिहारसूत्रभाष्यं पूर्वपक्ष एव 'अपूर्वे चासम्भवन्त' इत्यर्थतोऽनुवादपूर्वकमाक्षिप्य समाहितत्वेन व्याख्यातप्रायमिति मत्वा तत्सूत्रभाष्यतात्पर्यं नोक्तमिति द्रष्टव्यम् । अत्रापूर्वार्थत्वेऽपि धर्माणां पारिप्लवत्वशङ्कातत्परिहारार्थानि चत्वारि गुणसूत्राणि, निगमनसूत्रं च स्पष्टत्वादाचार्यैः त्यक्तानि । तत्सूत्रपञ्चकभाष्यतात्पर्यार्थं सङ्क्षेपेण वर्णयामः—

'यदि वाप्यभिधानवत् सामान्यात्सर्वधर्मः स्यात्'

भवन्तु नामापूर्वार्थाः धर्माः, तथापि पारिप्लवा एव; यथा अपूर्वमित्यभिधानं सर्वापूर्वाणां साधारणम् तथा एकापूर्वान्विता अपि धर्माः सर्वापूर्वसाधारणा भवन्ति । तद्यथा बाह्लीकोऽत्रातिथिरागतः, ( तत्रान्तरे ) यवान्नमस्मै दीयताम् इति कश्चित्प्रति प्रयुक्ते यो यो बाह्लीकशब्दवाच्यः तस्मै तस्मै यवान्नं स दत्ते, तथेहापि । अपि च 'अरुणपराशरा नाम शाखिनः स्मरन्ति ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य चे'ति । तथा च या याः प्रकृतयः दर्शपूर्णमासज्योतिष्टोमद्वादशाहप्रभृतयः या याश्च तत्तद्विकृतयः तासु तासु विकृतिषु तत्तत्प्रकृत्यु-

### भाष्यम्

## अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणश्शब्दभाव्यत्वाद् विभागाच्छेषाणामप्रवृत्तिस्स्यात् ।। ७.१.९ ।।

उपवर्णनापरिहारस्तावदुच्यते । यदुक्तं वाहीकवदिति, अत्र ब्रूमः । अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु । अर्थो वाहीकत्वं तद्देशसम्बन्धः, सोऽविभक्तः । सर्ववाहीकेष्वनुगत इत्यर्थः । तन्निमित्तश्च प्रीतिविशेषो न पुरुषनिमित्तः । कथं ज्ञायते ? पूर्ववत्त्वात्प्रयोगस्य । पूर्ववानत्र प्रयोगः । बहुशो वाहीकाश्चावाहीकाश्च भोजिताः । तत्रान्वयव्यतिरेकाभ्यां ज्ञातमेतत्—देशनिमित्तेयं यवान्नप्रियता न पुरुषनिमित्ता । तस्मात्तथा स्यात् वाहीकादिष्वभिधानेषु । अथेह

### वार्तिकाभरणम्

पदिष्टधर्मा उपदेशेन भवन्तीति । एवञ्चानेन स्मरणेन एकस्मिन् अपूर्वे उपदिष्टाः धर्माः सर्वेष्वप्यपूर्वेषु उपदिष्टा भवन्तीति न्यायोऽप्यनुगृहीतो भवति । तस्माद् अपूर्वार्थत्वेऽपि धर्माः पारिप्लवा एव । यद्यपीदं स्मरणम् एकत्रोपदिष्टानां धर्माणामविशेषेण सर्वत्र (प्रवृत्तौ) प्राप्तौ नानुग्राहकम्; तथाप्येकत्रोपदिष्टानां क्वचिदन्यत्रोपदेशप्रापकमित्येतावता न्यायानुग्राहकमित्युक्तमिति द्रष्टव्यम् ।।८।।

अर्थस्य त्वविभक्तत्वात् तथा स्यादभिधानेषु पूर्ववत्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वाद् विभागाच्छेषाणाम् अप्रवृत्तिः स्यात् ।

अथ यदुक्तं बाह्लीकवदिति । तत्र ब्रूमः—यो बाह्लीकत्वरूपोऽर्थो बाह्लीके वर्तते, स च सर्वबाह्लीकेष्व विशिष्य सर्वेषां बाह्लीकदेशसम्बन्धित्वाविशेषात् एकस्मै पुरुषायोपात्तमपि यवान्नपरिवेषणं बाह्लीकत्वपुरस्कारेण प्रवृत्तम् न तु पुरुषविशेषपुरस्कारेण, ज्ञायते चान्वयव्यतिरेकाभ्यां बाह्लीकत्वनिमित्ता यवान्नप्रियता न पुरुषविशेषत्वनिमित्ता । तथा च बाह्लीकोऽयं यवान्नेन परिविष्यतामित्यादिप्रयोगेषु बाह्लीकविशेषे उपदिष्टं यवान्नपरिवेषणं

### भाष्यसन्दर्भयोजिनी

उपवर्णनापरिहारः—उदाहरणपुरस्सरं पूर्वपक्षिणा वर्णितानां परिहार उच्यत इत्यर्थः । वाहीकदृष्टान्तमुपादत्ते-यदुक्तमिति । सूत्रोक्तहेतुना दृष्टान्तं विघटयति— अर्थस्य त्विति । वाहीकदेशोद्भवत्वं सर्ववाहीकेष्वनुगतमभिधानम् । तद्देशोद्भवानां यवान्नप्रियत्वमसकृदनुभूतम् । अतो वाहीकादिष्वभिधानेषु 'वाहीको यवान्नेन भोजयितव्यः' इति प्रयोगः पूर्ववान् अधिगतार्थः, न त्वनधिगतार्थः । यवान्नप्रियत्वे तद्देशो निमित्तम्, न तु पुरुषः । अयं दृष्टान्तः प्रकृते न घटत इत्याह—अथेह कर्मण इति । के धर्माः कस्यापूर्वस्येति ज्ञानं शब्दैकगम्यम् । नेदं वाहीक इवान्वयव्यतिरेकाभ्यां ज्ञातुं शक्यते । अतो विषमो दृष्टान्त इत्यर्थः । सौत्रं 'शब्दभाव्यत्वात्' इति हेतुं विशदयति —शब्देनेति । शब्दादेवावगत्य धर्मा अनुष्ठातव्या भवन्ति । अपूर्वाणाञ्च विभागः-

### भाष्यम्

कर्मणः शब्दभाव्यत्वान्नान्यतः शक्यमेतज्ज्ञातुम्-के कस्यापूर्वस्य धर्मा इति। शब्देन व्यवस्थिता विज्ञाता धर्माः। अपूर्वाणाञ्च विभागः, अतः शेषाणामन्यत्र विहितानामन्यत्राप्रवृत्तिः स्यात्॥ ९॥

## स्मृतिरिति चेत्॥ ७.१.१०॥

अथ यदुक्तं स्मृतिरिति, तस्य कः परिहारः?॥ १०॥

## न पूर्वत्त्वात्॥ ७.१.११॥

पूर्ववती ह्नीयं स्मृतिः। चोदकं धर्मग्राहकं वक्ष्यति 'विध्यन्तो वा प्रकृतिवत्' (जै. सू. ७.४.१०) इति प्रापितानां धर्माणामयमनुवादः। एतन्न्यायपूर्विका नाप्राप्तानां विधायिका। यत्कारणं व्यवस्था धर्माणामेतेन न्यायेन भवति॥ ११॥

### वार्तिकाभरणम्

सर्वबाह्लोकेषूपदिष्टं भवति। प्रकृते च श्रुतकालान्तरभाविफलसाधनत्वान्यथानुपपत्तिगम्येत्यलौकिके अपूर्वे धर्मसम्बन्धस्यान्वयव्यतिरेकाभ्यां ज्ञातुमशक्यत्वात् एकापूर्वार्थाः न सर्वापूर्वार्था भवन्ति।

'स्मृतिरिति चेत्' सत्यम्। शब्दगम्ये ह्यलौकिकेऽपूर्वे अन्वयव्यतिरेकाभ्यां धर्मसम्बन्धो ज्ञातुं न शक्यः। तथापि दर्शपूर्णमासापूर्वसन्निध्याम्नातानां धर्माणामपूर्वान्तरेष्वप्युपदेशेनैव प्राप्तौ पूर्वोक्ता स्मृतिरेव प्रमाणमिति चेदित्यर्थः। 'न पूर्वत्वात्' न चेयं स्मृतिः अपूर्वार्थं विधत्ते। नोपदेशेनैव सर्वत्र धर्मा भवन्तीत्युच्यते किन्तु विध्यन्ताधिकरणन्यायसिद्धार्थमनुवदति। अथ विध्यन्ताधिकरणातिदेशसामान्यं चिन्त्यते, स्मरणं च विशेषविषयकम्, तत्कथं न्यायसिद्धार्थमनुवदति? उच्यते। सत्यम्-विध्यन्ताधिकरणोक्तसामान्यमेव चिन्तितम्; तथापि सामान्यातिदेशमुपजीवति विशेषातिदेशः विशेषातिदेशन्यायसिद्धं चानुवदति स्मरणम्। एवं च विध्यन्ताधिकरणन्यायोपजीवकविशेषातिदेशन्यायसिद्धार्थानुवादकत्वात् विध्यन्ताधिकरणन्यायसिद्धानुवादकत्वं स्मरणस्योपपद्यते॥ १०-११॥

### भाष्यसन्दर्भयोजिनी

भेदस्साधितश्शब्दान्तरादिभिः प्रमाणैः। अतस्तत्तदपूर्वभेदेन व्यवस्थापयति धर्मान् शब्दः। तेनान्यत्र विहितानां धर्माणामन्यत्र प्रवृत्तिर्न भवतीति निर्गलितमाह—अत इति॥ ९॥

अरुणपराशरशाखिनां स्मृतिर्धर्मव्यवस्थायां प्रमाणमित्युक्तं तस्य कः परिहारः?॥ १०॥

परिहारसूत्रमवतारयति पूर्ववतीति। अवगतपूर्वेयं स्मृतिरित्यर्थः। अवगतमेवार्थं प्रतिपादयितुमियं प्रवृत्तेति यावत्। कथमवगतपूर्वत्वमस्या इत्युपपादयति-चोदकमिति। अतिदेशशास्त्रमित्यर्थः। वक्ष्यति सप्तमचतुर्थदशमसूत्रेण। तथा च स्मृतेरनुवादत्वमेव सिध्यतीत्याह— प्रापितानामिति। इयं स्मृतिः 'विध्यन्तो वा प्रकृतिवदि' ति न्यायपूर्विका, न त्वप्राप्तार्थविधायिका। यत्कारणं यस्मात्कारणादित्यर्थः। यस्मात्कारणाद्धर्माणामेतेन न्यायेन व्यवस्था भवति तस्मात्सर्वार्थत्वं धर्माणामनुपपन्नमिति भावः॥ ११॥

---

(१) सर्वत्र चेदन्तं सूत्रं पृथक्कृत्य व्याख्यायते भाष्यकारेण।

## भाष्यम्

### अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावस्स्यात् ॥७.१.१२॥

इदं निगमनसूत्रम्। निगमनश्च प्रतिज्ञाया हेतोश्च पुनर्वचनम्। तदिदमुच्यते यस्मादेवं तस्मादर्थस्य-अग्न्यन्वाधानादेः शब्दभाव्यत्वात् प्रति प्रकरणञ्च निबन्धनाच्छब्दादेवान्यत्र भावस्स्यात्। यथा 'गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येता वै गन्धर्वाप्सरसो यद्राष्ट्रभृतः, स्वाहा ताभ्यः स्वाहेति जुहोति' (तै. सं. ३.४.८.४) इत्यग्निप्रकरण उत्पन्नानां राष्ट्रभृतामुद्वाहे उपदेशः—एतेषां 'राष्ट्रभृतो जुहोत्यभ्यातानान् जुहोतीति'। असत्येतस्मिन् वचने

## टुप्टीका

त्रिविधं नामधेयम्-कर्मनामधेयं संस्कारनामधेयं यौगिकञ्चेति। तत्र यौगिकं नातिदेशकम्। कथम्?

## वार्तिकाभरणम्

अर्थस्य शब्दभाव्यत्वात् प्रतिप्रकरणं च निबन्धनाच्छब्दादन्यत्र भावः स्यात्।

## तन्त्रशिखामणिः

एवमुपोद्घातं प्रसाध्येदानीमतिदेशमारभते। तत्र स्थूलसूक्ष्मसूक्ष्मतरस्य क्रमेण बुद्ध्योऽवतरन्तीति प्रथमं तावत् सुगमत्वात् प्रत्यक्षनिमित्तोऽतिदेशः पादद्वयेन चिन्त्यते। तृतीयपादे, मासमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रवद् जुहुयादिति वत्यर्थकल्पनया क्लेशेन गम्यो नाम्नातिदेशश्चिन्त्यते। तुरीयपादेन तद्वत् कर्त्तव्यमिति

## भाष्यसंदर्भयोजिनी

इदं निगमनसूत्रम्। अनुमाने पञ्चावयवा भवन्ति-प्रतिज्ञा-हेतू-दाहरणो-पनय-निगमानानि। तत्र निगमन पदार्थं विवृणोति—प्रतिज्ञाया हेतोश्च पुनर्वचनमिति। अधिकरणस्यास्यारम्भे धर्मा व्यवस्थिता भवन्तीति प्रतिज्ञाय तत्र हेतून् प्रदर्श्य मध्ये जातानामाशङ्कानां परिहारञ्चाभिधाय सम्प्रति निगमनं निष्कर्षप्रतिपादनं क्रियत इति भावः। यस्मादेवं पूर्वोक्तकारणैः। तस्मादर्थस्याग्न्यन्वाधानादेरङ्गकलापस्य शब्दभाव्यत्वात् शब्दैक गम्यत्वात्, प्रतिप्रकरणं निबन्धनाच्च धर्माणां व्यवस्थितत्वमेष्टव्यम्। यद्यन्यत्र श्रूयमाणो धर्मोऽन्यत्र गच्छेत् तर्हि तादृशशब्द आवश्यकः, येनान्यत्र विद्यमानस्यान्यत्र नयनं कर्तुं शक्येत इत्याह—शब्दादेवेति। तादृशं स्थलं प्रदर्शयति—यथेति। अत्रायं सन्दर्भः—'ऋताषाडृतधामाग्निः' इत्यादयो मन्त्राः गन्धर्वाप्सरोदेवताकाः समाम्नाताः। इमे मन्त्रा राष्ट्रभृत इत्युच्यन्ते। एतेषां विनियोगः—'षड्भिः पर्यायैः द्वादश राष्ट्रभृतो जुहोति' इत्यादिनापस्तम्बाचार्येण 'द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति' इति कात्यायनाचार्येण (का. श्रौ. १८.५.१६) च प्रदर्शितश्चयने। गन्धर्वाप्सरसो लोकानुन्मादयन्ति, य उन्माद्यति स राष्ट्रभृतो जुहुयात्, येनोन्मादतो निवृत्तिस्स्यादिति। तस्मै गन्धर्वाय। ताभ्यः अप्सरोभ्यः स्वाहेति होमप्रकारः। अग्निप्रकरणे-चयनप्रकरणे उत्पन्नानां समाम्नातानाम्। उद्वाहे विवाहे। उपलक्षणमिदं सीमन्तोपनयनादीनाम्। उपदेशो भवति—'राष्ट्रभृतो जुहोति' इति। यदीदमुपदशेवाक्यं न स्यात् तर्हि यत्रेमे पठिताः तत्रैव व्यवतिष्ठेरन्। उपदेशवाक्येन ज्ञायते यत् धर्मा न

## भाष्यम्

**यथाधिकारं व्यवतिष्ठेरन् धर्मा इति। एवञ्च सत्यधर्मकाण्यैन्द्राग्नादीनि। तदर्थमुत्तरोऽध्याय षट्कः प्रारब्धव्य इति।**

## टुप्टीका

**येनैव योगेन द्वादशाहे प्रायणीयशब्दस्तेनैव गवामयनेऽपीति ॥ १२ ॥**

## वार्तिकाभरणम्

अग्न्यन्वाधानादिधर्माणां शास्त्रैकसमधिगम्यत्वात् शास्त्राणां च दर्शपूर्णमासादिप्रकरणाम्नानादग्न्यन्वाधानादिधर्मा दर्शपूर्णमासाद्यर्थतया व्यवतिष्ठेरन्। नन्वेवं सत्यग्निप्रकरणे आम्नातानां राष्ट्रभृदादीनां विवाहोपनयनादिषु कथं प्रवृत्तिरिति चेन्न; अग्निप्रकरणे आम्नातानां राष्ट्रभृतो जुहोतीत्याहृत्यवचनादन्यत्राप्युपदेशेनैव प्रवृत्तिसम्भवात्। अग्न्यन्वाधानादीनान्तु दर्शपूर्णमासादिप्रकरणाम्नातानां सौर्यादिष्वाहत्य वचनाभावात् नोपदेशेन प्रवृत्तिरिति यथाप्रकरणं ते धर्माः व्यवस्थिताः। अतः सौर्यादीन्यधर्मकाणि, तत्र उपदेशेन धर्मप्राप्तेरभावादङ्गेयत्तां प्रयोगेयत्तां च चिन्तयितुमुत्तरोऽध्यायगण आरभ्यत इति।

अत्र भाष्यकारेण निगमनसूत्राक्षरार्थकथनानन्तरम् 'अतिदेशो हि यत्र ये विहिता धर्मास्तदतीत्यान्यत्र तेषां देशः। यथा देवदत्तस्य भोजनविधिं कृत्वा शालिसूपघृतमाषैः देवदत्तो भोजयितव्य इति तमेव विधिं यज्ञदत्तेऽतिदिशति देवदत्तवद् यज्ञदत्तोऽपि भोजयितव्य इति। श्लोकमप्युदाहरन्ति—

प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्मृतः॥ इति।

स च नाम्ना वचनेन च। तत्र नाम त्रिविधम् आतिदेशिकं कर्मनाम संस्कारनाम यौगिकनामेति। वचनं पुनर्द्विविधम् प्रत्यक्षश्रुतमानुमानिकं चेति। तयोरानुमानिकमुपरिष्टात् वक्ष्यते। प्रत्यक्षश्रुतमिदानीमेव चिन्त्यत इत्युक्तम्। अस्यार्थः—ऐन्द्राग्नादिषु उपदेशेन धर्मप्राप्तिमुक्त्वा अतिदेशस्य लक्षणमाह-अतिदेशो हीति। यत्र दर्शपूर्णमासज्योतिष्टोमादौ प्रकृतिभूते कर्मणि ये धर्मा अवघातप्रयाजदीक्षणीयाप्रायणीयादि तज्जन्यदृष्टादृष्टोपकारास्तेषां दर्शपूर्णमासज्योतिष्टोमादिकमतीत्य ऐन्द्राग्नश्येनादिविकृतिषु देशः-देशनम्, प्रापणमित्ति यावत्। सोऽतिदेश

## तन्त्रशिखामणिः

सवतिकवचनकल्पनयातिक्लेशगम्योऽतिदेशः सामान्येन प्रस्तोष्यत इति ध्येयम्। ननु वचननामातिदेशयोः विशेषविषयत्वेन कथं सामान्यातिदेशाध्याये सङ्गतिरिति चेत्-सत्यम्, चोदनाद्यङ्गनिमित्तको योऽतिदेशोऽष्टमे चिन्तयिष्यते तद्भिन्नातिदेशत्वमेव सामान्यातिदेशत्वमिति नासङ्गतिरित्याहुः॥१२॥

## भाष्यसन्दर्भयोजिनी

सर्वार्था इति। सर्वार्थत्वे उपदेशवैयर्थ्यादिति भावः। उपसंहरति-एवञ्चेति। धर्माणां व्यवस्थितत्वे ऐन्द्राग्नादीनि कर्माण्यधर्मकाणि स्युः। अतोऽतिदेशार्थमुत्तरषट्कमारब्धव्यमिति।

## भाष्यम्

**तत्र सप्तमेन तावदैन्द्राग्नादीनां कर्मणां धर्मास्सन्तीत्युच्यते, ते चातिदेशेनेति। अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः। यथा देवतदत्तस्य भोजनविधिं कृत्वा शालिसूपमांसापूपैर्देवदत्तो भोजयितव्य इति। तमेव विधिं यज्ञदत्तेऽतिदिशति-देवदत्तवद् यज्ञदत्तो भोजयितव्य इति।**

## वार्तिकाभरणम्

इत्यर्थः। यदा अतिदेशनमतिदेश इति भावव्युत्पत्तिः तदा परकीयधर्माणामन्यसम्बन्धबोधकप्रमाणव्यापारोऽतिदेशः, यदा च अतिदिश्यते अनेनेति करणव्युत्पत्तिः तदा परकीयधर्माणामन्यसम्बन्धबोधकशास्त्रमेव वा अतिदेश इति द्रष्टव्यम्। अतिदेशे लौकिकदृष्टान्तमाह—यथेति। उक्तार्थे पूर्वाचार्यसम्मतिमाह-श्लोकमपीति। प्राकृतात्कर्मणो धर्मप्रदेशो येन व्यापारेण शास्त्रेण वा स्यात् सोऽतिदेशः। प्राकृतात् कर्मणो धर्मप्रदेशः कुत्रेत्यपेक्षायामाह—**यस्मात्तत्समानेषु कर्मस्विति**। यस्मादैन्द्राग्नादेः प्राकृतात्कर्मणो धर्मोऽतिदिश्यते तत्समानेषु विकृत्यैन्द्राग्नादिकर्मस्वित्यर्थः। अतिदेशे प्रमाणद्वयमाह—**स चेति**। स चातिदेशः नाम्ना वचनेन च भवतीत्यर्थः। तत्रातिदेशिकं नामधेयं त्रिविधमित्याह—तत्रेति। नामत्रैविध्यमेव दर्शयति—**कर्मनामेति**। वचनमपि प्रत्यक्षश्रुतं चोदनालिङ्गानुमितं चेति द्विविधमित्याह—**वचनमिति**। तत्र प्रत्यक्षश्रुतवचनस्य प्रबलत्वात् तन्निमित्तातिदेशः प्रथमं विचार्यते। पश्चादानुमानिकवचननिमित्तातिदेश इत्याह—**तयोरितीति**। तत्र नाम त्रिविधम्—आतिदेशिकं कर्मनाम, संस्कार्यनाम, यौगिकनामेति। यथाश्रुतभाष्ये त्रिविधस्यापि नामधेयस्यातिदेशकत्व प्रतीयते, तदनुपपन्नम् यौगिकनामधेयस्यातिदेशकत्वाभावात्। तस्माद् भाष्यस्य नामत्रैविध्य एव तात्पर्यम्।

ननु त्रिविधस्याप्यतिदेशकत्वे आतिदेशिकशब्दस्तु अतिदेशकानतिदेशकसमुदाये भूम्ना प्रयुक्त इत्याशयेनातिदेशकशब्दमनादृत्य भाष्यस्यार्थमाह **त्रिविधमिति**। त्रिविधनाममध्ये यौगिकं नामातिदेशकं न भवतीत्येतद्विशदयति तत्रेति। द्वादशाहे प्रथममहः प्रायणीयं नाम। प्रथमेऽहनि 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इति प्रायणीयशब्दश्श्रुतः। स न द्वादशाहिकप्रायणीयधर्मातिदेशकः × × × प्रायणीयमिति द्वादशाहेऽपि योगेनैव वृत्त्या तद्वदेव गवामयनेऽपि तेनैव योगेन वृत्तिसम्भवे लक्षणया धर्मातिदेशस्यान्याय्यत्वात्। तस्माद् यौगिकस्य नामधेयस्य नातिदेशकत्वमित्यर्थः।

## भाष्यसन्दर्भयोजिनी

एवमुत्तरषट्कस्यारभ्यत्वं प्रसाध्य सप्तमाध्यायविषयं दर्शयति—**तत्रेति**। उत्तरषट्के **सप्तमेनाध्यायेन ऐन्द्राग्नादीनां कर्मणां धर्माः**—अङ्गानि विद्यन्त इत्युच्यते। यदा धर्माः न सन्ति तदा कथमुच्यते सन्तीत्यत आह—**ते चातिदेशेनेति**। उपदेशेन न सन्ति किन्त्वतिदेशेनेत्यर्थः। कोऽयमतिदेशो नाम? इति चेत्तत्स्वरूपं दर्शयति—**अतिदेशो नामेति**। ये प्रयाजादयः। **परत्र** प्रकृतौ दर्शपूर्णमासयोः **विहिताः, तम्** प्रकृतिदेशम् **अति** अतीत्य **अन्यत्र** विकृतौ सौर्यादौ **तेषां** धर्माणां **देशः** स्थानम् इति यः **सोऽतिदेशो नाम**। अत्रैव लौकिकमुदाहरणं—**देवदत्तस्येत्यादि**। स्पष्टोऽर्थः।

## भाष्यम्

श्लोकमप्युदाहरन्ति—

प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्थितिः ॥ इति ॥

स च नाम्ना वचनेन वा । तत्र नाम त्रिविधमातिदेशिकं कर्मनाम, संस्कारनाम यौगिकमिति ।

## वार्तिकाभरणम्

वस्तुतस्तु गवामयने प्रथमेऽहनि प्रयुक्तस्यावयवयोगसम्भवेनातिदेशकत्वाभावेऽपि यत्र योगो न सम्भवति प्रथमादावन्यस्मिन् यत्र कुत्रचिदहनि तत्र प्रयुक्तस्य प्रायणीयशब्दस्य धर्मातिदेशकत्वं सम्भवति। वक्ष्यन्ति चाचार्यास्तृतीयपादे 'अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात्' इत्याधिकरणे टुप्टीकामीमांसावार्तिके। यत्र तु पञ्चमः षष्ठो वा प्रायणीयस्तस्य योगाभावादनुदाहरणत्वम्। तस्मात् तादृशेन पूर्वाधिकरणापवाद इति। श्रूयते च तैत्तिरीयशाखायां 'ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्तात् अथ ते सुवर्गस्य लोकस्यानुख्यात्यै चतुर्विंशः प्रायणीयो भवती'ति चतुर्विंशाख्ये द्वितीयेऽहनि प्रायणीयशब्दः यौगिकं नामातिदेशकमिति। वार्तिकन्तु प्रथमेऽहनि प्रयुक्तस्य प्रायणीयशब्दस्य योगसम्भवात्तदभिप्रायमिति द्रष्टव्यम्। 'अग्निहोत्रं जुहोति' इति नैय्यमिकाग्निहोत्रनामधेयस्याग्निहोत्रशब्दस्य 'मासमग्निहोत्रं जुहोतीति' कुण्डपायिनामयनगते कर्मणि धर्मातिदेशकत्वम्। यद्यपि 'प्रकरणान्तरे प्रयोजनान्यत्वम्' इत्याधिकरणे कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इन्यत्र न कर्मभेद; किन्तु भावनाभेद एवेत्यप्युक्तम्, तथापि कर्मभेदपक्षस्यापि तत्रोक्तत्वात् तस्मिन् पक्षे नाम्ना धर्मातिदेश उपपद्यते। अत एवाचार्याः टुप्टीकामीमांसावार्तिके—'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति तृतीयपादाद्याधिकरणे कर्मान्तरे पुनरुच्चार्यमाणो धर्मातिदेशको भवतीति वक्ष्यन्ति। संस्कारनामधेयस्य यूपशब्दस्य 'खलेवाली यूपो भवति' इत्यत्रातिदेशकत्वम्। ननु 'खलेवाली यूपो भवति' इत्यादिवाक्येन यूपकार्ये खलेवाली विधीयते। यथा 'शरमयं बर्हिर्भवति' इन्यत्र बर्हिःकार्ये शरा विधीयन्ते, तद्वत्। एवं च 'परिधौ पशुं नियुञ्जीत' इत्यत्र यथा यूपकार्ये नियोजने परिधेर्विधानेन कार्यापत्त्या यूपधर्माः प्राप्नुवन्ति, तद्वदेव खलेवाल्यादावपि (धर्माः प्राप्नुवन्ति) धर्मप्राप्तिसम्भवात् कथं यूपशब्दस्य धर्मातिदेशकत्वम् इति चेन्नैवम्; युक्तं शरमयं बर्हिर्भवतीत्यत्र शराणां बर्हिषां चात्यन्तभेदेन श्रुत्या सामानाधिकरण्यासम्भवात् बर्हिःशब्देन बर्हिःकार्यं लक्षयित्वा तत्कार्ये शराणां विधानम्। इह तु या खलेवाली स यूप इति श्रुत्यैव सामानाधिकरण्यसम्भवे लक्षणया यूपकार्ये विधानं न युक्तम्। एवञ्च प्रकृते कार्यविधानस्यैवाभावात् 'परिधो पशुं नियुञ्जीत' इतिवत् कार्यापत्त्या धर्मप्राप्त्यसम्भवेन

## भाष्यसन्दर्भयोजिनी

प्राकृताद् प्रकृतित्वेनाभिमतात्कर्मणः तत्समानेषु प्रकृतिसदृशेषु कर्मसु येन व्यापारेण धर्माणां प्रदेशनं भवति सः व्यापारः अतिदेशः। अस्यायमर्थः—अङ्गानां विधायकं ब्राह्मणं भवति। ब्राह्मणेन यः पदार्थो विधीयते, यश्च तस्योपकारो बोध्यते तदतिक्रम्यान्यत्र देशनं-प्रापणं येन व्यापारेण भवति स व्यापारोऽतिदेश इति। एवञ्च क्वचिद् ब्राह्मणस्य क्वचित्पदार्थस्य क्वचिच्च पदार्थजन्योपकारस्य चातिदेशः। पदार्थस्यातिदेशव्यापारविषयत्वेऽपि उपकारपृष्ठभावेनैव तद्विषयत्वं स्वीक्रियत इति बोध्यम्। प्रकृतिवद् विकृतिः कर्तव्या इत्येवं

## भाष्यम्

**वचनं पुनर्द्विविधम्-प्रत्यक्षश्रुतम् आनुमानिकञ्च। तयोरानुमानिकमुपरिष्टादुच्यते। प्रत्यक्षश्रुतन्त्विदानीमेव चिन्त्यते॥ १२॥**

इति विध्यन्ताधिकरणम्॥ १॥

## २

### विषयः

**अस्तीषुर्नामैकाहः, अपरः श्येनः। तौ द्वावप्याभिचारिकौ। तत्रेषौ कांश्चिद्धर्मान्**

### वार्तिकाभरणम्

संस्कारनाम्नो यूपशब्दस्य अतिदेशकत्वावश्यम्भावात्। नन्वेवमपि यूपशब्दस्याञ्जनादिसंस्कारवाचनत्वात् तद्व्यतिरिक्तयूपधर्मातिदेशकत्वं न सम्भवतीति चेन्न, यूपशब्दार्थो हि अञ्जनादिक्रियाभेदकथनमुपपद्यते॥ १२॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

रूपः। तदित्थं कर्तव्यमिति पूर्वषट्के प्रदर्शितम्। **स चेति**। नामातिदेशो वचनातिदेशश्चेति। प्रत्यक्षश्रुतस्य सुगमत्वाद् **इदानीमेवेत्युक्तम्**। अनन्तराधिकरण इत्यर्थः॥ १२॥

इति विध्यन्ताधिकरणम्॥ १॥

अधिकरणविषयं दर्शयति—**अस्तीषुर्नामैकाह** इति। एकदिनसाध्यस्सोमयागो नाम्ना इषुरित्यस्तीत्यर्थः। **अपरः** एकदिनसाध्यस्सोमयागो नाम्ना श्येन इत्यस्तीति शेषः। 'इषुणाऽभिचरन् यजेत' 'श्येनेनाभिचरन् यजेत' इति द्वावपि **आभिचारिकौ** अभिचारार्थं विहितौ। **तत्र** तयोर्मध्ये **इषौ कांश्चिद्धर्मान्** वषट्कारनिधनम् इषोर्बाणस्य विष्टुतिसाधनत्वम्, सप्ताहाख्यं साम इत्येवं सामतत्सम्बन्धिनः पदार्थान् विशेषेण विधाय श्रूयते—'समानमितरच्छ्येनेन' इति। अस्याधिरणस्येदमेव विषयवाक्यम्।

सोमयागे—एकाहः, अहीनः, साद्यस्क्रः, सत्रश्चेति चत्वारः प्रकाराः। तेषु श्येनः इषुरित्यादय एकाहेष्वन्तर्भवन्ति एकदिनसाध्यत्वात्। अत्र दीक्षाणामुपसदाञ्चानेकत्वेऽपि सोमयागानुष्ठानमेकस्मिन्नेव दिने भवतीत्येकाहत्वम्। अयमेव द्विरात्रादिदिनेषु पुनः पुनरावृत्यानुष्ठितश्चेदहीनः कथ्यते। सङ्कल्पप्रभृत्यवभृथान्तमनुष्ठानं सद्यः यस्य सोमयागस्य भवति स साद्यस्क्र इति व्यवह्रियते। त्रयोदशरात्रप्रभृतयस्सहस्रसंवत्सरपर्यन्तमनुष्ठेयास्सोमयागाः सत्राणीत्युच्यन्ते। सत्राणि विहायान्यत्रैक एव यजमानः, सत्रेषु तु सप्तदशसङ्ख्यातः चतुर्विंशति पर्यन्ता यजमाना भवन्तीति विशेषः। तत्रेषौ सोमयागे प्रस्तावो-द्गीथप्रतिहारो-पद्रव-निधनेषु पञ्च सामसम्बन्धिनीषु भक्तिषु अन्तिमा निधनाख्या भक्तिः 'वौषट्' इति, स्तोत्रसङ्ख्यापरिगणनाय प्रस्तोत्रा कुशा विन्यस्यन्ते। अयं कुशविन्यासो विष्टुतिः कथ्यते। इषौ कुशस्थाने इषूणां बाणानां विन्यास इति, सप्तहाख्यसाम्नो विधानमिति च सामसम्बन्धिनो विशेषपदार्थान् विधाय श्रूयते—'समानमितरत्' इति। इमान् विशेषधर्मान् विहायान्यत्सर्वं श्येनेन समानं कर्तव्यम्। अर्थात् श्येनयागे यथा यान्यङ्गान्यनुष्ठितानि तथा तान्यत्र कर्तव्यानीति।

## भाष्यम्

विधायाह—'समानमितरच्छ्येनेन' इति ।

### संशयः

एतच्चिन्त्यते—किमयमनुवादः ? विधिर्वा ? यदि विधिस्ततोऽतिदेशः, श्येनधर्मा-निषावतिदिशति । अथानुवादस्ततो नेति । तत्र किं प्राप्तम् ? तत्सूत्रेणैवोपक्रम्यते—

### पूर्वपक्षः

## समाने पूर्ववत्त्वादुत्पन्नाधिकारस्स्यात् ॥ ७ १.१३ ॥

'समानमितरच्छ्येनेन' इत्यत्रोत्पन्नाधिकारस्स्यात्—अनुवाद इत्यर्थः । कुतः ? पूर्ववत्त्वात् । अयमिषुः पूर्ववान् ज्योतिष्टोमपूर्वकः । ज्यौतिष्टोमिकोऽत्र विध्यन्त इत्यर्थः । अत्र चोदकेनोत्पन्ना ज्यौतिष्टोमिका धर्मास्सन्ति । श्येनोऽपि ज्योतिष्टोमपूर्वकः । तत्रापि ते सन्ति । य इषौ श्येने च समाना भवन्ति, तानधिकृत्यायं वादो युज्यते । तस्मादुत्पन्नाधिकारत्वादनुवादः ।

### तन्त्रशिखामणिः

'इषुणाभिचरन् यजेते'ति इषुनामकमेकाहं विधाय तत्र 'वषट्कारो निधनं भवति इषुः विष्टुतिः' 'सप्ताहं भवति' इति ज्योतिष्टोमादतिदेशप्राप्तस्य स्तोत्रस्य वषट्कारनिधनत्वं वषट्कारान्त्यभक्तिकत्वं चोदकप्राप्ताया एव विष्टुतेरौदुम्बरशङ्कुविन्यासात्मिकाया इष्वाकारत्वम् सप्ताहाख्यं साम च स्तोत्रस्य विधाय श्रूयते 'समानमितरत् श्येनेने'ति । तत्र संशयः किमिदं समानमितरदिति वाक्यं चोदकप्राप्तसौमिकधर्मप्रयुक्तश्येनसादृश्यानुवादः उत श्येनवैशेषिकधर्माणामतिदेशकमिति ।

### भाष्यसन्दर्भयोजिनी

विषयवाक्ये संशयं प्रदर्शयति—**किमयमनुवादो विधिर्वेति** । संशयस्य फलफलिभावं दर्शयति—**यदि विधिरिति** । विधिपक्षे श्येनधर्माणां लोहितोष्णीषत्वादीनामतिदेशः, अनुवादपक्षे च तदभाव इति फलफलिभावः ।

तत्र पूर्वपक्षं सूत्रेणैवोपस्थापयति—**समाने पूर्ववत्त्वादिति** । सूत्रगतसमानेपदं विषयवाक्यपरमिति विषयवाक्यं पठति—**समानमितरदिति** । **अत्र** अस्मिन् विषयवाक्ये । **उत्पन्नाधिकारः स्यात् अनुवाद इत्यर्थः** सोमयागादुत्पन्नानतिदिष्टांश्च धर्माननधिकृत्यायमनुवाद इत्यर्थः । सौत्रं हेतुमुपन्यस्यति-**पूर्ववत्त्वादिति** । **इषोः** सोमप्रकृतिकत्वादित्यर्थः । **ज्योतिष्टोमपूर्वकः** ज्योतिष्टोमप्रकृतिक इत्यर्थः । सर्वसोमयागानां ज्योतिष्टोमस्य प्रकृतित्वादतिदेशेनागता धर्मा अत्रेषौ वर्तन्ते । **श्येनोऽपीति** । यथेषुः ज्योतिष्टोमप्रकृतिकः, तथैव श्येनोऽपि तत्प्रकृतिक इति इषुः श्येनधर्मान् कुतो गृह्णीयादित्यर्थः । **तत्रापि** श्येनेऽपि । **ते** ज्यौतिष्टोमिका धर्माः । **ये धर्माः** उभयत्र समानाः **तान्** धर्मान् **अधिकृत्य** विषयीकृत्य **अयं वादः** 'समानमितरच्छ्येनेनेति । **उत्पन्नाधिकारत्वात्** ज्योतिष्टोमादुत्पन्नातिदिष्टान् धर्माननधिकृत्य पठितत्वादनुवाद इति ।

## भाष्यम्

**किञ्च-इतरदिति चाभावे नोपपद्यते। इतरशब्दश्चासंनिहितेऽनुपपन्नः। संनिहित एव भवति। यथा-इतरः प्रावारो दीयताम्, इतरः कम्बलो दीयतामिति संनिहितो दीयते, न प्रावार-**

## तन्त्रशिखामणिः

तत्रेतरशब्दो हि सन्निहिते भवति, इतरः कम्बलो दीयतामित्यत्र सन्निहितस्यैव दानात्। सन्निहिताश्च चोदकात् सौमिका धर्माः। ते च श्येने यथा सन्ति तथात्रापीत्यनुवादोऽयम्। नन्वस्य सौमिकधर्मैः साम्यमेकाहाहीनसत्रैः सर्वैरपि तुल्यमिति श्येनेनेति विशेषग्रहणमनर्थकमतः श्येनवैशेषिकाणां लोहितोष्णीषादीनां धर्माणामतिदेशकमङ्गीकार्यमिति चेत्-न, श्येनवैशेषिकाणामसन्निहितत्वेन सन्निहितवाचिनेतरशब्देन परामर्शायोगात्। अतश्चोदकसन्निहितवचन एवेतरशब्दः। न चैवं श्येनग्रहणानर्थक्यमित्युक्तमिति वाच्यम्। वषट्कारनिधनत्वादयोऽधिका धर्मा इषौ सन्ति न श्येने। सौमिकास्तु धर्माः श्येन इवात्रापि। तस्मादभिचरतः श्येनाधिक्यात् इषुरेवादर्तव्यो न श्येन इति स्तुत्यर्थतया श्येनग्रहणसार्थक्यादिति प्राप्ते ब्रूमः।

सत्यमितरच्छब्दः सन्निहितमभिधत्ते न तु तन्मात्रम् किन्तु (सदृशत्वे सति) सन्निहितं यत् तदेवाभिधत्ते। तदिह यच्चोदकेन सन्निहितं सौमिकं धर्मजातं न तत् पूर्वोक्तसदृशम् वषट्कारनिधनत्वादीनां वैशेषिकाणामेव पूर्वमुक्तत्वात्। यत्तु पूर्वोक्तौ श्येनवैशेषिकौ न तौ सन्निहितौ। तस्मात् अवश्यहातव्येऽन्यतरस्मिन् सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामयं विधिरिति तद्वषट्कारनिधनत्वादेतदितरद्वैशेषिकं श्येनेन समानं कर्त्तव्यम्। श्येने यद्विहितं वैशेषिकं तदिहापि कर्त्तव्यमिति। एवं च श्येने यत् प्राकृतकार्यं लोहितोष्णीषादिकं यदप्यप्राकृतं कण्टकवितोदनादिकं वैशेषिकमङ्गजातं तस्य सर्वस्यापि प्राप्तेः प्रवृत्तिविशेषकरत्वेन वचनमर्थवद् भवति। सन्निधिपरिग्रहे तु स्तुतिमात्रपरत्वेनानर्थकप्रायः स्यात्। वस्तुतस्तु न स्तुतिपरत्वमपि सम्भवति। प्रदेशान्तरे श्रुतत्वेन विध्येकवाक्यत्वाभावादिति भाष्यानुसारिणः। अत्र वार्त्तिकानुसारिणः इतरशब्दो हि लोके न पूर्वनिर्दिष्टसदृशेऽपि प्रसिद्धः किन्तु प्रयुक्तात् यदन्यत् सन्निहितं च तत्रैव प्रसिद्धः। इतरः कम्बलो दीमताम् इत्यादिषु तथा प्रतीतेः। ततश्चोपयुक्तयोर्निधनविष्टुत्योः यदन्यत् चोदकेन सन्निहितं तदितरदिति निर्दिश्यते। यदि च देवदत्ताय कौशेयं दीयताम् यज्ञदत्ताय क्षौमम् विष्णुमित्राय इतरत् इत्यत्र विष्णुमित्राय पूर्वोपयुक्तादन्यत् कौशेयसदृशं सन्निहितञ्च वस्त्रमेव प्रदेयत्वेन प्रतीयते न हिरण्यं रजतं वा इति पूर्वोक्तसदृशमपि इतरशब्दार्थः, तथापि पूर्ववाक्ये सौमिकरीत्या विष्टुतेः विध्यर्थमुक्तत्वात् तत्सदृशानां सौमिकानामेव सन्निहितानामितरशब्दो निर्देशकः। तस्मात् ज्योतिष्टोमाच्चोदकेन यद्यदङ्गजातं सन्निहितं तत्र विष्टुत्यादिकमेवं कर्त्तव्यम् इतरत् श्येनेन समानं कर्त्तव्यमिति चोदकप्राप्तधर्मोद्देशेन विकारविधानात् प्राकृत-

## भाष्यसंदर्भयोजिनी

स्वपक्षमुपष्टभ्नाति—**किञ्चेति**। ननु वाक्यगतमितरत्पदं किं इषावुपदिष्टनिधनविशेष-विष्टुति-सामातिरिक्तश्येनगतलोहितोष्णीषत्वादिपरम्? उत संनिहितज्यौतिष्टोमिकधर्मपरम् इति सन्देहे पूर्वपक्षी प्रतिपादयति—**इतरदिति चाभावे नोपपद्यते**। श्येनगतवैशेषिकधर्माणामत्राभावः, अत एव तेऽसंनिहिताः। संनिहित एवेतरशब्दः प्रवर्तते। संनिहिताश्चातिदेशेन ज्यौतिष्टोमिका धर्माः। अतस्तेषामनुवाद उपपद्यते इति भावः। अत्र दृष्टान्तः—**इतरः प्रावार** इति। प्रावारः शरीराच्छादनसाधनं वस्त्रम्। प्रावारातिरिक्तमन्यत्संनिहितं

भाष्यम्

मात्रं कम्बलमात्रं वा । ज्यौतिष्टोमिकाश्च संनिहिताः । तस्मात्तेषामनुवादः । विहिता हि ते चोदकेनेति ॥ १३ ॥

### श्येनस्येति चेत् ॥ ७.१.१४ ॥

इति चेत्पश्यसि-ज्यौतिष्टोमिकानामनुवाद इति, नैवम्; श्येनस्य वैशेषिकाणां लोहिंतोष्णीषादीनां धर्माणां विधिः । कुतः ? श्येनग्रहणसामर्थ्यात् । एवं श्येनग्रहणमर्थवद् भविष्यति धर्मान् विशेषयत् । इतरथाऽनर्थकं स्यात् । सर्वेषां ह्येकाहाहीनसत्राणां ते समानाः । तत्र यावदुक्तं स्यात् समानमितरदिति तावदेव समानमितरच्छ्येनेनेति ॥ १४ ॥

### नासन्निधानात् ॥ ७.१.१५ ॥

नायं श्येनवैशेषिकाणां वादो युज्यते । कस्मात् ? असन्निधानात् । अयमितरशब्दः

तन्त्रशिखामणिः

कार्यादीनां लोहितोष्णीषादीनामेव इषौ प्राप्तिः नाप्राकृतकार्याणां कण्टकवितोदनादीनाम् । एवं पूर्वनिर्दिष्टसदृशसन्निहितवाचितयाप्यर्थवत्त्वं वचनस्य सम्भवति । सन्निहितत्वात् सादृश्यमात्रपरिग्रहो न युक्त इति ॥१३॥

वृत्तमधिकरणम्

भाष्यसन्दर्भयोजिनी

यथा इतरशब्दो बोधयति, तथा प्रकृतेऽपि संनिहितबोधक इतरशब्दः । संनिहिताश्चातिदिष्टाः पदार्था इत्युक्तम् । तेषामयमनुवादः हि यतः ते धर्माः चोदकेन विहिताः ॥ १३ ॥

शङ्कते-श्येनस्येति चेत् श्येनसम्बन्धिधर्मविधायकमिदं न इति चेत्पश्यसि, केवलं ज्यौतिष्टोमिकधर्माणामनुवादकं समानमितरच्छ्येनेति नैवम् । श्येनवैशेषिकधर्मविधिरेवायम् । तत्र हेतुः- श्येनग्रहणसामर्थ्यात् 'समानमितरच्छ्येनेन' इति वाक्ये श्येनपदग्रहणस्य किं प्रयोजनं स्यात् ? अनेन वाक्येन ज्यौतिष्टोमिकधर्मानुवाद एव कर्तव्यः । तत्र 'श्येनेन' इति पदस्य का सार्थकता । विधिपक्षे तु तत्पदं सार्थकम्—श्येनगतसम्भावितधर्मैः सह यथासम्भवं ज्यौतिष्टोमिकधर्मा अनुष्ठेया इति । अत्रत्यविशेषपदार्थाननुष्ठाय श्येनगतविशेषपदार्था अनुष्ठेया इति श्येनसाम्यबोधने तत्पदमर्थवद्भविष्यति सार्थकं भविष्यति । धर्मान् विशेषयत् इतरत्पदम् अर्थवद्भविष्यतीत्यनेन सम्बन्धः । श्येनपदमर्थवद्भवति इतरत्पदमपीति भावः । ते ज्यौतिष्टोमिका धर्माः । तत्र इषौ यावदुक्तम् यत्पठितं वैशेषिकधर्मजातम् तावदेव श्येनगतवैशेषिकधर्मजातं समानमित्यर्थः ॥ १४ ॥

परिहरति नासन्निधानात् । असन्निधानाद्धेतोः श्येनवैशेषिकधर्मविधिं न स्वीकरोति पूर्वपक्षी । इषोः श्येनस्य चाभिचारिककर्मत्वसामान्ये सत्यपि सन्निधिर्नास्ति, येनेतरशब्दः श्येनवैशेषिकधर्मान् परामृशेत् इत्याह—

## भाष्यम्

सन्निहिते भवति । न च श्येनशब्देन वैशेषिका इषौ सन्निहिताः । यत्तु श्येनशब्दो वैशेषिको भवतीति विधिपक्षेऽवैशेषिकत्वं दोषस्स्यात् । अनुवादपक्षे तु नैव किञ्चिद्विधीयते, किं विशेषयिष्यते । ज्यौतिष्टोमिकास्तु सर्वसाधारणास्सन्तः श्येनस्यापि भवन्तीत्यनुवादो युज्यते । तस्माज्ज्यौतिष्टोमिकानामेवानुवादः ॥ १५ ॥

### अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ ७.१.१६ ॥

अपि वेति पक्षान्तरपरिग्रहे । विधिरयं श्येनवैशेषिकाणाम्, न ज्यौतिष्टोमिकानामनु-

## टुप्टीका

इतरशब्दो नाधिक्ये लोके प्रसिद्धः । तर्हि ? उपयुक्ताद्यदितरत्संनिहितं तत्र प्रसिद्धः । न चैकस्य

## वार्तिकाभरणम्

उपोद्घातं समाप्येदानीं वाचनिकातिदेशस्तावत् प्रतिपाद्यते—इषावेकाहे ज्योतिष्टोमविकारे प्राकृतानां स्तोत्राणाम् 'इषुर्विंटुतिरिति सप्ताहं भवती'त्यादिना कांश्चिद्विकारान् विधाय श्रूयते 'समानमितरच्छ्येनेने'ति वाक्यं प्रकृतिभूतात् ज्योतिष्टोमात् चोदकप्राप्तान् ज्यौतिष्टोमिकान् धर्माननुवदति यथा श्येनः ज्योतिष्टोमधर्मकः

## तन्त्रशिखामणिः

पूर्ववदिह न वचनातिदेशस्य प्रवृत्तिविशेषकरत्वमित्युत्थितेः सङ्गतिः । चातुर्मास्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामानि चत्वारि पर्वाणि । तत्र वैश्वदेवाख्ये प्रथमे पर्वणि अष्टौ हवींषि विहितानि 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम् सावित्रं द्वादशकपालं सारस्वतं चरुम् पौष्णं चरुम् मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमि'ति । तत्र हविषामर्थवादश्चाम्नातः 'वार्त्रघ्नानि वा एतानि हवींषि' इति । अङ्गविधयोऽपि तेषामाम्नाताः 'त्रेधा सन्नद्धं बर्हिर्भवति त्रेधा सन्नद्ध इध्मः नव प्रयाजा इज्यन्ते नवानुयाजा

## भाष्यसन्दर्भयोजिनी

अयमिति । यत्त्विति । 'समान' मिति वाक्यगतश्येनपदबलाद्वैशेषिकधर्मास्संनिहिता इत्युक्तमिति चेत्-तत्र दोषमुद्घाटयति-विधिपक्षे इति । इषौ वैशेषिकधर्मेभ्यो यदितरदङ्गजातं तत्समानताऽत्र विधित्सिता भवतः । तदितरच्चाङ्गजातं श्येनवैशेषिकाङ्गजातं ज्यौतिष्टोमिकाङ्गजातमपि भवति । तत्र ज्यौतिष्टोमिकाङ्गजातसमानता न विधेया, तदङ्गजातस्यातिदेशेन प्राप्तत्वात् । किन्तु वैशेषिकाङ्गजातसमानता विधेया । वैशेषिकाङ्गजातस्यात्रोपस्थितिर्नास्ति । तदुपस्थापकत्वेन श्येनपदमङ्गीकृत्य तत्सम्बन्धोऽपि विधिकोटौ प्रवेशनीय इति गौरवमित्याह—विधिपक्षे इति । अनुवादपक्षे च नायं दोषः, विधेयस्य कस्याप्यभावात् किं कस्य विशेषणं स्यादिति भावः । अनुवादपक्षे च श्येनपदस्य न काप्यनुपपत्तिरित्याह—श्येनस्यापीति । उपसंहरति-तस्मादिति ॥ १५ ॥

सिद्धान्तिनस्सूत्रम्—अपि वेति । अपि वेति पक्षान्तरपरिग्रहे । इतरच्छब्दस्य संनिहितार्थपरत्वं परिगृह्य-

## भाष्यम्

**वादः । कुतः ? अपूर्वत्वात् । एवमपूर्वमर्थं विधास्यति । तथा प्रवृत्तिविशेषकरो भविष्यति । अनुवादस्सन्नप्रवृत्तिकरोऽनर्थकस्स्यात् । नन्वितरशब्दोऽयं सन्निहिते भवति । उच्यते—इतरदधिकार्थे । समानमितरत्-समानमधिकमित्यर्थः ।**

## टुप्टीका

शब्दस्य द्वावर्थौ । तस्मादिषौ वषट्कारनिधनविष्टुतिसप्ताहं भवतीत्युक्त्वा समानमितरच्छ्येनेनेति । तत्र ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन परामृश्यते । तस्य विकारो विधीयते । यदितरज्ज्योतिष्टोमात्प्राप्तं

## वार्तिकाभरणम्

तथायमपीषुरिति ? किं वा 'लोहितोष्णीषाः लोहितवसना ऋत्विजः प्रचरन्ती'ति श्येनविहितान् लोहितोष्णीषादिधर्मान् इषावपि विधत्ते ? इति ।

तत्र पूर्वः पक्षः—इतरशब्दो हि सन्निहितवचनः । श्येनवैशेषिकाश्च धर्मा इषोरसन्निहिताः ज्योतिष्टोमधर्मास्तु चोदकेन सन्निहिताः । तस्मादितरशब्दस्सन्निहितज्योतिष्टोमधर्मपरः; ज्योतिष्टोमधर्माश्च श्येने इषौ च विद्यमानाः श्येनसादृश्यमिषोः आपादयन्ति । तदेतदनूद्यते 'समानमितरच्छ्येनेने'ति यथा श्येनो ज्योतिष्टौमिकधर्मकः तथा इषुरपि तेन तद्वदेवाभिचरता आदरेण कर्तव्य इति इषुस्तुत्यर्थोऽयमनुवाद इति ।

## तन्त्रशिखामणिः

इज्यन्ते' इत्यादि । एवं स्थिते वरुणप्रघासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि आम्नाय श्रूयते 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि' इति । इतराणि वैश्वदेविकानि हवींषि यादृशब्राह्मणवन्ति तादृशब्राह्मणवन्ति वारुणप्रघासिकान्यपि पञ्च हवींषीत्यर्थः ।

तत्र संशयः किमर्थवादमात्रस्यायमतिदेशः ? उत वा विधीनामपि ? तत्र वैश्वदेविकानां हविषां यद्ब्राह्मणं तदेवातिदिश्यते । यच्च यद्विधाकं तत्तत् ब्राह्मणमित्युच्यते । ततश्चाङ्गविधीनां अङ्गविधायकत्वेऽपि हविर्विधायकत्वेन तद्ब्राह्मणत्वाभावात् न तेषामतिदेशः । न चैवं विध्युद्देशस्यैव विधायकत्वेनार्थवादस्य विधायकत्वाभावात् तस्याप्यतिदेशो न स्यादिति वाच्यम्, अर्थवादस्य विध्येकवाक्यतया विधायकैकदेशत्वेन तद्ब्राह्मणत्वानपायात् । न चार्थवादस्य शब्दरूपस्यानपेक्षिततया तदतिदेशवैयर्थ्यमिति वाच्यम् । पुरुषप्रवृत्तिभाव्यकशब्द भावनाकाङ्क्षितेतिकर्तव्यतारूपप्रशंसासमर्पकतया तदतिदेशावैयर्थ्यात् । तदर्थवादस्यैवातिदेश इति प्राप्ते ब्रूमः ।

## भाष्यसन्दर्भयोजिनी

तावत्पर्यन्तं समाधानमुक्तम् । तथापि पूर्वपक्षी न सन्तुष्ट इति तत्पदस्यार्थान्तरपरत्वं परिगृह्य समाधानमुच्यत इति भावः । अर्थान्तरपरत्वं सौत्रमेव न भाष्यकारीयमिति बोध्यम्, सूत्र एव 'इतरदधिकार्थे' इति निर्देशात् । ज्योतिष्टोमिकधर्मानुवादाभावे हेतुः—अपूर्वत्वादिति । अपूर्वार्थाभिधायकत्वे किं प्रयोजनमित्यत आह—**तथा प्रवृत्तीति** । अनधिगतापूर्वार्थविधाने विधेः प्रवृत्तिविशेषकरत्वं सिध्यतीत्यर्थः । विधेः प्रवृत्तिविशेषकरत्वसिद्धावनुवादकत्वस्वीकारोऽनर्थकः निष्प्रयोजनस्स्यात् । संनिहितवाचिन इतरशब्दस्य का गतिरित्यत आह—**इतरदधिकार्थे** इतरच्छब्दोऽधिकार्थे वर्तत इत्यर्थः । इतरच्छब्दस्याधिकार्थत्वे श्येनेन समानमित्यस्य का उपपत्तिरित्यत आह—

## भाष्यम्

ननु सन्निहितवचनोऽयं नाधिकार्थवचन इति । उच्यते—न केवलमयं सन्निहितवचन एव । पूर्वोक्तसदृशमसन्निहितमपि ब्रूते, अवशिष्टञ्च । यदाहि वस्त्राण्यनुक्रम्येतरशब्दः प्रयुज्यते—देवदत्ताय कम्बलो दीयताम्, विष्णुमित्राय कौशेयम्, यज्ञदत्ताय क्षौमम्, इतरच्चैत्रायेति तदा वस्त्रमेव प्रदीयते न हिरण्यं रजतं वा । इह ज्यौतिष्टोमिकेभ्योऽधिकान् लोहितोष्णीषादीन् धर्माननुक्रम्येतरशब्दः प्रयुक्तः । तेनात्राप्यधिकानेव वक्तुमर्हति । तथाधिकवचनो भवति । अथ ज्यौतिष्टोमिकान्

## टुप्टीका

तच्छ्येनेन समानं कर्तव्यम् । तथा लोहितोष्णीषादिविकारमात्रमतिदिश्यते । (इतरदधिकार्थे) चेतरशब्दे वर्ण्यमानेऽप्यप्राकृताः यदितरज्ज्योतिष्टोमात्प्राप्तं तच्छ्येनेन समानं कर्तव्यम् । तथा लोहितोष्णीषादिविकार-

## तन्त्रशिखामणिः

यद्यप्यङ्गविधीनां न साक्षाद्विधायकतया हविर्भिः सम्बन्धः, तथापि यानि ब्राह्मणानि येषां हविषां तानि ब्राह्मणरीतिषष्ठ्यर्थवृत्तिबहुव्रीहिणा हविःसम्बन्धमात्रब्राह्मणप्रतीतेः अङ्गविधीनामुपकारकाङ्गविधायकतया परम्परया हविःसम्बन्धेन हविर्ब्राह्मणत्वाविशेषात् तेषामप्यतिदेशः । यदि च हविर्विषयकवाक्येन तदेकदेशतया यत्साक्षात्सम्बन्धि तदेव हविर्ब्राह्मणम् न तु परम्परासम्बन्धि, सम्भवति साक्षात्सम्बन्धे परम्पराश्रयणानौचित्यात् इत्यर्थवादस्यैवातिदेश इत्यभिमानः तदाप्यङ्गवाक्यैकवाक्यतामापन्नं हि प्रधानवाक्यम् अङ्गप्रधानयुक्तां भावनां विधत्त इति हविर्विधायकवाक्यैकदेशत्वेनाप्यङ्गविधीनामप्यर्थवादानामिवास्ति हविर्ब्राह्मणता । स्वल्पञ्च फलमर्थवादमात्रातिदेशे प्राशस्त्यज्ञानम्, 'विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्याम' इत्युक्तरीत्या विध्युद्देशादेव कथञ्चिलभ्यञ्च । अङ्गविधीनामप्यतिदेशप्रवृत्तिविशेषरूपं भूरिफलमनन्यलभ्यञ्चेति सर्वेषामतिदेशः । एवञ्चेति । वरुणप्रघासेषु नवप्रयाजाद्यतिदेशात् 'त्रिंशदाहुतयो हूयेरन् वाजिनो यजत्याहुतीनां त्रिंशत्वाये'त्युत्तरवैहारिकविषय लिङ्गदर्शनमुपपन्नं भवति । तदङ्गविधीनामतिदेश एवाष्टौ हवींषि द्वावाज्यभागौ नव प्रयाजा नवानुयाजाः स्विष्टकृद् वाजिनयागश्चेति आहुतीनां त्रिंशत्वसम्पत्तेः । नन्वेवं वैश्वदेवे विहितानामग्निमन्थनादीनामतिदेशतस्सिद्धेर्वरुणप्रघासेषु 'अग्निं मन्थति' इति पुनराम्नानवैयर्थ्यमिति चेन्न, यद्यप्युत्तरवैहारिकाणामाग्नेयादीनां

## भाष्यसंदर्भयोजिनी

**समानमधिकमित्यर्थ** इति । अयं भावः—इषुश्येनयोः ज्योतिष्टोमविकृतित्वेऽपि कथम्भावाकाङ्क्षायाः पूरणाय प्राकृतपदार्थेष्वागतेष्वपि इषुसन्निधिपठितानां वैशेषिकाङ्गानां स्थानादङ्गत्वं वक्तव्यम् । इयं स्थितिः श्येनेऽपि । उभयत्र वैशेषिकातिदेशिकाङ्गानामितिकर्तव्यताकाङ्क्षाशामकत्वेनान्वये जाते 'समानमितरदिति' वाक्यस्य विशेषार्थंबोधनादृतेऽन्यत्प्रयोजनं किं स्यात्? विशेषश्चार्थः—इषौ वैशेषिकाङ्गजातापेक्षया श्येनसम्बन्धि वैशेषिकाङ्गजातमधिकमित्युक्ते वाक्यं सार्थकं भवति इषुश्येनयोरङ्गानुष्ठानविषये समानतापि रक्षिता भवतीति । अधिकार्थे इतरत्पदं न प्रसिद्धमिति पृच्छति—नन्विति । सन्निहितवचनत्वमस्य न निराकुर्मः, अधिकार्थबोधकोऽपीति ब्रूम इति समाधत्ते—**न केवलमिति** । **पूर्वोक्तसदृशम्** यथा निधनविष्टुत्यादीनां वैशेषिकत्वं तथा लोहितोष्णीषादीनां तथात्वम् । **असंनिहितमपि ब्रूते, अवशिष्टञ्च** । इतरच्छब्दस्य संनिहितमात्रं नार्थः, किन्त्वपि-

## भाष्यम्

ब्रूते तथा सन्निहितवचनः। तत्रावश्यमन्यतरद्ध्येयम्। यद्यधिकार्थतां हित्वा सन्निहितार्थता स्वीक्रियते, अनुवादमात्रमनर्थकं भवति। श्येनशब्दश्चाविवक्षितार्थः। अथ सन्निहितार्थतां हित्वा-धिकार्थता गृह्यते न कश्चिद्दोषो भवति। तस्मात्सूत्रकार आह—इतरदधिकार्थे इति। अतो

## टुप्टीका

मात्रमतिदिश्यते। (इतरदधिकार्थे) चेतरशब्दे वर्ण्यमानेऽप्यप्राकृताः कण्टकवितोनादयस्तेषामप्यतिदेशस्स्यात्। भाष्यकारव्याख्यानेन यच्छ्येनेन समानं तदितरदित्याश्रीयमाणे स्तुतिरपि नोपपद्यते प्रदेशान्तर इषुर्विहितः

## वार्तिकाभरणम्

अत्र भाष्यकारेण 'समानमितरच्छ्येनेनेत्येतत्' श्येनवैशेषिकाणां विधायकम्; न तु ज्योतिष्टौमिकाना-मनुवादकमित्युक्त्वा इतरशब्दस्य सन्निहितवचनत्वात् श्येनवैशेषिकाणां च सन्निहितत्वाभावात् कथं तद्विधायकत्व-मित्याशङ्क्य न केवलं सन्निहितवचन एवेतरशब्दः; किन्तु पूर्वोक्तसदृशं सन्निहितं च यत्तद्वचनः। इषौ च वषट्कारनिधनं इषुर्विष्टुतिः सप्ताहं भवतीति वैशेषिकाणाम् पूर्वमुक्तत्वात् वैशेषिकाणामेव तत् सादृश्यं सम्भवति, न तु चोदकप्राप्तानां प्राकृतानां धर्माणाम्, ततश्च ये पूर्वोक्तसदृशाः श्येनवैपिका लोहितोष्णीषादयः न ते सन्निहिताः ये च चोदकेन इषौ प्राप्ताः सन्निहिताः ज्यौतिष्टोमिका धर्माः न ते पूर्वोक्तवैशेषिकसदृशा इति प्रकृते पूर्वोक्तसदृश-

## तन्त्रशिखामणिः

पञ्चानां हविषामतिदेशतस्तत्सिध्यति, तथापि दक्षिणवैहारिक्यां मारुत्यामिक्षायामप्यङ्गत्वसिध्यर्थतया पुनराम्नाना-वैयर्थ्यात्। तस्मादङ्गविधीनामप्यतिदेशः। ननु कार्यमतिदिश्यते न शास्त्रमिति दशमाद्ये वक्ष्यमाणत्वात् ब्राह्मणा-तिदेशाङ्गीकारेण कथमधिकरणप्रवृत्तिरिति चेत्—वचनाभावस्थलविषयत्वाद्दशमाद्यस्येति न विरोधः। न चैवं ब्राह्मणातिदेशे ऊहबाधयोरनुपपत्तिरिति वाच्यम्। यद् ब्राह्मणं येन प्रकारेणेतरेषां वाक्यशेषीभवतीत्यतिदेशार्थः पूर्वत्र च मन्त्रविधीनामनेन मन्त्रेणापूर्वीयदेवतादिकं संस्कुर्यादिति हि प्रधानविधिवाक्यशेषतेत्यत्रापि तथैव प्राप्ते-रूहाद्यविरोधात्। न च तथाप्यर्थवादातिदेशाङ्गीकारे विश्वजिदादौ सौमिकार्थवादस्याप्यतिदेशे रात्रिसत्रन्यायेन तदर्थवादस्य फललाभात् 'स स्वर्गस्स्यात्' इत्ययं न्यायः प्रत्युद्धृतस्स्यादिति चेन्न, यत्र च वचनमस्ति तत्रैवार्थ-

## भाष्यसंदर्भयोजिनी

शब्देनासंनिहितमपि समुच्चीयते। तथा च पूर्वोक्तसदृशम् असनिहितम् अपि चावशिष्टं ब्रूत इत्यन्वयः। यथाहि कम्बलं कौशेयं क्षौमञ्चानुक्रम्य 'इतरच्चैत्राय' इत्युक्तौ इतरच्छब्देन पूर्वोक्तसदृशमसंनिहितमपि वस्त्रमेव क्रीत्वा देयम् अथवा अवशिष्टं कम्बलादिभ्यो वस्त्रं देयमिति बुध्यते तथा प्रकृतेऽपि। लोहितोष्णीषादिधर्मानुक्रमण वशेनेतरशब्दोऽधिकवचनः, चोदकप्राप्तज्यौतिष्टोमिकपदार्थानपेक्ष्य संनिहितवचन इतरशब्दः। उभावप्यर्थौ न भवितुमर्हतः अन्यतरस्य त्यागे प्राप्ते किं त्याज्यम् किमुपादेयमिति विचिकित्सायामाह ब्रवीति। इतरशब्दस्य संनिहितार्थत्वे 'श्येनेन' इत्यस्याविवक्षितार्थत्वम्, 'समानमितरत्' इत्येतावन्मात्रस्यौचितत्वात्। अधिकार्थतापक्षे

## भाष्यम्

ज्यौतिष्टोमिकाद्विधेरधिकाः श्येनवैशेषिका ये त इहातिदिश्यन्ते। तद्वाचकं समानं स्यात्। समानशब्दः स्यादित्यर्थः। भवति श्येनशब्दश्च विवक्षितः॥ १६॥

इति प्रत्यक्षवचनातिदेशाधिकरणम्॥ २॥

३

## पञ्चसञ्चरेष्वर्थवादातिदेशः संनिधानात्॥ ७.१.१७॥

### विषयः

चातुर्मास्यानां वैश्वदेवे पर्वण्याग्नेयादीनि हवींषि सार्थवादवाक्यैर्विहितानि। धर्माश्च

## टुप्टीका

प्रदेशान्तरे च समानमितरदिति। तस्मादानर्थक्याद्वाक्यस्य पूर्वपक्षवचनव्यक्तिपरित्यागः॥ १६॥

## वार्तिकाभरणम्

सन्निहितोभयपरत्वासम्भवादवश्यं हातव्येऽन्यतरस्मिन्नर्थवत्त्वाय सन्निहितपरत्वं हित्वा पूर्वोक्तसादृश्येन वैशेषिकलोहितोष्णीषादिधर्मपरत्वं निश्चीयते। चोदकसन्निहितज्यौतिष्टोमिकधर्मपरत्वे अनुवादत्वेनानर्थक्यापत्तेः। तस्मात् चोदकप्राप्तज्यौतिष्टोमिकधर्मापेक्षया ये अधिका श्येनवैशेषिका धर्मा लोहितोष्णीषादयः तत्पर इतरशब्द इति तेषामेवायं विधिः; न तु ज्यौतिष्टोमिकानां अनुवाद इति सिद्धान्तितम्। तं सिद्धान्तमाक्षेप्तुं सूत्रं पठति-- अपि वा यद्यपूर्वत्वात् इतरदधिकार्थे ज्यौतिष्टोमिकाद्विधेः तद्वाचकत्वं समानं स्यात्।

## तन्त्रशिखामणिः

वादातिदेशाङ्गीकारात्। ननु यथार्थभावनाकाङ्क्षावशादुपकारमुखेन तदङ्गानां तद्द्वारा तद्विधीनाञ्चातिदेशः, तथा शब्दभावनाकाङ्क्षावशात् प्राशस्त्यरूपकार्यद्वारार्थवादस्याप्यन्येष्वतिदेशः स्यादिति स्वर्गन्यायो न प्रवर्तेत इति चेन्न; शब्दभावना हि त्र्यङ्गपरिपूर्णामर्थभावनां प्राप्य पश्चात् पुरुषं प्रवर्तयितुमुन्मुखी भूत्वाकाङ्क्षावशात् प्राशस्त्यज्ञानमुखेनान्यत्र स्थितानपि अर्थवादान् परिगृह्णीयादिति। ततश्चार्थभावनया ततः प्रागेव स्वांशानां ग्रहणात्तस्यां दशायामुपदेशेन वा फलान्तरानुपस्थितेस्सस्वर्गन्यायावताराविरोधादित्याहुः॥ १६॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

तु कस्यापि नानर्थक्यमित्याह—न कश्चिद्दोषो भवति इति। तद्वाचकं अतिदेशवाचकमित्यर्थः। समानशब्दोऽतिदेशवाचक इत्यर्थः॥ १६॥

इति प्रत्यक्षवचनातिदेशाधिकरणम्॥ २॥

पञ्चसञ्चराधिकरणविषयं दर्शयति—चातुर्मास्यानामिति। चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि। तत्र सन्ति चत्वारि पर्वाणि-वैश्वदेवः, वरुणप्रघासः साकमेधः, शुनासीरीयश्चेति। तत्र प्रथमे वैश्वदेवे पर्वणि 'आग्ने-

## भाष्यम्

**तेषामुक्ताः । वरुणप्रघासेषु केवलानि हवींष्याम्नाय यद्वैश्वदेविकानां ब्राह्मणं तत्तेषामतिदिश्यते । 'एतद् ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि' (तै. आ. १.७.१)।**

## संशयः

तत्र किमर्थवादमात्रस्यायमतिदेशः ? उत सार्थवादकस्य सविधिकस्य कृत्स्नस्य काण्डस्य ?

## वार्तिकाभरणम्

आक्षिपति-**इतरेति** । इतरशब्दो लोके नाधिक्यार्थे प्रसिद्धः । पूर्वोक्तसादृश्येन प्रसिद्ध इति यावत् । किन्तु उपयुक्तादितरत् सन्निहितं च यत्तत्रैष प्रसिद्धः । यथा वस्त्रदानप्रकरणे—'देवदत्ताय कम्बलो दीयताम्' 'विष्णुमित्राय कौशेयम्', इतरच्चैत्राय इत्युक्ते यदुपयुक्तं कम्बलादिकं तद्व्यतिरिक्तं सन्निहितं च यद्वस्त्रान्तरं तद्वाचक एवेतरशब्दो विज्ञायते । तथेहापीत्यर्थः । नन्वितरशब्द आधिक्यवचनोऽपि भवतु को दोष इत्यत आह **न चेति** । न ह्येक एव शब्दो द्वावर्थौ प्रतिपादयितुमीष्टे एकार्थेनैवोपपत्तावनेकार्थकल्पनस्यान्याय्यत्वादित्यर्थः । तथा च लोकप्रसिद्धिबलेनेहापि इतरशब्दस्योपयुक्तावशिष्टसन्निहितपरत्वमेवाङ्गीकर्तव्यमित्याह—**तस्मादिति** । तत्र ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन परामृश्य **विकारो विधीयत** इत्यनेन सम्बन्धः । अस्यायमर्थः—

## भाष्यसन्दर्भयोजिनी

थमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुं पौष्णं चरुम्, मारुतं सप्तकपालम् वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्' इत्यष्टौ हवींषि अर्थवादसहितैर्वाक्यैर्विहितानि । द्वितीये वरुणप्रघास-पर्वणि **केवलानि हवींष्याम्नाय** यागान् धर्मरहितान् विधाय धर्माणामतिदेशकं प्रत्यक्षवचनम् 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद् ब्राह्मणानीतराणि' ( तै. आ. १.७.१.१. ) इत्याम्नातम् । इदमेवास्याधिकरणस्य विषयवाक्यम् । तत्र वैश्वदेवपर्वणि विहितेष्वष्टसु यागेष्वादितः पञ्च यागाः पञ्चसञ्चरशब्देनाभिधीयन्ते । अर्थात् चतुर्ष्वपि पर्वसु इमे पञ्च सञ्चरन्तीति पञ्चसञ्चराः । विषयवाक्यस्यायमर्थः—अस्मिन् वाक्ये 'इतराणि' इति पदं वैश्वदेविकाग्नेयादि हविःपञ्चकपरम् । इतराणि पञ्चहवींषि यद्ब्राह्मणानि-यादृशाङ्गकलापविधायकब्राह्मणवन्ति तानि एतद् ब्राह्मणानि वैश्वदेविकब्राह्मणवन्ति । अर्थात्-वरुणप्रघासेषु वैश्वदेवपर्वापेक्षया नूतनानां कर्मणां विधानं परिदृश्यते । तदितराणि यानि पञ्चसञ्चरकर्माणि तानि 'एतद् ब्राह्मणानि' एतत्पदं वैश्वदेवपर्वपरम् । वैश्वदेविकब्राह्मणानि भवन्ति इति । वैश्वदेववरुणप्रघासपर्वणोः परस्परं प्रकृतिविकृतिभावो नास्ति । तत्र पञ्चसञ्चरेषु वैश्वदेविक धर्मजातमतिदेशेनानेतव्यम् । तदर्थमिदं प्रत्यक्षवचनम्—'एतद् ब्राह्मणानि' इति ।

विषयवाक्ये संशयमुत्थापयति—**तत्र किमर्थवादमात्रस्येति** । ननु 'एतद् ब्राह्मणानि' इत्यत्र ब्राह्मण-पदमुपात्तम् । तच्च सार्थवादाङ्गप्रधानविधायकवाक्यबृन्दात्मकम् । तत्रार्थवादाः, अङ्गविधयः, प्रधानविधयश्च सन्ति । तेषु प्रकृते ब्राह्मणपदेन प्रधानविधिमात्रग्रहणं मा भवतु, यतो हि वरुणप्रघासेषु पञ्चसञ्चरा विहिता

## भाष्यम्

**इति। कथं पुनरर्थवादमात्रस्यातिदेशो भवति ? यथा 'पम्पाकुलायप्रतिमाश्च वृक्षाः' इति। के पुनर्विधयः। केऽर्थवादाः ? 'त्रेधा संनद्धं बर्हिर्भवति' (तै. ब्रा. १.६.३.१.) 'त्रेधा संनद्ध इध्मः' 'नव प्रयाजा इज्यन्ते नवानुयाजाः (तै. ब्रा. १.६.३.३) इत्येवमादयो विधयः। 'वार्त्रघ्नानि वा एतानि हवींषि' इत्यर्थवादाः।**

**तत्रेदमुच्यते—**पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात्। **पञ्चैतानि हवींषि सर्वपर्वसु सञ्चरन्तीति पञ्चसञ्चराणीत्युच्यन्ते। तेषु पञ्चसञ्चरेषु अर्थवादमात्रस्यातिदेश इति। कुतः ? सन्निधानात्। हविषां सन्निहिता अर्थवादाः। हविर्विधिभिरेकवाक्यसम्बद्धत्वान्न धर्मविषयाः। किमतः ? अत एतद्भवति-यत्पूर्वेषां ब्राह्मणमिति व्यपदेशो युज्यते। तद्धि तेषां ब्राह्मणम् येन**

## वार्तिकाभरणम्

लोकप्रसिध्यनुसारेणेतरशब्दस्य पूर्वोक्तावशिष्टसन्निहितवचनत्वात् ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं ऋत्विगादि तदिनरशब्देनानूद्य तस्य श्येनगतोष्णीषत्वादिविकारो विधीयत इति।

नत्वेतावता प्रकृते कथमितरशब्दस्योपयुक्तेतरपरत्वमित्याशङ्क्योपयुक्तेतरपरत्वमुपपादयति–इषाविति इषुयागे ज्योतिष्टोमाच्चोदकप्राप्तस्य साम्नो वषट्कारनिधनं भवतीति वषट्कारनिधनत्वं विष्टुतेश्च इषुर्विष्टुतिरिति इष्त्राकारत्वं स्तोत्रस्य सप्ताहं भवतीति सप्तहाख्यसाम च विकारं विधाय तदनन्तरं 'समानमितरच्छ्येनेनेति वाक्यं पठ्यते। ततश्च ज्योतिष्टोमाच्चोदकप्राप्तानामङ्गानां मध्ये सामबिष्टुतिस्तोत्राणां निधनादिविकारविधानार्थमुपयुक्तत्वात् तदवशिष्टमृत्विगादि, चोदकप्राप्तमुपयुक्तेतरद्भवतीति मुख्यया वृत्या इतरशब्दस्य चोदकप्राप्तमृ-

## भाष्यसन्दर्भयोजिनी

वर्तन्ते। अवशिष्टा अर्थवादा अङ्गविधयश्च। तर्हि **अर्थवादमात्रस्यातिदेश इति** कथं सन्दिह्यत इति चेत्—न; वारुणप्राघासिकपञ्चसञ्चरविधायकवाक्येषु शाब्दीभावनाया इतिकर्तव्यताकाङ्क्षायां सत्यां तत्पूरकार्थवादानामत्राभावेन तदपेक्षायामर्थवादमात्रस्यावश्यकत्वात्। सन्देहे पक्षान्तरमुन्यस्यति-उत **सार्थवादकस्येत्यादि।** अर्थवादमात्रस्येत्यत्र लौकिकमुदाहरणं प्रदर्शयति—**पम्पाकुलायेति।** कुलं पक्षिसन्तानोऽयतेऽत्रेति कुलायः-पक्षिवासकः। तत्प्रतिमात्वेन वृक्षेषु वर्ण्यमानेषु तत्प्रान्तभागस्य जनपदस्य शोभायां किमु वक्तव्यम् ? एवमेव पञ्चसञ्चरेषु प्रशस्यमानेषु वरुणप्रघासेषु विहितानामन्येषां क्रतूनां प्राशस्त्ये किं प्रष्टव्यमिति हेतोः पञ्चसञ्चरविधायकवाक्यान्यर्थवादमेपेक्षन्त इति भावः। द्वितीयकोटेः शरीरं विशदयितुमारभते **के पुनर्विधय इति। वार्त्रघ्नानि-** अग्निर्वृत्राणीति वृत्रहननप्रकाशकमन्त्रसाध्यानीत्यर्थः। तेन हविषां प्राशस्त्यमुन्नीयते।

एवं संशये प्राप्ते पूर्वपक्षसूत्रं पठति **पञ्चसञ्चरेष्विति।** पञ्चसञ्चरत्वं व्युत्पत्त्या प्रदर्शयति—**पञ्चैतानीति। संनिधानादि**त्यर्थवादमात्रस्यातिदेशे हेतुः। अर्थवादा विध्येकवाक्यतामापन्ना यथोपकुर्वन्ति न तथाङ्गविधयः। एवं कथनस्य कः परिणाम इति पृच्छति-**किमतः ?** समाधत्ते—**एतद्भवति।** हविषां विधाने विधयो यथा व्यापृता भवन्ति तथैव तदेकवाक्यतामापन्ना अर्थवादाः। विधेयानि हवींषि भवन्ति विधायकञ्च ब्राह्मण-

## भाष्यम्

विधीयन्ते। कोऽन्यो हविषां ब्राह्मणस्य च सम्बन्धोऽन्यत्र विधेयविधायकभावात्। अर्थवादैश्चैतानि विधीयन्ते न धर्मविधिभिः। धर्मविधिभिर्यानि विधीयन्ते न तानि हवींषि। तस्मादर्थवादानामतिदेशो न धर्मविधीनाम्।

अपि च वरुणप्रघासेष्वपि केचिद्वैशेषिका धर्मा विधीयन्ते। यथा 'अग्निं मन्थन्ति' 'प्रसुवो भवन्ति (तै. ब्रा. १.६.३.३.) इति। (तै. ब्रा. १.६.३.२. कुसुमोपेतदर्भाः प्रसुवः) तेषामतिदेशेन विहितानां पुनराम्नानमनर्थकं स्यात्, यदि विधयोऽतिदिश्येरन्। तस्मादर्थवादातिदेश इति ॥ १७ ॥

## सर्वस्य वैकशब्द्यात् ॥ ७.१.१८ ॥

नैतदेवम्-अर्थवादमात्रास्यातिदेश इति। सविधिकस्य सार्थवादकस्य कृत्स्नस्य काण्ड-

## वार्तिकाभरणम्

त्विगादिपरत्वं सम्भवतीत्यर्थः। स्वपक्षे समानमितरच्छ्येनेनेति वाक्यस्यार्थमाह—यदीति। इषुयागोपयुक्तेभ्यो ज्योतिष्टोमाच्चोदकेन प्राप्तेभ्यो निधनविष्टुतिस्तोत्रेभ्यो ह्यीतरद्यत् ज्योतिष्टोमाच्चोदकेन प्राप्तमृत्विगादिकं तच्छ्येन यथा लोहितोष्णीषविकारादिविकारयुक्तं कृतं तत्तथा इषुयागेऽपि कर्तव्यमिति वाक्याथ इत्यर्थः। एवं वषट्कारनिधनम् इषुर्विष्टुतिस्सप्ताहं भवतीत्युक्त्वाह समानमितरच्छ्येनेनेति यथा इतरशब्दस्य उपयुक्तावशिष्ट सन्निहितवचनत्वे चोदकप्राप्तज्योतिष्टोमिकधर्मपरत्वम्, तथा सादृश्यवचनत्वेऽपि चोदकप्राप्तज्योतिष्टोमिक धर्मपरत्वं सम्भवतीति सूचितं भवति। तथाहि निधनविष्टुतिस्तोत्राणां चोदकप्राप्तानां ज्यौतिष्टोमिकानां विकारविधानार्थमुपयुक्तत्वात् तदतिरिक्तानामृत्विगादीनां चोदकप्राप्तत्वेन निधनादिसदृशत्वात् उपयुक्तनिधनादिसदृशं ऋत्विगादि ज्योतिष्टोमिकधर्मपरत्वमितरशब्दस्य सम्भवति। स्वपक्षे सिद्धान्तस्य फलमाह—**तस्मादिति**। इतरशब्देन ज्यौतिष्टोमिकानृत्विगादिधर्माननूद्य श्येने यद्विकारयुक्तया ते धर्माः कृतास्तद्विकारयुक्तया इषावपि

## भाष्यसन्दर्भयोजिनी

वाक्यम्। हविषां ब्राह्मणस्य च सम्बन्धोऽयमेव यद् विधेयविधायकभावः। अन्यत्र ऋते इत्यर्थः। यदा विधेयविधायकभावस्सम्बन्धो ब्राह्मणस्य तदा तदन्तर्गतार्थवादानामपि स एव सम्बन्धस्सिध्यति। धर्मविधयश्च न हवींषि विधदति नापि तेषां हविर्विधायैकवाक्यैकवाक्यता विद्यते। अतः 'एतद् ब्राह्मणानी'ति वाक्यमर्थवादानेवातिदेष्टुं प्रवृत्तमिति सिध्यति। धर्मविधीनां विधायकत्वन्तु वर्तते, किन्तु न तेषां हविर्विधायकत्वम् इत्याह—**न तानि हवींषीति**। अर्थवादेषु तु विध्येकवाक्यतापन्नेषु हविर्विधायकत्वमस्ति। अतोऽर्थवादानामेवातिदेश इत्याह—**तस्मादिति**। अस्मिन् पक्षे युक्त्यन्तरं समुच्चिनोति-**अपि चेति**। अर्थवादेस्सह विधीनामप्यतिदेशे सति ये अग्निमन्थनादयो वरुणप्रघासेषु श्रूयन्ते तेषामानर्थक्यं स्यादित्याह—**पुनराम्नानमनर्थकं स्यादिति**। उपसंहरति—**तस्मादिति** ॥१७॥

सिद्धान्ती वदति—**नैतदेवमिति**। कृत्स्नस्यातिदेशे हेतुःऐकशब्द्यात्। 'एतद् ब्राह्मणान्येव' इत्यत्र

## भाष्यम्

**स्यातिदेश इति। कुतः? ऐकशब्द्यात् समानशब्दत्वादित्यर्थः। समानोऽयं ब्राह्मणमिति शब्दो विधीनामर्थवादानाञ्च।**

**स यथार्थवादान् गृह्णाति एवं विधीनपि गृह्णाति चेत्तानप्यतिदिशति। यत्तु विधीनां हविर्भिस्सम्बन्धो नास्तीति, विधेयविधायकसम्बन्धो नास्ति उपकारलक्षणसम्बन्धो भविष्यति। क उपकारः? यदेषामङ्गानि विदधाति। अस्ति चेत्सम्बन्धो ब्राह्मणशब्दश्रुत्या सर्वातिदेशो न्याय्य इति॥ १८॥**

## वार्तिकाभरणम्

कर्तव्या इति विधानात् श्येनयागे विकारत्वेन विहितं यल्लोहितोष्णीषादिकं तन्मात्रमेवात्रातिदिश्यते; न तु श्येनविहिता अप्राकृतकार्याः कष्टकवितोदनादयोऽप्यतिदिश्यन्ते तेषामप्राकृतकार्यत्वेन ज्यौतिष्टोमिकविकारत्वाभावादित्यर्थः।

ननु 'इतरदधिकार्थं' इति सूत्रे इतरशब्दस्याधिकार्थत्वप्रतीतेः कथमितरशब्दस्योपयुक्तावशिष्टपरत्वमित्याशङ्कायां सूत्रे इतरदधिकारार्थं इत्यत्र विद्यमानस्याधिकार्थशब्दस्य स्वपक्षानुसारेणार्थमाह— **इतरेति**। सूत्रे विद्यमानमितरपदं समानमितरच्छ्येनेनेति वाक्यपरम्। तद्वाक्यमधिकार्थे विकाररूपेऽर्थे वर्तत इत्यर्थः। विकारविधानार्थमिति यावत्। एवं सूत्रे विद्यमानाधिकार्थशब्दमधिकशब्दस्य विकारार्थतया अर्थशब्दस्य प्रतिपाद्यपरतया च व्याख्याय इदानीमर्थशब्दस्य प्रयोजनपरतया व्याचष्टे— **अथवेति**। अस्मिन् पक्षे सूत्रस्थेतरदिति शब्दः पदपर एव न तु वाक्यपरः। इतरत्पदमधिकार्थे विकारविधानरूपप्रयोजनसिध्यर्थं ज्यौतिष्टोमिकान् धर्मानुद्दिशतीत्यर्थः। इतरशब्दस्याधिकार्थत्वमिति भाष्यकारपक्षे सिद्धान्तस्य प्रयोजनमाह— **अधिकार्थं इति**। भाष्यकारव्याख्याने

## भाष्यसन्दर्भयोजिनी

ब्राह्मणशब्दस्समानः। यथा ब्राह्मणशब्दोऽर्थवादान् अभिधत्ते तथा विधीनपि। सति चैवं ब्राह्मणशब्दोऽर्थवादानेव परिगृह्यातिदिशतीति कथं वक्तुं शक्यमित्यर्थः।

अर्थवादानां विधिभिस्सम्बन्धोऽस्ति न विधीनामिति यदुक्तं तदनुवदति— **यत्त्विति**। निरस्यति— **विधेयेति**। विधेयविधायकस्सम्बन्धो नास्ति धर्मविधीनां विधिभिस्सह, किन्तु सम्बन्धान्तरमस्तीत्याह— **उपकारेति**। उपकार्योपकारकलक्षणस्सम्बन्ध इत्यर्थः। शाब्दीभावनाया इतिकर्तव्यताकाङ्क्षायामर्थवादलक्षितप्राशस्त्यज्ञानस्येव आर्थभावनाया इतिकर्तव्यताकाङ्क्षायामङ्गजातस्यान्वयः। यः प्रत्ययो लिङंशेन शाब्दीभावनामाचष्टे स एव प्रत्यय आख्यातांशेनार्थीभावनामाचष्टे इत्युभयोस्समानाभिधानश्रुत्या सम्बन्धो वर्तते। इयांस्तु विशेषः—केवलं प्रधानानि फलजनकानि न भवन्तीति स्वनिष्ठफलजननसामर्थ्योद्दीपनायाङ्गजन्योपकारमपेक्षन्ते, अङ्गानि च प्रधानानां शक्त्याधायकतया तत्रान्विता भवन्तीति अङ्गसहितप्रधानविधायकत्वं विधीनाम्। तत्रैवार्थवादा विधायकसाहाय्यमाचरन्ति। अङ्गविधयोऽपि विधिविषयीभूतधात्वर्थनिष्ठशक्त्याधायकतयान्वयं प्राप्नुवन्ति। एवञ्च ब्राह्मणशब्दः केवलमर्थवादानेव गृह्णातीति कथं समञ्जसं स्यात्? अतो ब्राह्मणशब्दः सर्वातिदेश पर इति भावः॥१८॥

भाष्यम्

## लिङ्गदर्शनाच्च ।। ७.१.१९ ।।

लिङ्गञ्च विधीनामतिदेशं दर्शयति । किं लिङ्गम् ? वरुणप्रघासेषु त्रिंशतमाहुतीर्दर्शयति । यदि विधयो नातिदिशेरन् ता न स्युः । तस्माददितिदिश्यन्ते ।। १९ ।।

## विहिताम्नानान्नेति चेत् ।। ७.१.२० ।।

विहिताम्नानादिति यदुक्तं तस्य कः परिहार इति आभाषान्तं सूत्रम् । ।। २० ।।

## नेतरार्थत्वात् ।। ७.१.२१ ।।

अत्रोच्यते—विध्यतिदेशेऽपि सति नाग्निमन्थनादीनामाम्नानमनर्थकम् । इतरस्य

### वार्तिकाभरणम्

इतरशब्दे अधिकार्थे वर्ण्यमाने यत्समानं तदितरदित्याश्रीयमाण इत्यन्वयः । भाष्यकारपक्षे हि यदितरच्छ्येनेन समानमिति न वचनव्यक्तिः, इतरशब्दस्याधिकार्थतया इतरशब्दार्थभूतानां श्येनवैशेषिकाणामप्राप्तत्वेनेतर शब्दस्योद्देश्यसमर्पकत्वाभावात् । किन्तु यच्छ्येनेन समानं तदितरदित्येवं वचनव्यक्तिः यादृशं क्रियमाणं श्येनं भवति तादृशमधिकं कर्तव्यं श्येने यद्विहितमधिकं तदत्र कर्तव्यमिति यावत् । ततश्च ये प्राकृतपदार्थविकाराः लोहितोष्णीषादयो ये चाप्राकृतपदार्थाः कण्टकवितोदनादयस्ते उभयेऽप्यस्मिन् पक्षे अतिदिश्यन्त इत्यर्थः । पूर्वपक्षवचनव्यक्तिं निराकरोति—**स्तुतिरपीति** । इषुयागविधिसन्निधौ समानमितिरच्छ्येनेनेत्यस्याम्नातत्वाभावेन तद्विध्येकवाक्यत्वं × × × × नोपपद्यते । तस्मात् स्तुत्यर्थत्वाभावेन वाक्यस्य केवलानुवादकतया आनर्थक्यात् इतरच्छ्येनेन समानम् यथा श्येनो ज्योतिष्टोमधर्मकस्तथायमपीषुरित्येतादृशपूर्वपक्षवचनव्यक्तिपरित्याग एव युक्त इत्यर्थः ।।१६।।

वृत्तमधिरकरणम् ।।

अत्राचार्यैर्भाष्ये स्पष्टत्वात् बृहट्टीकायां प्रपञ्चितत्वाच्च त्रीण्यधिकरणानि त्यक्तानि । तानि वयं वर्णयामः ।

### भाष्यसन्दर्भयोजिनी

लिङ्गदर्शनाच्चेति सूत्रेण विधीनामप्यतिदेशे प्रमाणं दर्शयति—'वाजिनो यजत्याहुतीनां त्रिंशत्वाय' इति वाक्यं वरुणप्रघासेषूत्तरविहारे त्रिंशतमाहुतीः परिगणयति । यदि धर्मविधीनामतिदेशविषयत्वं न स्यात् तर्हि त्रिंशत्सङ्ख्याया उपपत्तिर्न स्यादित्याह-यदि विधय इति । ताः त्रिंशदाहुतयः । त्रिंशदाहुतयश्च-द्वावाज्यभागौ अष्टौ हवींषि, नव प्रयाजाः, नवानुयाजाः, स्विष्टकृत्, वाजिनहोमश्चेति सम्पद्यन्ते ।। १९ ।।

वरुणप्रघासेषु अग्निमन्थनाद्याम्नानं विधीनामनतिदेशकमित्युक्तं तस्य कः परिहारः ? इत्याभाषान्तं सूत्रम्– शङ्कोद्घाटनरूपं सूत्रमित्यर्थः ।। २० ।।

वरुणप्रघासेष्वग्निमन्थनाम्नानं विध्यतिदेशेऽपि अनर्थकं न भवतीत्याह—**विध्यतिदेशेऽपि** । दक्षिण-विहार उत्तरविहारश्चेति वरुणप्रघासेषु विहारद्वयम् । एकत्राध्वर्युः कर्माणि करोति, अपरत्र च प्रतिप्रस्थाता ।

### भाष्यम्

हविषोऽर्थेन भविष्यति, दक्षिणवैहारिकस्य मारुत्याख्यस्य । तस्मान्नैतज्ज्ञापकं विधीनामनतिदेशस्य भविष्यति ॥ २१ ॥

इति पञ्चसञ्चराधिकरणम् ॥ ३ ॥

४

## एककपालैन्द्राग्नौ च तद्वत् ॥ ७.१.२२ ॥

### विषयः

वैश्वदेवे एककपाल आम्नातः-'द्यावापृथिव्य एककपालः' ( तै. ब्रा. १.६.२.५ ) इति ।

### वार्तिकाभरणम्

पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ।

चातुर्मास्येषु चत्वारि पर्वाणि-वैश्वदेवः वरुणप्रघासस्साकमेधश्शुनासीरीयमिति । तत्र वैश्वदेवे पर्वणि "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरूं सावित्रं द्वादशकपालं वारूणं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् सारस्वतं चरुं पौष्णं चरुं इति विधिभिः 'वार्त्रघ्नानि वा एनानि हवींषि' इत्यर्थवादसहितैराग्नेयादियागान्विधाय "त्रेधा सन्नद्धं बर्हिर्भवति त्रेधा सन्नद्ध इध्मः । नवप्रयाजा इज्यन्ते नवानूयाजा' इत्याद्यङ्गविधयोऽप्याम्नानाः । वरुणप्रघासेषु च "आग्नेयमष्टाकपालं निर्वपति; सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं ऐन्द्राग्नमेकादशकपालं मारुतीममिक्षां वारूणीमामिक्षां कायमेककपालमि'ति विधाय एतद्ब्राह्मणान्येव पञ्चहवींषि

### तन्त्रशिखामणिः

यथा पूर्वत्र वचनस्य बहुविषयत्वलाभायाङ्गविधीनामप्यतिदेशः तथात्रापि बहुविषयत्वलाभाय वैश्वदेविकब्राह्मणातिदेश इति प्रापय्य सिद्धान्तयितुं प्राप्तिं दर्शयतीति सङ्गतिः । वैश्वदेवे प्रथमे पर्वणि 'द्यावापृथिव्यमेककपालम्' इत्येककपाल आम्नातस्तथा वरुणप्रघासेष्वपि 'काय एककपालः' इति । तथा तत्र 'ऐन्द्राग्नो द्वादशकपालः' इत्यैन्द्राग्नोऽपि । ततस्तृतीये पर्वणि साकमेधे 'ऐन्द्राग्न एकादशकपाल इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपालः' इत्यैन्द्राग्नैककपालानाम्नाय श्रूयते—'एतद् ब्राह्मण ऐन्द्राग्न एतद् ब्राह्मण एककपालो यद् ब्राह्मणश्चे-

### भाष्यसन्दर्भयोजिनी

तत्र मारुत्याख्यस्य कर्मणोऽनुष्ठानं दक्षिणविहारे भवति । तदर्थमग्निमन्थनादिकं सार्थकं भवति । तदिदमाह—इतरस्येति । मारुत्याख्यकर्मण इत्यर्थः । एतत्-अग्नि मन्थन्तीत्यादि न ज्ञापकं विध्यनतिदेशस्येति ॥ २१ ॥

इति पञ्चसञ्चराधिकरणम् ॥ ३ ॥

अधिकरणविषयवाक्यानि प्रदर्शयितुं वैश्वदेवपर्वणः स्थितिमवबोध्यति-वैश्वदेव इति । विषयवाक्यम्-'एतद् ब्राह्मण ऐन्द्राग्नः एतद् ब्राह्मण एककपालः यद् ब्राह्मण इतर इतरश्चेति । अत्र प्रथममितरपदम् ऐन्द्राग्नपरम्, द्वितीयञ्चैककपालपरम् । अत्र संशयपूर्वपक्षोत्तरपक्षाः पूर्ववत् इति पञ्चसञ्चराधिकरणन्यायमति-

## भाष्यम्

वरुणप्रघासेष्वपि 'काय एककपालः' ( तै. ब्रा. १.६.४.५ ) ( श. ब्रा. २.४.३.१३ ) इति। तत्रापरः-'ऐन्द्राग्नो द्वादशकपालः' ( तै. ब्रा. ) 'मारुत्यामिक्षा' इति। तथा साकमेधेष्वप्येक-कपालैन्द्राग्नावाम्नातौ 'ऐन्द्राग्न एकादशकपालः' 'इद्राय वृत्रघ्ने चरुः' 'वैश्वकर्मण एककपालः'। तत्रैदमाम्नातम्—'एतद् ब्राह्मण ऐन्द्राग्नः, एतद् ब्राह्मण एककपालो यद् ब्राह्मण इतर इतरश्च' इति। तत्रेदमुच्यते-एककपालैन्द्राग्नौ च तद्वत्, यद्वत्पञ्चसञ्चराणि। अत्रापि सविधिकस्य सार्थ-वादकस्य काण्डस्यातिदेशः। तेनैव न्यायेनेति। प्राप्तिसूत्रमेतदुत्तरचिन्तार्थम्॥ २२॥

इत्येककपालैन्द्राग्नाधिकरणम्॥ ४॥

## वार्तिकाभरणम्

यद्ब्राह्मणानीतराणि' इति श्रूयते। तत्र संशयः किं वैश्वदेविकानां हविषां यो 'वार्त्रघ्नानि वा एतानि हवींषी'-त्यर्थवादः स एव एतद्ब्राह्मणानीत्यनेन वारुणप्राघासिकानामाग्नेयादीनां पञ्चानां हविषामप्यतिदिश्यते-? किं वा अर्थवादस्त्रेधा सन्नद्धं बर्हिरित्याद्यङ्गविधयश्च अतिदिश्यन्त इति। तत्रार्थवादस्तावत् प्रधानविध्येकवाक्यत्वेन प्रधानविधिकोटिनिविष्टत्वाद्धविषां सन्निहितः; अङ्गविधयस्तु तद्धर्मविधायकत्वेन व्यवहिताः। तस्मात् सन्निहि-तत्वादेतद्ब्राह्मणानीत्यनेनार्थवाद एवातिदिश्यते।

यदि चाङ्गविधयोऽप्यतिदिश्येरन् तदा वारुणप्रघासिकेषु 'अग्नि मन्थन्ति प्रसुवो भवन्ति' इति वैश्वेदेविकधर्माणां पुनर्विधानमनर्थकं स्यात्। तस्मात् अर्थवाद एवातिदिश्यत इति पूर्वः पक्षः। सिद्धान्तस्तु अङ्गविधयो न प्रधानहवींषि विदधत इत्यङ्गविधीनां हविस्सम्बन्धाभावेऽपि तत्सम्बन्धिधनमेव विदधत इति हविषामङ्गविधीनां च अस्त्युपकारलक्षणः सम्बन्धः। अत्यल्पमिदमुच्यते—न हि केवलं सार्थवादं प्रधानवाक्यं

## तन्त्रशिखामणिः

तरश्चेतरश्च' इति। अत्र प्रथममितरपदमैन्द्राग्नपरम् द्वितीयमेककपालपरम्। तत्र संशयपूर्वोत्तरपक्षाः पूर्ववत्। नन्वभ्यधिकशङ्काभावादतिदेशसूत्रवैयर्थ्यमिति चेत्—उत्तरविवक्षया प्राप्तिसूत्रत्वान्न दोषः। ननूत्तरसूत्रे 'एतद् ब्राह्मण एककपाल' इत्यस्यैव विषयत्वादैन्द्राग्नग्रहणमिह सूत्रे किमर्थमिति चेदाह-ऐन्द्राग्नसाहचर्यादपि वारुण-प्रघासिकातिदेश इति राद्धान्ताभ्युच्चययुक्त्यर्थत्वात् ऐन्द्राग्नग्रहणस्य न वैयर्थ्यम्। न चैवमप्येककपाल एव पञ्च-सञ्चरणाधिकरणन्यायव्युत्पादकमस्तु। तथा सत्युत्तरविवक्षया सूत्रकृतो यत्नान्तरं भविष्यतीति चेत्— सत्यम्; पूर्वपक्षलिङ्गाग्निमथनपरवचनान्यथानयनार्थं त्रिंशदाहुतिदर्शनरूपसिद्धान्तलिङ्गविवक्षया च पञ्चसञ्चरेषु न्य........त्पादनस्यावश्यकतया यत्नान्तरस्यादोषत्वादित्याहुः॥ २२॥

## भाष्यसन्दर्भयोजिनी

दिशति एककपलैन्द्राग्नौ च तद्वत् इति। तेनैव न्यायेन पञ्चसञ्चराधिकरणन्यायेन। प्राप्तिसूत्रमेतत् पूर्वन्यायातिदेशक सूत्रमित्यर्थः। तच्चोत्तरविचाराय॥ २२॥

इत्येककपालैन्द्राग्नाधिकरणम्॥ ४॥

भाष्यम्

. . . . . . . . . . . . .

५

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्व्यवदानस्य वचनात् ॥ ७.१.२३ ॥

विषयः

साकमेधे श्रूयते—'एतद् ब्राह्मण एककपालः' इति ।

### वार्तिकाभरणम्

विधायकम्; किन्त्वङ्गवाक्यसमन्वितमिति अस्त्येवाङ्गविधीनां च हविर्विधायकत्वमिति साक्षात्सम्बन्धः। यदुक्तं वैश्वदेविकधर्माणां पुनराम्नानमनर्थकमिति। तन्न, तद्धर्माम्नानस्य दक्षिणविहारार्थत्वेनान्यार्थतया आनर्थक्याभावात्

किञ्च यद्यङ्गविधयो नातिदिश्येरन् तदा "वरुणप्रघासेषु त्रिंशदाहुतयो हूयेरन्; वाजिनो यजत्याहुतीनां सम्पत्यै त्रिंशत्वाये"ति त्रिंशदाहुतिप्रदर्शकाम्नानमनुपपन्नं स्यात्। तस्मात् अर्थवादनां अङ्गविधीनां च वचनेनातिदेश इति तत्रार्थवादानां शब्दभावनेतिकर्तव्यतारूपप्ररोचनासमर्पकत्वेनातिदेशः। अङ्गविधीनां त्वर्थभावनेतिकर्तव्यताभूतप्रयाजादिधर्मसमर्पकत्वेनेति विवेकः।

नन्वर्थवादानामतिदेशो यथा रात्रिसत्रे "प्रतितिष्ठन्ति ह वा, इत्यार्थवादिकप्रतिष्ठाफलं तथा "विश्वजिता यजेत' इत्यत्रापि ज्योतिष्टोमार्थार्थवादातिदेशे सत्यार्थवादिकफलसम्भवात् सः स्वर्गः स्यादिति न्यायेन स्वर्गफलकल्पनमनुपपन्नम् स्यादिति चेन्न, शब्दभावनाकाङ्क्षया ह्यर्थवादानामतिदेशो वक्तव्यः। शब्दभावना चांशत्रयविशिष्टायामर्थभावनायामवगतायां तस्यां भावनायां पुरुषं प्रवर्तयितुं प्ररोचनार्थमर्थवादानपेक्षते। तेन फलान्वयानन्तरमेवार्थवादाकाङ्क्षा शब्दभावनायाः न ततः प्रागिति विश्वजिति फलाकाङ्क्षादशायामर्थवादातिदेशाभावेन रात्रिसत्रन्यायेनार्थवादिकफलासम्भवात्।

### तन्त्रशिखामणिः

सू० एककपालानां वैश्वदेविकः

पूर्ववदेवोत्तरसङ्गतिः, अथवा वाचनिकब्राह्मणातिदेशे स्थिते तद्विशेषचिन्तेति सङ्गतिः। साकमेधे श्रुयते 'एतद् ब्राह्मण एककपालः' इति। अत्र किं वैश्वदेविकस्यैककपालस्य ब्राह्मणमतिदिश्यते ? किं वा वारुणप्रघासिकस्य ? इति संशयः।

### भाष्यसन्दर्भयोजिनी

साकमेधे तृतीये पर्वणि। विषये संशयं प्रवर्तयति-तत्रेति। संशयस्येदं बीजम्—वैश्वदेविकद्यावापृथिव्यैककपाले धर्मास्सन्ति भूयांसः, वारुणप्राघासिककायैककपाले तेऽल्पीयांसः। भूयसां धर्माणां ग्रहणे यादृशोपकाराधिक्यं न तादृशमितरत्रेति सन्देहः।

## भाष्यम्

### संशयः

**तत्र चिन्त्यते—वैश्वदेविकस्यैककपालस्येदं ग्रहणम् ? उत वारुणप्राघासिकस्य ?**

### पूर्वपक्षः

**किं प्राप्तम् ? वैश्वदेविकस्येति ब्रूमः। किं कारणम् ? तस्य विहिता धर्माः—अलङ्कृत्याभिपूर्योपांशु यष्टव्यः, आविः पृष्ठः कार्यः इत्येवमादयः। वारुणप्राघासिकस्त्वधर्मकः। यस्य विहिता धर्मास्तत्रैतद्युज्यते वक्तुम्—तद्वदिदं कर्तव्यमिति। तस्माद्वैश्वदेविकस्य ग्रहणम्।**

## वार्तिकाभरणम्

वस्तुतस्तु न सर्वत्रार्थवादातिदेशः, किन्तु यत्र प्रत्यक्षवचनं तत्रैवेति विश्वजिदादौ प्रत्यक्षवचनाभावादार्थवादातिदेश एव नास्तीति नार्थवादिकफलकल्पनाप्रसङ्गः। न च तत्रापि प्राशस्त्यज्ञानार्थमर्थवादातिदेश आवश्यक इति वाच्यम्। विधेरेव द्वे शक्ती कल्पयिष्याम इत्यौदुम्बराधिकरणोक्तरीत्या विधित एव प्राशस्त्यज्ञानसम्भवात्।

नन्वेवमपि कार्यमतिदिश्यते न शास्त्रमिति दशमाद्ये स्थितम्। कथं वचनस्यातिदेशोऽत्राङ्गीक्रियत इति चेन्न; एतद्ब्राह्मणानीत्यत्र ब्राह्मणशब्देन 'नव प्रयाजा इज्यन्ते' इत्याद्यङ्गविधीनामुपात्तत्वेनात्र शास्त्रातिदेशस्यापरिहार्यत्वात्।

## तन्त्रशिखामणिः

तत्र यथा पञ्चसञ्चरेषु वचनस्य बहुविषयत्वलाभायाङ्गविधीनामप्यतिदेशस्तथा बहुविषयत्वलाभाय वैश्वदेविकादेककपालादेव ब्राह्मणातिदेशो युक्तः। तत्र हि 'अलङ्कुर्वन्ति अभिघार्यः उपांशु यष्टव्यः आविः पृष्ठः कार्यः प्रतिष्ठितो होतव्यः' इति बहवो धर्माः समाम्नाताः। वारुणप्रघासिकैकपाले 'काष्मर्यमय्यः स्रुचो भवन्ति हिरण्मय्यो वा' इति स्वल्प एव धर्म उक्तः। ततो न वारुणप्रघासिकब्राह्मणातिदेशः। ननु वैश्वदेवे ऐन्द्राग्नाभावात् 'एतद् ब्राह्मण ऐन्द्राग्न' इति वारुणप्रघासिकैन्द्राग्नावश्यम्भावेन तत्समभिव्याहारादेतद्ब्राह्मण एककपाल इत्यपि वारुणप्रघासिकब्राह्मणातिदेशो युक्त इति चेन्न; भूरिधर्मलाभान्नानापर्वणोरपि सहसमभिव्याहाराविरोधात्। अत एवैतद् ब्राह्मण इति सर्वनाम्ना सन्निहितवारुणप्राघासिकैककपालब्राह्मणपरामर्श एव

## भाष्यसन्दर्भयोजिनी

**अलङ्कृत्येति।** अर्थतोऽनुवादकमिदम्। 'पुरोडाशमलङ्कृत्याज्येनाभिपूर्य आविः पृष्ठं कुर्यात्' (तै. ब्रा. १.६.३.) पुरोडाशस्य पृष्ठमनिमज्य यथा दृश्यते तथा कुर्यादित्येवमादयो विहिताः। वारुणप्राघासिकैकपाले न तादृशा धर्मा विहिताः। **अधर्मकः** तादृशधर्मभूयस्त्वरहित इत्यर्थः। न तु धर्माभाववानिति। यत्र धर्मभूयस्त्वं श्रुतं तत्रैतदित्थं कर्तव्यमिति ज्ञातेऽन्यत्र तद्वदिदं कर्तव्यमिति वक्तुं शक्यत इत्याह—**यस्य विहिता इति। नन्विति।** साकमेधे 'एतद् ब्राह्मण ऐन्द्राग्नः' (तै. ब्रा. १.६.७.५.) इति श्रुते वाक्ये एतच्छब्दो वरुणप्रघासग्राहकः,

## भाष्यम्

**नन्वैन्द्राग्नसमुच्चारणादेककपालोऽपि वारुणप्राघासिक एव स्यात्, नावश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यम्, नानापर्वणोरपि समुच्चारणमविरुद्धम् । तस्माद्वैश्वदेविकस्य ग्रहणमिति प्राप्ते—**

## वार्तिकाभरणम्

नन्वेवं तर्हि अतिदिष्टं वचनं प्रकृतिवदेव धर्मानुपदेशेनैव विकृतावपि प्रापयतीति विकृतावूहबाधौ न स्यातामिति चेन्न; अतिदिश्यमानं वचनं स्वधर्मान् प्रापयत् यथा प्रकृतौ मन्त्राणामपूर्वीयदेवतासंस्कारत्वं सिद्धं तथैवेहापीति कार्यमुखेनैव बोधयतीतित्यूहाबाधयोस्सम्भवात् ॥

वृत्तमधिकरणम्

**'एककपालैन्द्राग्नौ च तद्वत्'।** वैश्वदेवपर्वणि एककपाल आम्नातः 'द्यावापृथिव्य एककपालो भवती'ति। वरुणप्रघासेष्वपि एककपालः श्रुतः काय एककपाल इति। तत्रैवैन्द्राग्नोऽपि श्रुतः ऐन्द्राग्न एकादशकपाल इति। साकमेधेष्वपि एककपालश्रुतःवैश्वकर्मण एककपाल इति। तत्रैवेन्द्राग्नोऽपि श्रुतः; ऐन्द्राग्न एकादशकपाल इति। तत्सन्निधौ श्रूयते-एतद्ब्राह्मण एककपाल एतद्ब्राह्मण ऐन्द्राग्नः यद्ब्राह्मण इतरश्चेतरश्चेति। तत्र यद्यप्येककपालैन्द्राग्नयोः पूर्वाधिकरणोक्तरीत्या अर्थवादानामङ्गविधीनां चातिदेशः सम्भवति। तथाप्युपरितनाधिकरणे एककपाले वैश्वदेविककपालधर्माणामतिदेशो वारुणप्राघासिकैककपालधर्माणामतिदेशो वेति विचार्यत इति तत्प्राप्तिसिद्ध्यर्थं उत्तरविवक्षार्थमिदं सूत्रम्।

ननु ऐन्द्राग्नस्योपरितनाधिकरणे विषयत्वाभावात् कथं प्राप्तिसूत्रमित्युच्यत इति चेन्न; ऐन्द्राग्नस्य विषयत्वाभावेऽपि एककपालदृष्टान्तार्थत्वेन प्राप्तिसूत्रत्वसम्भवात्। एककपालानां वैश्वदैविकः प्रकृतिरित्याश्रयणे

## तन्त्रशिखामणिः

युक्तः, न तु व्यवहितवैश्वदेविकपरामर्शं इत्यपास्तम्, भूरिधर्मलाभार्थं व्यवहितपरामर्शस्याप्यदोषात्। तस्माद्वैश्वदेविकब्राह्मणातिदेश इति प्राप्ते, ब्रूमः—

'स्वरसामैककपलामिक्षञ्च तद्वत्' इत्यत्र वैश्वदेविकैककपालप्रकृतिकत्वमेवैककपालानां वक्ष्यति। ततश्च वक्ष्यमाणन्यायादेव वैश्वदेविकधर्माणां वैश्वकर्मणैककपाले प्राप्तेरतिदेशानर्थक्यान्न वैश्वदेविकब्राह्मणातिदेशः। न च तत्प्रशंसाप्राप्तिसम्भवान्नानर्थक्यमिति वाच्यम्, तथापि प्रवृत्तिविशेषालाभात्तल्लाभार्थं वारुणप्रघासिकातिदेश एव युक्तः। एवञ्चेन्द्राग्नसमभिव्याहारसर्वनाम्नः स्वारस्यमपि भवति।

## भाष्यसन्दर्भयोजिनी

वरुणप्रघासेष्वैन्द्राग्नविधानात्। अत ऐन्द्राग्ने वारुणप्राघासिका धर्मा अतिदिश्यन्त इति सिद्धे एककपालेऽपि वारुणप्राघासिका एव धर्मा भवन्त्विति शङ्कितुराशयः। समाधत्ते—**नावश्यमिति**। **एकपर्वणोरेव** एकं पर्व ययोस्तौ एकपर्वाणौ तयोरिति विग्रहः। एकपर्ववतोरित्यर्थः। द्वयोस्सहोच्चारणे एकपर्ववत्त्वं नावश्यकं नानापर्ववत्त्वमपि भवितुमर्हमिति भावः। अतो वैश्वदेविकैकपालधर्मा एव साकमेधैककपालेऽतिदिश्यन्त इति पूर्वपक्षः।

## भाष्यम्

### सिद्धान्तः

उच्यते--वारुणप्राघासिकस्यैककपालस्य ग्रहणमिति । कुतः ? यत एककपालानां वैश्वदेविकः प्रकृतिः । कथं ज्ञायते ? आग्रयणे द्यावापृथिवीयस्यैककपालस्य सर्वहोममपर्यावृत्तिञ्च दर्शयति 'यत्सर्वहुतं करोति, सा त्वेका परिचक्षा हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत' इति आज्ययागविधिपरे वाक्य एककपालस्य सर्वहोममपर्यावृत्तिञ्च प्राप्तां दर्शयति । एतस्माद्दर्शनात्, अवभृथे च सकृद्द्व्यवदानस्य वचनात्—अवभृथे चावधारणं भवति इदमेवैककपालस्य द्विरवद्यति' इति । तेन ज्ञायते नूनमन्यत्र न द्विरवदानमिति । तच्चैतत्सर्वं

## वार्तिकाभरणम्

सर्वहोमपर्यावृत्तिदर्शनात् "अवभृथे च सकृद्द्व्यवदानवचनात्" (प्रा) सर्वहोमापरिवृत्तिरिति साकमेधे श्रुयते-'एतद् ब्राह्मण एककपाल' इति । तत्र संशयः । किं वेश्वदेविकैकपालाद्धर्मा भवन्ति; उत वारुणप्राघासिकैककपालादिति । तत्र वैश्वदैविकद्यावापृथिव्यैककपालसन्निधौ तु अलङ्कुर्वन्ति अभिधार्यः उपांशु यष्टव्यः आविः पृष्ठः कार्यं इत्यादयो बहवो धर्मा आम्नाताः । वारुणप्राघासिकैककपालसन्निधौ हिरण्मय्यः स्रुचो भवन्ति, शमीमय्यो वा इत्यल्पीयांस एव धर्माः उपदिष्टाः । अतिदेशश्च धर्मलाभार्थः । तत्र बहुषु धर्मेषु लभ्यमानेषु अल्पधर्मस्वीकरणं न युक्तम् ।

ननु ऐन्द्राग्निसमभिव्याहारात् वारुणप्राघासिकधर्मा एव भवन्ति । उच्यते—न ह्येकपर्वगतयोरेव समभिव्याहार इति निर्वन्धोऽस्ति पर्वद्वयगतयोरपि समभिव्याहारः सम्भवत्येव । तस्मात् वैश्वदेविकैककपालादेव धर्मा भवन्ति; वैश्वकर्मणैककपाल इति प्राप्ते, ब्रूमः—वारुणप्राघासिकैककपालधर्मा एव भवन्ति । यद्येतत् ब्राह्मण एककपाल इत्यनेन वैश्वदेविकैककपालस्याङ्गविधयस्तदर्थवादाश्चातिदिश्यन्त इत्यङ्गीक्रियेत तदा

## तन्त्रशिखामणिः

प्रयोजनन्तु साकमेधेऽपि शमीमय्यादिस्रुक्प्राप्तिः । ननु वरुणप्रघासेषूत्तरविहारकर्तव्यस्यैककपालस्य न शमीमयस्रुक्त्वम् ऐष्टिक स्रुग्भिरेवोत्तरवैहारिकाणामनुष्ठानं दक्षिणवैहारिकस्यामिक्षायागस्यैव शमीमयस्रुक्त्व-

## भाष्यसन्दर्भयोजिनी

सिद्धान्तस्तूच्यते । साकमेधैककपालः वारुणप्राघासिकैकपालप्रकृतिक एव न तु वेश्वदेविकैककपाल प्रकृतिकः, सर्व एवैककपाला वैश्वदेविकैकपालप्रकृतिका इति चोदनालिङ्गातिदेशादेव ज्ञातुं शक्यन्ते, तदर्थ प्रत्यक्षवचनातिदेशकथनमानावश्यकम् इत्याह-यत इति । एककपालानां वेश्वदेविकैकपालप्रकृतिकत्वं दृष्टान्त द्वयेन प्रदर्शयति । तत्र प्रथमो दृष्टान्तः - आग्रयणे इति । वेश्वदेवे द्यावापृथिव्यैककपालस्यावदानादिकं न क्रियते, सर्वहोमः क्रियते । स प्रकारः आग्रयणे प्राप्तो न क्रियते । आग्रयणगतविशेषवाक्येन द्यावापृथिव्याज्यहविष्को यागः क्रियते । तदिदं वाक्यमुदाहरति-यत्सर्वहुतमिति । परिचक्षा दोषः हुतोऽहुतः होमसमये हविषः पर्यावर्तनं यथा न भवेत्तथा सर्वहोमः कर्तव्यः । द्वितीयमुदाहरति-अवभृथे इति । इदमेव अवधारणमेव । वैश्वदेविकः

### भाष्यम्

**वैश्वदेविके एककपाले विहितम् । तस्मादेककपालानां वैश्वदेविकः प्रकृतिः । किमतः ? साकमेधिकेऽप्येककपाले वैश्वदेविका धर्माः प्राप्तास्तेषामतिदेशोऽनर्थकः । वारुणप्राघासिकस्य ये धर्मा वैशेषिका अप्राप्तास्तेषामतिदेशोऽर्थवान् । तस्माद्वारुणप्राघासिकस्यैककपालस्यैव ग्रहणमिति । उच्यते—लिङ्गमेतत्, कुतः प्राप्तिरिति । प्राप्तिमुत्तरत्र वक्ष्यामः—'स्वरसामैककपालामिक्षञ्च' इत्यत्र । के पुनस्ते धर्माः ? 'हिरण्मय्यः स्रुचो भवन्ति शमीमय्यो वे'त्येवमादयः ॥ २३ ॥**

**इति साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्मातिदेशाधिकरणम् ॥ ५ ॥**

**इति शबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्य प्रथमः पादः ॥**

### वार्तिकाभरणम्

"स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्" इति तृतीयपादाधिकरणे सर्वेषामेककपालानां वैश्वदेविकैककपालप्रकृतिकत्वस्य वक्ष्यमाणत्वात् तन्न्यायेनैव तद्धर्मलाभादेतद्ब्राह्मण एककपाल इति वचनमनर्थकं स्यात् । तस्मात् वारुणप्राघासिककायैककपाले ये हिरण्मयत्वादयो धर्मा आम्नाताः, ये च वैश्वदेविकाच्चोदकेन प्राप्ताः ते सर्वेऽप्यत्रातिदिश्यन्ते ॥

इति श्रीमदद्वैतविद्याचार्य-साग्निचित्य-सर्वतोमुखातिरात्र-साग्निचित्याप्तवाजपेययाजि-गोविन्ददीक्षितवरनन्दनस्य साग्निचित्य-सर्वपृष्ठाप्तोर्यामयाजि-श्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्यावैशद्यस्य साग्निचित्याप्तवाजपेययाजि-श्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु

**टुप्-टीका-व्याख्याने वार्तिकाभरणे सप्तमस्याध्यायस्य प्रथमः पादः**

### तन्त्रशिखामणिः

मिति याज्ञिकैरुक्तत्वात् कथमिह वैश्वकर्मणैककपाले शमीमयत्वप्राप्तिरिति चेन्न; प्रकरणाविशेषेण शमीमयत्वस्य विहारद्वयानुष्ठेयसर्वयागसाधारण्यादित्याहुः ॥ २३ ॥

वृत्तमधिकरणम्

इति श्रीमदद्वैतविद्याचार्य राजचूडामणिदीक्षितविरचिते तन्त्ररत्नसारे तन्त्रशिखामणौ सप्तमाध्यायस्य प्रथमः पादः ।

### भाष्यसन्दर्भयोजिनी

एककपालः । किमतः एवं दृष्टान्तद्वयदानेन प्रकृते किं प्रयोजनम् । वैश्वदेविकैककपालस्य धर्मा अन्यत्रैककपालेष्वतिदेशेन यदि प्राप्ता भवन्ति तर्हि साकमेधिकैककपालेऽपि प्राप्ता एवेति प्रत्यक्षवचनेन पुनः प्रापणं तेषामनर्थकमित्याह—**अतिदेशोऽनर्थक** इति । शङ्कते-**उच्यते लिङ्गमेतत्** इति । केवलं वाक्यं प्रदर्शितम्, न्यायस्तु न प्रदर्शित इत्यर्थः । न्यायं प्रदर्शयति-**वक्ष्याम** इति । सप्तम-तृतीय-दशमाधिकरण इति शेषः । **स्रुचः** जुहूपभृद्ध्रुवाः ॥

इति साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्मातिदेशाधिकरणम् ॥ ५ ॥

इति म० म० चिन्नस्वामि शास्त्रिणामन्तेवासिना पट्टाभिरामशास्त्रिणा विरचितायां भाष्यव्याख्यायां सन्दर्भयोजिन्यां सप्तमस्य प्रथमः पादः ॥

# सप्तमाध्याये

## द्वितीयः पादः

### भाष्यम्

**साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ॥ ७.२.१ ॥**

**विषयः**

**'रथन्तरमुत्तरयोर्गायति' 'कवतीषु रथन्तरं गायति' इत्येवमादीनि समाम्नायन्ते ।**

**संशयः**

**तत्र चिन्ता किमिहातिदिश्यत इति । ननु यद्रथन्तरादिभिः शब्दैरुच्यते तदतिदिश्यते । बाढम् ! तदेव तु न ज्ञायते किमेभिश्शब्दैरुच्यत इति । ननु सिद्धमेतत् 'गीतिषु सामाख्या' (जै.**

### वार्तिकाभरणम्

अत्राचार्यैः द्वितीयपादः त्यक्तः, तं वयं वर्णयामः— **साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ।**

इदमाम्नायते "रथन्तरमुत्तरयोर्गायति कवतीषु रथन्तरं गायति यद्योन्यां तदुत्तरयोर्गायति" इत्येवमादि । तत्र संशयः किम् रथन्तरादिशब्देन अभित्वा शूरनोनुमः इत्याद्या ऋच एवातिदिश्यन्ते ? किं वा गानानि

### भाष्यसंदर्भयोजिनी

**विषयः**

प्रत्यक्षवचनातिदेशे प्रथमपादे निरुपिते द्वितीयपादे आतिदेशिकवचनस्यार्थो विचार्यते । 'रथन्तरमुत्तरयोर्गायति' रथन्तरं 'अभित्वा' इत्यस्यामृचि उत्पन्नं साम उत्तरयोः उत्तरार्चिकपठितयोः स्तोत्रिययोः गायतीति, एवं 'कवतीषु रथन्तरं गायति' कशब्दघटितासु 'कयानश्चित्र आभुवत्' इति तिसृषु ऋक्षु रथन्तरं पूर्वोक्तं साम गायतीति विषयवाक्ययोरर्थः । इदं द्वयमप्यातिदेशकं वचनम्, तस्यार्थश्चिन्त्यते ।

**संशयः**

चिन्ताया आकारं प्रदर्शयति—**किमिहातिदिश्यत** इति । अतिदेशव्यापारविषयः क इति प्रश्नार्थः । उत्तरयति—**नन्विति** । नन्वित्यलङ्कारे । अथवा प्रसिद्धार्थे । आहोस्विदुपहासार्थे । 'किमिहातिदिश्यते' इति प्रश्नस्साधारणः नात्र किमपि महत्वमिति द्योतनाय **नन्विति** । **बाढम्** सम्यगुपहससि । गोशब्दस्य कोऽर्थ इति प्रश्ने कृते यो गोशब्दवाच्य इत्येतावन्मात्रकथनेन न खलु प्रश्न उत्तरितो भवति । पुनरपि स वाच्यः क इति प्रश्नस्स्यादेव । तदिदमाह—**तदेव त्विति** । अङ्ग ? त्वं प्रश्नं करोषि, नार्थं ज्ञातुमिच्छसि । अर्थं जानन् कथं प्रश्नं

## भाष्यम्

**सू. २.१.३७) इति। तथा सिद्धस्याक्षेपः करिष्यते। स एव तु निर्णयो भविष्यति। यदि स एव निर्णयः किमर्थं आक्षेपः ? दार्ढ्यार्थः, स्थूणानिखननवत्।**

## पूर्वपक्षः

**तत्र किं प्राप्तम् ? तदुच्यते-सस्तोभस्वरकालाभ्यासविकारायां हिङ्कार-प्रणव-प्रस्तावो-द्गीथ-प्रतिहारो-पद्रव-निधनवत्यामृचि सामशब्दोऽभियुक्तैरुपचर्यते। तस्मात्सैवोच्यते। ननु गीतौ**

## वार्तिकाभरणम्

इति। गीतिषु सामाख्या इति द्वितीयाध्याय एव सामशब्दस्य गीतिवचनत्वस्य सिद्धत्वात् तत एव सामविशेष-वाचकानां रथन्तरादिशब्दानां गीतिवचनत्वस्य सिद्धत्वात् कथमिदानीं कस्यातिदेश इति इति चिन्ता इति चेत्-सत्यम्; गीतिवचनत्वमुक्तम्। तथापि स्थूणानिखननन्यायेन तद्दार्ढ्यार्थमेव चिन्त्यत इति न पौनरुक्त्यम्। यद्वा एतदधिकरणसिद्धमेव तत्रोक्तमिति न पौनरुक्त्यम्। तथाहि—तत्र मन्त्रलक्षणप्रसङ्गात् 'अहेबुन्धिय मन्त्रं

## भाष्यसन्दर्भयोजिनी

करोषि ? इत्युत्तरयति—**नन्विति**। 'गीतिषु सामाख्या' इत्यधीतं विस्मृतवानसीति मे प्रतिभासि। नन्वहं भोः! जानामि 'गीतिषु सामाख्या' इत्याक्षिपामि। किमर्थमाक्षिपसि ? आक्षेपे न प्रवर्तस्व सोऽर्थो निर्णेष्यत इत्याह—**स एवत्विति**। तत्र निर्णीत एवार्थः परिग्राह्यस्तर्हि आक्षेपस्य कावश्यकतेति पृच्छति—**किमर्थं आक्षेपः ?** उत्तरयति **दार्ढ्यार्थं** इति। स्थूणानिखननन्यायः-भूमौ स्थूणायां खनितायां तद् दार्ढ्याय प्रस्तरखण्डान् प्रपूर्य पुनर्दृढीक्रियते। तद्वत् द्वितीये सामशब्दार्थे कथितेऽपि दार्ढ्याय निर्णीयते।

## पूर्वपक्षः

**किं प्राप्तम्**—किदृश आक्षेप इत्यर्थः। आक्षेपस्वरूपमेव वदति—**तदुच्यते**। साम्नामध्ययनावसरे काचन परम्परा, स्तोत्रपठनावसरे चान्या परम्परा। अध्ययनावसरे तस्य तस्य साम्नो नियतायामेवर्चि गुरुमुखादध्ययनं भवति। सा च योनिऋगभिधीयते। स्तोत्रे च तदेव साम योनिऋगतिरिक्तऋक्षु गीयते, तादृशमध्ययनं उद्गातृगणेन क्रियते। 'रथन्तरमुत्तरयोर्गायति' इत्यस्यार्थो विदितः। एवं 'कवतीषु रथन्तरं गायति' इत्यस्य योनिभूतामृचं विहाय विजातीयासु कवतीषु रथन्तरं गेयमिति। तदिदमप्यध्ययनं स्तोत्रकर्तृभिरभ्यस्यते। गीति पूरकाण्यक्षराणि स्तोभाः हा उ हा इत्यादयः, सप्तस्वराः, कालः, तदभ्यासः, ह्रस्वदीर्घप्लुतानामेकद्वित्रिमात्रेति तोयाइ तोयाइ इति ओग्नाइ इत्यादयो विकारा यत्र सन्ति, एवं हिम् इति हिङ्कारः प्रणव ओङ्कारः उद्गीथारम्भकाल प्रस्तोतृकर्तृको भागः प्रस्तावः, उद्गातृकर्तृक उद्गीथः, प्रतिहर्तृककर्तृकः प्रतिहारः, उद्गातृकर्तृक उपद्रवः सर्वकर्तृकः निधनाख्यो भाग इति यत्र भवेयुः तस्यामृचि अभियुक्ताः सामशब्दं व्यवहरन्ति। अतः पूर्वोक्तावयवसहिता या ऋक् सैव सामशब्दनोच्यत इत्याह—**तस्मात्सैवोच्यते**। **सैव** ऋगेव। ननु सामशब्दो गीतावेवान्वयव्यतिरेकाभ्यां प्रयुज्यते। ऋचामक्षराभिव्यक्तिरूपं संस्कारं जनयति गीतिरित्युक्तयिति स्मारयति—**नन्विति**। समाधत्ते-**तदेवाक्षिप्यत** इति। साम्नां संस्कारवाचकत्वाभावे हेतुः—**अकर्मकाले प्रयोगात्** कर्मानुष्ठानकाले यागीयद्रव्यादेस्संस्काराः क्रियन्ते। साम्नस्संस्कारवाचित्वे कर्मकाले साम्नः प्रयोग उचितः, किन्तु कर्मातिरिक्तकालेऽपि साम्नः

## भाष्यम्

सत्यां भावात् गानाख्यस्य संस्कारकर्मणो वाचका एते शब्दा इत्युक्तम्। तदेवेदमुक्तमाक्षिप्यते। नैमे संस्कारस्य वाचकाः। किं कारणम्? अकर्मकाले प्रयोगात्। अकर्मकाले साम प्रयुज्यते। न च संस्कारकर्माणि प्रोक्षणावेक्षणपर्यग्निकरणादीन्यकर्मकाले प्रयुज्यन्ते, प्रयोजनाभावात्। अथ नु मन्त्रा एते, ततोऽन्वहं 'स्वाध्यायोऽध्येतव्यः' इति नियमादकर्मकाले प्रयोगो युज्यते। तस्मादृचां नामानि। किञ्च संज्ञाभेदात्। संज्ञाभेदश्च भवति-रथन्तरं बृहदित्येवमादिः। स एकत्वात्संस्कार-कर्मणोऽनर्थकः। एकेनैव हि तदा पर्याप्तम्। यथा गोतिरिति। अथ ऋचां नामानि, ततस्तासां भेदात् संज्ञापृथक्त्वं युक्तम्। अपि च यदि गानं रथन्तरम् गानञ्च बृहत् इदं रथन्तरमिदं बृहदिति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते। ऋङ्नामत्वे तूपपद्यते।

## तन्त्रशिखामणिः

मे गोपाय यमृषयस्त्रैविदा विदुः ऋचस्सामानि यजूꣳषि इति प्रदर्शितमन्त्रैः त्रैविध्यमेव प्रतिपिपादयिषितम्। तच्च मन्त्रत्रैविध्यं सामशब्दस्य गीतिवचनत्वे गीतिविशिष्टऋग्वचनत्वे चोभयथाप्युपपद्यते। इह तु तस्याति-देशसिध्यर्थं गीतिवचनत्वमवश्यं वक्तव्यम्। तस्मादिहत्यमेव तत्रानीतमिति न कोऽपि दोषः। तत्र सामशब्द-स्तावत् तस्यामभियुक्तैः प्रयुज्यते या ऋक् स्तोभस्वरकालाभ्यासविकारयुक्ता हिंकारप्रस्तावप्रणवोद्गीथप्रति-हारोपद्रवनिधनयुक्ता च। तस्मादृगतिदेशः।

सामशब्दस्य गीतिवचनत्वे तु ऋक्संस्कारकत्वं साम्नोऽभ्युपगन्तव्यम्। अकर्मकाले च ऋक्षु गानं

## भाष्यसन्दर्भयोजिनी

प्रयोगो दृश्यत इत्यर्थः। तदिदं घटयति-प्रोक्षणेति। यागीयद्रव्यं व्रीह्यादि यागकाले प्रोक्ष्यते, आज्यमीक्ष्यते, पुरोडाशः पर्यग्निक्रियते। अत इमानि कर्माणि यागकाले संस्कारकाणि क्रियन्ते येन दृष्टमदृष्टं वा प्रयोजनं सम्पादयन्ति यागोपकारकाणि भवेयुः। यागकालात् अन्यत्र न संस्कारकर्माणि क्रियन्ते। कुत इत्याह—प्रयोजना-भावात्। यगादन्यत्र दृष्टादृष्टप्रयोजनाभावान्न क्रियन्ते। शङ्कते—अथेति। मन्त्रा एते-सामानि, न यागीयद्रव्याणि। 'स्वाध्यायोऽध्येतव्यः' इति विधिः स्वस्वशाखाध्ययनमन्वहं कर्तव्यत्वेन विदधानोऽकर्मकालेऽपि साम्नां प्रयोगमनु-मन्यते। अतस्साम्नामृग्वाचित्वमेव। हेत्वन्तरमाह—किञ्चेति। रथन्तरादिसंज्ञाभेदेन कथं साम्नां संस्कारकर्मत्वं नास्तीति प्रसाध्यत इति चेदाह—स एकत्वादिति। सः सज्ञाभेदः। न ह्येकस्य प्रोक्षणस्यावेक्षणस्य वा संज्ञा भिद्यन्ते। साम्नामृग्वाचित्वे तु संज्ञाभेद उपपद्यत इत्याह—अथ ऋचामिति। तासां ऋचाम्। 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः, इत्यत्र संज्ञानां ज्योतिरादीनां भेदेन कर्मणां भेदो यथा, तथा रथन्तरं बृहत् इत्यादिसंज्ञाभेदः तदोपपद्यते, यदा सामशब्देन ऋचोऽभिधीयन्ते। अन्यथा संज्ञाभेदोऽनुपपन्नस्स्यात्। यथाऽऽधारीभूतऋगक्षराणां भेदेन संज्ञाभेदः स्फुटमवगम्यते तथा सामशब्दस्य गानमात्रपरत्वे गानस्यैकरूपत्वेन संज्ञाभेदः कथमिव सिध्येदिति भावः।

### भाष्यम्

किञ्च विकारपृथक्त्वात्तु-प्रतिसाम च विकारपृथक्त्वं दृश्यते। तदेकत्वाद् गानस्यानुपपन्नम्। संस्कारभेदे हि विकारपृथक्त्वं दृष्टम्। तद् यथा-अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णनम्, न त्वेकस्य तण्डुलीभवश्चूर्णनञ्च। अथ ऋङ्नामान्येतानि, तत ऋचां भेदाद्विकारपृथक्त्वं युज्यते। तस्मादृङ्नामानीति।

तत उत्तरं पठति—साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टमिति। साम्नोऽभिधानशब्देन यथाशिष्टं प्रवृत्तिस्स्यात्, यच्छिष्टं प्रवक्तृभिः शिष्येभ्यः। किञ्च शिष्टम्? स्तोभादिविशिष्टा ऋक् साम। सा प्रवर्तेत। किं कारणम्? तस्या रथन्तरादि नामधेयमिति॥ १॥

### सिद्धान्तः

## शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिस्स्यात् पृथग्भावात्क्रियाया ह्यभिसम्बन्धः॥ ७.२.२॥

तुशब्दः पक्षव्यावृत्तौ। न त्वेवं स्यादृचः प्रवृत्तिरिति। कथम्? इह 'कवतीषु रथन्तरं

### वार्तिकाभरणम्

दृश्यते, तत्संस्कारकर्मत्वे अनर्थकं स्यात्। किञ्च—यदि रथन्तरशब्दस्य गीतिरर्थः स्यात् एकत्वात् रथन्तरं बृहदिति संज्ञाभेदव्यवहारोऽनुपपन्नः स्यात्। ऋक्परत्वे तु 'अभित्वा शूर नोनुम' इति 'त्वामिद्धि' हवामह इति च ऋक्द्वयस्यापि भिन्नत्वात् संज्ञाभेदव्यवहार उपपद्यते।

### भाष्यसंदर्भयोजिनी

युक्त्यन्तरमुपस्थापयति—किञ्चेति। विकारपृथक्त्वात्तु इति सूत्रसदृशं भाष्यम्, तस्य विवरणभाष्यम्-प्रतिसाम चेति। सामगानावसरे ऋगक्षराणि विक्रियन्ते। गाने विकारो न दृश्यते। यत्र विकारः तत्र पृथक्त्वं भेदो दृश्यते। संस्कारभेदेन संस्क्रियमाणे विकारो भवति। तत्रोदाहरणम्—अवहन्तेरिति। अवहन्तेर्विकारस्तण्डुलीभावः, पेषणस्य च चूर्णीभावः। तथैव संस्कारसामभेदेन संस्क्रियमाणायां ऋचि विकार इति सामशब्दः ऋक्पर इति भावः। अथ यदि रथन्तरं बृहदित्यादीनि ऋङ्नामानि। ततः तर्हि। ऋचां भेदेन विकारभेद उपपन्नः। अतस्सामशब्दः ऋक्परः। एवमाक्षेपे सिद्धे तत उत्तरं तदूर्ध्वं पठत्याचार्यः सूत्रम् इत्यर्थः। साम्नो रथन्तरादेः अभिधानशब्देन-रथन्तरादिशब्देन गीतिविशिष्टर्चि यथाशिष्टं यथोपदेशं प्रवृत्तिः-व्यवहारस्स्यात् इति सूत्रार्थः। गुरुपरम्परया साम्नां प्रवक्तारः शिष्येभ्या गीतिविशिष्टायामेवर्चि सामशब्दव्यवहारमुपदिशन्तीत्यर्थः। स्तोभादिविशिष्टा-स्तोभः हा उ हि इत्यादयः तद्विशिष्टा ऋगेव साम। सा ऋक्। तस्याः ऋचः। रथन्तरं नामेत्यर्थः॥ १॥

### सिद्धान्तः

ऋचि सामशब्दप्रवृत्तिर्नास्तीति कथमित्यत्राह—कवतीनामिति। 'कवतीषु रथन्तरं गायति' इति

### भाष्यम्

गायति' इति कवतीनां वा कार्येऽभिवत्योऽतिदिश्येरन्, कवतीनां वोपर्याधेयभावेन। तत्र कार्ये तावदतिदेशो न घटते। कुतः? शब्दैरर्थविधानात्। शब्दानामर्थविधानं कार्यम्। न च कवतीषु रथन्तरं गायतीति कवतीभिर्योऽर्थोऽभिधीयते तमभिवत्यः शक्नुवन्ति वक्तुम्। तस्मान्न कार्यातिदेशः। आधेयत्वेऽपि न सम्भवति, पृथग्भावात्। न हि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते, 'अभित्वा' 'कयान' इति। क्रियाया हि गानक्रियायाः शब्देनाभिसम्बन्धो भवेन्न शब्दस्य। तस्मादाधेयत्वेनापि नातिदेशः। अतो नायमृचः प्रदेश इति ॥ २ ॥

## स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्ग-भावेनोपदिश्येरन् ॥ ७.२.३ ॥

स्वार्थे वा प्रवर्तमाना अभिवत्यः कवतीनामङ्गभावेनोपदिश्येरन्। कथं पुनः कवतीषु

### वार्तिकाभरणम्

ननु य ऋचामदिदेशं वदति स वक्तव्यः-किमृचः कार्ये ऋगन्तरस्यातिदेशः किं वा ऋच आधारत्वेनेति। नाद्यः; ऋक्द्वयस्यापि भिन्नार्थत्वेन कार्ये विधानासम्भवात्। न द्वितीयः, ऋग् द्वयस्यापि शब्दात्मकत्वेन शब्दं

### भाष्यसन्दर्भयोजिनी

विधिः कशब्दघटितासु ऋक्षु रथन्तरं सामातिदिशतीत्युच्यमाने तत्र प्रश्नो भवति—किं कवतीनां कार्येऽभिवत्योऽतिदिश्यन्ते? किं वा कवतीनामुपर्याधेयतया 'अभित्वा' इत्यादयः ऋचोऽतिदिश्यन्ते? नाद्य इत्याह—तत्रेति। न घटत इत्यत्र हेतुः-शब्दैरर्थविधानात्। शब्दानां कार्यमर्थाभिधानम् कयानश्चित्रेत्यादिभिस्शब्दैः क्रियमाणेऽर्थाभिधानकार्ये अभित्वेत्यादिशब्देषु अतिदिश्यमानेषु कवतीकार्यमभिवत्यः कथं कुर्युः? अतः कार्यातिदेशपक्षो न युक्त इत्याह—तस्मान्नेति। अस्तु द्वितीयः पक्षः। अस्मिन् पक्षे आधाराधेयभाव उभयोस्समापतति। अर्थात्कवत्यधिकरणेऽभिवत्य आधेयतयातिदिश्यन्त इति। घटभूतलयोराधाराधेयभावे कथिते द्वायोः पृथभावोऽनुभूयते। तथा-कवतीनामभिवतीनाञ्च पृथग्भावो नानुभूयत इत्याह—न हि शब्द इति। न हि समवैति न हि सम्बद्धो भवतीत्यर्थः। शब्दस्य गुणत्वे शब्दान्तरेण गुणेन सम्बन्धो नास्त्येव शब्दस्य द्रव्यत्वे शब्दान्तरेण द्रव्येण सम्बन्धो द्वयोर्नास्त्येव, तौ द्वावपि पृथगेव तिष्ठतः। घटपटौ सम्बद्धाविति प्रतीतिवत् द्वौ शब्दौ सम्बद्धाविति प्रतीतरेभावात् इत्याह—पृथगेवावतिष्ठते इति। क्रियाया हीति। सामशब्दस्य गीत्यर्थकत्वे स्वीकृते गीतेश्च क्रियारूपत्वेन शब्दसम्बन्धस्तस्या घटते। ध्वन्यात्मकशब्दस्य वर्णात्मकशब्देन सम्बन्धो भवति। गीतिश्च ध्वनिरूपा, तस्याः वर्णात्मकशब्देन युक्तस्सम्बन्धः। कवत्योऽभिवत्यश्च शब्दा वर्णात्मकाः। तेषां सम्बन्धः कथमिव भवेदिति भावः। अत आधाराधेयतयातिदेशो नोपपद्यते ॥२॥

कवतीनां कार्य वाऽधिकरणे वाऽभिवतीनामतिदेशो मास्तु, असम्भवात्, किन्तु कवत्यङ्गतयाऽभिवत्योऽतिदिश्यन्ताम्। अङ्गाङ्गिभावसम्बन्धे बाधकाभावादित्यत आह—स्वार्थे वेति। स्वार्थे वर्तमाना अभिवत्यः

११

## भाष्यम्

गायतीत्यङ्गभावश्शक्य उपदेष्टुम् ? शक्यो यथा 'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात्' (तैं० सं० ३.४.६) इति। किं पुनः प्रयोजनं कवतीनामभिवत्यो निर्वर्तयन्तीति ? उच्यते-प्रयोजनमदृष्टं कल्प्यम्। कुतः ? क्रियायाः। यस्मात्क्रिया श्रूयते-कवतीषु रथन्तरं गायतीति। यथा प्रयाजादीनां प्रयोजनं क्रियायाः। उच्यते-अयमेवास्मिन् पक्षे दोषः-यत्प्रयोजनं क्रियायाः कल्पयितव्यम्। तस्मादयमपि पक्षो दुःश्लिष्टः ॥ ३ ॥

## शब्दमात्रमिति चेत् ॥ ७.२.४ ॥

इति चेत्पश्यसि-कवत्यङ्गभावेनाभिवतीनामुपदेशो दुःश्लिष्ट इति, तेन तर्हि शब्दमात्रं

## वार्तिकाभरणम्

प्रति शब्दस्याधाराधेयभावासम्भवात्। तस्मत् न ऋगतिदेश इति चेन्न; उक्तरीत्या ऋचामतिदेशासम्भवेऽपि कवत्यादिषु रथन्तरदीनामङ्गानामतिदेशसम्भवात्। तस्मात् ऋगतिदेशः।

ननु ऋचामङ्गभावेनातिदेशो अदृष्टोपकारः काल्पनीयः। स एवास्मिन् पक्षे दोषः। एवं तर्हि रथन्तरशब्दः कवतीष्वतिदिश्यते। तथा च रथन्तरशब्दवाच्या कवतीऋगित्यतिदेशशास्त्रार्थः।

## भाष्यसन्दर्भयोजिनी

स्वार्थं बोधयन्त्य इत्यर्थः। कवत्यङ्गत्वेनोपदिश्यन्ताम् तदा गीतिमात्रं सामेति न स्वीकृतं भवेत् इति शङ्कायां पृच्छति—**कथं पुनरिति**। 'कवतीषु रथन्तरं गायति' इति वाक्यं कवतीषु रथन्तरसाम्नो गानमुपदिशति। रथन्तर पदस्यार्थस्तु 'अ भित्वे'ति ऋक्। इयमृक्चेदङ्गं तर्हि किं कुर्वदिदमङ्गं भवेत् ? सर्वमप्यङ्गं दृष्टमदृष्टं वोपकुर्वदङ्ग-भावमाप्नोति। न खलु कवतीषु अभिवतीनां गाने कवतीनां कश्चनोपकारो जायते। अतः कथमङ्गभाव इति भावः। सदृष्टान्तमङ्गभावं साधयति—**शक्यो यथेति**। येन कर्मणा ईर्त्सेत् ऋद्धिमवाप्तुमिच्छेत् तत्र 'चित्तञ्च स्वाहा' इत्यादिमन्त्रैः जयान् जयहोमान् कुर्यादिति यथा सर्वेषु वैदिककर्मसु जयहोमानङ्गतया विधत्ते, तथैव कवतीषु अभिवतीनां गानद्वारेणाङ्गभावः। अर्थात् कवतीगानं कृत्वाऽभिवतीनां तदङ्गतया गानं कर्तव्यमिति। जयहोमाः तत्तत्कर्मर्धिप्राप्तये क्रियन्ते, तद्वत्प्रकृते कस्मै प्रयोजनायाभिवतीनां गानमङ्गतया विधीयत इति पृच्छति—**किं पुनरिति**। उत्तरयति—**अदृष्टं कल्प्यमिति**। तत्र कारणं प्रदर्शयति—**क्रियाया इति**। 'गायति' इति क्रिया श्रूयते। तस्याः क्रियाया दृष्टं न चेददृष्टमेवास्तु। अत्र प्रयाजा उदाहरणम्। दर्शपूर्णयोरङ्गानि प्रयाजाः। तदनुष्ठानेनादृष्टद्वारा ते यागनिष्ठ फलजननसामर्थ्यमतिशयरूपेण निर्वर्तयन्ति, तथैव कवतीनामङ्गभावेनाभिवतीनां गानेन कवत्यधिकरणकगानस्य कश्चनातिशयो जायत इति प्रयोजनं कल्प्यम्। अत्रोत्तरयति—**उच्यते इति**। एतादृशादृष्टपरिकल्पनमेव दोषः। साम्नां गीतिवाचित्वे नाय दोष आपतति। साम्नामृगक्षराभिव्यक्तिरूपदृष्ट प्रयोजनजनकत्वात् तस्य च कल्प्यत्वाभावादिति दुःश्लिष्टपदेन गम्यते ॥ ३ ॥

कवत्यङ्गभावेनाभिवतीनामतिदेशो दुःश्लिष्ट इति त्वं पश्यसि प्रकारान्तरं गृह्णामीति पूर्वपक्षी प्रत्यवतिष्ठते—**तर्हि शब्दमात्रं प्रदिश्यतामिति**। **शब्दमात्रं** रथन्तरशब्दमात्रम्। कवतीषु यद् गीयते तद् रथन्तरं

### भाष्यम्

प्रदिश्यताम् । रथन्तरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथन्तरशब्देनाभिलपेदिति । किं कारणम् ? शब्द उच्चरिते तत्र तावन्मुख्या प्रतिपत्तिः । शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायते । यथा गामानयेति । इह तु शब्द एव कार्यं सम्भवति नार्थे । अतोऽत्र शब्दं विज्ञास्यामः ॥ ४ ॥

## नौत्पत्तिकत्वात् ॥ ७.२.५ ॥

पूर्वस्मादेष वादः पापीयान् । कस्मात् ? औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यः शब्दो यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धो न स ततोऽन्यं प्रत्याययितुं शक्नोति । न हि गोशब्देनाश्वोऽभिधातुं शक्यते ॥ ५ ॥

### वार्त्तिकाभरणम्

ननु रथन्तरशब्दस्याभीवतीऋक् संज्ञात्वेन प्रसिद्धतया कवतीऋग्वाचकत्वासम्भवात् अतिदेश-शास्त्रानर्थक्यप्रसङ्गाच्च न शब्दस्याप्यतिदेश इति चेदेवं तर्हि स्वर एवातिदिश्यते। सुसामा देवदत्त इत्युक्ते सुस्वरो देवदत्त इति प्रतीतेस्तदनुसारेण सामशब्दस्य स्वरार्थकत्वात् स्वरस्यैवातिदेशः ।

### भाष्यसन्दर्भयोजिनी

गीयत इति व्यह्नियतामित्यर्थः । तत्र कारणमुपस्थापयति—**शब्द उच्चरिते** । सर्वत्र शब्दे व्यवह्नियमाणे अर्थ प्रतिपत्तेः पूर्वं शब्दज्ञानमावश्यकम्, शब्दस्यार्थस्य च शक्तिज्ञानं तदन्वावश्यकम्, ततोऽर्थप्रतिपत्तिः, तदनन्तरं कार्यम् । तच्च कार्यं शब्दे तस्मिन् यदि न सिध्यति तर्हि कार्यसम्पत्तयेऽर्थः परिगृह्यते । अत्रोदाहरणम्—**गामानयेति** । गोशब्दस्यानयनमशक्यमिति तदर्थं आनीयते, किन्तु प्रकृते शब्दे कार्यं सम्भवति । कवतीषु यत्क्रियते तस्य रथन्तरशब्दाभिलापः सम्भवेदेवेत्याह—**इह त्विति** । अतस्सामशब्दो न गीतिवाची, किन्तु ऋग्वाचीति शङ्कितुराशयः ॥ ४ ॥

**पूर्वस्मात्** पूर्वं कृताद्वादात् **एष वादः** रथन्तरशब्दातिदेशवादः, **पापीयान्** निकृष्टः । तत्र कारणम्—**औत्पत्तिकत्वात्** इति । नित्यत्वादित्यर्थः । स्वाभाविकत्वादिति यावत् । नामिनो नाम्नश्च सम्बन्धः स्वाभाविकः । **औत्पत्तिकेन सम्बन्धेनेति** । औत्पत्तिकसूत्रे निर्णीतोऽयं विषयः-यत्सर्वोऽपि शब्दः स्वस्वार्थेन साकमवियुक्तेन सम्बन्धेन वर्तत इति । अतो यश्शब्दो यस्मिन्नर्थे प्रसिद्धः स तमर्थं न व्यभिचरात । रथन्तरमिति साम 'अभित्वा' इत्यस्यामृचि गीयत इति प्रसिद्धि विहाय कथमिव 'कयानश्चित्र' इत्यत्र गीयमानं रथन्तरसंज्ञामवाप्नुयात् ? अत्रैव दृष्टान्तः—**गोशब्देनेति** । शब्दादर्थप्रतिपत्त्यर्थं तिस्रो वृत्तयः-अभिधा लक्षणा गोणी चेति स्वीकृतास्सन्त्यस्मिन् शास्त्रे । तत्राभिधया सम्बन्धश्शब्दस्यौत्पत्तिकः, लक्षणया गोण्या वा सम्बन्धः कारणान्तरकृतः । तत्र गोशब्दो गोत्वमेव वदेत् नाश्वत्वमिति नियमः । तथैव रथन्तरशब्दोऽपि गानविशेषे नियतः सन् कथं व्यभिचरेदिति भावः ॥ ५ ॥

भाष्यम्

## शास्त्रश्चैवमनर्थकं स्यात् ७.२.६ ॥

एवञ्च सत्यतिदेशदेशशास्त्रमनर्थकं स्यात्, अशक्यार्थत्वात् । तस्मान्न शब्दस्यापि प्रदेशो युक्तः । वृत्तिकारस्तु मेने-गानशास्त्रमौक्थिक्यमनर्थकं स्यादिति । तस्यायमभिप्रायः-सत्यां गतौ नैतावान् प्रयासः शिष्टानामफलोऽभ्युपगन्तुं न्याय्य इति ॥ ६ ॥

## स्वरस्येति चेत् ॥ ७.२.७ ॥

इति चेत्पश्यसि-नाम्नोऽतिदेशोऽयुक्त इति । तेन तर्हि स्वरस्यातिदेशो भवतु । स्वरस्सामशब्देन लोकेऽभिधीयते-सुसामा देवदत्तः, सुस्वरो देवदत्त इति । स्वरो घोषो नाद इति समानार्थाः । स सामशब्देनोच्यते । साम च रथन्तरम् । तस्मात्तस्यातिदेशः ॥ ७ ॥

## नार्थाभावाच्छ्रुतेस्तत्सम्बन्धः ॥ ७ २.८ ॥

नैतदेवम्-स्वरस्यातिदेश इति । कुतः ? अर्थाभावात् । अर्थस्य अभिवतीस्वरस्य

वार्तिकाभरणम्

ननु अभिवतीस्वरस्याभीवत्यक्षराभिव्यञ्जकत्वेन कवतीषु भावयितुमशक्यत्वात् कथं स्वरातिदेशः ? यदि भाव्येत स्वरः कवतीषु तदा न कवत्यो भवेयुः । तस्मात् स्वरातिदेशे अतिदेशशास्त्रमनर्थकं स्यात् । तस्मात् न स्वरातिदेश इति चेदेवं तर्हि अभीवत्या ये वर्णा मात्राश्च तन्मध्ये केचन वर्णा मात्राश्च कवतीष्वपि सन्तीति कवतीनामप्यभीवतीवर्णमात्रावत्वात् अभीवतीस्वरैकदेशः कवतीनामस्ति, तेन कवतीषु यद्रथन्तरं गायतीति

भाष्यसंदर्भयोजिनी

**एवञ्च सतीति** । 'कवतीषु रथन्तरं गायति' इति शास्त्रं रथन्तरशब्दातिदेशकमित्यङ्गीकारे सति शास्त्रमिदमर्थविहीनं स्यादित्यर्थः । तत्र हेतुः—**अशक्यार्थत्वादिति** । न हि रथन्तरशब्दः कवत्यधिकरणकगान-विशेषमर्थं बोधयितुं क्षमः, अतोऽनर्थकस्स्यात् । लक्षणया गौण्या वा तदर्थबोधनं भवत्विति न वक्तुं शक्यम्, विनैव तया वृत्त्याऽर्थावबोधनक्षमस्य तस्य वृत्त्यन्तराश्रयणेनार्थान्तरबोधकत्वस्वीकारानौचित्यादिति भावः । **वृत्तिकारस्तु औक्थिक्यं** छन्दोगानां प्रसिद्धो ग्रन्थविशेषः । तच्छास्त्रस्यानर्थक्य मन्यते ॥ ६ ॥

कवतीकार्ये रथन्तरातिदेशः, कवत्यधिकरणे तदतिदेशः, रथन्तरशब्दस्यैवातिदेश इति पक्षेषु निरा-कृतेषु पक्षान्तरं परिगृह्य पूर्वपक्षी प्रत्यवतिष्ठते—**तेन तर्हि स्वरस्यातिदेशो भवत्विति** । सुसामा सुस्वर इत्यादि-प्रयोगैः स्वरे सामशब्दो वर्तत इत्यविवादम् । रथन्तरपदेन सामैवाभिधीयते । कवतीषु रथन्तरं गायति' इति वाक्यं कवतीषु रथन्तरसामापरपर्यायं स्वरमतिदिशतीति शङ्कितुराशयः ॥ ७ ॥

तमिमं पक्षं न स्वीकरोति—**नैतदेवम्** इति । तत्र हेतुः—**अर्थाभावात्** अभिवतीस्वरस्यार्थस्य कवतीष्वभावादित्यर्थः । ये स्वराः अभिवत्यक्षराभिव्यञ्जकास्ते कवतीषु न सन्तीति यावत् । सत्यं न सन्ति ।

### भाष्यम्

कवतीष्वभावात् । नन्वसन्नेवातिदेशेन भाव्यते । उच्यते-भावयितुमपि न शक्यते । न ह्यभिवत्यक्षराणामभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः । यदि भाव्येत न कवत्यो भवेयुः । न न चेद्भाव्यते न भूतः । कवतीषु रथन्तरं गायतीत्येतस्याः श्रुतेः पदानां परस्परेणाभिसम्बन्धो न स्यात् । तस्मान्न स्वरस्यातिदेशः ॥ ८ ॥

## स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ७.२.९ ॥

तु शब्दः पक्षान्तरपरिग्रहे । यद्यभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु-कवतीषु रथन्तरं गायतीति । कथम् ? तदुच्यते-इह कवतीषु रथन्तरं गायतीत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः । कवतीषु यद् रथन्तरम् तद्गायतीत्येका, रथन्तरं यत् तत्कवतीषु गायतीत्यपरा । तयोर्यैषा द्वितीया रथन्तरं यत्तत्कवतीषु गायतीति, सा स्वरस्य सामत्वे न

### वार्तिकाभरणम्

रथन्तरशब्दाभिधेयस्याभीवतीस्वरस्य य एकदेशः कवतीषु विद्यमानस्तस्यायमनुवादः । स्वरैकदेशानुवादे 'रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे बृहदुत्तरयोर्न पश्यामीति वसिष्ठ' इति लिङ्गमप्युपपन्नं भवति । लोके हि विद्यमानस्यादर्शने सति तद्दर्शनाय यत्नः क्रियते; न त्वविद्यमानस्य । यथा घटं न पश्यामीति प्रदीपानयने यतते न तु शशविषाणं न पश्यामीति । तद्वदिहापीति उत्तरयोः रथन्तरस्य बृहतश्च दर्शनार्थं विश्वामित्र-

### भाष्यसन्दर्भयोजिनी

यदि स्युः तर्हि किमर्थमतिदेशं ब्रूयाम् । न सन्तीत्यतो स्वरातिदेशं ब्रवीमीति शङ्कते-नन्विति । नन्वतिदेशे कृतेऽपि ते स्वराः तत्र न भवेयुः, तत्र विलक्षणस्वराणां सत्त्वादिति चेद् वदति-भाव्यते इति । इमे स्वरास्तत्र न वर्तन्ताम् किन्त्वतिदेशेन भाव्यन्ताम् तत्र रथन्तरस्वरा वर्तन्त इति । एतादृशी भावनापि न सङ्गतेति पक्षं निरस्यति-भावयितुमपीति । नादापरपर्यायाः स्वरा ऋग्गताक्षराणामभिव्यञ्जकाः परिगणिताः । कवतीष्वभिवतीषु चाक्षराणि भिन्नानि । तत्तदक्षराभिव्यञ्जनायानुकूलाः स्वरा एवाभिव्यञ्जका भवन्ति । कवतीषु रथन्तरभावनामात्रेण को लाभः ? अभिव्यञ्जकत्वं तेषां न सिध्यतीति भावनामपि निषेधति—न हीति । केवलया भावनया कवत्यो नाभीवत्यो भवेयुः । नाप्यभिवत्यः कवत्यो भवेयुरित्यर्थः । यदा भावयितुं न शक्यते तदा न भूतः नातिदेशस्सिद्धः । तदिदमाह—कवतीष्विति । उपसंहरति—तस्मादिति ॥ ८ ॥

पक्षान्तरं परिगृह्य पूर्वपक्षी प्रत्यवतिष्ठते-यद्यभिवतीति । प्रदेशः अतिदेशः । यद्यभिवतीस्वरस्य कवतीष्वतिदेशो नोपपद्यत इत्युच्यते तर्हि 'कवतीषु रथन्तरं गायती'त्यनुवादो भवतु-इदं वाक्यमनुवादकं भवत्विति पक्षान्तरम् । कथमनुवादकत्वमस्येत्युपपादयति-इहेति । यत्तत्पदयोरवलम्बेन कवतीषु रथन्तरं गायतीत्यस्य वाक्यस्य द्वावर्थौ भवतः । यदा कवतीषु यद्रथन्तरमस्तीति विदितं तदा कथनार्थः, यदा हि तदस्तीति नविदितम् तदाऽन्य इत्यर्थद्वयं वाक्यस्य भवति । एवं द्वे वचनव्यक्ती निरूप्य तत्र द्वितीयाया वचनव्यक्तेः

### भाष्यम्

सम्भवतीत्युक्तम् । नह्यभिवतीस्वरः कवतीषु समवेतुं शक्य इति । पूर्वा तु सम्भवति । कवतीषु यद् रथन्तरं तद् गायतीति । ननु सापि न सम्भवति । न हि कवतीषु रथन्तरं भवति । अतः परमुच्यते—स्वरस्तूत्पत्तिषु स्यात् । स्वरस्तु अभिवतीस्वरः कवतीनामुत्पत्तिषु-उच्चारणेषु स्यात् । कथम् ? मात्रावर्णाविभक्तत्वात् । बहवो मात्रा वर्णाश्चाभिवतीनां कवतीनाञ्चाविभक्ता अभिवतीष्वपि विद्यन्ते कवतीष्वपि । सोऽसावभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते । तस्यानुवादोऽयं घटते कवतीषु रथन्तरं गायतीति । तस्मात्स्वरस्यानुवादः ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥ ७.२.१० ॥

लिङ्गञ्च दृश्यत एतस्मिन्नर्थे । अस्ति 'रथन्तरमुत्तरयोः' इति । किं तल्लिङ्गं भवति ? एवमाह-'रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठः' इति । यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः क्रियते । यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति । तस्मादस्त्युत्तरयो रथन्तरं बृहच्च । तयोरनुवाद इति ॥ १० ॥

### वार्तिकाभरणम्

वसिष्ठयोः तपः करणादुत्तरयो रथन्तरबृहतोस्सद्भावोऽवगम्यते सद्भावश्च रथन्तरादिशब्दस्य स्वरैकदेशपरत्वेऽवकल्पते नान्यथा । तस्मात् स्वरैकदेशानुवादः ।

### भाष्यसन्दर्भयोजिनी

रथन्तरं यत् तत्कवतीषु गायतीत्यस्याः प्रकृतेऽसम्भवेऽपि प्रथमायास्संभवो भवितुमर्हतीति प्रतिपादयति-पूर्वा त्विति । कवतीषु यद् रथन्तरं तद्गायतीति प्रथमा वचनव्यक्तिः । कवतीषु रथन्तरस्वरास्सन्तीति विदित्वा तद्गानस्य विधाने विधेरनुवादकत्वं सिध्यतीति भावः । एतेनास्य वाक्यस्यानुवादकत्वं साधितं भवतीति पूर्वपक्षिणोऽभिमानः । न हीति । कवतीषु रथन्तरमस्तीति त्वं कथं वेत्सि ? इत्यत आह—स्वरस्तूत्पत्तिषु स्यात् अभिवतीनां स्वराः कवतीषु सन्ति भूयांसः 'अ' कारस्य 'आ' कारादेर्वा अभिवतीषु विद्यमानस्य या मात्रा, यः कालः यच्च स्थानम्, यच्च करणम् तत्सर्वं कवतीस्वरेष्वस्त्येव । अतोऽभिवतीषु विद्यमाना एव स्वरमात्रादयः कवतीषु सन्तीति अभिवतीनां कवतीनाञ्चाविभक्ता-विभागरहिता विद्यन्त इत्याह—बहव इति । अतोऽनुवादोऽयं कवतीषु रथन्तरं गायतीति ॥ ९ ॥

अनुवादपक्षे लिङ्गमपि प्रमाणं प्रदर्शयति-एवमाहेति । वसिष्ठविश्वामित्रौ उत्तरार्चिकपठितयो ऋचोः बृहच्च रथन्तरञ्च न पश्यतः, तद्दर्शनाय तपस्तेपतुः इति लिङ्गेन तत्तदुत्तरयोः बृहद् रथन्तरं चास्तीति सिध्यति । सत एव पदार्थस्यादर्शने तद्दर्शनाय यत्नः क्रियते । तदिदमाह—यच्च विद्यमानमित्यादिना । उपसंहरति—तस्मादिति ॥ १० ॥

### भाष्यम्

## अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ७.२.११ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदेवं स्वरस्यानुवाद इति। कुतः? एवं सत्युत्तरासु विकारो न कश्चिच्छ्रुतो भवति। तदोत्तरा यथाश्रुताः प्रयोक्तव्याः। यथा स्वाध्यायकाले श्रुताः। तत्र रथन्तरमुत्तरयोर्गायतीत्येतदनुवादमात्रमप्रवृतिविशेषकरमनर्थकमेवापद्यते। अतो न स्वरस्यानुवादो युक्तः॥ ११ ॥

## शब्दानाञ्चासामञ्जस्यम् ॥ ७.२.१२ ॥

रथन्तरादीनाञ्च सामशब्दानामसामञ्जस्यं स्यात् रथन्तरमुत्तरयोः बृहदुत्तरयोरिति। कथम्? तदुच्यते-अयं रथन्तरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या व्यवस्थिते स्वरविशेषे प्रयुक्तः। स एकदेशे भिन्नानुपूर्व्ये वासमञ्जसो भवति। तस्मान्नैतद्युक्तम्-स्वरस्य

### वार्तिकाभरणम्

ननु कवतीषु स्वतस्सिद्धस्याभीवतीसम्बन्धस्यानुवादे प्रवृत्तिविशेषकरत्वाभावादानर्थक्यं स्यात्। रथन्वरादिशब्दानां आनुपूर्वीविशेषविशिष्टस्वरसमुदायार्थकानां भिन्नानुपूर्वीकस्वरसमुदायपरत्वे असामञ्जस्यं च स्यात्—इति चेदेवं तर्हि रथन्तरशब्देन ऋग्वान्कत्वेनाभीवतोदेशोऽभीवतीधर्मा वा लक्ष्यन्ते। तथा च कवतीषु रथन्तरं गायतीति कवतीनां ऋचां समीपदेशे अभीवतीमृचं गायेत्। अभीवतीधर्मान् वा कवतीषु कुर्यादिति।

### भाष्यसंदर्भयोजिनी

स्वरस्यानुवाद इति नैतद्युक्तमिति सिद्धान्ती पूर्वपक्षं निरस्यति। उत्तराग्रन्थस्याध्ययनावसरे यथा स्वरा भवन्ति न तथा क्रतुषु तासां प्रयोग इति स्थितिः। तत्र यद्युत्तरासु रथन्तरादिस्वरा विधीयेरन् तदोत्तरासु विकारस्य श्रवणाभावात् अध्ययनकाले यथोत्तराः तथैव क्रतुष्वपि प्रयोक्तव्या भवेयुः। तदा 'रथन्तरमुत्तरयोर्गायति' इति वाक्यं किं कुर्यात्? प्रवृत्तिविशेषकरत्वाभावेनानर्थकं तत्स्यादिति आह—तत्रेति। शिष्टं स्पष्टम्॥ ११॥

रथन्तरादयश्शब्दास्सामवाचकाः, सामशब्दश्च स्वरसामान्यवाची। तत्र रथन्तरादीनामानुपूर्वीविशिष्टस्वरसमुदायवाचित्वात् 'रथन्तरमुत्तरयोर्गायति' 'बृहदुत्तरयोर्गायति' इत्युत्तरयोर्गेयत्वेन विधीयमानयोर्बृहद्रथन्तरयोरसामञ्जस्यं स्यादिति सिद्धान्ती स्वरातिदेशानुवादपक्षौ निरस्यति-रथन्तरादीनाञ्चेति। रथन्तरयोनिभूताया ऋचः उत्तरयोश्चर्चोः आनुपूर्वी तावद्भिन्ना। यं विलक्षणानुपूर्वीविशिष्टस्वरसमुदायमाचष्टे रथन्तरशब्दो वा बृहच्छब्दो वा तादृशसमुदाय उत्तरयोर्नास्ति, तयोर्भिन्नानुपूर्वीकत्वात् इत्यसामञ्जस्यं स्यादिति भावः। तस्मान्नैतद्युक्तम् स्वरातिदेशो वा तदनुवादो वेति पक्षद्वयमपि न युक्तमित्यर्थः। अत्राहपूर्वपक्षी-सर्वे पक्षाः कार्यातिदेशः, आधेयतयातिदेशः, रथन्तरशब्दमात्रातिदेशः, स्वरातिदेशः, रथन्तरबृहतोरनुवादकत्वमिति सर्वेऽपि पक्षाः। एतेषु पक्षेषु निरुद्धेषु 'कवतीषु रथन्तरम्' 'रथन्तरमुत्तरयोः' इत्यत्र रथन्तरशब्दस्य प्रवृत्तिरेव नास्तीति वदसि

## भाष्यम्

**सामशब्दः तस्य चानुवाद इति । अत्राह—एवं भवता सर्वे पक्षा निरुद्धाः । ततः किमप्रवृत्तिरेवेति ? उच्यते-ऋच एव प्रदेशो भवतु । ननूक्तं न शक्या ऋच ऋगन्तरे प्रदेष्टुमिति । बाढम् ! देशलक्षणा भविष्यति । कवतीषु रथन्तरं गायतीत्युच्यते । न च शक्यते कवतीषु रथन्तरं गातुम् । तत्र देश-लक्षणा भवति-कवतीदेश इति । यथा—अग्नौ तिष्ठति कूपे तिष्ठतीति । धर्मलक्षणा वा स्यात् । रथन्तरधर्मा वा कवतीषु रथन्तरशब्देनातिदिश्यन्ते । यथा-'रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्' इत्येवमादयः । यथा-आचार्ये प्रोषिते आचार्याणी भवतामाचार्य इत्याचार्यशुश्रूषाचार्याण्या-मतिदिश्यते ॥ १२ ॥**

## वार्तिकाभरणम्

तस्माद्रथन्तरादिशब्दा अभीवत्यादीनां ऋचामेव वाचकाः; न तु गीतिमात्रस्येति प्राप्ते ब्रूमः—नागृहीतविशेषण-न्यायेन रथन्तरादिशब्दानां गीतिवचनत्वे सम्भवति ऋग्वचनत्वमाश्रित्य देशलक्षणा धर्मलक्षणा वा न युक्ता। किञ्च कवतीषु रथन्तरं गायतीत्यत्र गायतीत्यस्य गानं करोतीत्यर्थः। रथन्तरशब्दस्य द्वितीयान्तत्वात् गायतिना सामानाधिकरण्येन सम्बध्यते। इदं च सामानाधिकरण्यं रथन्तरशब्दस्य गीतिवचनत्व एवोपपद्यते; न तु ऋग्वचनत्वे। अत एव च गान्धर्वशास्त्रे 'आसारितकं गायति' 'वर्धमानं गायति' इति गानवाचकानामासारितक-वर्धमानादिशब्दानां गायतिना सामानाधिकरण्यव्यवहारः।

## भाष्यसन्दर्भयोजिनी

त्वम् इति पूर्वपक्षी पृच्छति-ततः **किमिति । ऋच एव प्रदेशः** अभित्वेति ऋच एवातिदेश उच्यत इति सम्बन्धः। सिद्धान्ती प्रतिवदति-ऋचोऽतिदेशो न भवितुमर्हतीत्युक्तं पूर्वमिति। **बाढम्** सगर्वमङ्गीकुर्वन् पूर्वपक्षी वदति-**देश लक्षणेति**। रथन्तरं कवतीदेशे गायतीति। कवतीदेशे 'कयानश्चित्र' इति ऋचमपसार्य 'अभित्वे'ति ऋचः प्रदेश-स्सिध्यतीति भावः। कवतीषु ऋक्षु अभिवतीनां गानमशक्यमिति स्वीकरोमि, किन्तु कवतीदेशे रथन्तरगानस्य न कोऽपि प्रत्यूहः। अत्रैवोदाहरणम् **अग्नौ तिष्ठतीति**। अग्निसमीपे तिष्ठति कूप समीपे तिष्ठतीति यथा। उदाहरणे अग्निकूपपदयोर्देशे लक्षणा तिष्ठतिक्रियायामन्वयाय, प्रकृते कवतीषुपदस्य कवतीदेश इति लक्षणायाः प्रसक्तिर्नास्ति, गायतिक्रियायामन्वयोपपत्तेः किन्तु रथन्तरशब्दस्य कवतीदेश इति लक्षणा तत्र च कवतीषुपदं तात्पर्यग्राहकमिति वक्तव्यम्। तथा सति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमापतेदिति **धर्मलक्षणा वेति** पक्षान्तरमाश्रितं पूर्वपक्षिणा। रथन्तरपदस्य रथन्तरधर्मे लक्षणां स्वीकृत्य ते धर्माः कवतीष्वतिदिश्यन्ताम्। 'रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्' 'रथन्तरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेत' इत्यादिभिः पृथिवीध्यान-संमीलन-वीक्षणादयो रथन्तरसामसम्बन्धिनो धर्माः। ते कवतीष्वतिदिश्यन्ते। आदिपदेन संमीलनवीक्षणादीनां ग्रहणम्। स्वर्दृक् शब्दो-च्चारणात्पूर्वं संमीलनम्, स्वर्दृकशब्दोच्चारणकाले वीक्षणमित्यादयः। लौकिकमुदाहरति-**यथेति** । **प्रोषिते** प्रदेशान्तरं गते। आचार्यशुश्रूषा पत्न्यामतिदिश्यते यथा तथेत्यर्थः॥ १२॥

भाष्यम्

## अपि तु कर्मशब्दस्स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ ७.२.१३ ॥

**अपि तु नैवं स्यात्—ऋचः सामशब्दः, तस्याश्च प्रदेश इति। तथा देशलक्षणा धर्मलक्षणा वाश्रयणीया। अगतिश्चैषा यल्लक्षणापरिग्रहः। किं तर्हि? कर्मशब्दस्स्यात्। रथन्तरादिर्गानाख्यस्य संस्कारकर्मणो वाचकः। कुतः? उक्तो न्यायो 'गीतिषु सामाख्या (जै० सू० २.१.३६) इत्यत्र। तत्र गीतिविशिष्टायामृचि एष शब्दो दृष्टः। न चागृहीतविशेषणा विशेष्ये बुद्धिरुपपद्यते। तस्माद्विशेषणं तावदभिधीयते। विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। अतो नास्ति ऋचश्शब्देन संस्पर्श इति। तेनैव न्यायेन गीतिनामधेयमिति ब्रूमः।**

**किञ्च प्रसिद्धग्रहणत्वात्। अयञ्च गायतीति शब्दो गानक्रियायां प्रसिद्धः। का पुनरसौ? शब्दस्योच्चारणविशेषः। गायति गानं करोतीति तद्ग्रहणश्च रथन्तरादिशब्दः। तद्वचन**

### वार्तिकाभरणम्

ननु गाथां गायतीत्यगीतिवचनानामपि गायतिशब्दानां सामानाधिकरण्यदर्शनात् कथं रथन्तरशब्दस्य गीतिवचनत्वमिति चेन्न। तत्र हि गानेन ऋचं संस्कुर्यादिति वैय्यधिकरण्येनैव सम्बन्धो न तु ऋचं गानं करोतीति सामानाधिकरण्येन सम्बन्ध इति सामवचन एव रथन्तरादिशब्दः।

### भाष्यसन्दर्भयोजिनी

सिद्धान्ती प्रत्युत्तरयति-**अपि तु नैवं स्यादिति**। सामशब्दः ऋचोऽभिधत्ते, ऋचश्चातिदेशः, रथन्तरपदेन देशलक्षणा वा धर्मलक्षणावेति नैवं स्यादिति सम्बन्धः। लक्षणा तु लौकिकी, तस्या आश्रयणं कुतो निवार्यत इत्यत आह—**अगतिरिति**। मुख्यार्थग्रहणासम्भवेऽगत्या लक्षणायाः परिग्रहः-स्वीकारो भवतीत्यर्थः। **किं तर्हि** यदि सर्वं निवार्यते तर्हि 'कवतीषु रथन्तरं गायती'ति किं करोतीत्यर्थः। उत्तरयति-**कर्मशब्द इति**। गानाख्यस्य कर्मणो वाचको रथन्तरादिशब्द इत्यर्थः। रथन्तरादिशब्दस्य संस्कारकर्मवाचित्वे पूर्वोक्तं न्यायं स्मारयति-**उक्तो न्याय इति**। तत्र 'गीतिषु सामाख्या' इत्यत्र एष शब्दः रथन्तरशब्दः **गीतिविशिष्टायामृचि दृष्ट** इति चेत् इति पूरणीयम्। तदिदं निवारयति-**न चेति**। 'नागृहीतविशेषणा बुद्धिर्विशिष्टमुपसङ्क्रामति' इत्याकृत्यधिकरणन्यायं सङ्गमयति-**तस्मादिति**। **विशेषणं** गीतिरूपं **अभिधीयते** रथन्तरशब्देन। विशेषणज्ञाने जाते **तत्सहचरिते विशिष्टे प्रत्ययः** ज्ञानं भवति। विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणं न शब्दः। तेन शब्दस्यार्थो विशेषणं न तु विशिष्टमिति विशिष्टस्य शब्दसंस्पर्शो नास्तीत्याह-**नास्तीति**। अतो रथन्तरशब्दो गीतेर्नामधेयम्।

हेत्वन्तरं रथन्तरादिशब्दानां गीतिवाचित्वे समुपस्थापयति-**प्रसिद्धग्रहणत्वात्** इति। गायतिशब्दो गानक्रियायां प्रसिद्धः, गानञ्चोच्चारणविशेषः तद्ग्रहणत्वं तद्वाचकत्वं रथन्तरशब्दस्य। अतः प्रसिद्धग्रहणत्वाद्धेतोः उच्चारणविशेषरूपस्य गानस्यैव वाचको रथन्तरशब्द इति भावः। गायतिपदस्य गानं करोतीति विवरणबलाद्गानस्यैव प्रधान्यमवगम्यते द्वितीयया, तत्सामर्थ्यादपि रथन्तरशब्दो गीतिवाची। कल्याणीं गायति, भैरवीं गायति,

## भाष्यम्

इत्यर्थः। तेन समुच्चारणाद् द्वितीयासामर्थ्याच्च। यथा-आसारितकं गायतीति, वर्द्धमानकं गायतीति।

ननु शब्दवचनेनापि समुच्चारणं भवति—गाथां गायति ऋचं गायति इति। सत्यम्; विपरिणम्य तु शब्दं गानेन ऋचं संस्करोतीति यथानिपतितेनार्थेन न सम्बध्यते गानं करोति ऋचमिति। तस्माद्गीतिवचनः। कुतः? इतश्च गीतिवचनः। विकारो ह्यविशिष्टोऽन्यैः। विकारश्चात्र ऋग्द्रव्यस्य दृश्यते। ह्रस्वानामक्षराणां दीर्घता, दीर्घाणाञ्च ह्रस्वत्वम्। विवृतानां संवृतत्वम् संवृतानां विवृतत्वम्। सोऽविशिष्टोऽन्यैस्संस्कारकर्मभिः। यथा-अवहन्तिना व्रीहीणां तण्डुलीभावः, पिषिणा तण्डुलानां पिष्टभावः। तस्माच्छब्दानां संस्कारो गानाख्यो रथन्तरादिभिशब्दैरुच्यते। तस्यायं प्रदेशो रथन्तरमुत्तरयोर्गायति इत्येवमादिः॥ १३॥

## वार्तिकाभरणम्

किञ्च ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वता; विवृतानां च संवृतत्वम्; संवृतानां च विवृतत्वम् इत्यवंरूपो विकारः उत्पद्यते। यथा—अवहननेन व्रीहीणां तण्डुलरूपो विकारः। एवञ्च यथा अवहननस्य व्रीहिसंस्कारत्वं तथा गानस्यापि ऋक्संस्कारत्वमिति रथन्तरमुत्तरयोर्गायतीति संस्कारकर्मणो गानस्यैवातिदेशो न्याय्यः। स च संस्कारकर्मणो गानस्यातिदेशो रथन्तरादिशब्दानां गानवाचकत्व एव सम्भवति; नान्यथेति

## भाष्यसन्दर्भयोजिनी

आनन्दभैरवीं गायति, आसारितकं गायति, वर्द्धमानकं गायतीत्यादिषु तत्तन्नाम्ना प्रसिद्धाया गीतेरेव गानं बुध्यते, न तु तदधिकरणीभूतान्यक्षराणि इति भावः।

ननु गाथां गायति ऋचं गायति पद्यं गायति इत्यादि प्रयोगैः अक्षरसमुदायोऽपि गानकर्मतामनुभवतीति शङ्कते-नन्विति। सत्यमित्यर्धाङ्गीकारे। सत्यमक्षरसमुदायावलम्बनेनापि प्रयोगा भवन्ति, किन्तु तत्र यथावस्थिताश्शब्दाः न गानकर्मतामनुभवन्ति। ऋचं गायति इत्यत्र ऋचं गानेन संस्करोति गाथां पद्यं वा संकरोतीत्येवार्थः। तेषां गानावसरे शब्दानां क्वचिद्विपरिणामः क्वचिद्विकार इत्येवं नैकरूपता दृश्यते। एवं विपरिणामादिकमापन्नोऽक्षरराशिः न ऋक्शब्देन व्यवह्रियते। 'यत्रार्थवशेन पादव्यवस्था' तत्र ऋक्शब्दः प्रयुज्यते। शब्दं विपरिणम्य गानेन ऋक् संस्कारावसरे ऋचाऽर्थेन सम्बन्धो न भवति इत्याह—**विपरिणम्य त्विति**। गानेन शब्दस्य विकारोऽपि दृश्यत इत्याह—**विकार** इति। ह्रस्वत्वदीर्घत्वविवृतत्वसंवृतत्वादयो गुणाः शब्दे गुणे कथं सम्भवेयुरित्यत आह—**ऋग्द्रव्यस्येति**। अवहनपेषणादीनि संस्कारकर्माणि तत्सादृश्यं गीतावप्यस्ति इति सङ्गमयति—**शब्दानां संस्कार** इति। एवञ्च रथन्तरादयश्शब्दाः गानाख्यसंस्कारवाचिनः तेषामतिदेश इत्युपसंहरति—**तस्यायमिति** ॥ १३॥

### भाष्यम्

## अद्रव्यञ्चापि दृश्यते ॥ ७.२.१४ ॥

अपि चाद्रव्यं साम दृश्यते। द्रव्यशब्दश्छन्दोगैः ऋक्ष्वाचरितः। अद्रव्यम्-अनृचमित्यर्थः। अनृचं साम दृश्यते, 'प्रजापतेर्हृदयमनृचं गायती'ति। प्रजापतिहृदयं नाम साम। तदनृच्युत्पन्नम्। यदि ऋचि सामशब्दः कथं प्रजापतिहृदयमनृचं स्यात्? अत्र गीतावेव सामशब्दस्ततो विनापि ऋचा गीतिर्भवति। तत्रैतदुपपद्यते-प्रजापतेर्हृदयमनृचं गायतीति। तस्मादपि गीतिस्साम ॥ १४ ॥

ननूक्तं संस्कारकर्मत्वेऽनर्थकोऽकर्मकाले प्रयोग इति। तत्र ब्रूमः—

## तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ ७.२.१५ ॥

तस्य क्रिया अकर्मकाले ग्रहणार्था, शिक्षितुमभ्यसितुञ्च। नानार्थेषु-नानाभूतेष्वर्थेषु भिन्नेष्वित्यर्थः। विरूपित्वात्। आश्रयभेदाद् विविधरूपं यद्गानं भवति तत् प्रत्यृचं शिक्षितव्यमभ्यसितव्यञ्च प्रयोगप्राशुभावाय। भूमिरथिकवत्। तद्यथा-भूमिरथिको भूमौ रथमालिख्य योग्यतां करोति। सा तस्य प्रयोगकाले सौकर्यमुत्पादयति। अर्थो ह्यासां रथन्तरादिसंज्ञानां न लौकिके

### वार्तिकाभरणम्

रथन्तरादिशब्दानां गानवाचकत्वमेव। यदि च गीतिविशिष्टऋग्वचनत्वं रथन्तरादिशब्दानामभ्युपगम्येत तदा प्रजापतेर्हृदयमनृचं गायतीति ऋचा विना कृतस्य प्रजापतेर्हृदयाख्यस्य साम्नो दर्शनमनुपपन्नं स्यात्। × × × × × रथन्तरशब्दस्य संस्कारकर्मवचनत्वे अकर्मकाले प्रगीतऋक्पाठस्तावदनर्थको भवतीति। तन्न, कर्मकाल एव

### भाष्यसन्दर्भयोजिनी

रथन्तरादीनां गीतिवाचित्वे प्रमाणान्तरं दर्शयति—अपि चेति। द्रव्यशब्द इति छन्दोगा ऋचं द्रव्यशब्देन व्यवहरन्ति। न द्रव्यमद्रव्यम् अधिकरणीभूतऋग्रहितमित्यर्थः। गीत्यर्थमधिकरणीभूताक्षरसमुदाय आवश्यकः, किन्तु तादृशं साम किञ्चिदस्ति यस्य चाधिकरणीभूता ऋङ्नास्ति। तदेव साम प्रजापतेर्हृदयमित्युच्यते। ऋचं विना कथं सामशब्दः प्रयुज्यते? इत्यत आह—अत्रेति। अतः सामशब्दप्रवृत्तिनिमित्तं गीतिरेव, न तु गीतिविशिष्टा ऋक् इत्यर्थः ॥ १४ ॥

ननु साम्न ऋक्संस्कारकत्वे क्रतोर्बहिः कथं तस्य प्रयोगः। अवहननादिः क्रतोर्बहिर्न क्रियते संस्कारत्वादित्यत आह—**तस्य क्रियेति**। अध्ययनं त्रिविधम्-ग्रहणाध्ययनम् धारणाध्ययनम् ब्रह्मयज्ञाध्ययनञ्चेति। ग्रहणं धारणञ्च क्रतोर्बहिरेव भवतः। एवञ्चाकर्मकाले प्रयोगो न दोषाय स्यादिति भावः। **प्रयोगप्राशुभावाय** अनुष्ठानशैघ्र्याय। **योग्यतां करोति** योग्यतां सम्पादयति। **सा** योग्यता। अवहननपेषणादयस्संस्कारा लौकिकाः लोकतस्सिद्धाः। रथन्तरादयस्तु लोके न प्रसिद्धाः। ते गुरुमुखेन ग्रहीतव्या अभ्यसितव्याश्चेत्यवहननादिभ्यो

### भाष्यम्

व्यवहारे सिद्धः। यथा अवहन्त्यादीनाम्। कुतः? विधानात्। विधीयते ह्यसौ शिष्योपाध्याय-सम्बन्धेन-एवंरूपं रथन्तरं भवतीति। न लौकिको विज्ञायते। तस्मान्न परिचोदनैषा-अकर्मकाले प्रयोगादिति॥ १५॥

अथ यदुक्तम्-संज्ञापृथक्त्वादिति। तत्रोच्यते—

**तस्मिन् संज्ञाविशेषास्स्युर्विकारपृथक्त्वात्॥ ७.२.१६॥**

तस्मिन्-एकस्मिन्नपि गानाख्ये संस्कारे संज्ञाविशेषा भवेयुः। कुतः? विकारपृथक्त्वात्। तुल्येऽपि गाने गानविशेषो भवति। गानविशेषाच्च संज्ञापृथक्त्वम्। यथा-आसारितकम्, वर्धमानकमिति। अन्यथालक्षणा आसारितकगीतिः, अन्थालक्षणा वर्धमानकगीतिः। एवमिहाप्यन्यथालक्षणा रथन्तरगीतिः अन्यथालक्षणा बृहद्गीतिः। तस्मात्संज्ञापृथक्त्वम्॥ १६॥

**योनिशस्याश्च तुल्यवादितराभिर्विधीयन्ते॥ ७.२.१७॥**

योनिश्चासौ शस्याश्च योनिशस्याः। योनिशस्याश्च ऋचः, तुल्यवदितराभिरयोनिशस्याभि-

### वार्तिकाभरणम्

प्रथममृक्षु गाने क्रियमाणे पूर्वमनभ्यस्तत्वाद्गानस्य दुस्साध्यत्वाच्छीघ्रं गानं कर्तुं न शक्यते। तथाच शास्त्रीयप्रयोगप्राशुभावो न स्यात्। तत्सिध्यर्थं भूमिरथवत् शुष्केष्टिवच्चाकर्मकालप्रयोगस्याभ्यासार्थत्वेनोपपत्तेः।

### भाष्यसन्दर्भयोजिनी

रथन्तरादीनां विद्यमानं वैलक्षण्यं बोधयति—**अर्थो ह्यासामिति**। तस्मात् अलौकिकत्वात्। **न परिचोदना न दोष** इत्यर्थः॥ १५॥

रथन्तरादीनां यदि संस्कारवाचित्व तर्हि रथन्तरं बृहदित्यादिः संज्ञाभेदः किंप्रयुक्तः? न ह्यवहननादिसंस्कारेषु संज्ञाभेदोऽस्ति इति परिचोदनां निरसितुमारभते—**अथ यदुक्तम्** इति। सूत्रगतस्य 'तस्मिन्' इत्यस्यार्थः—**एकस्मिन्नपि**। संस्कारस्य गानस्य गानत्वेनैकरूपत्वेऽपि संज्ञाभेदा नासङ्गताः। सामान्यस्य 'निर्विशेषं न सामान्यम्' इति न्यायेन विशेषवत्वेऽपि विशेषाणां पृथग्भावो न विरुध्यते इत्याह—**तुल्येऽपि गाने** इति। गानविशेष इत्यवगते संज्ञाभेदा भवत्येवेत्यर्थः। सर्वस्या अपि गीतेर्लक्षणं पृथक् पृथगस्ति। तेन च परस्परं भेदः संज्ञाविशेषेण सिध्यतीति रथन्तरादावपि संज्ञापृथक्त्वमित्यर्थः॥ १६॥

ऋक्षु योनिशस्या अयोनिशस्या इति भेदः। शंसतिशब्देन या ऋचो विधीयन्ते ताः शस्या इत्युच्यन्ते। योनिभूतायामृचि याः शस्यन्ते ता योनिशस्याः। ता अयोनौ शंसनीयतयापि विधीयन्त इति योनिशस्यानामयोनिशस्यानाञ्च तुल्यता, शंसतिधातोरनुवर्तमानत्वात्। एवं स्तौतिशब्देन योनावयोनौ च ऋचो विधीयन्ते।

### भाष्यम्

विधीयन्ते । 'याम्याः शंसति' 'शिपिविष्टवतीः शंसति' 'रथन्तरस्य योनिमनुशंसति' 'बृहतो योनिमनुशंसति' इति । का तत्र तुल्यता ? शंसतिशब्देन विधानम् । इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ । प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः । यथा 'प्रउगं शंशति निष्केवल्यं शंसति' इति । 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति । अतः शंसतिशब्देन विधानादप्रगीतामृचं रथन्तरस्य योनिं दर्शयति । यदि च गोतिः रथन्तरं ततस्तस्या प्रगीता ऋक् योनिः । अन्यथा व्यपदेशो नोपपद्यते रथन्तरस्य योनिमिति । तस्माद्गीतिः सामाख्या । १७ ॥

## अयोनौ चापि दृश्यतेऽतथायोनि ॥ ७.२.१८ ॥

अयोनौ च साम दृश्यते 'स्थाल्यां सक्त्वाधीयत इत्याहुर्यद् बृहद् गायत्रीषु क्रियतेऽपि चैनां रुजति, न चास्यां सम्भवती'ति । बृहतो बृहती योनिः । तस्य गायत्रीषु प्राप्तिर्नास्ति ऋचः

### वार्तिकाभरणम्

नन्वेवमपि अकर्मकाले योनावेव पाठोऽस्तु, तावताप्युत्तरासु कर्मकाले गानसिद्धेरुत्तरासु गानमकर्मकालेऽनर्थकमिति चेन्मैवम् । योनिऋगपेक्षया उत्तरर्चां भिन्नत्वेन आश्रयभेदेन पूर्ववदेव गानस्य दुस्साध्यत्वात्तत्राप्यभ्यासार्थत्वेनोपपद्यते । यच्चोक्तं रथन्तरादिशब्दानां गीतिवचनत्वे गीतेरेकत्वाद्रथन्तरं बृहदिति संज्ञाभेदोऽनुपपन्नः स्यादिति । तदपि न, गीतित्वेनैकत्वेऽपि रथन्तरबृहदादिगानानां परस्परवैचित्र्येण संज्ञाभेदोपपत्तेः ।

### भाष्यसन्दर्भयोजिनी

तत्र स्तौतिशंसतिभ्यां विधीयमाना ऋचः स्तुत्यर्था एव भवन्तीत्युभयोस्सामान्यमस्ति, तथापि स्तोत्रत्वेन शस्त्रत्वेन विद्यमानो भेदो नापन्होतुं शक्यमिति तयोर्भेदमुपपादयति—**प्रगीतेष्विति** । गीतियुक्तमन्त्रवाक्येषु स्तौतीति, तद्रहितमन्त्रवाक्येषु शंसतीति भेद इत्यर्थः । एवं स्तौतिशंसत्योर्भेदनिरूपणेन प्रकृते किमायातमित्यत आह—**यदि चेति** । रथन्तरादियोनीनामृचां शंसतिशब्देन विधानादपि नर्च एव सामानीति साधितं भवतीत्यर्थः । अर्थात् 'रथन्तरस्य योनिमनुशंसति' इति शंसतिस्थले 'स्तुवते' इति विधिस्स्यात् न तु शंसतीति । तदिदमाह—**अन्यथा व्यवहारो नोपपद्यत इति** । तस्माद्गीतिरेव साम ॥ १७ ॥

**अयोनौ चेति** । अयोनिः स्वयोनिर्भिन्ना सामान्तरयोनिरित्यर्थः । तस्यामपि साम दृश्यते । अत्रेदमनुसन्धेयम्—गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती इति सप्त वैदिकच्छन्दांसि । इमानि ऋचः छादयन्तीति छन्दांसीति कथ्यन्ते । तत्र चतुष्पदा गायत्री त्रिपदा गायत्रीति गायत्री द्विधा परिगण्यते । चतुष्पदायां गायत्र्यां प्रतिपादं षडक्षराणि, त्रिपदायाञ्च चाष्टावक्षराणि । तदूर्ध्वमुष्णिगादिषु छन्दस्सु साम्नां योनिभूता ऋक् तत्तच्छन्दसा नियता भवति । बृहत्साम्नो बृहतीच्छन्दस्का ऋग्योनिः । एवमन्येषामपि साम्नां योनिर्नियता । स्वयोनिभिन्नायां सामान्तरयोन्यां साम चेद् दृश्यते तर्हि संशरविलेशाख्यौ दोषौ भवतः । संशरो नाम—न्यून-

## भाष्यम्

सामशब्दः। अथनु गीतेः, ततस्सा बृहद्गीतिर्गायत्रीषु वचनात्प्राप्ता। तस्या अयमनुवादो घटते यद्गायत्रीषु क्रियत इति। अतथायोनि च साम दर्शयति यादृशी यस्य योनिस्ततोऽन्यादृशे 'यो वै विच्छन्दसि सामोहति स ऋचं संशृणाति, साम वा विलिशति साम संशृणाति ऋचं विलिशति, इति। यतरदल्पीयः तस्य विलेशः, यतरद्वर्षीयस्तस्य संशरः। तच्च गीतावेव साम्नि युज्यते, न ऋचि। ऊहतिशब्दश्च गीतावेव समर्थो न ऋचि। ऋक्चेत् सैव यथाम्नानं पठ्यते तत्र नास्त्यूह प्रसङ्गः। तस्मादपि गीतौ सामशब्दः॥ १८॥

## वार्तिकाभरणम्

यदि च रथन्तरादिशब्द ऋग्वचनः स्यात् तदा रथन्तरस्य योनिमनुशंसति बृहतो योनिमनुशंसतीति व्यपदेशो न स्यात्। रथन्तरशब्दस्य ऋग्वचनत्वेन ऋचः ऋग्योनित्वासम्भवात्। गीतिवचनत्वे तु अप्रगीताया ऋचो गीतिं प्रति योनित्वसम्भवाद्रथन्तरस्य योनिमनुशंसतीति व्यपदेश उपपद्यते।

किञ्च—रथन्तरबृहदादिशब्दानां ऋग्वचनत्वे 'स्थाल्यां सक्त्ववधीयते इत्याहुः। यद्बृहद्गायत्रीषु क्रियते अपि चैनां रुजति न चास्यां सम्भवती'ति गायत्रीषु बृहतः प्राप्तिदर्शनमनुपपन्नं स्यात्—बृहच्छब्दस्य ऋक्परत्वेन ऋक्षु ऋगन्तरस्य प्राप्तेरभावात्।

## भाष्यसन्दर्भयोजिनी

परिमाणासु ऋक्षु साम्नो गाने सामैकदेशस्य लोपः, एवमधिकपरिमाणासु ऋक्षु साम्नो गाने ऋक्शेषे साम्नोऽदर्शनं विलेशः। इत्थं सामान्तरयोन्यां साम्नो गाने पूर्वोक्तौ दोषौ भवतः। यदि बृहत्साम स्वयोनिभूतबृहती छन्दस्कभिन्नायां ऋचि गायत्रीछन्दस्कायां गीयेत तर्हि संशराख्यो दोषस्स्यात्। यतो हि बृहतीछन्दसि षट् त्रिंशदक्षराणि, गायत्र्यां छन्दसि च चतुर्विंशत्यक्षराणि बृहत्सामयोन्यपेक्षया गायत्र्या न्यूनाक्षरवत्वात् बृहत्साम्नश्चाधिकाक्षरेषु गेयत्वेन सिद्धत्वात् सामैकदेशस्य लोपाख्यः संशरः। तदत्र श्रौतं वाक्यमुदाहरति—**'स्थाल्यां सक्त्वाधोयत इत्याहुरिति** बृहत्साम गायत्रीषु क्रियत इति यत् तत् स्थाल्यां सक्त्वाधानमिव। सक्त्वो बृहति पात्र आधीयन्ते, न तु सङ्कुचितोदरायां स्थाल्याम्। एनां स्थालीं ऋचञ्च। **रुजति** पीडयति, कुतः? **न चास्यां सम्भवतोति** अस्यां स्थाल्यां ऋचि च न सम्भवति न मातीति। अतः **बृहतः** साम्न। **बृहती** तच्छन्दास्का ऋक योनिरित्यर्थः। सामशब्दस्य ऋग्वाचित्वे बृहत्साम्न आधानं गायत्रीषु न भवितुमर्हति अल्पाक्षरवत्वाद्-गायत्र्याः बृहतश्चाधिकाक्षरगेयत्वात् इत्याह— **तस्य गायत्रीष्विति**। साम्नो गीतिवचित्वे का स्थितिरित्यत्राह-**अथन्विति**। गीतिवाचित्वे बृहद्गीतिः गायत्रीषु वचनात्प्राप्ता। तामिमां स्थितिं यद् बृहत् गायत्रीषु क्रियत' इति वाक्यमनुवादकं भवेदित्यर्थः। अयोनिस्थलं प्रदर्श्य अतथायोनिस्थलं प्रदर्शयति—**अतथायोनि चेति**। 'अतथायोनि' इत्यस्य विवरणम्—**यादृशो यस्येति**। **ततोऽन्यादृशे** तद्भिन्न इत्यर्थः। **यो वै विच्छन्दसि** इत्यादिना संशर विलेशयोः स्वरूपमुच्यते। संशरो वा विलेशो वा गीतावेव सङ्गतार्थौ न तु ऋचीत्याह—**तच्चेति**। ऊहे कृतेऽन्यथाभाव आवश्यकः। स च गीतावेव सम्भवति न ऋचि। तदिदमाह—**ऊहतीति**। ऋच ऊहे क्रियमाणे यथाम्नानमेव पाठो भवति, न तत्रान्यथाभावः कर्तुं शक्य इत्यर्थः। उपसंहरति-तस्मादिति॥ १८॥

### भाष्यम्

## ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥ ७.२.१९ ॥

यत्तूक्तं तस्य क्रिया ग्रहणार्थेति, तत्र परिचोद्यते। ऐकार्थ्ये नास्ति वैरूप्यमिति। रथन्तरगोतेर्बृहद्गीतिरर्थान्तरम्। तेन रथन्तरगीतौ गृहीतायां बृहद् गीतिरगृहीता भवतीति युक्तो रथन्तरे गृहीते बृहतः शिक्षार्थमकर्मकाले प्रयोगः। रथन्तरगोतेस्त्वेक एवार्थः। तस्य योन्यां प्रयोगे शिक्षिते पुनरुत्तरासु न शिक्षितव्यम्। तास्वकर्मकाले प्रयोगः संस्कारकर्मत्वे न युक्तो भवति। तस्मान्न संस्कारस्य सामशब्द इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ १९ ॥

## स्यादर्थान्तरेष्वनिष्पत्तेर्यथा लोके ॥ ७.२.२० ॥

स्याद्वैरूप्यम्। कुत एतत्? अर्थान्तरेष्वनिष्पत्तेः। ऋगन्तरेष्वाश्रयभेदाद्भिद्यते। यथा पाके। यथैक एवायमर्थः पाको नाम। तस्यार्थान्तरे वैरूप्यं भवति। अन्यथालक्षण ओदनस्य

### वार्तिकाभरणम्

अपि च रथन्तरादिशब्दानां ऋग्वचनत्वे यो वै छन्दसां सामोहति स ऋचं सं{ँ}श्रृणाति; साम वा विलिशति साम वा सं{ँ}श्रृणाति; ऋचं विलिशति—इति योनावुत्पन्नस्य साम्नो विच्छन्दस्कासु ऋक्षु गाने

### तन्त्रशिखामणिः

पूर्वत्र वाचनिकातिदेशश्चिन्तितः। इहातिदेशवचनार्थश्चिन्त्यत इति पादान्तरता आनन्तर्यं च। इदं श्रूयते-'कवतीषु रथन्तरं गायति' 'रथन्तरमुत्तरयोर्गायती'ति। तत्र किं गीतिविशिष्टा 'अभि त्वा शूर नोनुम' इत्यस्या ऋचो रथन्तरादिशब्दैरभिधीयन्ते? किं वा गीतिविशेषाः? इति संशयः। नन्वतिदेशविचारप्रस्तावे शब्दार्थविचारोऽनुपपन्न इति चेन्न, किं रथन्तरादिशब्देनातिदेश्यतया गीतिविशिष्टं साम समर्प्यते? किंवा गीतिमात्रमित्ति? परिज्ञानार्थत्वादस्य विचारस्य नासाङ्गत्यम्। ननु द्वितीय एव 'गीतिषु सामाख्या' इति

### भाष्यसन्दर्भयोजिनी

सिद्धान्तिनं परिचोदयति—अकर्मकाले रथन्तरादीनां प्रयोगो ग्रहणार्थो वाभ्यासार्थो वेत्युक्तम्, तत्रेयं शङ्का—ऐकार्थ्ये नास्ति वैरूप्यमिति। बृहत् रथन्तरञ्चेति सामनी विलक्षणे, बृहद्गीतौ गृहीतायामपि रथन्तरगीतिर्गुरुमुखेन ग्रहीतव्या अभ्यसितव्या च। तस्या ग्रहणार्थमकर्मकाले प्रयोगो भवतु। एवं बृहतोऽकर्मकाले प्रयोगो भवतु, किन्तु रथन्तरस्य बृहतो वा योनौ ग्रहणावसरे योऽर्थः स एवार्थ उत्तरयोर्गानावसरे। तत्र शिक्षाया वा अभ्यासस्य वा नावश्यकता एकरूपत्वे निर्विवादे वैरूप्यस्य नावसर इति न शिक्षितव्यमिति। अतस्संस्कार कर्मत्वे दोषमाह—तास्विति। तासु उत्तरासु। अकर्मकाले प्रयोगो न युक्तः, संस्कारकर्मत्वात्। उपसंहरति—तस्मादिति।

### भाष्यम्

पाकः अन्यथालक्षणो गुडस्य । येनौदनपाको गृहीतो नासावशिक्षित्वा गुडं पक्तुं जानाति । तस्मात्तस्याप्यकर्मकाले प्रयोग उपपद्यते ॥ २० ॥

## शब्दानाञ्च सामञ्जस्यम् ॥ ७.२.२१ ॥

एवञ्च सामशब्दानामृक्शब्दानाञ्च सामञ्जस्यं भवति । कवतीषु रथन्तरं गायतीति, कवतीशब्द ऋच एव वक्ष्यति, रथन्तरशब्दश्च साम । इतरथा कवतीशब्दे वा देशलक्षणा स्यात्,

### वार्तिकाभरणम्

क्रियमाणे संशरविलेशदर्शनमनुपपन्नं स्यात्, ऋक्षु ऋगन्तरस्याप्रसक्तेः । तथा सामोहतीति ऊहतिशब्दश्च न स्यात् । ऋचो यथाम्नाताया एव पाठेन × × × × × त्वभावात् । तस्मात् रथन्तरादिशब्दाः गीतिवचना

### तन्त्रशिखामणिः

गीतिरेव सामशब्दाभिधेया इत्युक्तम् । अतः सामविशेषवाचिनामपि गीतिविशेषवाचकत्वसिद्धेः पौनरुक्त्यमिति चेन्न, द्वितीये हि मन्त्रलक्षणप्रसङ्गेन तद्भेदानां 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयः त्रैविदा विदुः ऋचः सामानि यजूंषि' इति त्रैविध्यसिद्ध्यर्थम् ऋगादीनां लक्षणमात्रं विवक्षितम् । तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रम् उभयथापि त्रैविध्यसिद्धेः न तत्र गीतिविशिष्टा 'अभि त्वा शूर नोनुम इत्याद्या ऋच एव रथन्तरादिशब्दवाच्याः, न गीतिरेव । यद्यपि 'अभि त्वा शूर नोनुम' इति अभिवत्याः 'कयानश्चित्र आभुवत्' इत्यादिषु कवतीषु ऋचः ऋगन्तरे निवेशानुपपत्तेरतिदेशो न सम्भवति, तथापि 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' इत्यादिना विहितान् रथन्तरधर्मान् अभिवतीवाचिना रथन्तरशब्देन लक्षयित्वा तेषां कवतीष्वतिदेश इति पूर्वः पक्षः ।

सिद्धान्तस्तु रथन्तरादिशब्दानां लक्षणाप्रसङ्गात् 'प्रजापतेर्हृदयमनृचं गायति' इति ऋचो विना गीतिमात्रे सामविशेषवाचिनि प्रजापतेर्हृदये शब्दप्रयोगात् 'रथन्तरस्य योनिमनुशंसति' इति ऋचो भेदव्यपदेशात् आकृत्यधिकरणन्यायाच्च रथन्तरादिशब्दो गीतिविशेषमात्रवाची न इति अभिवत्यामुत्पन्नो गीतिविशेष एव कवतीष्वतिदिश्यत इत्याकृत्याधिकरणन्यायादेव सिद्ध्यत्यप्यर्थे यथा नवमे प्रगाथाधिकरणे पूर्वन्यायादेव सिद्ध्यत्यर्थे लिङ्गान्तरव्युत्पादनार्थानि वर्णकान्तराणि तथा न्यायान्तरव्युत्पादनार्थमिदमधिकरणमिति नानर्थक्यमित्याहुः ।

इति श्रीराजचूडामणिदीक्षितकृते तन्त्रचूडामणौ सप्तमाध्यायस्य द्वितीयः पादः ॥

## भाष्यम्

रथन्तरशब्दे वा धर्मलक्षणा। तस्माद्गीतौ सामशब्द इति ॥ २१ ॥

इति रथन्तरादिशब्दानां गीतिवाचित्वाधिकरणम् ॥ १ ॥

इति शबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्य द्वितीयः पादः ॥

## वार्तिकाभरणम्

एव न ऋग्वचना इति रथन्तरादिगीतीनामभीवत्यादिषूत्पन्नानां कवत्यादिष्वतिदेश इति सर्वमनवद्यम्॥

इति श्रीमदद्वैतविद्याचार्य-साग्निचित्य-सर्वतोमुख-अतिरात्र-साग्निचित्याप्तवाजपेययाजि-गोविन्द दीक्षितवरनन्दनस्य साग्निचित्य-सर्वपृष्ठाप्तोर्यामयाजि श्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्यावैशद्यस्य साग्निचित्याप्तवाजपेययाजिवेङ्कटदीक्षितस्य कृतिषु टुप्टीकाव्याख्याने वार्तिकाभरणे सप्तमाध्यायस्य द्वितीयः पादः॥

## भाष्यसन्दर्भयोजिनी

सिद्धान्ती परिहरति—स्याद्वैरूप्यमिति। योनौ या गीतिः उत्तरासु च या तयोर्वैरूप्यं स्यादित्यर्थः। सौत्रार्थान्तरेष्वित्यस्य विवरणम्-ऋगन्तरेषु। पाकदृष्टान्तेन उत्तरासु न शिक्षितव्यमिति न, किन्तु शिक्षा प्राप्तव्यैव। तथा सत्यंकर्मकाले प्रमादरहितः प्राशुभावः प्रयोगे युक्त एवेति भावः ॥ २० ॥

स्पष्टोऽर्थः ॥ २१ ॥

इति रथान्तरादिशब्दानां गीतिवाचित्वाधिकरणम् ॥ १ ॥

इति म० म० चिन्नस्वामिशास्त्रिणामन्तेवासिना पट्टाभिरामशास्त्रिणा कृतायां भाष्यसन्दर्भयोजिन्यां सप्तमस्य द्वितीयः पादः ॥

# सप्तमाध्यायो

## तृतीयः पादः

### भाष्यम्

१

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यात् ॥ ७.३.१ ॥**

### विषयः

**नाम्ना धर्मातिदेशं वक्ष्याम इत्यादौ प्रतिज्ञातं सोऽयमुच्यते । कुण्डपायिनामयने श्रूयते- 'मासमग्निहोत्रं जुह्वति' इति । तत्रैतत्समधिगतम्-नैयमिकादग्निहोत्रात्कर्मान्तरमेतदिति ।**

### टुप्टीका

**नैयमिकस्याग्निहोत्रशब्दो नामधेयमित्युक्तम् । कर्मान्तरे पुनरुच्चार्यमाणो धर्मातिदेशको भवति ।**

### वार्तिकाभरणम्

पादद्वयेऽपि वाचनिकातिदेशो निरूपितः । इदानीं नाम्ना धर्मातिदेशः प्रतिपाद्यते । कुण्डपायिनामयने श्रूयते—'मासमग्निहोत्रं जुह्वतीति' । तत्र संशयः—किमत्रत्याग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः ? उत न ? इति । तदर्थंश्चात्रत्याग्निहोत्रशब्दो नामधेयं न भवति उत भवतीति । तत्र सूत्रं व्याचक्षाण एव यथाभाष्यं सिद्धान्तेनोपक्रमते—**नैयमिकस्येति** । नैयमिकस्य कर्मणोऽग्निहोत्रशब्दोऽभिधानं नामधेयमित्युक्तम् नामधेयपादे 'तत्प्रख्यं चान्यशास्त्रमित्य'धिकरण इत्यर्थः ।

### तन्त्रशिखामणिः

पादद्वयेन वाचनिकातिदेशश्चिन्तितः । इदानीं नामातिदेशश्चिन्त्यत इति पादान्तरता । वचनं हि साक्षादेवातिदेशकम्, नाम तु कर्मान्तरविधिपरे वाक्ये परशब्दस्य परत्र वृत्तिः सिंहो माणवक इतिवत् सादृश्यनिमित्तेत्यर्थाद् अन्यधर्मातिदेशपरमिति वचनानां जघन्यतया तदनन्तरं नाम्नश्चिन्तेति ध्येयम् ।

### भाष्यसन्दर्भयोजिनी

प्रथमेन द्वितीयेन च पादेन वचनातिदेशो निरूपितः । तृतीये पादे नामातिदेशश्चिन्त्यत **इत्यादौ प्रतिज्ञातम्** प्रथमपादस्य प्रथमाधिकरणेऽतिदेशलक्षणप्रतिपादनानन्तरमित्यर्थः । कुण्डपायिनाभयनमिति संवत्सर-साध्यं सत्रम् । तत्र श्रुतमिदं 'मासभग्निहोत्रं जुह्वति' इति । **समधिगतम्** प्रकरणान्तराधिकरणन्यायेनेत्यर्थः । **नैयमिकाग्निहोत्रात्** नित्याग्निहोत्रात् मासाग्निहोत्रमिदं कर्मान्तरमिति ।

### भाष्यम्

#### संशयः

अधुनाग्निहोत्रशब्दश्चिन्त्यते-कथमयं प्रयुक्त इति ।

#### सिद्धान्तः

तदर्थमारभ्यते-उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यादिति । उक्तमादौ क्रियाभिधानं कर्मनामधेयमग्निहोत्रशब्द इति 'तत्प्रख्यश्चान्यशास्त्रम्' इत्यत्र । तस्यान्यत्र

### टुप्टीका

कथम् ? अग्निहोत्रस्य यावगतेतिकर्तव्यता तां शक्नोति लक्षयितुं विनापि वतिना, वाक्यसंयोगात् । न चायं

### वार्तिकाभरणम्

नन्वेतावता नाम्ना धर्मातिदेशे किमायातमित्यत आह— कर्मेति । 'प्रकरणान्तरे प्रयोजनान्यत्वमि'त्यधिकरणे कुण्डपायिनामयनगतस्य मासाग्निहोत्रस्य कर्मान्तरस्योक्तत्वात् । तस्मिन् कर्मान्तरे पुनरुच्चार्यमाणोऽग्निहोत्रशब्दो धर्मातिदेशको भवतीत्यर्थः । ननु तद्वन्मासमग्निहोत्रं जुहोतीति वतिप्रत्ययस्याभावात् कथमग्निहोत्रशब्दः धर्मातिदेशक इति पृच्छति—कथमिति । उत्तरमाह—अग्निहोत्रस्येति । नैयमिकाग्निहोत्रस्य या इतिकर्तव्यता इत्थं दोग्धि; इत्थं श्रपयति; चतुरुन्नयति; खादिर्यग्निहोत्रसमिद्भवति; इत्थं जुहोति; सायं जुहोति; प्रातर्जुहोतीत्यादिवाक्यविहिता तामितिकर्तव्यतामग्निहोत्रशब्दः शक्नोति लक्षणयोपस्थापयितुं वतिप्रत्ययमन्तरेणापीत्यर्थः । तथा

### तन्त्रशिखामणिः

कुण्डपायिनामयने श्रूयते-'मासमग्निहोत्रं जुहोति' इति । तच्च नैयमिकाग्निहोत्रात्कर्मान्तरमित्युक्तं द्वितीये । ततश्च द्वयोः कर्मणोर्भेदाभावात् परशब्दस्य परत्र वृत्त्यभावाद् अतिदेशानतिदेशचिन्ता न युक्तेति परास्तम् । नन्वेवमपि 'भिद्यते भावनामात्रं धात्वर्थो न यजिश्रुतेः' इति तत्रैवोक्तम् । ततश्च कर्मभेदे ज्ञात एव धर्मप्राप्तेः कथं नामातिदेश इत्युक्तमिति चेन्-सत्यम्, तथाप्यपूर्वभावनायाः खलु प्रथममितिकर्तव्यता न्यायेन

### भाष्यसन्दर्भयोजिनी

अधिकरणचिन्तां निर्दिशति—अधुनेति । अग्निहोत्रशब्दश्चिन्त्यत इत्यस्यार्थः—अग्निहोत्रपदं किं नामातिदेशकम् उत नेति चिन्त्यत इति ।

सिद्धान्तेनैवाधिकरणमारभते—उक्तं क्रियाभिधानमिति । उक्तमादौ प्रथमाध्याये चतुर्थपादे तत्प्रख्याधिकरणे । सौत्रान्यत्रपदस्य विवरणम्—कौण्डपायिनामिति । एकत्र श्रुतमग्निहोत्रपदं नामधेयमन्यत्रापि तन्नामिनमवबोधयितुं क्षममित्यर्थः । एवमवबोधयतो नामधेयस्य किं प्रयोजनमिति चेत्तदाह—नैयमिकेति । नित्याग्निहोत्रस्य ये धर्मा दोहनादयः ते, अस्मिन् कौण्डपायिनामयनीये जुहोतावतिदिश्येरन् नाम्ना । ननु केवलं नाम्नस्साम्यमादाय ते धर्मा अत्रातिदिश्यन्त इति कथनं न युक्तम्, विनिगमनाविरहात् । उभयत्रानुपूर्व्या नामनी समाने स्त इति कारणादेकस्य धर्मातिदेशकत्वं न साधयितुं शक्यत इत्यतः कारणं पृच्छति—किं कारणमिति ।

## भाष्यम्

श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशस्स्यात्-धर्मप्रदेशः। नैयमिकाग्निहोत्रस्य ये धर्मास्तेऽस्मिन्ननेन नाम्नातिदिश्येरन्। किं कारणम्? उच्यते-परशब्दोऽयं परत्र वृत्तः। परशब्दस्य परत्र वृत्तौ तद्वद्भावो गम्यते। स यत्र विज्ञातो भवति तत्रानूद्यते। यथा-सिंहो देवदत्त इति। यत्राविज्ञातस्तत्र विधीयते। यथा-अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति। इह चावि-

## टुप्टीका

गुणविधिः, तद्धितचतुर्थ्योरभावात्। उच्चार्यमाण एव विज्ञातं नामिनमवबोधयति। उभयत्र नामधेयमिति

## वार्तिकाभरणम्

हि— यथा सिंहो देवदत्त इत्यत्र सिंहशब्दः सिंहे मुख्यवृत्या स्थित एव देवदत्ते प्रयुक्तो देवदत्ते सिंहान् क्रौर्यादिधर्मान् सिंहसादृश्यगर्भसम्बन्धेन गौण्या वृत्या गमयति, तथा नैयमिकाग्निहोत्राख्ये कर्मणि मुख्यवृत्या स्थित एव मासाग्निहोत्राख्ये कर्मान्तरे प्रयुक्तः कर्मान्तरे साध्यान् दोहनादिधर्मान् गौण्या वृत्या साध्यसादृश्यगर्भसम्बन्धेन गमयति। लक्षणायां बीजमाह—वाक्येति। 'मासमग्निहोत्रं जुहोती'ति वाक्येऽग्निहोत्रशब्दस्य जुहोतिना संयोगात् सामानाधिकरण्यं वक्तव्यम्। तच्च सामानाधिकरण्यमग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रधर्मलक्षकत्वे सम्भवति, अग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रे रूढत्वात्। तस्मात् जुहोतिसामानाधिकरण्यनिर्वाहार्थं लक्षणया धर्मातिदेशकत्वमङ्गीकर्तव्यमित्यर्थः।

## तन्त्रशिखामणिः

धात्वर्थो नेति भावनाभेदादतिदेशवचनोपपत्तिः। न चैवमग्निहोत्रनाम्नोऽत्र गौणत्वोक्तिरयुक्तेति वाच्यम्। नित्याग्निहोत्र इव मासाग्निहोत्रे प्राकरणिकैर्देवताविधानादिभिर्नाम्नः प्रवृत्तिनिमित्ताभिव्यक्तिर्नास्ति, किन्तु नित्याग्निहोत्राभेदानुसन्धानेन, भावनान्तरे तु धर्मसम्बन्धानुसन्धानेन च प्रवृत्तिनिमित्तसत्वमवगन्तव्यमिति अस्फुटशक्तिकत्वाभिप्रायकत्वात् गौणत्वोक्तिरित्युक्तं। द्वितीये ननु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति'

## भाष्यसन्दर्भयोजिनी

अयं भावः समानानुपूर्वीदर्शनमात्रेण नामधेयत्वमग्निहोत्रशब्दस्य न निश्चेतुमुचितम्। नामधेयत्वे प्रवृत्तिनिमित्तमावश्यकम्। यच्च तत्प्रख्यशास्त्रं प्रवृत्तिनिमित्तं कथितं तन्नैयमिकाग्निहोत्रे सङ्गतम्, तत्र सामग्रीसत्त्वात्। प्रकृते तु कुण्डपायिनामयने तादृशी सामग्री नोपलभ्यते। अतः कारणं वक्तव्यं नामधेयत्व इति। नित्याग्निहोत्रस्थलेऽग्निहोत्रपदं लक्षणया जुहोतिसामानाधिकरण्यं यथा लभते तथा कौण्डपायिनामयनीयेऽप्यग्निहोत्रपदं तथाविधम्। इदं सादृश्यमादायाग्निहोत्रपदं धर्मातिदेशकं भवत्विति। उत्तरयति—उच्यत इति। परशब्दोऽयं परत्र नित्याग्निहोत्रविधायकवाक्ये विद्यमानोऽयमग्निहोत्रशब्दः परत्र कौण्डपायिनामयनीयेऽग्निहोत्रे वृत्तः वर्तते। एवं सादृश्येन तद्वद्भावो गम्यते। स च तद्वद्भावो यत्र विदितस्तत्र तस्यानुवादः, यत्र च न विदितस्तत्र सः विधीयत इत्याह - स यत्रेति। 'सिंहो देवदत्तः' इत्यत्र सिंहनिष्ठं यत्क्रौर्यप्रसह्यकारित्वादिकं तद्देवदत्ते विदितमिति सिंहनिष्ठक्रौर्यसजातीयक्रौर्यवान् देवदत्त इति सिंहनिष्ठक्रौर्यादिकमनूद्यते। अमी पिष्टपिण्डाः क्रियन्तामित्यत्र तादृशं क्रौर्यादिकं न विज्ञातमतोऽत्र तद्विधीयते यथा सिंहः क्रूरदर्शनस्तथा पिष्टपिण्डाः क्रियन्तामिति। कौण्डपायनिकेऽग्निहोत्रे द्रव्यं देवता वा न ज्ञायते, नित्याग्निहोत्रे तु तत्प्रख्यशास्त्रेण देवता विज्ञायते, द्रव्यं दोहनादिकर्म-

## भाष्यम्

ज्ञातोऽस्य जुहोतेरग्निहोत्रवद्भावः । तस्मात्स विधीयते 'मासमग्निहोत्रं जुहोती'ति-अग्निहोत्रवज्जुहोतीति । कथं पुनरसति वतिप्रत्यये वत्यर्थश्शक्योऽवगन्तुमिति ? उच्यते-साहचर्यात् । अग्निहोत्रशब्दोऽयं कर्मणा सम्बद्धस्तत्सहचरितदोहनादिर्धर्मवत्तां लक्षणया शक्नोति गमयितुम् । शक्नोति चेद्गमयितुं प्रदेष्टुमपि शक्ष्यति । एवमन्तरेणापि वतिं वत्यर्थः शक्योऽवगन्तुमिति ॥ १ ॥

## टुप्टीका

चेत् तन्न; नामधेयं विशिष्टे भवति । न चेह विशिष्टतास्ति, द्रव्यदेवताभावात् । उभयत्र च नामधेयत्वेऽदृष्टा शक्तिः कल्प्या ॥ १ ॥

## वार्तिकाभरणम्

ननु लक्षणामन्तरेणापि अग्निदेवताकं होमं जुहुयादिति गुणविधायकत्वेन सामानाधिकरण्यसम्भवात् किमर्थं लक्षणाश्रयणमित्यत आह—न चेति । तद्धितचतुर्थ्योरभावेन देवतालक्षणगुणविधित्वासम्भवात् गुणविधित्वेन सामानाधिकरण्यं न सम्भवतीत्यर्थः ।

ननु अग्नये होत्रमस्मिन्निति चतुर्थीगर्भबहुव्रीहौ चतुर्थ्या देवतालक्षणविधिस्सम्भवतीति चेन्न; चतुर्थीगर्भव्याधिकरणबहुव्रीहेरनुशासनाभावेन तदाश्रयणायोगात् । नन्वेवमपि अग्नये होत्रं होमः इति चतुर्थीतत्पुरुषस्सम्भवतीति चेन्न; सत्यपि तादर्थ्ये प्रकृतिविकारभावाभावेन चतुर्थीतत्पुरुषासम्भवात् । उक्तं चाचार्यैः—"न चतुर्थीसमासस्य लक्षणं चात्र विद्यते" इति । तत्रैव युक्त्यन्तरमाह उच्चार्यमाण इति । मासमग्निहोत्रं

## तन्त्रशिखामणिः

इत्यनेकगुणश्रवणं तत्र विशिष्टकर्मविध्यवश्यम्भावेन नाम्नो मुख्यमेवातिदेशकत्वं सम्भवतीति चेत्-तत्र 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यत्रैव चशब्दश्रवणात् प्राप्तकर्मानुवादेनाप्यनेकगुणविधिसम्भवात् । वस्तुतस्तु तत्राप्यनेकगुणविशिष्टं भावनान्तरमेव विधीयते । तस्याश्च भावनायाम् अमासाग्निहोत्रस्थल एव प्रसिद्धस्यैव कर्मणः करणत्वं सम्भवतीत्याचार्यपक्षे गौणमेव नाम्नोऽतिदेशकत्वमित्याहुः ।

तत्र संशयः-किमयमग्निहोत्रशब्दो नैयामिकाग्निहोत्रधर्माणामतिदेशकः ? उत नेति ? तदर्थञ्च किमग्निहोत्रपदमुभयत्र मुख्यमुत नैयममिकं मुख्यम् अन्यत्र गौणमिति । तत्र नैयमिकेन कुण्डपायिनामयनीयेन च जुहोतिनाग्निहोत्रपदस्य सामानाधिकरण्याविशेषादुभयत्र मुख्यमिदम् । न च द्वितीयान्तस्य तस्य कथं

## भाष्यसन्दर्भयोजिनी

जातश्च । अतश्च तद्वद्भाव उपपद्यत इत्याह—इह चेति । द्रव्यदेवतादीनामविदितत्वादतिदेशशास्त्रेण विधीयते । विधानाकारं प्रदर्शयति—मासमग्निहोत्रमिति । नित्याग्निहोत्रवन्मासाग्निहोत्रं कुर्यादिति मासाग्निहोत्रस्य नित्याग्निहोत्रेण सादृश्यं निर्णेतुं का सामग्री वर्तत इत्यत्राह-साहचर्यादिति । जुहोतिक्रियया सहाग्निहोत्रपदस्य सह प्रयोगादित्यर्थः । यद्यपीदं साहचर्यं शक्त्या सादृश्यबोधकं न भवति, तथापि लक्षणयावबोधयितुं शक्नोतीत्याह—लक्षणयेति । ननु नाम्नः प्रवृत्तिनिमित्तं नात्र क्लृप्तम्, अक्लृप्तत्वान्नामत्वं न सम्भवति इति कथं लक्षणयापि सादृश्यावबोधकमिति चेन्न; सिद्धसादृश्याभावेऽपि साध्यसादृश्यविवक्षया प्रयुज्यत इत्यनेनैव सादृश्यं विधीयत इति भावः । तदिदमाह—शक्नोति चेदिति । प्रदेष्टुमपि अतिदेष्टुमपि ॥ १ ॥

## भाष्यम्

### पूर्वपक्षः

## अपूर्वे वापि भागित्वात् ॥ ७.३.२ ॥

वापीति विपर्यासेन प्रयुङ्क्ते। अपि वेत्यर्थः। अपि वापूर्वे एते उभे अपि कर्मणी स्याताम्। न कौण्डपायिनामयनीयो जुहोतिर्नैयमिकपूर्वः। साधारणञ्च नामधेयमुभयोः। कुतः? भागित्वात्। अयमपि जुहोतिर्भागी एतस्य नामधेयस्य। यथैव तत्राग्निहोत्रं जुहोतीति समुच्चारणम् एवमिहापि। तत्र तुल्ये समुच्चारणे तस्यैवैतन्नामधेयं नास्येत्यत्र विशेषहेतुर्नास्ति। तस्मादुभयोः साधारणं नामेति नास्ति धर्मप्रदेशः॥ २॥

## वार्तिकाभरणम्

जुहोतीत्यत्र पुनरुच्चार्यमाणोऽग्निहोत्रशब्दः प्रज्ञातत्वान्नैयमिकाग्निहोत्ररूपं कर्मेव झडित्युपस्थापयति नाग्निदेवता लक्षणं गुणमिति गुणविधित्वं न सम्भवतीत्यर्थः। पूर्वपक्षमाह—**उभयत्रेति**। नैयमिके अग्निहोत्रं जुहोतीति जुहोतिसामानाधिकरण्याविशेषात् मासाग्निहोत्रशब्दस्याप्यग्निहोत्रशब्दो नामधेयं भवति। एवं च मुख्यवृत्या नामधेयत्वे सम्भवति गौण्या वृत्या अग्निहोत्रशब्दो [न] धर्मातिदेशक इत्यर्थः। नामधेयं हि कर्मविशेषप्रतिपत्त्यर्थम्। तच्च न जुहोतिधात्वर्थसामान्यस्य सम्भवति, तत्र कर्मविशेषप्रतिपत्यभावात्। तस्मात् विशेषणविशिष्टे कर्मणि नामधेयं प्रवर्तत इत्यर्थः। तावता प्रकृते किमायातमित्यत आह—**न चेति**। कुण्डपायिनामयनगते मासमग्निहोत्रं

## तन्त्रशिखामणिः

करणत्वपरत्वात्सामानाधिकरण्यमिति वाच्यम्, नैयमिक इवात्रापि द्वितीयायास्तृतीयार्थे लक्षणया तदुपपत्तेरतो विनिगमनाविरहादुभयत्र मुख्यमिदं नामधेयमिति न धर्मातिदेशकमिति प्राप्ते—

ब्रूमः-एकत्र मुख्यत्वेऽन्यत्र गौण्या सिंहो माणवक इत्यत्रेव नाम्नो वृत्तिसम्भवादन्याय्यन्त्वनेकार्थत्वमिति न्यायादेकत्रैव मुख्यत्वमङ्गीकार्यम्। तत्र निर्गुणे मुख्यत्वे नैयमिके कथं गौणता स्यात्? वाच्यगतगुणयोगेन वतिवृत्तेर्गौणता। नैयमिके मुख्यत्वे तु 'दध्ना जुहोति' 'पयसा जुहोति' 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादितत्रत्यगुणातिदेशकतयाऽन्यत्र गौणता सम्भवतीति नैयमिक एव मुख्यम्। किञ्च नैयमिके 'यदग्नये चे' ति

## भाष्यसन्दर्भयोजिनी

पूर्वपक्षिणस्सूत्रमिदम् **अपि वापूर्वे इति**। अपि वेति सिद्धान्तिनः पक्षस्य निराकरणे। उभे अप्यग्निहोत्रपदे अपूर्वे स्वतन्त्रार्थावबोधके इत्यर्थः। यथा नैयमिकाग्निहोत्रपदं नामधेयम्, तथैव कौण्डपायिनाभयनीयमग्निहोत्रपदमपि। इतरनिरपेक्षार्थबोधने उभे समर्थे इति भावः। तत्र हेतुः—**भागित्वादिति**। नैयमिकाग्निहोत्रवदस्यापि कौण्डपायिनामयनीयस्य जुहोतिपदसामानाधिकरण्याविशेषात् तन्नामभागित्वादित्यर्थः। यदोभयोस्तुल्यता तदा एको मुख्योऽपरो गौण इति भेदकल्पनं नोचितमित्याह—**तत्रेति**। अस्यैव तत् नामधेयं तस्यैवेदं नामधेयमित्यत्र विशेषहेत्वभावादित्यर्थः। सति विशेषहेतौ त्वदुक्तिस्सङ्गता स्यात्, नास्ति च स इत्युपसंहरति—**तस्मादिति** ॥ २ ॥

### भाष्यम्

नैतद्युक्तम् । कुतः ?

## नाम्नस्त्वौत्पत्तिकत्वात् ।। ३ ।।

औत्पत्तिको हि नामिनाम्नोस्सम्बन्धः । यन्नाम यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धम्, तस्मिन्नेव सदा विज्ञेयम्, नान्यत्र च । तथाऽव्यवस्थायां शब्दार्थे विश्वासो न स्यात् । उक्तम्-अन्याय्यश्चानेकार्थत्वमिति । यदा च नोभयार्थः तदा नैयमिकं तावदाह-तत्सादृश्यविधानार्थश्चेतरत्रापि प्रयोग उपपद्यत इति नास्तीतराभिधानत्वे हेतुः । तस्माद्विधिप्रदेशस्स्यात् ।। ३ ।।

अत्राह-कस्मात्पुनस्तन्नामधेयमिदमिह प्रयुक्तमित्युच्यते न पुनरेतन्नामधेयं तत्रेति । तत आह—

### वार्तिकाभरणम्

जुहोतीति चोद्यमाने द्रव्यदेवतं नोपदेशेन लभ्यते । तत्सन्निधौ द्रव्यदेवताम्नानाभावात् । नापि ज्योतिष्टोमादुद्भिदादिष्विव नैयमिकाग्निहोत्रात् अतिदेशतो धर्मलाभः । जुहोतिचोदनायागचोदनालिङ्गेनातिदेशो नास्तीत्यष्टमे प्रतिपाद्यमानत्वेन तन्न्यायेन चोदनालिङ्गातिदेशाभावात् नाम्नातिदेशस्य पूर्वपक्षिणा अनङ्गीकारात् । तस्मात् द्रव्यदेवताभावेन कर्मविशेषप्रतीत्यभावात्तन्निबन्धनं नामधेयत्वं न सम्भवतीत्यर्थः । यद्युभयत्रापि नामधेयमित्य-

### तन्त्रशिखामणिः

वाक्यात् 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा' इति मन्त्रलिङ्गाद्वा अग्निरूपगुणलाभात् तत्प्रख्याधिकरणोक्तन्यायेनाग्निहोत्रपदं तन्नामधेयं स्यादिहतु तत्प्रख्यापकशास्त्राभावात् कथं नामधेयं स्यात् ? अपिचात्र नाम्नातिदेशाभावे रूपालाभाद् द्वितीयोक्तं कर्मान्तरत्वमप्युच्छिद्येत । किञ्च रूपवत्तया ज्ञाते हि कर्मण्याग्नेयादाविव नामधेयं भवति । न चात्र रुपलाभः, उपदेशाभावात् । नाप्युद्भिदाविवातिदेशतस्तल्लाभः [होमाना] मतिदेशानङ्गीकारात् चोदनालिङ्गकातिदेशस्य चाष्टमान्त्ये जुहोतिचोदनासु निराकरिष्यमाणत्वात् । न चात्राग्निहोत्रपदमग्निरूपदेव-

### भाष्यसंदर्भयोजिनी

तमिमं पक्षं निरस्यति—नैतद्युक्तमिति । हेतुं विशदयति—औत्पत्तिको हीति । औत्पत्तिकेन सम्बन्धेन नित्यसम्बन्धेनेत्यर्थः । यो यन्नाम्ना प्रसिद्धः स तन्नाम्नैव मुख्यरूपेण व्यवह्रियते, इतरत्र तु तन्नाम्ना व्यवहारो गौण इति भावः । सर्वशब्दः सर्वं बोधयितुं क्षम इत्यङ्गीकारे दोषमाह—शब्दार्थे विश्वास इति । अन्याय्यश्चेति । मुख्यार्थस्त्वेक एव शब्दस्य, लाक्षणिका गौणाश्चानेके भवितुमर्हन्तीत्यर्थः । यदाग्निहोत्रपदं नेयमिकेऽग्निहोत्रे मुख्यम् तदा तत्सादृश्यविधानार्थमपरत्र कौण्डपायिनामयनीयेऽपि प्रयोगो गौण समुपपद्यते । इतराभिधानत्वे इतरवाचकत्वे । अतो नामातिदेशस्स्यादित्युपसंहरति-तस्मादिदि ।। ३ ।।

अत्राहेति परिचोद्य तत आहेति समाधत्ते । तन्नामधेयं नेयमिकाग्निहोत्रनामधेयम् इह कुण्डपायिनामयने । एतन्नामधेयं कौण्डपायिनामयनीयं तत्र नैयामिके । आनुपूर्व्या उभयत्र समानत्वात् नैयामिकाग्निहोत्र

भाष्यम्

## प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ७.३.४ ॥

नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः। प्रत्यक्षविहिता धर्माः सन्ति। इत्थं दोग्धि, इत्थं श्रपयति, चतुरुन्नयति, खादिर्यग्निहोत्रमभिद्रवति, इत्थं जुहोति, एतस्मिन् काले जुहोति इत्येवं प्रत्यक्षाद्गुणसंयोगान्नैयमिकस्य तन्नामधेयम् इह प्रयुज्यमानं दोहनादि क्रियाभिधानं स्यात्। धर्मदेशकमित्यर्थः। अस्य पुनर्जुहोतेर्न केचिद्धर्मास्सन्ति। तदभावे तेषां धर्माणामभावे अप्रसिद्धं स्यात्। न प्रज्ञायेत किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति।

एवं वा। प्रत्यक्षो गुणसंयोगो नैयमिकस्य द्रव्यदेवतासंयोगः। 'दध्ना जुहोति' 'पयसा जुहोति' 'अग्नये च प्रजापतये च सायं जुहोति' इति। एतस्मात्प्रत्यक्षाद् गुणसंयोगात्क्रियाभिधानं

वार्तिकाभरणम्

ङ्गोर्क्रियेत तदा नाम्ना धर्मातिदेशाभावेन रूपलाभाभावात् 'प्रकरणान्तरे प्रयोजनान्यत्व'मित्यत्र व्यवस्थापितं कर्मान्तरत्वमेव न स्यादित्यपि द्रव्यदेवताभावादित्यनेनैव सूचितम्। तथा अग्निलक्षणदेवतासम्बन्धाभावेन प्रवृत्तिनिमित्ताभावान्नामत्वं न सम्भवतीत्यपि सूचितम्। उभयत्र नामधेयत्वे दूषणान्तरमाह—**उभयत्रेति**। एकस्यैवाग्निहोत्रशब्दस्य मासाग्निहोत्रवाचकत्वे नैयमिकाग्निहोत्रवाचकत्वे चाभ्युपगम्यमाने अदृष्टानेकशक्तिः

तन्त्रशिखामणिः

ताविधिपरमेवास्तु नैयमिक इवात्र तत्प्रख्यशास्त्राभावेन गुणविधित्वे बाधकाभावादतो न रूपलाभ इति चेत् तद्धितचतुर्थ्योरत्राभावेन देवताविधिपरत्वस्य वार्तिककृता निरासात्। कथञ्चिद्देवतालाभेऽपि द्रव्याभावात्। तस्मादत्र नाम्नातिदेशाभावे रूपालाभान्न नाम्नः प्रवृत्तिः। ननु सिंहो माणवक इत्यादौ परशब्दस्य परत्र

भाष्यसन्दर्भयोजिनी

पदमेवातिदेशकमिति कुत इत्यर्थः। **नैयमिके** इति। नित्याग्निहोत्रे एव **गुणसंयोगः** अङ्गसम्बन्धः **प्रत्यक्षः** प्रत्यक्षविहित इत्यर्थः। प्रत्यक्षविधानमेव दर्शयति-इत्थं दोग्धि इत्यादि। **श्रपणं** पचनम्, **उन्नयनं** ग्रहणम्। **खादिरी** खादिरवृक्षभवा। **अस्य** कौण्डपायिनामयनीयस्य। धर्मसंयोगस्य प्रसिद्धिं प्रति कारणत्वात् **तेषामभावे अप्रसिद्धं** मासमग्निहोत्रं जुहोतीत्यर्थः। अप्रसिद्धत्वान्न **प्रज्ञायेत किमर्थम्** कस्यैप्रयोजनाय **इह** कुण्डपायिनामयने स शब्दः प्रयुक्त इति।

ननु प्रसिद्धत्वाप्रसिद्धत्वहेतुना धर्मातिदेशकत्वनिर्णयो न समुचितः, अतिदेशलक्षणे 'तत्समानेषु कर्मसु' इति सादृश्यस्यैव हेतुत्वमभिहितम्। अतः प्रसिद्धत्वमप्रयोजकमित्यतस्सूत्रमन्यथा वर्णयति-**एवं वेति**। अतिदेशं

## भाष्यम्

स्यात् कर्मनामधेयम्। इत्थंरूपो जुहोतिरग्निहोत्राख्य इति। अथेतरजुहोते रूपं नास्ति। तदभावेऽप्रसिद्धं स्यात्। न ज्ञायेत कीदृशं तदग्निहोत्रमिति। ननु मासोऽस्य रूपं भविष्यति। न मासः कर्माङ्गं कर्तृधर्मस्सः। अपिचाग्निहोत्रन्तु मासे विधीयते, न मासेनाग्निहोत्रं रूप्यते। तस्मान्नैयमिकस्यैतन्नामधेयमितरत्र तद्वदतिदेश इति ॥ ४ ॥

इति नामातिदेशाधिकरणम् ॥ १ ॥

## वार्तिकाभरणम्

कल्पनीया स्यात्। तस्मादेकत्राग्निहोत्रशब्दस्य मुख्यत्वमन्यत्र गौणत्वमित्युपगन्तव्ये नैयमिकाग्निहोत्रेऽन्यादिगुणसद्भावात् कर्मणो विशेषरूपेण ज्ञातत्वात् प्रवृत्तिनिमित्तसद्भावाच्च नैयमिक एव मुख्यत्वम्। मासाग्निहोत्रे तु नैयमिकाग्निहोत्रवत् जुहुयादिति साध्यसादृश्यात् गौणत्वमित्येव स्वीकर्तव्यमिति नाम्नो धर्मातिदेशकत्वं सिद्धमित्यर्थः ॥

वृत्तमधिकरणम्

## तन्त्रशिखामणिः

प्रसिद्धं सादृश्यमादाय प्रवृत्तिर्दृष्टा। न ह्यत्र नैयमिकसादृश्यस्यान्यत्र प्रसिद्धिरस्ति। तस्मात्कथमग्निहोत्रनाम्नोऽत्र प्रवृत्तिरिति चेन्न; अमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्यत्रेव साध्यसादृश्यमादायापि गौणतासम्भवादतोऽत्राग्निहोत्रसदृशेन होमेन भावयेदिति वाक्यार्थः पर्यवस्यति। तत्सादृश्यञ्च तद्धर्मवत्तयेति सिध्यति नाम्नातिदेशः ॥

वृत्तमधिकरणम्

## भाष्यसंदर्भयोजिनी

प्रति प्रसिद्धत्वं हेतुरिति नाभिधीयते, किन्तु अग्निहोत्रशब्दस्य कोऽर्थः ? कथं तत् क्रियाभिधानं कर्मनामधेयमित्यत्र हेतुरुच्यते-प्रत्यक्षाद्गुणसंयोगादिति। 'दध्ना जुहोति' 'यदग्नये च' इत्यादिवाक्यैः प्रकृतहोमस्य द्रव्यदेवतयोरवगमे सति इत्थंरूपस्य होमस्याग्निहोत्रमिति नामधेयमिति ज्ञातं भवति इत्युपपादयति-प्रत्यक्ष इति। **इतरजुहोतेः** कौण्डयायिनामयनीयजुहोतेः। एवञ्च मासाग्निहोत्रस्य रूपलाभाभावेन नामत्वमग्निहोत्रपदस्य न सिध्यति **कीदृशं तदग्निहोत्रमिति**। अतस्तत्र रूपसमर्पणाय नैगमिकाग्निहोत्रपदं प्रवर्तत इत्यर्थः। **शङ्कते-नन्विति**। मासाख्यगुणसंयोगेनाग्निहोत्रस्य रूपं ज्ञायतामित्यर्थः। **निरस्यति-नेति**। **रूप्यते** रूपवत्क्रियते। अतश्च नित्याग्निहोत्रस्याग्निहोत्रमिति नामत्वे सिद्धे तद्वदिति धर्माणामत्रातिदेश इत्युपसंहरति-**तस्मादिति** ॥ ४ ॥

इति नामातिदेशाधिकरणम् ॥

## भाष्यम्

२

### विषयसंशयपूर्वपक्षाः

किमेष एवोत्सर्गः ? सर्वं कर्मनामान्यत्र श्रूयमाणं धर्माणां ग्राहकमिति । एवं खलु प्राप्तम् । एवं प्राप्त इदमारभ्यते—

### सिद्धान्तः

**अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिस्स्यात् ॥ ७.३.५ ॥**

गवामयने श्रूयते—'वैश्वानरो ज्योतिष्टोमः प्रायणोयमहर्भवति' इति । अस्ति तु द्वादशाहे प्रथममहः प्रायणीयं नाम 'प्रायणीयोऽतिरात्र' इति । तयोर्नानात्वं तेनैव न्यायेन सिद्धं

## टुप्टीका

प्रयन्त्यनेनेति प्रायणीयमित्यनेन योगेन द्वादशाहे इयं संज्ञा प्रवृत्ता । गवामयनेऽप्ययं योगो विद्यत

## वार्तिकाभरणम्

अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् । गवामयने श्रूयते—'वैश्वानरो ज्योतिष्टोमः प्रायणीयमेतदहर्भवति' इति । अस्ति च द्वादशाहे प्रथममहः प्रायणीयः—'प्रायणीयोऽतिरात्र' इति । तत्र संशयः । गावामयनिकः प्रायणीयशब्दः द्वादशाहिकप्रायणीयधर्माणामतिदेशको न वेति ।

तत्र पूर्ववदेव कर्मान्तरे गवामयने श्रूयमाणः प्रायणीयशब्दो द्वादशाहिकप्रायणीयधर्माणामतिदेशक इति पूर्वः पक्षः ।

सिद्धान्तमाह—**प्रयन्तीति** । प्रयन्ति प्रारभन्ते अनेनाप्नोति प्रायणीयमित्यनेन योगेन द्वादशाहान्तर्गते अतिरात्राख्ये प्रथमाहे प्रायणीयसंज्ञा प्रवृत्ता न तु रूढ्येत्यर्थः । ततः किमित्थत आह—**गवामयन इति** । यथा

## तन्त्रशिखामणिः

आपवादिकी सङ्गतिः । गवामयने श्रूयते-'वैश्वानरो ज्योतिष्टोमः, प्रायणीयं प्रथममहः' इति । तत्र किं द्वादशाहे 'प्रायणीयोऽतिरात्रः प्रथममहः' इति श्रुतस्य प्रायणीयनाम्नः कर्मणो धर्माः प्रयणीयनाम्नातिदिश्यन्ते न वेति विशये पूर्वाधिकरणसिद्धान्तन्यायेनानेकार्थत्वस्यान्याय्यत्वाद्धर्मवति द्वादशाहिके प्रायणीयशब्दो मुख्यः गावामयनिके त्वधर्मके गौण इत्यत्रापि नाम्ना धर्मातिदेश इति प्राप्ते,

## भाष्यसन्दर्भयोजिनी

पूर्वस्मिन्नधिकरणे नित्याग्निहोत्रगतमग्निहोत्रपदं नामातिदेशकमिति व्यवस्थापितम् । अस्मिन्नधिकरणे तदपवादः प्रतिपादयिष्यते । कर्मनामान्यत्राप्युदाहरणम् । यथाग्निहोत्रपदं कर्मनाम सदतिदेशकमिति तथैव किं यत्र यत्र कर्मनाम तत्सर्वं धर्मातिदेशकम् ? उत न ? इति संशयः । तत्र पूर्वपक्षः-**एवं खलु प्राप्तम्** इति । नामसाम्यादतिदेशकमित्यर्थः । **एवं प्राप्त इदमारभ्यते**-सिद्धान्त इत्यर्थः ।

## भाष्यम्

**'प्रकरणान्तरे प्रयोजनान्यत्वमि'ति ।**

**तत्रायं प्रायणीयशब्दः परत्रापि श्रूयमाणः न धर्माणां ग्राहकः । किं तर्हि ? गुणार्थैषा श्रुतिः । कथम् ? लक्षणया नामधेयं धर्माणां ग्राहकमुक्तम् । असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः । इह तु श्रुत्यर्थ एव सम्भवति । गुणार्थं एष शब्दः । गुणेन-क्रियायोगेन तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते । प्रयन्ति अनेनेति प्रायणीयम्, प्रवर्तन्तेऽनेन सत्र इति । वाक्यशेषश्चास्यैतमेवार्थमाह ।**

## टुप्टीका

**एवेति धर्मातिदेशो नास्ति । यत्र तु पञ्चमः षष्ठो वा प्रायणीयः तस्य योगाभावादनुदाहरणत्वम् । तस्मात्तादृशो**

## वार्तिकाभरणम्

द्वादशाहे प्रायणीयशब्दस्य योगः तथा गवामयने वैश्वानरज्योतिष्टोमाख्ये प्रथमाहे प्रयन्त्यनेनेति प्रायणीयमित्ययं योगो विद्यत एवेत्यर्थः । नन्वेतावता प्रकृते किमायातमित्यत आह—**धर्मेति** । गवामयनेऽपि प्रायणीयशब्दस्य मुख्यवृत्या नामधेयत्वे सम्भवति लक्षणाश्रयणेन नाम्ना धर्मातिदेशो नास्ति; मासमग्निहोत्रं जुहोति' इत्यत्र तूपदेशेनातिदेशेन वा रूपलाभाभावात् जुहोतेर्विशेषणवैशिष्ट्यं नास्ति । विशेषणविशिष्टे हि कर्मणि संज्ञा वक्तव्या, कर्मविशेषप्रतिपत्त्यर्थत्वात् संज्ञायाः । तस्माद्युक्तं तत्राग्निहोत्रशब्दस्य मुख्यवृत्या नामधेयत्वासम्भवेन गौणत्वाश्रयणेन धर्मातिदेशकत्वम्, इह तु चोदनालिङ्गवशादेवातिदेशसिद्धेः रूपलाभान्मुख्यवृत्या प्रायणीयशब्दस्य नामधेयत्वम् । तस्मात् प्रायणीयशब्दो न द्वादशाहिकप्रायणीयधर्मातिदेशक इत्यर्थः ।

## तन्त्रशिखामणिः

ब्रूमः—प्रयन्ति प्रारभन्तेऽनेनेति प्रवृत्तिनिमित्तमादाय हि द्वादशाहे प्रथमेऽह्नि प्रवृत्तेयं संज्ञा । तेनैव प्रवृत्तिनिमित्तेनान्यत्रापि वृत्तिसम्भवे गौण्या वृत्या धर्मातिदेशो न युक्तः । चोदनालिङ्गाच्च धर्मप्राप्तेर्नारूपत्वं नापि नानार्थतादोषः । यत्र प्रवृत्तिनिमित्तभेदेनानेकशक्तिकल्पनं तत्रैव नानार्थतादोषात् । प्रकृते च प्रायणीयपदस्य प्रारभन्तेऽनेनेति योगेनैव गावामयनिके कर्मणि वृत्तेर्न नानार्थता, नापि गौण्या वृत्या धर्मातिदेशकता । यदि

## भाष्यसन्दर्भयोजिनी

गवामयनाख्यं संवत्सरसाध्यं सत्रं सत्रात्मकद्वादशाहविकृतिभूतम् । द्वादशाहे 'प्रायणीयोऽतिरात्रः' इति गवामयने च 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इत्युभयत्र प्रायणीय इत्यहर्विहितम् । प्रयन्त्यनेनेति-प्रायणीयम् इति तस्य व्युत्पत्तिः । अनेन प्रायणीयाख्येनाह्ना अग्रे गच्छन्तीत्यर्थः । अथवा-प्रपूर्वकेण्धातोरारम्भ इत्यर्थः । प्रयन्ति प्रारभन्तेऽनेनेति व्युत्पत्या प्रायणीय इति संज्ञा । व्युत्पत्तिरियमुभयत्र तुल्या । एकत्र मुख्या अपरत्र गौणीति विभागः कर्तुं न शक्यते, व्युत्पत्तेस्तुल्यत्वात् । पूर्वमग्निहोत्रपदमेकत्र मुख्यमपरत्र गौणमाश्रित्यातिदेशकमग्निहोत्रपदं साधितम् । नेदमुदाहरणं तत्तुल्यमित्याह-**परत्रापि श्रूयमाण इति** । तत्र हि लक्षणयाग्निहोत्र-पदं नामधेयं धर्मग्राहकमुक्तम् । अत्र तु लक्षणाया नावसर इति प्रतिपादयति-**असति चेति** । श्रुत्यर्थे अभिधेयार्थे ।

## भाष्यम्

'ज्योतिरेव पुरस्ताद्दधाति' इति। येन ज्योतिः प्रायणीयं भवति तेन ज्योतिः पुरस्तात्क्रियत इत्यर्थो ज्योतिरेव पुरस्ताद्दधातीति। तस्मान्नायमतिदेशः ॥ ५ ॥

इति प्रायणीयशब्दस्यातिदेशकत्वाभावाधिकरणम् ॥ २ ॥

## टुप्टीका

न पूर्वाधिकरणापवादः ॥ ५ ॥

## वार्तिकाभरणम्

नन्वेवं तर्हि यौगिकनामधेयस्य क्वाप्यतिदेशकत्वं न स्यादित्यत आह—यत्रेति। गवामयने प्रथमेऽहनि प्रयुक्तस्यावयवयोगसम्भवेनातिदेशकत्वाभावेऽपि यत्र योगो न सम्भवति प्रथमादन्यस्मिन् यत्र क्वचिदहनि तत्र प्रयुक्तस्य प्रायणीयशब्दस्यैतदधिकरणोदाहरणत्वं नास्तीत्यर्थः। यस्मात्पञ्चमे षष्ठे वा प्रयुक्तस्य प्रायणीयशब्द-स्यैतदधिकरणोदाहरणत्वं नास्ति तस्मादेतादृशे पञ्चमे षष्ठादौ प्रयुक्ते पूर्वाधिकरणापवादाभावात् पूर्वाधिकरण-न्यायेन धर्मातिदेशोऽस्त्येवेत्याह—तस्मादिति ॥ ५ ॥

वृत्तमधिकरणम्

## तन्त्रशिखामणिः

चाग्निहोत्रशब्दस्यापि मासाग्निहोत्रे प्रवृत्तिनिमित्तम् अग्निदैवत्यर्थमतिदेशं विना सिद्धं स्यात् ततोऽनेनैव धर्मातिदेशः स्यात्। न च तत् सिद्ध्यतीत्युक्तम्। यत्र तु प्रवृत्तिनिमित्तमन्यथापि सिद्ध्यति, तत्र तु नातिदेश-कत्वम्। यथा आधानाङ्गभूते तूष्णीमग्निहोत्रं जुहोतीति विहिते तूष्णींहोमे। तत्रातिदेशं विनाप्यग्निसंस्कारार्थं होत्रमिति प्रवृत्तिनिमित्तान्तरलाभात्। अत्र तु न प्रवृत्तिनिमित्तलाभः। यथा गवामयन एव 'चतुर्विंशः प्रायणीयः द्वितीयमहरि'ति तत्र भवत्येव नाम्नोऽतिदेश इत्याहुः ॥

वृत्तमधिकरणम्

'विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टौमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः'। प्रायणीयशब्दवत् सर्वपृष्ठशब्दोऽपि यौगिकत्वान्नातिदेशक इत्युत्थितेः सङ्गतिः। 'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते। तत्र किमयं

## भाष्यसन्दर्भयोजिनी

प्रायणीयशब्दो यत्र कर्मणि प्रयुज्यते तत्र सशब्दोऽभिधयैव तद् बोधयतीत्यर्थः। अस्मिन्नर्थे वाक्यशेषोऽप्यानुकूल्य-मावहतीत्याह-वाक्यशेष इति। ज्योतिरेवेति। सत्राख्यं कर्मातिसङ्कुलम्। तत्र प्रवेशाय साधनमपेक्ष्यते। अति-सङ्कुलपदार्थावगमाय ज्योतिरेव साधनम्। ज्योतीरूपञ्चेदं प्रायणीयम्। तेनाग्रे गन्तुं शक्यते इति 'पुरस्ताद्दधाति' इति बोधयति। अन्धकारे प्रविशन् पुरुषः प्रथमं ज्योतिः प्रज्ज्वालयति तथैवेदं प्रायणीयं ज्योतीरूपं सत्रारम्भेऽनुष्ठीयत इति भावः। एतादृशगुणार्थत्वात् प्रायणीयशब्दस्य नातिदेशकत्वमित्याह-तस्मादिति ॥ ५ ॥

इति प्रायणीयशब्दस्यातिदेशकत्वाभावाधिकरणम् ॥ २ ॥

भाष्यम्

३

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ७.३.६ ॥

विषयः

'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते ।

संशयः

किमयमनुवादो विधिर्वेति ।

टुप्टीका

**विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः । षडहाद्वा तत्र हि चोदनाः**

वार्तिकाभरणम्

विश्वजित्सर्वपृष्ठो भवतीति श्रूयते । तत्र संशयः-किं सर्वपृष्ठशब्दो ज्योतिष्टोमात्प्राप्तानां माहेन्द्रादिस्तोत्राणामनुवादकः ? किं वा बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोस्समुच्चयविधायकः ? अथवा षाडह्निकानां पृष्ठानां विधायकः ? इति । तत्र ज्योतिष्टोमे माध्यन्दिनदिवसे (सवने) सप्तदश पृष्ठानीति यानि माहेन्द्रादिस्तोत्राणि तेषां चोदकेन प्राप्तानां सर्वपृष्ठशब्दोऽयमनुवादकः । यानि प्राकृतानि चत्वारि पृष्ठानि तानि सर्वाण्यस्य सन्तीति प्रथमः पूर्वः पक्षः । ज्योतिष्टोमाद्विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोः सर्वत्वं समुच्चयो विधीयते, षाडह्निकपृष्ठातिदेशकत्वे षाडह्निकपृष्ठानां तद्गतसर्वतायाश्च विधानाद्वाक्यभेदापत्तेरिति द्वितीयः पूर्वः पक्षः । सिद्धान्तसूत्रमाह—

**षडहाद्वा तत्र हि चोदनाः** । प्रथमं पूर्वपक्षं दर्शयति—**ज्योतिष्टोम इति** । ज्योतिष्टोमे 'रथन्तरपृष्ठं भवती'ति वाक्येन रथन्तराख्यस्य सामसाधनकस्यैकैकस्यैव स्तोत्रस्य पृष्ठतया विहितत्वेन पृष्ठबहुत्वस्य तत्रा-

तन्त्रशिखामणिः

सर्वपृष्ठशब्दो ज्योतिष्टोमाच्चोदकप्राप्तानां माहेन्द्रादीनां स्तोत्राणामनुवादः ? किंवा ज्योतिष्टोमे वैकल्पिकयोर्बृहद्रथन्तरसामसाधनकयोः पृष्ठस्तोत्रयोः चोदकतो विकल्पित एव प्राप्तयोः समुच्चयविधानार्थः ? आहोस्वित् द्वादशाह्निके षडहे क्रमेण प्रत्यहं पृष्ठस्तोत्रसाधनत्वेन विहितानां बृहद्रथन्तरवैरूपवैराजशाक्वररैवताख्यानां साम्नां षण्णामप्यत्रातिदेशक इति त्रेधा संशयः । तत्र ज्योतिष्टोमाच्चोदकप्राप्तानां स्तोत्राणामयमनुवादः । न च

भाष्यसंदर्भयोजिनी

विश्वजिन्नामकस्सोमयागः, स सर्वपृष्ठः—रथन्तरं बृहद्वैरूपं वैराजं शाकरं रैवतमिति सर्वाणि पृष्ठानि पृष्ठस्तोत्राणि यस्येति विग्रहेण सर्वपृष्ठस्तोत्रवान्, एवमतिरात्रः अतिरात्रसंस्थाक इति विषयवाक्यार्थः । किमयं सर्वपृष्ठशब्दः ज्योतिष्टोमात्प्रकृतेः प्राप्तपृष्ठस्तोत्राणामनुवादकः, उत षाडह्निकपृष्ठस्तोत्राणां विधायक इति संशयनिष्कर्षः ।

## भाष्यम्

### पूर्वपक्षः

किं प्राप्तम् ? अनुवाद इति । कुतः ? यो ह्यसर्वपृष्ठस्तस्य सर्वपृष्ठता विधेया । यस्तु सर्वपृष्ठ एव तस्य तया किं विहितया ? अयञ्च सर्वपृष्ठ एव । कथम् ? तत्पूर्वकत्वात्-ज्योतिष्टोम

## टुप्टीका

ज्योतिष्टोमे 'रथन्तरं पृष्ठं भवति' इत्येकस्य पृष्ठस्य विहितत्वात्सर्वशब्दस्य विधेयत्वाभावाद्वाक्यानर्थक्यं प्रसज्यते । षडहे तु गायत्रं प्रकृत्य पृष्ठानि कार्याणीति विहितम्, तत्र सर्वपृष्ठशब्दावर्थवन्तौ । ज्योतिष्टोमे च

## वार्तिकाभरणम्

भावात् सर्वपृष्ठशब्दस्य बहुपृष्ठानुवादकत्वं न सम्भवति; यानि पृष्ठानि तानि सर्वाण्यस्येत्येवंरूपस्याभिधेयस्याभावात् । ततश्च सर्वपृष्ठशब्दस्यार्थशून्यत्वरूपमानर्थक्यं प्रसज्येत । तस्मात् सर्वपृष्ठशब्दः चोदकप्राप्तानां पृष्ठानामनुवादक इति पक्षो नोपपद्यत इत्यर्थः । षाडहिकपृष्ठविधायकत्वे त्वर्थशून्यत्वं नास्तीत्याह—षडहे त्विति । द्वादशाहे गायत्राख्यं द्वितीमहरारभ्य षट्स्वहस्सु बृहद्रथन्तर-वैरूप-वैराज-शाक्वररैवताख्यानि षट्-पृष्ठानि कार्याणीति विहितम् । एव च तत्र षडहे सर्वेषां पृष्ठानां सद्भावात् षाडहिकपृष्ठपरत्वे सर्वपृष्ठशब्दस्यार्थवत्ता । तथा च षाडहिकानां षण्णां पृष्ठानां सर्वपृष्ठशब्दोऽतिदेशक इत्यर्थः ।

ननु ज्योतिष्टोमेऽपि माहेन्द्रादिषु चतुर्षु स्तोत्रेषु 'सप्तदशानि पृष्ठानीति' पृष्ठशब्दप्रयोगात् तत्रापि बहूनां पृष्ठानां सद्भावात् ज्यौतिष्टोमिकपृष्ठानुवादकत्वेऽपि न सर्वपृष्ठशब्दस्यार्थशून्यत्वमित्यत आह—ज्योतिष्टोम इति । ज्योतिष्टोमे पृष्ठापृष्ठमाहेन्द्रादिस्तोत्रसमुदाये छत्रिन्यायेन 'सप्तदशानि पृष्ठानी'ति प्रयोगाल्लक्षणैव । न तु मुख्यया वृत्था पृष्ठशब्दस्य माहेन्द्रादिस्तोत्रपरत्वम् । एवञ्च ज्योतिष्टोमे पृष्ठबहुत्वाभावात् तदनुवादकत्वं न सम्भवतीत्यर्थः ।

ननु ज्योतिष्टोमे सप्तदशानि पृष्ठानीति माहेन्द्रादीनां चतुर्णां स्तोत्राणां पृष्ठत्वविधानात् चतुर्ष्वपि पृष्ठशब्दो मुख्य एवेत्यत आह—सप्तदशानीति । 'सप्तदशानि पृष्ठानी'ति वाक्येन पृष्ठता न विधीयते । पृष्ठताविधि-

## तन्त्रशिखामणिः

ज्योतिष्टोमे माहेन्द्रस्तोत्रस्यैकस्यैव पृष्ठस्तोत्रत्वाच्चोदकतः पृष्ठबहुत्वाप्राप्तेः कथं सर्वपृष्ठशब्दोऽनुवाद इति वाच्यम्, ज्योतिष्टोमे 'सप्तदशानि पृष्ठानि भवन्ती'ति पृष्ठानुवादेन सप्तदशस्तोमविध्यनन्तरवाक्यशेषे माहेन्द्रादीनां चतुर्णां स्तोत्राणां सङ्कीर्तनेन तेषां चतुर्णामपि पृष्ठस्तोत्रतयास्ति ज्योतिष्टोमे पृष्ठबहुत्वमिति न तदनुवादानुपपत्तिः । तस्माच्चोदकप्राप्तानुवाद इति प्रथमः पक्षः । नैवं, प्रवृत्तिविशेषकरत्वाभावेनानुवादवैयर्थ्यात् । किञ्चानुवादत्वमपि

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

अनुवाद इति पूर्वपक्षः । सर्वपृष्ठस्य विधानं तदा भवेत् यदासावसर्वपृष्ठ इति निश्चयस्स्यात् । विश्वजिद्यागस्य ज्योतिष्टोमविकृतित्वात् अतिदेशेनागतस्य पृष्ठस्तोत्रस्यात्रापि सत्वात् नायमसर्वपृष्ठः । अतो नास्ति विधेरावश्यकतेत्याह—यस्त्विति । तदिदं सौत्रहेतुना साधयति—तत्पूर्वकत्वादिति । ज्योतिष्टोमे बहिष्पवमानम्

## भाष्यम्

पूर्वकत्वात् । ज्यौतिष्टोमिकानि स्तोत्राण्यत्र प्राप्यन्ते । तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति । तानि सर्वाण्यस्य । तैरयं सर्वपृष्ठो भवति । ननु न तानि पृष्ठानि । उच्यते-अस्ति च पृष्ठशब्दः ।

## टुप्टीका

छत्रिन्यायेन पृष्ठशब्दप्रयोगाल्लक्षणा । 'सप्तदशानि पृष्ठानि' इति च सप्तदशता विधीयते न पृष्ठता । न च

## वार्त्तिकाभरणम्

रिति वदता पृष्ठशब्दवाच्यता विधीयत इति वक्तव्यम् । न च तत्सम्भवति, नामनामिसम्बन्धस्य विधेयत्वासम्भवात् सप्तदशताया अपि विधेयतया वाक्यभेदप्रसङ्गाच्च । तस्मात् पृष्ठानुवादेन सप्तदशतागुणविधिरवायम्, न तु पृष्ठताविधिरिति न तद्बलात् पृष्ठशब्दश्चतुर्णां नामधेयम् । न च विध्यभावेऽपि उद्भिदादिवत् सामानाधिकरण्यादेव पृष्ठशब्दश्चतुर्णां नामधेयमस्त्विति वाच्यम् । उत्पत्तिवाक्ये हि सामानाधिकरण्यं भवति, न तु गुणविधायकवाक्ये । न च ज्योतिष्टोमे माहेन्द्रादीनां चतुर्णामप्युत्पत्तिवाक्येषु पृष्ठशब्दः श्रूयते; किन्तु 'रथन्तरं पृष्ठं भवती'ति माहेन्द्रस्तोत्रमात्रे पृष्ठशब्दप्रयोगः । तस्मात् सप्तदशानि पृष्ठानीति वाक्ये बहुवचनान्तेन पृष्ठशब्देन वाक्यविशेषसङ्कीर्तनानि माहेन्द्रादीनि पृष्ठापृष्ठरूपाणि चत्वार्यपि स्तोत्राणि छत्रिन्यायेन लक्षणया अनूद्य सप्तदशत्वसङ्ख्या विधीयते । प्रकृते मुख्यवृत्या षाडह्निकपृष्ठातिदेशकत्वे सम्भवति लक्षणाश्रयणेन ज्योतिष्टोमिकमाहेन्द्रादिस्तोत्रचतुष्टयानुवादकत्वं न युक्तमित्यर्थः । द्वितीयपूर्वपक्षं दूषयति—न चेति । ज्योतिष्टोमाद्विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोस्समुच्चयविधायकत्वेन सर्वपृष्ठशब्दस्यार्थवत्त्वमपि न सम्भवति । बह्वर्थकस्य सर्वशब्दस्य द्वयोर्वृत्यसम्भवेनास्मिन्नपि पक्षे सर्वशब्दस्यार्थशून्यत्वादित्यर्थः ।

## तन्त्रशिखामणिः

न सम्भवति, उत्पत्तिवाक्ये फलवाक्ये वा कर्मसामानाधिकरण्यान्नामधेयं विज्ञायते, यथा 'अग्निहोत्रं जुहोती'ति उत्पत्तिवाक्ये । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति फलवाक्ये न तु गुणविधिपरे वाक्ये कर्मसामानाधिकरण्येऽपि नामत्वम् । ततश्च 'रथन्तरं पृष्ठं भवति' इत्युत्पन्नस्य रथन्तरसामसाधनकस्तोत्रस्य 'बृहत् पृष्ठं भवति' इत्युत्पन्नस्य बृहत्सामसाधनकस्तोत्रस्यैव वैकस्य ज्योतिष्टोमे पृष्ठत्वं न तु मैत्रावरुणसामादीनाम् । माहेन्द्रस्तोत्रव्यतिरिक्तानामपि तेषामुत्पत्तौ पृष्ठशब्दाश्रवणात् । न च 'पृष्ठैः स्तुवते' इत्युत्पत्तौ तेषामप्यस्ति पृष्ठशब्द इति वाच्यम् । तस्य वाक्यस्य 'सप्तदश पृष्ठानि भवन्ति' इति पृष्ठानुवादेन सप्तदशावृत्तिविधानार्थमनुवादत्वस्य नामधेयपाद एवोक्ततया उत्पत्तिपरत्वाभावात् । ननु तर्हि कथं सप्तदश पृष्ठानीति पृष्ठशब्देन चतुर्णां स्तोत्राणामनुवाद इति चेन्न; 'प्राणभृत उपदधाती'त्यत्रेव लिङ्गसमवायाधिकरणे सिद्धेन छत्रिन्यायेन लक्षणयानुवादसम्भवात् । अनुवादे च

## भाष्यसंदर्भयोजिनी

चत्वार्याज्यस्तोत्राणि, माध्यन्दिनपवमानम् चत्वारि पृष्ठस्तोत्राणि, आर्भवपवमानम् यज्ञायज्ञीयञ्चेति सन्ति द्वादश स्तोत्राणि । तानीहातिदेशेन प्राप्नुवन्तीत्याह—ज्यौतिष्टोमिकानीति । ज्योतिष्टोमे 'रथन्तर पृष्ठं भवति' 'बृहद्वा पृष्ठं भवति' इति विकल्पेन विहितं पृष्ठद्वयम् । तत्र कथमयं सर्वपृष्ठस्स्यादिति शङ्कते-नन्विति ।

## भाष्यम्

तेषु 'सप्तदशानि पृष्ठानीति' । तस्मादनुवादः ॥ ६ ॥

## सिद्धान्तः

### षडहाद्वा तत्र हि चोदना: ॥ ७.३.७ ॥

नायमनुवादः । किं तर्हि ? विधिः । अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकस्स्यात् । अपि च

## टुप्टीका

विकल्पप्राप्तयोः समुच्चयेनार्थवत्ता, व्यर्थत्वादेव सर्वशब्दस्य । सर्वपृष्ठ इति च समासोऽयम् । समासेन च विदधतो नानेकगुणविधानं दुष्करम् । अथवा पृष्ठगतासर्वता शक्या विधातुम् । तस्मादर्थापत्त्या पृष्ठानां

## वार्तिकाभरणम्

ननु षाडहिकानां पृष्ठानामतिदेशपक्षे पृष्ठानां तद्गतसर्वतायाश्च विधेयत्वेन वाक्यभेदः स्यादित्युक्तमित्यत आह—सर्वेति । यद्यत्र पृष्ठेषु तद्गतसर्वतायां च पृथग्विधिव्यापारः स्यात्, तदा विध्यावृत्तिलक्षणो वाक्यभेदः स्यात् । न त्वेवमस्ति । किन्तु बहुव्रीहिसमासादेव सर्वतायाः पृष्ठानां च वैशिष्ट्यावगमेन सर्वताविशिष्टपृष्ठेषु सकृदेव विधिव्यापार इति नास्ति वाक्यभेद इत्यर्थः । अस्यां शङ्कायां भाष्योक्तपरिहारमाह—अथवेति । अस्मिन् वाक्ये पृष्ठगतसर्वतैव विधीयते । न तु पृष्ठान्यपि विधीयन्ते । पृष्ठानामभावे तद्गतसर्वताया असम्भवेनान्यथानुपपत्त्या पृष्ठानामपि विधिरिति न वाक्यभेदः आर्थिकार्थस्य वाक्यभेदप्रयोजकत्वाभावात् इत्यर्थः । तस्यात् षाडहिकानि सर्वाणि पृष्ठानि विश्वजित्यनेन वाक्येन अतिदिश्यन्त इति परिहरति—तस्मादिति । अत्र पृष्ठशब्दः सामाभिधायी न स्तोत्रभिधायीति द्रष्टव्यम् ॥ ७ ॥

लिङ्गदर्शनाच्च इति सूत्रस्यार्थमाह—एवंचेति । षाडहिकानामतिदेशे सति 'पवमाने रथन्तरं करोति आर्भवे बृहत् मध्यत इतराणि वैरूपं होतुस्साम वैराजं मैत्रावरूणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्येति' षाडहिकानां साम्नां तस्मिन् विश्वजिति क्रमविधिपरं वाक्यमुपपत्स्यते नान्यथा । तस्मात्

## तन्त्रशिखामणिः

लक्षणाया अदोषत्वात् । न चेह लक्षणायां कारणमस्ति । तस्माज्ज्योतिष्टोमतो बृहद्रथन्तरसाधनकपृष्ठयोरन्यतरस्यैव चोदकतः प्राप्तौ बह्वपेक्षसर्वपदघटितसर्वपृष्ठशब्दस्य नानुवादत्वसम्भवः । अत एव बृहद्रथन्तरसाधनकयोरदृष्टार्थतया समुच्चयार्थयोरपि वचनात्प्रकृतौ विकल्पितयोरिह समुच्चयार्थस्सर्वपृष्ठशब्द इति द्वितीयपक्षोऽप्यपास्तः सर्वशब्दस्य बह्वपेक्षतया द्वयोरप्रवृत्तेः । तस्माद् द्वादशाहिकात् षडहात् बृहद्रथन्तरादीनां पृष्ठस्तोत्रसाधनानामतिदेशकस्सर्व-

## भाष्यसन्दर्भयोजिनी

तेष्वस्ति पृष्ठशब्द इति सौत्राणि पदानि । पृष्ठशब्दस्तेषु स्तोत्रेष्वस्तीति दर्शयति—सप्तदशानि पृष्ठानीति । माहेन्द्रस्तोत्रेषु स्तोमविधायके वाक्ये पृष्ठशब्दप्रयोगात्पृष्ठशब्दोऽस्तीति भावः । तस्मादनुवादः ॥ ६ ॥

सिद्धान्तो वदति—नायमनुवादः । अनुवादे 'वादमात्रं ह्यनर्थकम्' इति न्यायेनानर्थक्यं स्यात् । अतः

## भाष्यम्

ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति, यस्यानुवादस्स्यात्। षडहे तु तदस्ति। तत्र हि चोदनाः पृष्ठानां 'रथन्तरं पृष्ठं भवति' इत्येवमाद्याः। तस्मात् षाडहिकानामातिदेशिको विधिरिति ॥ ७ ॥

## टुप्टीका

विधानम्। तस्मात् षाडहिकानि पृष्ठानि विधीयन्ते। एवञ्च क्रमविधिपरं वाक्यमुपपत्स्यते तस्मन्विश्वजिति ॥ ६-७ ॥

## वार्तिकाभरणम्

षाडहिकानामतिदेशः। अत्र वचनात् षाडहिकानां पृष्ठानामेवातिदेशः, न तु षाडहिककृत्स्नविध्यन्तस्य। विश्वजितः एकाहत्वेन ज्योतिष्टोमविकारत्वात् तत एव नैराकाङ्क्ष्यादिति द्रष्टव्यम्।

ननु यत्र वत्यर्थलक्षणया परकीयधर्मविधिः तत्र नामातिदेशः सर्वपृष्ठशब्दस्तु। बहुव्रीहित्वाद्विनापि लक्षणया धर्मातिदेशकः। एवं च वाचनिकातिदेशनिरूपणप्रस्ताव एवायं विचारस्सङ्गच्छते न त्वत्र नामातिदेशप्रस्ताव इति चेत्-सत्यम् वाचनिकातिदेशोऽयम्, तथापि अग्निहोत्रं जुहोतीत्यग्निहोत्रशब्दवत् विश्वजित् सर्वपृष्ठ इति सर्वपृष्ठशब्दस्य कर्मसामानाधिकरण्यात् कर्मसमानाधिकरणपदनिमित्तकातिदेशोऽयमिति कर्मसमानाधिकरणपदनिमित्तकातिदेशविचारप्रस्तावेऽयमपि विचारस्सङ्गच्छते ॥ ८ ॥

## तन्त्रशिखामणिः

पृष्ठशब्दः। ननु स्तोत्रवाचिना पृष्ठशब्देन स्तोत्राणामेवातिदेशवर्णनं युक्तम् न तु स्तोत्रसाधनानां साम्नां लक्षणापत्तेरिति चेत्-सत्यम्, यदि स्तोत्राणामतिदेशस्स्यात् तदा 'पवमाने रथन्तरमार्भवे बृहत् मध्ये इतराणि वैरूपं होतुस्साम वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्येति' साम्नां प्रकृते पवमानादिस्तोत्रेषु निवेशो न स्यात्। तस्मात् पृष्ठशब्दस्य लक्षणया सामपरत्वमेव युक्तम्। न च विनियोजकवाक्यगतरथन्तरादिपदानामेव तत्तत्साधनकस्तोत्रेषु लक्षणास्त्विति वाच्यम्। अनेकेषु पदेषु लक्षणाकल्पनापेक्षया एकस्मिन्नेव पृष्ठशब्दे तत्कल्पनौचित्यात्। न चैवं सिद्धान्तेऽपि लक्षणाङ्गीकारे सर्वपृष्ठशब्दे माहेन्द्रादीनां चतुर्णामनुवादकत्वे लक्षणा स्यादिति वाच्यम्। अनुवादानर्थक्यस्यैव प्रथमपक्षे मुख्यदोषत्वात्। न च साम्नां स्तोत्रान्तरेषु विनियोगे स्यादप्राकृतकार्यता स्तोत्राणाञ्चापूर्वार्थतया नाप्रकृतकार्यत्वापत्तिः। अतः पृष्ठशब्दे लक्षणा

## भाष्यसन्दर्भयोजिनी

प्रवृत्तिविशेषकरत्वेन विधिरेव स्वीक्रियते। तदिदं प्रतिपादयति—अपि चेति। सन्ति पृष्ठस्तोत्राणि षट्। तेषु बृहद्रथन्तरयोः 'बृहद्वा पृष्ठं भवति' 'रथन्तरं वेति' बृहद्रथन्तरयोः विकल्पेन विहितत्वाच्चत्वार्येव स्तोत्राणि भवन्ति, न सर्वाणि। चतुर्णामनुवादेन सर्वशब्दो न सङ्गच्छेत 'सर्वपृष्ठ' इति। षडहे तु सर्वाणि तानि सन्ति। तेषां पृष्ठानां विधायकानीमानि 'रथन्तरं पृष्ठं भवतीत्याह—तत्र हीति। अतः षाडहिकानामातिदेशिकत्वे स्वीकृते प्रवृत्तिविशेषकरत्वेन वाक्यं सार्थकं भवेदित्याह—तस्मादिति ॥ ७ ॥

### भाष्यम्

## लिङ्गदर्शनाच्च ॥ ७.३.८ ॥

लिङ्गञ्चैतमर्थं दर्शयति-'पवमाने रथन्तरं करोति आर्भवे बृहत्, मध्य इतराणि, वैरूपं होतुस्साम वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्य' इति विनिवेशपरे वाक्ये षाडहिकानि पृष्ठानि दर्शयति ॥ ८ ॥

## उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ७.३.९ ॥

यदुक्तम्-अस्ति च पृष्ठशब्द इति, तत्र ब्रूमः-न त्वेष औत्पत्तिकः पृष्ठशब्दः । उत्पन्नानां स्तोत्राणामसावधिकारः-यान्येतानि पृष्ठानीति । ज्ञाते च तेषां पृष्ठत्वे तदुपपद्यते, न च तत्र ज्ञातम् । कथं तर्ह्यनुवादः ? लिङ्गसमवायात् । एकं तत्र माहेन्द्रस्तोत्रमिति । षाडहिकानां पुनः

### तन्त्रशिखामणिः

न युक्तेति वाच्यम् । अपूर्वान्तरसाधनानामपि स्तोत्राणां 'त्रैधातवीया दीक्षणीया' इत्यत्रैव स्तोत्रान्तरकार्यापूर्वान्तरे विनियोगादप्राकृतकार्यत्वाविशेषात् । परस्तु मन्यते रथन्तरादिपदानामपि स्तोत्रेषु लक्षणा पवमानादिपदानामपि तत्कार्येषु लक्षणेति प्रतिवाक्यं पदद्वयलक्षणापातात् । एतेन यथाप्राप्तिव्यवस्था वक्तव्येति प्रापकशब्दपृष्ठशब्दमुख्यत्वानुरोधेन स्तोत्राणामेव प्राप्तौ निश्चितायां व्यवस्थावाक्यगतरथन्तरादिशब्दानामेव स्तोत्रपरत्वं युक्तमित्यपास्तम् । प्रतिवाक्यं पदद्वयलक्षणापेक्षया मुख्येऽप्येकस्मिन् पृष्ठशब्दे लक्षणाया ज्यायस्त्वात् । अत एव मुख्यानुग्रहात् भूयोऽनुग्रह एव ज्यायानिति द्वादशे वक्ष्यते । 'कण्वरथन्तरं पृष्ठं भवति' इत्यादाविव षडहेऽपि वैरूपं पृष्ठं भवति वैराजं पृष्ठं भवति इत्यादिना प्राकृतपृष्ठानुवादेन सामविधिसम्भवे विशिष्टविधौ गौरवात् प्राकृतपृष्ठद्वयातिरिक्तपृष्ठान्तराभावात् सर्वशब्दानुपपत्तेः न पृष्ठानामतिदेशः । तस्मात् साम्नामेवातिदेश इत्याहुः ।

### भाष्यसन्दर्भयोजिनी

अस्मिन्नर्थे प्रमाणं प्रदर्शयति—लिङ्गञ्चैतमिति । रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवतानां पृथक्पृथग्विनियोगपरमिदं वाक्यम् । अनेन सर्वपृष्ठत्वमुपादितं भवतीत्यर्थः ॥ ८ ॥

अस्ति च पृष्ठशब्द इत्युक्तौ शङ्कते—यदुक्तमिति । 'सप्तदशानि पृष्ठानि' इति वाक्यं न पृष्ठस्तोत्रविधायकम्, किन्तु सप्तदशस्तोमविधायकम् । तेन पृष्ठता न विधीयते केवलं सप्तदशता विधीयते । अतो नेदं पृष्ठतोत्राणामुत्पत्तिवाक्यम् । तदिदं दर्शयति—न त्वेष औत्पत्तिक इति । उत्पत्तिवाक्यगतोऽयं पृष्ठशब्दो नास्तीत्यर्थः । उत्पन्नानां वाक्यान्तरेणेति शेषः । असौ 'सप्तदश पृष्ठानि' इति वाक्यगतः पृष्ठशब्दः । अधिकारः अधिकृत्य प्रवृत्त इत्यर्थः । ततो नायं पृष्ठशब्दः सर्वपृष्ठप्रापक इति भावः ।

अज्ञाते पृष्ठत्वे कथमयनुवाद इत्यत्राह—लिङ्गसमवायात् इति । माहेन्द्रस्तोत्रेण सम्बद्धत्वादित्यर्थः । षाडहिकानि पृष्ठानि तु तत्र विहितानि । विहितानां तेषां ज्ञाने सति तत्र सप्तदशतामात्रविधानेन 'सप्तदशानि

### भाष्यम्

पृष्ठत्वं ज्ञातम् । कथम् ? तत्र हि चोदनेत्युक्तम् । तेषां वादे श्रौतः पृष्ठशब्दस्यार्थः परिगृहीतो भवति इतरथा लाक्षणिकः । तस्मात्षाडहिकानां प्रदेश इति ॥ ९ ॥

## द्वयोर्विधिरिति चेत् ॥ ७.३.१० ॥

इति चेत्पश्यसि षाडहिकानां पृष्ठानां विधिरिति, नैतद्युक्तम्; किं कारणम् ? द्विकर एवं सर्वपृष्ठशब्दोऽभ्युपगतो भवति—पृष्ठानि च विदधाति तेषाञ्च सर्वत्वम् । अस्तु को दोषः ? असम्भव इत्याह । यदि पृष्ठशब्दः पृष्ठानि विदधाति सर्वशब्देन न शक्यते विशेषयितुम् । अथानुवदति तदा शक्यते । पृष्ठानि त्वविहितानि भवन्ति । तेष्वसत्सु कस्येदं सर्वत्वं विधीयते ।

### तन्त्रशिखामणिः

नन्वेवमपि विश्वजिदनुवादेन सर्वताविशिष्टपृष्ठविधौ वाक्यभेदः । न चोत्पत्तिवाक्यत्वादस्य न विशिष्टविधौ दोष इति वाच्यम्, विश्वजिता यजेत इत्यस्यैवोत्पत्तिवाक्यत्वात् । नाप्यत्र पृष्ठतासर्वतैव विधीयते । न चाविधाय पृष्ठानि तद्गता सर्वता विधातुं शक्यत इत्यर्थात् पृष्ठानां विधानम्, न हि श्रुत्यर्थाभ्यामनेकार्थविधाने वाक्यभेद इति युक्तम् पृष्ठाविनाभावाभावेन तन्मात्रविधावर्थात् पृष्ठविध्यलाभेन सर्वतायास्तस्याः पृष्ठवैशिष्ट्यस्य च विधेयत्वात् कथं न वाक्यभेद इति चेन्न; सर्वतायाः पृष्ठानाञ्च वैशिष्ट्यमात्रमिह विधेयमर्थात्सर्वतापृष्ठयोर्विधिः । यद्वा 'यदग्नये च प्रजापतये च सायं जुहोती'त्यादौ चशब्दद्योतितसाहित्यिकगुणद्वयविधिवदत्रापि समासद्योतित-साहित्यिकगुणद्वयविधावप्यदोषात् । वस्तुतस्तु यथा 'विष्णवे शिपिविष्टाय शृते चरुम्' इत्यत्र शाब्दसामानाधिकरण्यान्मन्त्रार्थवादप्रसिद्धेः प्रागेव विधिव्यापाराद् विष्णौ शिपिविष्टत्ववैशिष्ट्यसिद्धेर्न तद्वैशिष्ट्यस्य विधिविषयत्वमिति शिपिविष्टत्वविशिष्टविष्णुविधावपि न वाक्यभेदस्तथात्रापि सर्वाणि पृष्ठान्यस्येति बहुव्रीह्यन्तर्गतशाब्द-सामानाधिकरण्येन द्वादशाहिकषडहेषु पृष्ठेषु सर्वतायाः प्रसिद्धेश्चात्र सर्वताविशिष्टपृष्ठविधावपि वैशिष्ट्यांशे

### भाष्यसन्दर्भयोजिनी

पृष्ठानि' इति वाक्यं चरितार्थमिति सर्वपृष्ठशब्दः षाडहिकपृष्ठशब्दः श्रौतः परिगृहीतो भवति । अतः षाडहिक-पृष्ठानां प्रदेशः अतिदेशकः सर्वपृष्ठ इत्युपसंहरति—तस्मादिति ॥ ९ ॥

पूर्वपक्षी सर्वपृष्ठशब्दः षाडहिकपृष्ठपर इत्यत्र शङ्कामुद्भावयति-इति चेत्पश्यसीति । द्विकरः कार्यद्वय-सम्पादकस्सर्वपृष्ठस्स्यादित्यर्थः । पृष्ठानां विधानम् तेषां सर्वत्वबोधनञ्चेति कार्यद्वयम् तत्करस्स्यादिति भावः । द्विकरत्वस्वीकारे दोषमुद्भावयति-असम्भव इति । असम्भवमुपपादयति-यदीति । सर्वपृष्ठ इत्यत्र पृष्ठशब्दः पृष्ठानां विधानकार्ये संल्लग्नश्चेत् सर्वशब्देन सम्बद्धो न स्यात् । सर्वपृष्ठशब्दो बहुव्रीहिसमासे वर्तते । अन्यपदार्थश्च विश्वजित् । तत्र षाडहिकपृष्ठानि तेषामतिदेशव्यापारे व्यापृतोऽयं सर्वपृष्ठशब्दः सर्वाण्येव पृष्ठानि प्राप्नुयादिति सर्वंशब्दस्य किं प्रयोजनम् ? यदि च पृष्ठशब्दस्तान्यनुवदति तर्हि तत्र सर्वशब्दस्सम्बद्धुमर्हति, अनुवादश्च तदा भवेत् यदा तेषां प्राप्तिरन्यतो भवेत् । असत्सु तेषु पृष्ठस्तोत्रेषु 'सर्वं' पदमिदं कस्य सर्वत्वं विधीयेत इत्यसम्भव इत्याह-

भाष्यम्

उभयक्रियायाश्चासम्भवः। अथात्र बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते सर्वपृष्ठो भवतीति। उभे अपि बृहद्रथन्तरे भवतो नैकमिति। ततोऽयं दोषो न भवति। तस्माद् द्वयोरधिकारः॥ १०॥

## न व्यर्थत्वात्सर्वशब्दस्य॥ ७.३.११॥

नैवमेतत्। कुतः? व्यर्थत्वात्सर्वशब्दस्य। एवं सति सर्वशब्दो व्यर्थो भवति, अर्थशून्यः। अयं हि बहुविषयो द्वयोर्न युज्यते। षाडहिकानान्तु विधाने नैष दोषः। ननु च तत्रापि द्विकरशब्दो भविष्यति। उच्यते—न भविष्यति। सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि। ननूक्तं पृष्ठेष्वसत्सु कस्येदं सर्वत्वं विधीयत इति। उच्यते-पृष्ठानां सर्वत्वं हि विहितम्।

तन्त्रशिखामणिः

विधिव्यापारानपेक्षणान्न वाक्यभेद इत्याहुः। इदञ्च विधेयमत्र वचनस्यातिभाराभावाद्रथन्तरादिपदार्थानामेवातिदेशो नोपकारस्येति।

अत्रैकदेशिनः-पदार्थमात्रातिदेशे ह्युत्तरषट्के सङ्गतिर्न स्यात् तत्रोपकारप्राप्तेरेव विचार्यत्वात्। तस्मादिह षाडहिकविध्यन्तातिदेश एव लक्षणयेत्याहुः। तदयुक्तम्; लक्षणादोषादेव। न च पृष्ठशब्दष्षडहनामधेयम्, येनात्र तद्विध्यन्तातिदेशस्स्यात्। अत एकाहत्वसामान्यात् सौमिकविध्यन्तस्यैवातिदेशः। नाप्युत्तरषट्कासङ्गतिः, अतिदेश एवोत्तरषट्कार्थ इत्युक्तत्वात्। तदिहान्यदीयानां पृष्ठसाम्नां तत्सम्बन्धाबाधेनान्यत्र विधानादतिदेशत्वमक्षतमिति काऽसङ्गतिः। एवमपि सर्वाणि पृष्ठानि अस्येति श्रुत्यैव विधानाद्वचनातिदेशोऽयमिति कथमस्य नामातिदेशप्रस्तावे सङ्गतिरिति चेत्-सत्यम्; तथाप्येकपदत्वात् कर्मसामानाधिकरण्याच्च नामाधिकारे सङ्गतिः। वस्तुतस्तु वाचनिक एवातिदेशः प्रसङ्गादिहोक्त इति दिक्॥

वृत्तमधिकरणम्

भाष्यसन्दर्भयोजिनी

उभयक्रियाया इति। यदि च ज्योतिष्टोमे विकल्पेन विहितयोः बृहद्रथन्तरयोः पृष्ठशब्दोऽनुवादकस्स्यात् तर्हि द्वयोरत्र समुच्चयविधानाय सर्वशब्दस्सार्थकस्स्यादित्याह-अथेति॥ १०॥

तामिमां शङ्कां निरस्यति सिद्धान्ती-नैवमेतदिति। बृहद्रथन्तरयोस्समुच्चयार्थत्वेन सर्वशब्दस्य नयने तस्य वैयर्थ्यमेव। अयं हि सर्वशब्दो बहुषु प्रयुज्यते न द्वयोः। षाडहिकानान्तु रथन्तरादीनां विधाने सर्वशब्दो बहुषु तिष्ठेत् रथन्तरादीनां बहुत्वात्। ननु त्वत्पक्षेऽपि पृष्ठशब्दो रथन्तरादिपरः, तत्र च सर्वत्वमिति द्वयोर्व्यापारः सर्वपृष्ठशब्दस्यास्त्येवेति शङ्कते-नन्विति। निरस्यति-न भविष्यतीति। सर्वपृष्ठशब्दस्सर्वत्वमेव विदधाति। न पृष्ठान्यपि विदधातीत्यर्थः। विद्यमानेषु पृष्ठेषु तत्र केवलं सर्वत्वं विधातुं शक्यम्। असत्सु तेषु कथं सर्वत्वं विधीयत

## भाष्यम्

तत्सम्पादयितव्यम् । न च पृष्ठान्यकुर्वता तत्सम्पादयितुं शक्यते । तत्रार्थात्पृष्ठानि करिष्यति । एवं न द्व्यर्थश्शब्दो भविष्यति । सर्वशब्दश्च समर्थितः । तस्मात् षाडहिकानामतिदेश इति ॥११॥

इति सर्वपृष्ठशब्दस्य षाडहिकातिदेशकत्वाधिकरणम् ॥ ३ ॥

४

## तथावभृथस्सोमात् ॥ ७.३.१२ ॥

### विषयः

वरुणप्रघासेषु श्रूयते—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति ।

### वार्तिकाभरणम्

**तथावभृथः सोमात्** । अत्र आचार्यैश्चत्वार्यधिकरणानि त्यक्तानि तानि वयं वर्णयामः । वरुणप्रघासेषु श्रूयते—"वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति" इति । तत्र संशयः । किं दार्शपूर्णमासिकमपां व्युत्सेकमवभृथशब्देनानूद्य तत्र तुषनिष्कासौ विधीयेते ? किं वा सौमिकावभृथधर्मकं कर्मान्तरं विधीयते ? इति । अत्र दार्शपूर्णमासिकावभृथे-गुणोऽनेन वाक्येन विधीयते । तथा चावभृथशब्दोऽनुवादकः । यदि धर्मातिदेशकः स्यादवभृथशब्दः तदा गौणो भवेत् ।

### तन्त्रशिखामणिः

तथावभृथस्सोमात् । चोदकप्राप्तपृष्ठानुवादेन बह्वपेक्षसर्वताविध्यसम्भवेऽपि चोदकप्राप्तजलव्युत्सेकानुवादेन तुषनिष्कासविधिस्स्यादित्युत्थितेस्सङ्गतिः । वरुणप्रघासेसु श्रूयते—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति ।

### भाष्यसन्दर्भयोजिनी

इति प्रश्नमुत्तरयति-सर्वत्वं हि विहितम् इति । अयं भावः-विधानञ्चानुष्ठानाय भवति । अनुष्ठानविषयस्तु पृष्ठस्तोत्राणि । तत्र यदा सर्वत्वं सम्पादनीयं तदाऽर्थादेवानुष्ठानं तेषां प्राप्तमिति द्विकरत्वं नास्ति, सर्वशब्दश्च न व्यर्थ इति । उपसंहरति-तस्मादिति ॥ ११ ॥

इति सर्वपृष्ठशब्दस्य षाडहिकातिदेशकत्वाधिकरणम् ॥ ३ ॥

पूर्वं सर्वपृष्ठशब्दस्य विश्वजिति षाडहिकपृष्ठातिदेशकत्वं निरूपितम् । सम्प्रति तन्न्यायमन्यत्रातिशति । चातुर्मास्येषु द्वितीयं पर्व वरुणप्राघासाभिधम् । तत्र 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति श्रुतम् । विषयवाक्यस्यायमर्थः-वारुणी-आमिक्षा तया निष्कासेन स्थालीलग्नेन लेपेन पुरोडाशार्थव्रीहितुषैश्च सह अवभृथं यन्ति-अवभृथदेशं गच्छन्तीति ।

## भाष्यम्

### संशयः

तत्र संशयः—किं दार्शपूर्णमासिकेऽपां व्युत्सेके तुषनिष्कासं विधीयते ? उत सौमिकादवभृथाद्धर्मातिदेशः ? इति ।

## वार्तिकाभरणम्

अथावभृथशब्दस्यानुवादकत्वेऽपि तुल्यं गौणत्वम् । अपां व्युत्सेकस्यावभृथत्वाभावात् इति चेन्न; विधौ गौणत्वाश्रयणापेक्षया अनुवादे गोणत्वाश्रयणस्य न्याय्यत्वात् । किञ्च अपांव्युत्सेकस्य चोदकेन सन्निहितत्वात् तदनुवादकत्वमेव युक्तम् । अस्ति च दर्शपूर्णमासयोरवभृथशब्दः । 'एष वै दर्शपूर्णमासयोरवभृथ' इति । इतरथा प्रकृतहानाप्रकृतकल्पने विशिष्टविधिश्च स्युः । तस्मादपांव्युत्सेकमवभृथशब्देनानूद्य तत्र तुषनिष्कासं विधीयत इति प्राप्ते ब्रूमः—

## तन्त्रशिखामणिः

वारुण्या आमिक्षया, निष्कासेन स्थालीलेशेन लेपेन, पुरोडाशानां व्रीहीणां तुषैश्चावभृथं कुर्यादित्यर्थः । इह तु यन्तीति प्रकृत्या चार्थप्राप्तावभृथदेशगमनमनूद्यत इति ध्येयम् ।

किमत्र दार्शपूर्णमासिकम् 'एष वै दर्शपूर्णमासयोरवभृथः' इति अवभृथत्वेन श्रुतं पिष्टसंयवनार्थानामपां प्रतिपत्तिरूपं यदन्तर्वेदि निनयनं तदवभृथशब्देनानूद्य तत्र तुषनिष्कासरूपगुणविधिः' ? किं वा तुषनिष्कासद्रव्यकं सौमिकावभृथधर्मकं कर्मान्तरं विधीयते इति संशयः ।

तत्र चोदकः सन्निहितं दार्शयोर्णमासिकमपां व्युत्सेकमवभृथशब्देनानूद्य तत्र तुषनिष्कासविधिरिति युक्तम् । अन्यथा प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात् विशिष्टकर्मान्तरविधितो गुणमात्रविधेर्ज्यायस्त्वाच्च । न च प्राप्तकर्मानुवादेन गुणद्वयविधाने वाक्यभेदात् तद्विशिष्टकर्मविधिरेव युक्त इति वाच्यम् । 'यदग्नये च प्रजापतये च' इत्यत्रेव गुणद्वयस्यापि चशब्दद्योतितसाहित्यतया विधिसम्भवात् । नन्वेवमपि 'एष वै दर्शपूर्णमासयोरवभृथः' इति स्तुत्यर्थत्वेनापां व्युत्सेके प्रयोगात् अवभृथशब्दस्तत्र गौणः, न तु तन्नामधेयमतोऽवभृथशब्देन न गौणावभृथग्रहणं न्याय्यम् इति चेत्-कर्मान्तरविधावvि··· ············कर्मणि मुख्यस्यावभृथशब्दस्य कर्मान्तरे गौणत्वमविशिष्टम् ।

## भाष्यसन्दर्भयोजिनी

### संशयः

वरुणप्रघासेषु ये यागा विहिताः ते सर्वेऽपि दर्शपूर्णमासविकृतयः, इष्टित्वात् । अवभृथेष्टिरपि दर्शपूर्णमासविकृतिः । किन्तु अवभृथशब्दस्तु सोमे प्रसिद्धः । दर्शपूर्णमासयोः कर्मसमाप्तिकाले वेदिमध्ये पूर्णपात्रस्थापो निषिच्य, तस्योत्सेकः-प्रोक्षणरूपो विहितः । तस्य व्युत्सेकस्यावभृथरूपत्वं 'दर्शपूर्णमासयोरवभृथः' इति श्रुतम् । अतस्सन्देहो जायते-किमयमवभृथशब्दः प्रसिद्धसौमिकावभृथपरः तद्धर्मातिदेशकः ? उत दार्शपूर्णमासिकव्युत्सेकपरामर्शकः ? तेन दार्शपूर्णमासिकव्युत्सेकेऽतिदेशेनात्रागते तत्र वारुण्यादिगुणविधानार्थमिदं वाक्यमिति ।

## भाष्यम्

### पूर्वपक्षः

किं युक्तम् ? दार्शपूर्णमासिके गुणविधिः। एवं सन्निहितप्रत्ययोऽनुगृह्यते। सन्निहितो ह्यसौ चोदकेन प्रापितः। ननु नासाववभृथः। उच्यते-अस्ति तत्रावभृथशब्द इति 'एष वै दर्श पूर्णमासयोरवभृथः' ( तै. सं. १.७.५.३.) इति।

## वार्तिकाभरणम्

'प्रकरणान्तरे प्रयोजनान्यत्वमि'ति न्यायेन 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'ति वाक्यं कर्मान्तर-विधायकम्। तस्मिंश्च कर्मान्तरे पुनरुच्चार्यमाणोऽवभृथशब्दः सौमिकावभृथधर्मातिदेशकः। यदुक्तम्-दर्शपूर्ण-मासयोरस्त्यभृथशब्द इति तन्न; गौण्या दार्शपौर्णमासिकस्यापांव्युत्सेकस्य स्तुतित्वादवभृथशब्दस्य। न च दार्शपूर्णमासिके अपांव्युत्सेकेऽप्यवभृथशब्दस्य मुख्यत्वमेवास्त्विति वाच्यम्। अनेकार्थत्वस्यान्याय्यत्वात्। न चेह गौण्या अपांव्युत्सेकपरत्वे प्रमाणमस्ति। यदि सौमिकधर्मातिदेशकोऽवभृथशब्दो न स्यात्तदा "नायुर्दां जुहोति; न

## तन्त्रशिखामणिः

अतश्चोदकसन्निहितग्रहणमेव युक्तम्। किञ्च ममानुवादे गौणत्वम् तव तु विधौ, न च तद्युक्तम्। 'न विधौ परश्शब्दार्थः' इति न्यायात्। तस्मात् अपां व्युत्सेके तुषनिष्कासरूपगुणविधिरिति प्राप्ते,

ब्रूमः—सत्यं सिद्धान्तेऽवभृथशब्दस्य गौणत्वम् तत्तु प्रामाणिकम्। यन्तीत्यनेन प्रकरणान्तरन्यायेन कर्मान्तरविधिरिति सिद्धे नात्र कर्मान्तरेऽवभृथशब्दप्रयोगात् परशब्दस्य परत्र सादृश्यविवक्षया प्रयोगेण गौणत्वस्य न्याय्यत्वात्। न चैवं गौणावभृथस्यापांव्युत्सेकस्यात्र ग्रहणे प्रमाणमस्ति। अवभृथशब्दस्य तन्नाम त्वाभावात्। अतस्तुषनिष्कासद्रव्यकं कर्मान्तरं यन्तीत्यनेन विधीयते। तत्र चावभृथशब्दस्सौमिकधर्मातिदेशकः। 'नायुर्दां जुहोति' 'न साम गायति' 'नाध्वगमनमन्त्रं जपति' इति सौमिकावभृथधर्मप्रतिषेधरूपलिङ्गदर्शनाच्च तद्धर्मातिदेशः। प्रतिषेधस्य प्राप्तिपूर्वकत्वात्। ननु यथासोमे 'यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ति' इत्यत्र सोमऋजीषस्यावभृथदेशनयनं प्रतिपत्तिर्विधीयते तथाऽत्रापि तुषनिष्कासयोरवभृथदेशे प्रतिपत्तिरेव विधीयतामिति

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

दार्शपूर्णमासिकेऽपांव्युत्सकरूपेऽवभृथे गुणविधिरिति पूर्वपक्षः। दर्शपूर्णमासयोः प्रकृतित्वेन ततस्सर्वे-ष्वङ्गेषु प्राप्तेषु अपां व्युत्सेकोऽपि प्राप्नोति। तत्रैव गुणविधाने सन्निहितत्वं सुरक्षितं भवेत् इत्याह—एवं सन्निहितेति। अतिदेशेन व्युत्सकेस्य प्राप्तत्वात्सन्निहितमित्यर्थः। शङ्कते—नन्विति। दर्शपूर्णमासयोरपां व्युत्सेकः कीर्तितः, न त्ववभृथ इति शङ्कार्थः। समाधत्ते—उच्यत इति। 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यपां व्युत्सेकमेतच्छब्देन परामृश्य तस्यावभृथत्वं स्पष्टं कीर्तितमित्यर्थः।

## भाष्यम्

### सिद्धान्तः

एवं प्राप्त इदमाह-तथावभृथस्सोमात् । यथा षडहात्पृष्ठानामतिदेश एवं सौमिकादवभृथादिह धर्मातिदेशः । कुतः ? अभिहितो न्यायः-उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यादिति ( जै० सू० ७.३.१.) ॥ १२ ॥

## प्रकृतेरिति चेत् ॥ ७.३.१३ ॥

अथ यदुक्तम्-दार्शपूर्णमासिकेऽवभृथे गुणविधिर्भवत्विति, तस्य कः परिहार इत्याभाषान्तं सूत्रम् ॥ १३ ॥

## न भागित्वात् ॥ ७.३.१४ ॥

नैतद्युक्तम् । कुतः ? यतो नास्ति दर्शपूर्णमासयोरवभृथः । ननु 'एष वै दर्शपूर्णमासयोरव-

## वार्तिकाभरणम्

साम गायति, नाध्वगमनमन्त्रं जपति" इति केषाञ्चिद्धर्माणां प्रतिषेधदर्शनमनुपपन्नं स्यात्, प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । तस्मादवभृथशब्दो धर्मातिदेशकः ॥ १२ ॥

## तन्त्रशिखामणिः

तन्न; सोमे हि 'अवभृथेन चरन्ति' इति वाक्यान्तरेणावभृथदेशविशिष्टगमनस्य विधानादनुवादसम्भवेऽप्यत्र तथाऽभावात् न तत्सम्भवः । प्रतिपत्तित्वाच्च स्विष्टकृद्वत् अन्यार्थस्याप्यन्यत्र विनियोगोऽपि न विरुद्धः ॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

एवं पूर्वपक्षे प्राप्ते सिद्धान्तयति—**तथेति** । यथा षडहात्पृष्ठानामतिदेशे हेतुरभिहितः, तथेहाप्यवभृथात्सौमिकाद्धर्मातिदशः । दृष्टान्तमात्रकथनेन किं प्रयोजनम् ? न्यायः क इत्यत आह—**अभिहितो न्याय** इति । नित्याग्निहोत्रान्मासाग्निहोत्रेऽतिदेशस्य यो न्यायः स एवात्रापीत्यर्थः ॥ १२ ॥

शङ्कते—**अथेति** वरुणप्रघासेषु या इष्टयस्ता दर्षपूर्णमासविकृतयः । ततोऽङ्गेष्वतिदेशेन प्राप्तेषु अपां व्युत्सेकोऽपि प्राप्तः, तत्र वारुण्यादिगुणविधानमिति यदुक्तं तस्य कः परिहार इति सम्बन्धः । **आभाषान्तं सूत्रम्** शङ्कापर्यन्तं सूत्रमित्यर्थः ॥ १३ ॥

शङ्कां निरस्यति—**नैतद्युक्तमिति** । दर्शपूर्णमासयोरवभृयो यदि वर्तेत ततस्तत्र गुणविधानं युक्तम् । अतिदेशेनापां व्युत्सेकः प्राप्तः, तत्र कथं वारुण्यादिगुणविधानं भवेत् ? तदिदमाह—**नास्तीति** । शङ्कते—**नन्विति** ।

## भाष्यम्

भृथः' इति श्रूयते। सत्यं श्रूयते। न त्वेवमवभृथत्वमस्य भवति। कथम्? उच्यते-'एष वै दर्शपूर्णमासयोरवभृथः' (तै. सं. १.५.३) इत्येतस्य द्वयी वचनव्यक्तिः-निर्ज्ञातावभृथस्य वा पदार्थस्य दर्शपूर्णमाससम्बन्ध उच्यते? देवदत्तो यज्ञदत्तस्य पुत्र इति, निर्ज्ञातपुत्रत्वस्य देवदत्तस्य यज्ञदत्तसम्बन्ध उच्यते? निर्ज्ञातसम्बन्धस्य वा अनिर्ज्ञातावभृथत्वस्यावभृथत्वम्। यथा अयमाम्रो यज्ञदत्तस्य पुत्र इति, निर्ज्ञातयज्ञदत्तसम्बन्धस्याम्रस्य पुत्रत्वमुच्यते। तदस्यापां व्युत्सेकस्य दर्शपूर्णमाससम्बन्धः प्रकरणान्निर्ज्ञातो नावभृथत्वम्। अतोऽवभृथत्वमुच्यते। न चायमवभृथः। नन्वयमप्यवभृथो भवतु। नैतद्युक्तम्; अन्यायो ह्यनेकार्थत्वम्। कथं तर्हि शब्दप्रयोगः? सादृश्यात्। किं सादृश्यम्? अप्सुसम्बन्धः। स एष भक्त्या प्रशंसावादोऽपां व्युत्सेकस्य-अवभृथ इवायमिति।

## भाष्यसन्दर्भयोजिनी

'एष वैदर्शपूर्णमासयोरवभृथः' इति वाक्ये एतच्छब्दार्थोऽपांव्युत्सेकोऽवभृथ इति श्रवणेन अपां व्युत्सेकोऽवभृथ इति ज्ञायत इत्यर्थः। सत्यं समानाधिकरण्यं श्रूयते एतेनापां व्युत्सेकस्यावभृथत्वं कथं ज्ञायते इत्याह--**सत्यं श्रूयत इति**। यदा हि एष इति अवभृथ इति च समानविभक्त्या शब्दौ श्रूयेते तदा एतच्छब्दार्थस्यावभृथत्वं कथं नाम न ज्ञायेत इति पृच्छति—**कथमिति**। शान्त्योत्तरयति—**उच्यते** इति। त्वया प्रदर्शितस्य वाक्यस्य **द्वयोवचनव्यक्तिः** वाक्यार्थद्वयमित्यर्थः। भवतीति शेषः। तत्र प्रथमां प्रदर्शयति—**निर्ज्ञातावभृथस्येत्यादिना उच्यत** इत्यन्तेन। प्रथमाया वचनव्यक्तेर्दृष्टान्तः—**देवदत्त** इति। 'एष वै दर्शपूर्णमासयोरवभृथः' इति वाक्यम् किं अवभृथः क इति निर्ज्ञाते तस्य दर्शपूर्णमाससम्बन्धं बोधयितुं प्रवृत्तं वा? यथा देवदत्तनिष्ठपुत्रत्वे ज्ञातेऽनन्तरं यज्ञदत्तसम्बन्धस्तथेति प्रथमा वचनव्यक्तिः। द्वितीयां वचनव्यक्तिं प्रदर्शयति—**अनिर्ज्ञतित्यादिना उच्चत इत्यन्तेन**। किमिदं वाक्यं निर्ज्ञातदर्शपूणमाससम्बन्धस्यापां व्युत्सेकस्यानिर्ज्ञातावभृथत्वस्यावभृथत्वं बोधयितुं प्रवृत्तम्? यथा-अयमाम्रो यज्ञदत्तस्य पुत्र इति इदंशब्देन कञ्चनाम्रतरुं निर्दिश्य अयमाम्रो यज्ञदत्तीयः पुत्रः। अत्राम्रस्य यज्ञदत्तस्य च सम्बन्धः प्रागेव निर्ज्ञातः, किन्तु तस्य पुत्रत्वं न निर्ज्ञातम्। अनिर्ज्ञातं पुत्रत्वमुच्यते तथा वेति द्वितीया वचनव्यक्तिः। अयं भावः—'एष वै दर्मपूर्णमासयोरवभृथः इति वाक्ये इदंशब्दस्य दर्शपूर्णमासयोः इत्यनेन यथा सम्बन्धः, तथैवावभृथः इत्यस्यापि तत्सम्बन्धः प्रतीयते। 'दर्शपूर्णमासयोः' इति षष्ठीविभक्त्योभयोस्सम्बन्धे प्रतीयमानेऽपि नाङ्गाङ्गिभावो निर्णेतुं शक्यः, तन्निर्णयाय श्रुतिलिङ्गादिष्वन्यतमस्य प्रमाणस्यावश्यकत्वात्। एतद्वाक्यगत एतच्छब्दः पूर्वपरामर्शकः। परामर्शस्तु पूर्वं विहितस्यैव भवति पूर्वं विहितश्चापां व्युत्सेकः। अतस्तस्य दर्शपूर्णमाससम्बन्धो निर्ज्ञातः, अवभृथस्य दर्शपूर्णमाससम्बन्धः षष्ठीयोगेन ज्ञातव्यः। स च सम्बन्धः कीदृश इति न निर्ज्ञात इति अपां व्युत्सेकस्य षष्ठ्या दर्शपूर्णसम्बन्धे ज्ञाते तस्याङ्गत्वे प्रमाणं दर्शयति—**प्रकरणादिति**। **निर्ज्ञातः** दर्शपूर्णमाससम्बन्धोऽङ्गाङ्गिभावतया निर्ज्ञात इत्यर्थः। षष्ठ्यावभृथस्य दर्शपूर्णमास सम्बन्धे ज्ञातेऽपि **अवभृथत्वं न निर्ज्ञातम्** इति। अनिर्ज्ञातत्वादभृथत्वमुच्यत इत्यर्थः। **न चायमवभृथः** अपां व्युत्सेकस्यावभृथत्वोक्तावपि नायमवभृथो भवतीत्यर्थः। अपां व्युत्सेकोऽपि कश्चनावभृथो भवत्विति शङ्कतेः**नन्विति**। निरस्यति-**नेति**। एकस्य शब्दस्य सति सम्भवे एकेनैवार्थेन भवितव्यमिति न्यायादित्यर्थः। अपां व्युत्सेकस्यावभृथत्वाभावे कथं तत्रावभृथशब्दः प्रयुज्यत इत्यत आह-**सादृश्यादिति**। अप्सम्बन्धस्योभयत्रसत्वात् तत्सादृश्य-

भाष्यम्

यथा-आम्रे पुत्रवादः । तस्मान्नास्ति दर्शपूर्णमासयोरवभृथः । अतो नात्र गुणविधिः ॥ १४ ॥

## लिङ्गदर्शनाच्च ॥ ७.३.१५ ॥

लिङ्गञ्चैतमर्थं दर्शयति । किं लिङ्गं भवति ? एवमाह-'नायुर्दा जुहोति न साम गायति, न वा गमनमन्त्रं जपति' इति सौमिकावभृथधर्माणां प्रतिषेधं ब्रुवंस्तद्धर्मप्राप्तिं दर्शयति । तस्मात्सौमिकादवभृथाद्धर्मप्रदेश इति ॥ १५ ॥

इति वरुणप्रघासेषु सौमिकावभृथधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

## द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ ७.३.१६ ॥

वार्तिकाभरणम्

द्रव्यादेशे तद्दव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥

वारुणप्राघासिकस्यावभृथस्य स्थिते कर्मान्तरत्वे स चावभृथः किं चोदकप्राप्तपुरोडाशद्रव्यकः ? किं वा तुषनिष्कासद्रव्यक इति विचार्यते । तत्रावभृथकर्म तावत् नामातिदेशप्राप्तपुरोडाशद्रव्यकम्, इतरथावभृथकर्म विधेयम्, तत्र तुषनिष्कासं विधेयमिति वाक्यं भिद्येत । तस्मात् तुषनिष्कासपदं यथाकथञ्चिन्नेतव्यमिति प्राप्ते

तन्त्रशिखामणिः

सू० द्रव्यादेशो तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥

सर्वत्रावभृथशब्देन कर्मान्तरे सौमिकावभृथधर्मातिदेश इति स्थितम् । तत्रैव प्रसङ्गादिदं चिन्त्यत इति सङ्गतिः । किं तत्कर्मान्तरं पुरोडाशद्रव्यकमुत तुषनिष्कासद्रव्यकम् ? इति संशयः । तत्रावभृथशब्देन सौमिकधर्मातिदेशकेन पुरोडाशप्राप्तेर्न तुषनिष्कासविधिसम्भवः । ननु प्रत्यक्षमुपदिष्टेन तुषनिष्कासेनातिदिष्टस्य

भाष्यसंदर्भयोजिनी

सम्बन्धेनावभृथशब्दप्रयोग इत्याह-स एष इति । भक्त्या लक्षणया गौण्या वा । आम्रे पुत्रत्वाभावेऽपि पुत्र इवेति यथा वादो भवति तथैवेत्यर्थः नात्रगुणविधिः वारुण्यादिगुणविधिर्नास्तीत्यर्थः ॥ १४ ॥

सौमिकावभृथधर्माणां केषाञ्चन प्रतिषेधरूपेण लिङ्गेन इदं ज्ञायते यदप्रतिषिद्धानामङ्गानामत्र प्राप्तिरिति । अतस्सौमिकावभृथधर्मातिदेश इत्यर्थः ॥ १५ ॥

इति वारुणप्रधासिकावभृथधर्मातिदेशाधिकरणम् ॥ ४ ॥

## भाष्यम्

### विषयः

वारुणप्रघासिकोऽवभृथस्सौमिकादवभृथाद्धर्माणां ग्राहक इत्युक्तम् ।

### संशयः

तत्र सन्दिह्यते-किं पुरोडाशद्रव्यकोऽवभृथः ? उत तुषनिष्कासद्रव्यकः ? इति ।

### पूर्वपक्षः

किं प्राप्तम् ? पुरोडाशद्रव्यक इति । कुतः नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतम्, न तु शक्यते विधातुम् । अवभृथोऽत्र विधीयते-'अवभृथं यन्ति'

## वार्तिकाभरणम्

ब्रूमः—न ह्यत्रावभृथं विधाय तत्र तुषनिष्कासं विधीयते येन वाक्यभेदः स्यात् । किन्तु तुषनिष्कासविशिष्टोऽवभृथ एव विधीयते। एवं च तुषनिष्कासपदं नानर्थकं भवति ! किञ्च तुषनिष्कासं प्रत्यक्षश्रुतम् पुरोडाशस्त्वानुमानिकः । आनुमानिकाच्च प्रत्यक्षश्रुतं बलीयः ।

## तन्त्रशिखामणिः

पुरोडाशस्य बाध एव युक्त इति चेन्न; नह्यत्रोपदिष्टेन तुषनिष्कासमात्रेण यागविधिश्शक्योऽवगन्तुम्, देवताया अत्राभावात् । न ह्यनिरूपितं कर्म विधातुं शक्यम् । न च विश्वजिदादिवत् विधीयतामिति वाच्यम्, तद्वत्प्रत्यक्षतो यज्यश्रवणात् अतोऽवभृथशब्दनिर्दिष्टाभ्यां द्रव्यदेवताभ्यां रूपवत्तया यागविधिर्वाच्य इति न निरूपकपुरोडाशबाधो युक्तः । तुषनिष्कासपदन्तु पुरोडाशावरुद्धे द्रव्यान्तरनिवेशासम्भवाद्यथाकथञ्चिन्नेयम् । अथवा पुरोडाशाबाधेन द्रव्यतया विधीयतामिति प्राप्ते,

## भाष्यसंदर्भयोजिनी

पूर्वाधिकरणविषयसन्दर्भं स्मारयति-इत्युक्तमिति । एतेनैतस्मिन् अधिकरणे स एवावभृथो विषय इति द्योतितं भवति ।

### संशयः

किमवभृथेऽस्मिन् पुरोडाशो द्रव्यम् ? उत तुषनिष्कासम् ? इति सन्देहस्येदं बीजम् सौमिकादवभृथादस्य धर्मग्राहकत्वे सिद्धे ततः प्राप्तैर्धर्मैस्सह पुरोडाशोऽपि प्राप्तः, अत्रत्यावभृथविधायकवाक्ये 'तुषैः' 'निष्कासेन' इति तृतीयान्तनिर्देशेन तुषनिष्कासस्य द्रव्यत्वमवबुध्यत इति ।

पूर्वपक्षं गृह्णाति-पुरोडाशद्रव्यक इति । नाम्ना अवभृथ इति नाम्ना । नाम्नोऽतिदेशकत्वं पूर्वमभिहितम् । इतराङ्गैस्सह पुरोडाशस्याप्यतिदेशात्तद्द्रव्यकत्वमवभृथस्येत्यर्थः । तुषनिष्कासस्य प्रत्यक्षश्रुतत्वं सत्यमि

### भाष्यम्

इति । यदि तुषनिष्कासमपरं विधीयते ततो वाक्यं भिद्येत-अवभृथं यन्ति तच्च तुषनिष्कासेनेति । तुषनिष्कासमिदानीं किमर्थम् ? अनर्थकम्-सम्बन्धाभावात् ।

### सिद्धान्तः

एवं प्राप्ते ब्रूमः-द्रव्यादेशे तद्द्रव्यः । द्रव्यादेशे-एतस्मिंस्तुषनिष्कासेनावभृथं यन्तीति तद्द्रव्यस्स्यात्‌ तुषनिष्कासद्रव्यः । कुतः ? श्रुतिसंयोगात्-तुषनिष्कासं प्रत्यक्षश्रुतम् पुरोडाश-स्त्वानुमानिकोऽतिदेशेन प्राप्यते ।

ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुतः सामान्येन तु प्राप्यते, तुष-निष्कासन्तु विशेषेण । बाध्यते च सामान्यं विशेषेण । अपि च लक्षणया पुरोडाशो गम्यते श्रुत्या

### वार्तिकाभरणम्

ननु नाम्ना पुरोडाशोऽपि प्रत्यक्षश्रुतः । सत्यम् प्रत्यक्षश्रुतः । तथाप्यतिदिश्यमानेषु पदार्थेषु पुरो-डाशोऽपि सामान्याकारेण प्राप्यते । तुषनिष्कासं तु विशेषरूपेण प्राप्यते । सामान्याच्च विशेषो बलीयान् ।

### तन्त्रशिखामणिः

ब्रूमः—सर्वत्रोपदिष्टेतरविषयत्वादतिदेशस्य नात्र नामातिदेश चिन्ता युक्ता । यागस्य चातिदिष्टया देवतयोपदिष्टेन तुषनिष्कासेन च रूपवत्त्वसिद्धेर्न विध्यनुपपत्तिः । अत एव 'आज्येन शेषं संस्थापयति' इत्यत्र

### भाष्यसंदर्भयोजिनी

त्यङ्गीकृत्य तुषनिष्कासविधानं न भवितुमर्हतीति वदति वाक्यं भिद्येत इति । सम्बन्धाभावादनर्थकम् ।

### सिद्धान्तः

सिद्धान्तयति-द्रव्यादेशे तद्द्रव्य इति । यत्र यद् द्रव्यमुपदिष्टं तत्र सः तद्द्रव्यस्स्यात् । तुषनिष्कासं द्रव्यमत्र तृतीयानिर्देशेनोपदिष्टम् । अतोऽवभृथः तद् द्रव्यस्स्यादित्यर्थः । अत्र हेतुमाह-श्रुतिसंयोगादिति । तुषाणां निष्कासस्य च तृतीयाश्रुत्या संयोगात् तुषनिष्कासं प्रत्यक्षश्रुतम् । अतस्तदेव द्रव्यमवभृथे । पुरोडाशोऽपि प्रत्यक्ष-श्रुतः, किन्तु तस्यातिदेशेन प्राप्तत्वादानुमानिकत्वमेवेत्याह-पुरोडाशस्येति । शङ्कते-नन्विति । यद्यपीति । पुरोडाशो नाम्ना प्रत्यक्षश्रुतः तथापि सामान्येन तु प्राप्यते । तुषनिष्कासन्तु विशेषेण प्राप्यते । विशेषशास्त्रं सामान्यस्य बाधकमिति प्रदर्शयति-बाध्यते चेति । उपसंहरति-तस्मादिति ।

## भाष्यम्

तुषनिष्कासम् । श्रुतिलक्षणयोश्च श्रुतिर्न्याय्या । तस्मात्तुषनिष्कासद्रव्यक इति ।

अथ यदुक्तम्-न सम्बध्यतेऽवभृथेन तुषनिष्कासं वाक्यभेदादिति । तत्र ब्रूमः-यद्यवभृथं विहाय तुषनिष्कासं विधीयते ततो वाक्यभेदस्स्यात्, तुषनिष्कासद्रव्यकोऽवभृथश्चोद्यते । तथा सगुणकर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्ग्रहणमनर्थकमेव स्यात् । तस्मात्तुषनिष्कासद्रव्यकः । पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । यद्यत्र प्रत्यक्षश्रुतं न द्रव्यं स्यात् ततः पुरोडाशः तत्प्रकृतित्वात्स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम् । तस्मान्न पुरोडाशः ॥ १६ ॥

इति वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

## वार्तिकाभरणम्

किञ्चावभृथशब्देन पुरोडाशप्राप्तिर्लक्षणया तुषनिष्कासप्राप्तिस्तु शक्त्या । तस्मात्तुषनिष्कासद्रव्यक एवावभृथः । यत्त्वश्रुतद्रव्यकं कर्मान्तरं तदेव पुरोडाशद्रव्यकम्, न तु श्रुतद्रव्यम् ॥ १६ ॥

वृत्तमधिकरणम्

## तन्त्रशिखामणिः

स्ववाक्यश्रुतेनाज्येन द्रव्यवत्तया देवतया च रूपवत्त्वसम्भवाद्यागविधिरङ्गीकृतः । ततश्च श्रुत्यास्मिन्नेन कर्मणि विशिष्य च चोदितेन तुषनिष्कासेनावभृथशब्देन लक्षणया सर्वावभृथधर्मसाधारणे च प्राप्नुवतः पुरोडाशस्य बाध एव युक्त इति दिक् ॥

वृत्तमधिकरणम्

## भाष्यसंदर्भयोजिनी

तुषनिष्कासस्यापि विधाने पूर्वपक्षिणा कृतं वाक्यभेदापादनमनुवदति-अथेति । परिहरति-यद्यवभृथमिति । अवभृथोद्देशेन तुषाणां निष्कासस्य च विधाने स्याद्वक्यभेदः, किन्तु विशिष्टविधिरङ्गीक्रियत इत्याह-तुषेति । तुषनिष्कासं द्रव्यं यस्य सोऽवभृथो विधीयत इत्यर्थः । विशिष्टविधानमिति यावत् । गुणविशिष्टावभृथश्चेद्विधीयते तर्हि कोऽपि न विरोध इत्याह-अविरुद्धमिति । एवं विशिष्टविध्यनङ्गीकारे दोष इत्याह-अविधीयमाने इति । अनादेशे अनुपदिष्ट इत्यर्थः । तत्प्रकृतित्वात् । सौमिकावभृथप्रकृतित्वात्पुरोडाशः प्रकृतेः प्राप्नोतीत्यर्थः । अस्यैव विवरणम्-यद्यत्रेति । उपसंहरति तस्मादिति ॥ १६ ॥

इति वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

## भाष्यम्

## गुणविधिस्तु न गृह्णीयात्समत्वात् ॥७.३.१७॥

### विषयः

आतिथ्ये श्रूयते 'वैष्णवो नवकपालो भवति' (श. ब्रा. ३.४.१.१५) इति। तथा राजसूये पूर्वस्मिंस्त्रिकसंयुक्ते 'वैष्णवस्त्रिकपालः' (श. ब्रा. ५.२.५.४) इति।

### वार्तिकाभरणम्

#### गुणविधिस्तु न गृह्णीयात्समत्वात्

आतिथ्येष्टौ श्रूयते—'वैष्णवो नवकपालो भवती'ति। तथा राजसूये श्रूयते 'पूर्वस्मिंस्त्रिकसंयुक्ते 'वैष्णवस्त्रिकपाल'इति। तत्र संशयः राजसूये पुनश्श्रूयमाणो वैष्णवशब्दः आतिथ्यधर्माणां ग्राहको न वेति। तत्रउक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति न्यायेन वैष्णवशब्दो धर्मग्राहक इति प्राप्ते ब्रूमः—यत्र योगो न सम्भवति तत्रैव पुनरुच्चार्यमाणश्शब्दो धर्मग्राहक इत्युक्तम्। वैष्णवशब्दश्च आतिथ्ये यथा विष्णुलक्षण-

### तन्त्रशिखामणिः

सू० गुणविधिस्तु न गृह्णीयात् समत्वात् ॥

अवभृथशब्दवत् वैष्णवशब्दोऽप्यतिदेशक इत्युत्थितेस्सङ्गतिः। आतिथ्येष्टौ श्रूयते-'वैष्णवो नवकपालः' इति। तत्र 'आश्ववालः प्रस्तरः' 'ऐक्षव्यौ विधृती' इत्यादयो धर्माश्च श्रुताः। तथा राजसूये श्रूयते-वैष्णवस्त्रिकपालः' इति। तत्र किं वैष्णवशब्द आतिथ्यावैष्णवधर्मातिदेशको नेति विशये विहितधर्मकेऽन्यत्र दृष्टश्शब्दः अन्यत्राविहितधर्मके श्रूयमाणोऽवभृथशब्दवद्धर्मातिदेशक इति प्राप्ते, ब्रूमः-प्रायणीयशब्दवद्वैष्णवशब्दस्यापि विष्णुरूपगुणविधायकतया श्रुतिसम्भवे ।त्रकपालं वैष्णववत्कुर्यादिति गौणवृत्या श्रवणानौचित्यात् न धर्मातिदेशकः। ननु मुख्यार्थसम्भवे गौण्या नातिदेशकत्वमिति न्यायो यौगिकप्रायणीयादिनामधेय एव व्युत्पादितः तद्गुणविधौ पुनर्व्युत्पाद्यत इति चेन्न; तत्र हि प्रायणीयशब्दः क्लृप्तेन योगेनैवान्यत्रापि नामत्वसम्भवेनानुवादको न तु विधायकः, येन बह्वर्थलाभादतिदेशकस्स्यात्। इह तु वैष्णवशब्दोऽन्यतो देवतालाभासम्भवेनावश्यं

### भाष्यसन्दर्भयोजिनी

पूर्वस्मिन्नधिकरणेऽवभृथशब्दस्यातिदेशकत्वं निरूपितम्। तद्वत् वैष्णवशब्दस्यातिदेशकत्वमस्ति न वेति विचाराय विषयवाक्यं निर्दिशति-वैष्णव इति। आतिथ्येष्टिविधायकमिदं वाक्यम्। ज्योतिष्टोमे सोमस्य राज्ञः क्रयणानन्तरं तस्मिन् यजमानगृहानागते तदातिथ्याय क्रियमाणेयमिष्टिरातिथ्येष्टिरभिधीयते। सा च नवसु कपालेषु संस्कृतपुरोडाशद्रव्यका विष्णुदेवताका भवति। इयमिष्टिः दर्शपूर्णमासविकृतिः। किन्त्वत्र विशेषरूपेण कानिचनाङ्गानि—'आश्ववालः प्रस्तरः' (श. ब्रा. ३.४.१.१७) 'कार्ष्मर्यमयाः परिधयः' (श. ब्रा. ३.४.१.१६ ऐक्षव्यौ विधृती' (श. ब्रा. ३.४.१.१८.) इत्यादीनि। एवं विष्णुदेवताकः त्रिकपालपुरोडाशद्रव्यको यागो

## भाष्यम्

### संशयः

तत्र विचारः त्रिसंयुक्ते 'वैष्णवस्त्रिकपालः' इति वैष्णवशब्दः, अयमातिथ्यधर्माणां ग्राहको नेति ।

### पूर्वपक्षः

किं युक्तम् ? ग्राहक इति । कुतः ? विहितधर्मके कर्मणि दृष्टश्शब्दोऽन्यस्मिन्नविहितधर्मके श्रूयमाणो धर्माणां ग्राहक इत्युक्तम्-'उक्तं क्रियाभिधानम्' इत्यत्र । तत्रायमपि विहितधर्मक आतिथ्ये दृष्टः । इदानीमविहितधर्मके त्रिसंयुक्ते दृश्यते । तस्माद्धर्माणां ग्राहक इति ।

### वार्तिकाभरणम्

देवतागुणविधायकः तथैव राजसूयेऽपि तादृशगुणविधायकः । ननु प्रायणीयादिशब्दानां योगेन मुख्यत्वसम्भवात् गौण्या अतिदेशकत्वमन्याय्यमित्युक्तमिति । न्यायेनैव वैष्णवशब्दस्याप्यनतिदेशकत्वस्य सिद्धत्वात् किमर्थमिदमधिकरणमिति चेत्-सत्यम्, प्रायणीयशब्दस्य सिद्धप्रायस्यानुवादकत्वेन विधायकत्वाभावात् युक्तमनतिदेशकत्वम् ।

### तन्त्रशिखामणिः

विधायक इत्यङ्गीकार्यम्, ततश्च बह्वर्थलिप्सयास्यातिदेशकत्वं युक्तमित्यधिकशङ्कायां यत्र बाधकं नास्ति तत्रैव विधेरधिकविषयत्वं वक्तुमुचितम् । तनश्च प्रकृते वैष्णवशब्दस्य श्रुतिविरोधरूपबाधकसत्वान्न गौण्याश्रयणेन बह्वर्थलिप्सयातिदेशकत्वं युक्तम् । अत एव 'एतद् ब्राह्मण एककपालः' इत्यत्र न्यायत एव

### भाष्यसन्दर्भयोजिनी

राजसूयेऽपि विहितः । तत्र पूर्वत्रिसंयुक्त उत्तरत्रिकसंयुक्तश्चेति त्रयस्त्रयो यागा विहिताः । पूर्वत्रिकसंयुक्ते आग्नावैष्णवमेकादशकपालः ऐन्द्रावैष्णवः चरुः वैष्णवः त्रिकपाल इति त्रयो यागाः । उत्तरत्रिकसंयुक्ते च वैष्णवयागो नास्तीति भेदज्ञानाय पूर्वस्मिंस्त्रिकसंयुक्ते इति । अयमपि दर्शपूर्णमासप्रकृतिक एव, तथापि विशेषाङ्गानां आतिथ्यायां वैष्णवनवकपाले विहितत्वाद् राजसूयान्तर्गतत्रिकपालस्य विष्णुदेवताकत्वात् अत्रत्यवैष्णवशब्द आतिथ्यधर्मग्राहको न वेति सन्देहो जायत इति विचारं दर्शयति—तत्रेति ।

### पूर्वपक्षः

अग्निहोत्रन्यायेन धर्मग्राहकत्वं पूर्वपक्षयति—विहितेति । विहितधर्मके कर्मणि नित्याग्निहोत्रे दृष्टश्शब्दः अग्निहोत्रशब्दः अन्यस्मिन्नविहितधर्मके मासाग्निहोत्रे । इत्युक्तं नामातिदेशाधिकरणे । ननु तत्राग्निहोत्रपदमुभयत्र कर्मसमानाधिकरणमिति धर्मग्राहकत्वमुचितम् । प्रकृते तु नवकपालः त्रिकपाल इति शब्दौ द्रव्यसमानाधिकरणौ । कथमत्र धर्मग्राहकत्वमिति चेन्न, त्रिकपालद्रव्यकं कर्म वैष्णवनवकपालद्रव्यककर्मवत्कुर्यादित्यस्मिन्नर्थे तात्पर्यात् । अयमपि वैष्णवनवकपालोऽपि । दृष्टः सधर्मकः श्रुतः । त्रिसंयुक्ते श्रुतस्त्रिकापालस्त्वधर्मकः । अतोऽयं धर्मग्राहक इत्युपसंहरति—तस्मादिति ।

## भाष्यम्

### सिद्धान्तः

एवं प्राप्ते ब्रूमः-गुणविधिस्तु न गृह्णीयात्समत्वात् । गुणविधिरयम् । आतिथ्यस्य गुणं विष्णुदेवतासंयोगं विदधाति । स एष धर्मान् ग्रहीतुं न शक्नोति । कुतः ? समत्वात्-समो ह्ययमातिथ्ये त्रिसंयुक्ते च । यथा तत्र विष्णुदेवतां विदधाति एवमत्रापि ।

श्रुत्यर्थासम्भवाच्च लक्षणया धर्माणां ग्राहकः कल्प्यते । इह च प्रत्यक्षश्रुत्यर्थ एव सम्भवति देवताविधिः । तस्मान्नायं ग्राहक इति ॥१७॥

इत्यातिथ्यागतवैष्णवशब्दस्य धर्मानतिदेशाधिकरणम् ॥६॥

## वार्तिकाभरणम्

वैष्णवशब्दस्य तु विधायकत्वात् बह्वर्थविधानसिध्यर्थमतिदेशकत्वमेव वक्तव्यमिति विशेषाशङ्कानिराकरणार्थमिदमधिकरणम् ॥ १७ ॥

वृत्तमधिकरणम्

## तन्त्रशिखामणिः

वैश्वदेविकधर्मप्राप्तेर्वचनानर्थक्यरूपबाधकसत्वान्न वैश्वदेविकब्राह्मणातिदेशकत्वम् । किन्तु वारुणप्रघासिकैककपालब्राह्मणातिदेशकत्वम् । तस्माच्छ्रुतिविरोधरूपबाधकसत्वाद् वैष्णवशब्दस्य न बह्वर्थलिप्सयातिदेशकत्वमिति व्युत्पादनायेदमधिकरणमित्याहुः । अन्ये तु त्रिकपाले एकदेवत्वादिसामान्यादाग्नेयधर्मप्राप्तिरन्ये तु विष्णुदेवत्यत्वावान्तरसामान्यान्नवकपालधर्मप्राप्तिरित्याहुः । तदयुक्तम्; पूर्वोत्तरपक्षयोः प्रयोजनभेदाभावेनैतदधिकरणवैयर्थ्यादनन्यथासिद्धलिङ्गमन्तरेण विकृतेर्विकृत्यन्तरप्रकृतित्वायोगात् अन्यथा बह्वर्थलिप्सया एककपालादीनामेककपालत्वाद्यवान्तरसामान्येनैव वैश्वदेविकैककपालविकृतिसिद्धे 'स्वरसामेककपालामिक्षञ्च लिङ्गदर्शनात्' इत्यधिकरणानर्थक्यप्रसङ्गाच्चेत्याहुः ।

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

'वैष्णव'शब्दस्तद्धितान्तो देवतारूपगुणसमर्पकः नाग्निहोत्रवन्नामधेयम् येनास्य धर्मग्राहकत्वमुच्येत इति सिद्धान्तमाह—**गुणविधिरयम्** इति । यथातिथ्ये देवतासंयोगार्थं वैष्णव'शब्दस्तथा त्रिकसंयुक्ते त्रिकपालेऽपीत्युभयत्र समानमिति न धर्मग्राहकत्वमित्याह—**समत्वादिति** ।

धर्मग्राहकत्वं यत्र भवति तत्र तल्लाक्षणिकमेव श्रुत्या न भवितुमर्हतीत्याह—**श्रुत्यर्थेति** । प्रकृतवैष्णवशब्दश्च तद्धितश्रुत्या देवतामेव वदति । श्रौतार्थग्रहणेन कार्ये सिध्यति किमिति लाक्षणिकार्थग्रहणप्रयास इत्याह—**इह चेति** ॥१७॥

इत्यातिथ्यागतवैष्णवशब्दस्य धर्मानतिदेशाधिकरणम् ॥६॥

भाष्यम्

७

## निर्मन्थ्यादिषु चैवम् ॥७.३.१८॥

विषयः

पशावग्नोषोमीये धर्मवान्निर्मन्थ्योऽग्निराम्नातः। 'साध्या वै देवाः' (तै. सं. ६.३.५) इत्यारभ्याग्नौ श्रूयते 'निर्मन्थ्येनेष्टकाः पचन्ति' इति। तथा दर्शपूर्णमासयोर्बर्हिराज्ये धर्मवती। पशौ श्रूयते 'बर्हिषा यूपावटमवस्तृणाति' इति 'आज्येन यूपमनक्ति' इति।

संशयः

तत्र सन्देहः-किं निर्मन्थ्यादयश्शब्दा धर्माणां ग्राहका नेति।

तन्त्रशिखामणिः

सू० निर्मन्थ्यादिषु चैवम् ॥

आतिदेशिकी सङ्गतिः। पशावधिमन्थनशकलनिधानादिधर्मवान्निर्मन्थ्योऽग्निः। ततस्तथाग्नौ श्रूयते-'निर्मन्थ्येनेष्टकाः पचन्ति' इति। तथा दर्शपूर्णमासयोर्लवनादिधर्मकं बर्हिः विलापनादिधर्मकमाज्यञ्चाम्नातम्। पशौ 'यूपावटमवस्तृणाति' 'आज्येन यूपमनक्ति' इति श्रूयते। ततः किं निर्मन्थ्यशब्दः पाशुकनिर्मन्थ्यधर्माणां बर्हिराज्यशब्दौ च दार्शपौर्णमासिकबर्हिराज्यधर्माणामतिदेशका न वेति विशये वैष्णवशब्दस्यानतिदेशकत्वेऽपि चोदनालिङ्गेनैव दार्शपूर्णमासिकाग्नेयविध्यन्तप्राप्तेः त्रिकपालस्येतिकर्तव्यताकाङ्क्षा पूर्यते। निर्मन्थ्यबर्हिराज्यशब्दानामनतिदेशकत्वे निर्मन्थ्यादीनां कथमुत्पादनमित्याकाङ्क्षानुवृत्तेस्सद्यो मथिताग्नेर्यौगिक-

भाष्यसन्दर्भयोजिनी

विषयः

पूर्वाधिकरणन्यायमतिदेष्टुं विषयं प्रदर्शयति—**पशाविति**। **धर्मवान्** 'अग्नेर्जनित्रमसीत्यग्निमन्थनशकलं निदधाति' इत्यादिना विहितधर्मवानित्यर्थः। तथा **अग्नौ** चयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इति निर्मन्थ्यशब्दः श्रुतः। एवं दर्शपूर्णमासयोः बर्हिराज्ये **धर्मवती** लवनोत्पवनादिधर्मवती। एवमेव पशौ निर्धर्मके बर्हिराज्ये 'बर्हिषा यूपावटमवस्तृणाति' 'आज्येन यूपमनक्ति' इति श्रुते।

संशयः

यूपः अवट्यते खन्यते यस्मिन् गर्ते स यूपावटः, तं बर्हिषा स्तृणातीत्यर्थः। निर्मन्थ्याधिकरणे च निर्मन्थ्यबर्हिराज्यशब्दानां प्रवृत्तिनिमित्तं सिद्धान्तितम्। तत्र निर्मन्थ्यशब्दस्य यौगिकत्वेन पशावग्नौ च विद्यमाननिर्मन्थ्यशब्दयोः तुल्यत्वात् एकत्र सधर्मकत्वम् अपरत्राधर्मकत्वमिति हेतोः धर्मग्राहकत्वमस्ति न वेति संशयः। बर्हिराज्यशब्दयोरप्येवमेव।

## भाष्यम्

### सिद्धान्तः

तत्राधिकरणातिदेशः क्रियते । निर्मन्थ्यादिषु चैवम् यथा वैष्णवशब्दे अत्राप्ययं यौगिको निर्मन्थ्यशब्दः सद्योनिर्मथितमग्निमाह । तथा बर्हिराज्यमिति द्रव्यशब्दौ । ते त्रयोऽपि स्वार्थं विधाय चरितार्था भवन्ति, धर्मान् ग्रहीतुं न शक्नुवन्ति । तस्मान्न ग्राहकाः ।।१८।।

इति निर्मन्थ्यादिशब्दानां धर्माननतिदेशाधिकरणम् ।।७।।

## वार्तिकाभरणम्

### निर्मन्थ्यादिषु चैवम्

अग्नीषोमीये पशौ 'साध्या वै देवा अस्मिन् लोक आसन्' इत्यनुवाके निर्मन्थ्योऽग्निर्विहितः । तद्धर्माश्च 'अग्नेर्जनित्रमसी'त्यधिमन्थनशकलनिधानादय आम्नाताः । अग्नौ श्रूयते-'निर्मन्थ्येनेष्टकाः पचन्ती'ति । तथा दर्शपूर्णमासयोर्बर्हिराज्यं च विधाय बर्हिर्धर्मा लवनादय आज्यधर्मा उत्पवनादयश्च आम्नाताः । पशावम्नायते

## तन्त्रशिखामणिः

स्यापि निर्मन्थ्यशब्दस्य जातिवचनत्वेन नामत्वाभावेऽपि बर्हिराज्यशब्दयोरतिदेशकत्वं स्यात् । अन्यथाकाङ्क्षापूरणाभावादिति विशेषशङ्कायामतिदिश्यते-निर्मन्थ्यादिषु चैवमिति । श्रुतिसम्भवे गौणीं वृत्तिमाश्रित्य नातिदेशकत्वं युक्तम् । लोकत एव तेषामुत्पादनोपादानादिप्रकारस्य सिद्धेराकाङ्क्षापूरणादिति । ननु यूपावटास्तरणबर्हिरादावपि चोदकतः प्राप्तिस्स्यादिति प्रापय्य यूपावटास्तरणबर्हिरादीनामप्राकृतकार्यत्वात् न चोदकतो धर्मप्राप्तिरित्युक्तम् । इह तु बर्हिरादिपदानामनतिदेशकत्वान्न धर्मप्राप्तिरित्युच्यते इति न पौनरुक्त्यमित्याहुः ।

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

तत्रेति । पूर्वाधिकरणसिद्धान्तस्यातिदेशः क्रियत इति पूर्वपक्षस्य नातीव प्रयोजनमिति सिद्धान्तं प्रदर्शयति—यथेति । 'वैष्णवो नवकपालः' वैष्णवस्त्रिकपालः' इत्यत्र वैष्णवशब्दस्य यौगिकत्वाद्धेतोर्यथा धर्मग्राहकत्वं नास्तीत्युक्तं एवं निर्मन्थ्यशब्दस्यापीत्यर्थः । बर्हिराज्यस्य यौगिकत्वाभावेऽपि द्रव्यवाचित्वं तुल्यमिति दर्शयति—तथेति । अत इमे त्रयोऽपि शब्दा धर्मग्राहका न भवन्ति । ननु पूर्वाधिकरणेनैव सिद्धेऽधिकरणान्तरस्य किं प्रयोजनमिति चेद् विशेषाशङ्कानिवारणायेति ब्रूमः । दृष्टान्ते वैष्णवशब्दस्यानतिदेशकत्वेऽपि प्रकृतयागस्य दर्शपूर्णमासविकृतित्वेन धर्मलाभाद्वैष्णवशब्दस्य धर्माननतिदेशकत्वमुचितम्, बर्हिराज्यस्य प्रकृतिविकृतित्वाभावादेकत्र सधर्मकत्वमपरत्र निर्धर्मकत्वमिति हेतोः धर्मग्राहकत्वं भवत्विति विशेषाशङ्कायां तन्निवारणायेदमधिकरणमिति भावः ॥ १८ ॥

इति निर्मन्थ्यादिशब्दानां धर्माननतिदेशाधिकरणम् ॥ ७ ॥

भाष्यम्

८

## सौमिकन्तु प्रणयनमवाच्यं हीतरत् ॥७.३.१९॥

विषयः

चातुर्मास्येषु श्रूयते-'द्वयोः प्रणयन्ति तस्माद् द्वाभ्यामेति' इति। अस्ति तु सोमे प्रणयनं धर्मवत्। तथा दर्शपूर्णमासयोरधर्मकम्।

वार्तिकाभरणम्

'बर्हिषा यूपावटमवस्तृणाति आज्येन यूपमनक्तो'ति। तत्र संशयः-किं निर्मन्थ्यबर्हिराज्यशब्दा धर्मातिदेशका न वेति। तत्र वैष्णवशब्दस्यातिदेशकत्वाभावेऽपि त्रिसंयुक्तस्येष्टित्वादेव दार्शपौर्णमासिकानां धर्माणां चोदकेन लाभाद्युक्तं तस्यानतिदेशकत्वम्। प्रकृते च निर्मन्थ्यबर्हिराज्यशब्दानामतिदेशकत्वाभावे प्रकारान्तरेण धर्मलाभाभावात् निर्मन्थ्येनेष्टका; पचन्तीत्यादिविधयः साकाङ्क्षाः स्युः। तस्मात् निर्मन्थ्यादिशब्दानामतिदेशकत्वमिति प्राप्ते ब्रूमः- निर्मन्थ्यादीनां लोकत एव धर्मलाभात् निर्मन्थ्यादिशब्दानां श्रुत्या योगसम्भवे गौण्या धर्मातिदेशकत्वं न न्याय्यम्।

वृत्तमधिकरणम् ॥ ७ ॥

अत्र भाष्यकारेण—प्रणयनन्तु **सौमिकमवाच्यं हीतरत्, उत्तरवेदिप्रतिषेधश्च तद्वत्, प्राकृतं वाऽनामत्वात्, परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा** इति चतुर्भिस्सूत्रैरेकमधिकरणम्, **प्रथमोत्तमयोः प्रणयन-**

तन्त्रशिखामणिः

सू० सौमिकन्तु प्रणयनमवाच्यं हीतरत् ॥

निर्मन्थ्यशब्दस्य यौगिकत्वेनानतिदेशकत्वेऽपि प्रणयतिशब्दस्य [प्रकर्षानयन] रूपार्थे यौगिकस्याप्यति- देशकता स्यादित्युत्थितेस्सङ्गतिः। सोमे हि प्रणयनमुत्तरवेद्यादिधर्मकमुक्तम्। दर्शपूर्णमासयोश्चाधर्मकं प्रणयनमुक्तम्। वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयरूपपर्वचतुष्टयात्मकचातुर्मास्यप्रकरणे च 'द्वयोः प्रणयन्ति तस्माद् द्वाभ्यामेति' इति सार्थवादकं प्रणयनमुक्तम्। तत्सन्निधौ च 'उत्तरवेद्यामग्निं निदधाति'

### भाष्यसन्दर्भयोजिनी

विषयः

चातुर्मास्येषु सन्ति चत्वारि पर्वाणि-वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि। इमानि दर्शपूर्णमासविकाराणि इष्टिरूपत्वात्। तत एवातिदेशेनाङ्गानि प्राप्नुवन्ति। किन्तु अग्निप्रणयनं सोमे धर्मवदुपदिष्टम् दर्शपूर्णमासयोस्त्वधर्मकम्। सोमेऽग्नीषोमीये चतुर्थदिने उत्तरवेदिं निर्माय प्राग्वंशशालायां विद्यमानोऽग्निरुत्तरवेद्यां प्रणीयते। प्रणीतोऽग्निराहवनीयो भवति, प्राग्वंशशालास्थोऽग्निः गार्हपत्यो भवति। इदञ्च प्रणयनं धर्मवत्। दर्शपूर्णमासयोस्तु गार्हपत्याग्नेः कश्चिदंश आहनीयकुण्डे दक्षिणाग्निकुण्डे चानीयते। इदमानयनमेव प्रणयनमभिधीयते। चातुर्मास्येषु च 'द्वयोः प्रणयन्ति' इति विहितं प्रणयनमेतदधिकरणविषयः। इदं प्रणयनं धर्मानपेक्षते-कथं कर्तव्यमिति। धर्माश्च सौमिकप्रणयने दृश्यन्ते न दर्शपूर्णमासयोः। दर्शपूर्णमासवि- कृतित्वञ्च चातुर्मास्यानां न ज्योतिष्टोमविकृतित्वम्।

## भाष्यम्

### संशयः

तत्र सन्देहः-किं सौमिकमेतत्प्रणयनम् ? उत दार्शपूर्णमासिकम् ? इति ।

### पूर्वपक्षः

तत्र सूत्रेणैवोपक्रमः सौमिकन्तु प्रणयनम् अवाच्यं ह्रीतरत् । सौमिकमेतत्प्रणयनम् । किं कारणम् ? अवाच्यं हीतरत् दार्शपौर्णमासिकम्, चोदकेन प्राप्तत्वात् । कथं पुनरयं प्रणयतिशब्दः प्रणयनमात्रवचनः सन् सौमिकं प्रणयनविशेषं शक्नोति वक्तुम् ? लक्षणयेति ब्रूमः । तीर्थ-

## वार्तिकाभरणम्

मुत्तरवेदिप्रतिषेधात्, मध्यमयोर्वा गत्यर्थवादात्, औत्तरवेदिकोऽनारभ्यवादप्रतिषेध इति त्रिभिस्सूत्रैरपर-मधिकरणमित्येवं सप्तापि सूत्राणि द्वयपरतया व्याख्यातानि । तथाहि—

सौमिकन्तु प्रणयनमवाच्यं हीतरत् ।

चातुर्मास्येषु श्रूयते— "द्वयोः प्रणयन्ति; तस्माद्द्वाभ्यामेतीति" । अस्ति चाग्निप्रणयनं सधर्मकं सोमे ।

## तन्त्रशिखामणिः

इत्यग्निनिधानानुवादेनोत्तरवेदिर्विनियुक्ता । वरुणप्रघासावान्तरप्रकरणे च वाक्यान्तरेण 'उपात्र वपन्ति' इत्युत्तरवेद्युत्पत्तिराम्नाता । वाक्यान्तरेण च 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति श्रुतम् । तत्र द्वयोः प्रणयन्तीत्यत्राधिकरणद्वयं भाष्यकारेण विचारितम् तदुच्यते ।

द्वयोः प्रणयन्तीत्यत्र किं दार्शपूर्णमासिकं चोदकप्राप्तं प्रणयनमनुकीर्त्यते ? किं वा सौमिकप्रणयनसदृशं प्रणयनं विधीयते ? इति विशये सौमिकं सौमिकप्रणयनधर्मकं प्रणयनं विधीयते इतरत् प्राकृतं प्रणयनं चोदक-प्राप्तत्वादवाच्यम् । न च प्रणयतिशब्दः प्रणयनसामान्यवचनो न तु सौमिकप्रणयनस्य नामधेयं येन स परत्र

## भाष्यसन्दर्भयोजिनी

### संशयः

अतस्सन्देहो जायते—किं सौमिकमेतत्प्रणयनम् ? उत दार्शपूर्णमासिकम् ? इति । एतत् चातुर्मास्यान्तर्गतम् ।

### पूर्वपक्षः

तत्र सूत्रेणैवोपक्रमः सूत्रेणैव पूर्वपक्षस्योपक्रमः क्रियत इति शेषः । सूत्रं पठति—सौमिकन्त्विति । एतत् चातुर्मास्यसम्बन्धि । सौत्रं कारणमुपस्थाप्य तद्विवृणोति—चोदकेन प्राप्तत्वादिति । दर्शपूर्णमासविकृति-त्वाच्चातुर्मास्यानां तत एवाङ्गानां चोदकेन प्राप्तत्वात्पुनः दार्शपौर्णमासिकं प्रणयनमिति कथनं निरर्थकमित्यर्थः । अप्राप्ते शास्त्रमर्थवदिति न्यायेनाप्राप्तबोधने शास्त्रस्य प्रयोजनं सिध्यतीति सौमिकधर्मग्राहकमेवैतत्प्रणयन-मुचितमित्यर्थः । सौमिकप्रणयनस्यैव ग्राहकश्चातुर्मास्यीयप्रणयतिशब्द इति कथमवसीयते ? यदा हि प्रणयन्तीति शब्दस्सामान्यवचन इत्यत आह—प्रणयनविशेषमिति । निर्विशेषं न सामान्यमिति न्यायादिति भावः ।

भाष्यम्

शब्दवत्। तद्यथा-तीर्थशब्दस्तीर्थमात्रवचनस्सन् तीर्थविशेषं धर्मसाधनं क्वचिद् ब्रूते तीर्थयात्रां गत इति ॥१९॥

## उत्तरवेदिप्रतिषेधश्च तद्वत् ॥७.३.२०॥

'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' (मै. सं. १.१०.७) इति प्राप्तिपूर्वो हि

वार्तिकाभरणम्

तथा दर्शपूर्णमासयोरधर्मकं प्रणयनमस्ति। तत्र संशयः-किमिदं सौमिकं प्रणयनम् उत दार्शपौर्णमासिकमिति। तत्र सौमिकमेवेदं प्रणयनं न दार्शपौर्णमासिकम्। तस्य चोदकप्राप्तत्वेन तत्परत्वे वचनमनर्थकं स्यात्। तस्मात् प्रणयनमात्रवचनोऽपि प्रणयनशब्दोऽर्थवत्त्वाय सधर्मकसौमिकप्रणयनपरः। किञ्च 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति प्रतिषेधः श्रूयते। प्रतिषेधश्चोत्तरवेदिप्राप्तौ सत्यां·····घटते। उत्तरवेदिश्च सौमिकप्रणयने प्राप्नोति न दार्शपौर्णमासिके। तस्मात् सौमिकमेवेदं प्रणयनमिति प्राप्ते ब्रूमः—

दार्शपौर्णमासिकमेवेदं प्रणयनम् न सौमिकम्। न हि प्रणयतिशब्दः सौकिमप्रणयनस्य नामधेयम्; किन्तु प्राङ्नयनमात्रस्य। प्राङ्नयनञ्च चोदकादेव प्राप्तम्। तस्माच्चोदकप्राप्तं दार्शपौर्णमासिकं प्रणयनमनुवदति। 'द्वयोः प्रणयन्ती'ति यदुक्तम्-दार्शपौर्णमासिकप्रणयनपरत्वे वचनमनर्थकं स्यादिति तन्न; द्वयोरेव पर्वणोरिदं प्रणयनम् न चतुर्ष्विति पुनश्श्रवणस्य परिसङ्ख्यार्थपरत्वेनोपपत्तेः। परिसङ्ख्यायाः त्रैदोष्यात् पुनश्श्रवणं गुणार्थत्वासम्भवाद् अर्थवादार्थं वा 'द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेतीति। नन्वर्थवाद एव निष्प्रयोजन इति चेदर्थवादस्य प्रयोजनमग्रिमाधिकरणे वक्ष्यामः॥ १९-२०॥

तन्त्रशिखामणिः

श्रूयमाणस्तद्धर्मातिदेशकः स्यात् इति वाच्यम्। प्रणयनसामान्यस्य चोदकप्राप्तत्वेन पुनर्वचनवैयर्थ्यात्, तदर्थवत्वाय सामान्यवचनस्यापि शब्दस्य लक्षणया विशेषपरत्वावधारणात्। तस्मात् सौमिकप्रणयनधर्मकं प्रणयनं विधीयते।

सू० उत्तरवेदिप्रतिषेधश्च तद्वत्॥

'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इत्युत्तरवेदिप्रतिषेधः श्रूयते। प्रतिषेधश्च प्राप्तिपूर्वकः, उत्तरवेदिप्राप्तिश्च सौमिके प्रणयने न प्राकृत इति प्रतिषेधलिङ्गादपि सौमिकधर्मकं प्रणयनमिति प्राप्त उच्यते—

भाष्यसन्दर्भयोजिनी

सौमिकप्रणयनमभिधया प्रणयन्तीतिशब्दः कामं न वदतु किन्तु लक्षणया तत्प्रतिपादयितुं शक्नोत्येवेत्याह—लक्षणयेति। अत्र दृष्टान्तः—तीर्थशब्दवदिति। तीर्थशब्दो निखिलतीर्थवाचकस्सन्नपि तीर्थयात्रां गत इत्यत्र तीर्थविशेषबोधक इति यथा समाश्रीयते तथा प्रणयनविशेषोऽत्र समाश्रीयत इत्यर्थः।

पूर्वपक्षी स्वाभिमतपोषणाय साधकं वाक्यमुपस्थापयति—न वैश्वदेव इति। इदं वाक्यं वैश्वदेवे शुनासीरीये चोत्तरवेद्युपवापं निषेधति। उत्तरवेदिश्चास्ति ज्योतिष्टोमे। ज्योतिष्टोमश्च चातुर्मास्यानां न

## भाष्यम्

**प्रतिषेधो भवति । सौमिके च प्रणयन उत्तरवेदिः, न दार्शपौर्णमासिके ॥२०॥**

## वार्तिकाभरणम्

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ।**

द्वयोः प्रणयन्तीत्यत्रैव सन्देहः । किं ययोः कयोरिदं प्रणयनम् ? उत प्रथमोत्तमयोः ? उताहो मध्यमयोः ? इति । विशेषे नियामकाभावादनियम इति प्रथमः पूर्वः पक्षः । "न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय" इत्युत्तरवेदिप्रतिषेधः प्रथमोत्तमयोः दृश्यते । उत्तरवेदिप्राप्तौ सत्यां प्रतिषेधोऽवकल्पते प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । उत्तरवेदिश्च प्रणयनाङ्गतया प्राप्नोति । एवञ्च यत्र प्रणयनं तत्रोत्तरवेदिः । तत्र प्रतिषेध उपपन्नो भवति । प्रतिषेधश्च प्रथमोत्तमयोर्दृश्यत इति प्रतिषेधबलात् प्रथमोत्तमयोरेवेदं प्रणयनमिति द्वितीयः पूर्वः पक्षः । द्वितीयपूर्वपक्षे चोत्तरवेदिप्राप्तेस्तत्प्रतिषेधस्य च प्रथमोत्तमपर्वमात्रविषयतया उत्तरवेदेर्विहितप्रतिषेधत्वात् विकल्पो बोध्यः ।

सिद्धान्तस्तु मध्यमयोरेव प्रणयनं 'द्वयोः प्रणयन्ति; तस्माद्द्वाभ्यामेतो'ति गतिसाधनत्वसंस्तवात् गतिसाधनत्वञ्च मध्यमयोरेव ज्ञायते । 'ऊरू वा एतद्यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चे'ति वरुणप्रघासानां साकमेधानाञ्चोरुत्वसंस्तवात् । अथ यदुक्तं 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्युत्तरवेदिप्रतिषेधात् प्रथमोत्तमयोरेव प्रणयनमिति, तन्न; चातुर्मास्यप्रकरणे "उपात्र वपन्ति" इत्युत्तरवेदेराम्नानेन चतुर्ष्वपि पर्वसु उत्तरवेद्यां प्राप्तायां तस्याः प्रथमोत्तमयोः प्रतिषेधोपपत्या प्रतिषेधस्य प्रथमोत्तमयोः प्रणयनव्यवस्थापकत्वाभावात् ।

ननु वरुणप्रघासगुणाभिधानावसरे 'उपात्र वपन्ति' इत्युत्तरवेद्याम्नानेनावान्तरप्रकरणादुत्तरवेदेर्वरुणप्रघासार्थत्वमेव । तथा च कथमुपात्र वपन्तीत्यविशेषेण चतुर्षु पर्वसु प्राप्तायामुत्तरवेद्यां तत्प्रतिषेधपरम् 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति वाक्यमित्युक्तम्, उच्यते-यद्यत्रोपात्रवपन्तीति वचनं वरुणप्रघासविषयं स्यात् तदा 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इतिवन्न साकमेधेष्विति साकमेधपर्वापि कीर्त्येत । न चेदं कीर्त्यते । तस्मादविशेषेण पर्वचतुष्टयविषयमेवेदं उपात्र वपन्तीति वाक्यम् । अथ तर्हि उपात्र वपन्तीत्यनेनोत्तवेदिप्राप्तिर्मध्यमयोरस्तु, मैवम्-इदं हि वाक्यं महाप्रकरणेन चातुर्मास्यविषयम्; अवान्तरप्रकरणेन वरुणप्रघासविषयं वा भवितुमर्हति, न तु पर्वद्वयविषयम् पर्वद्वयविषयत्वे प्रमाणाभावात् । तस्माच्चतुर्ष्वपि पर्वस्वविशेषेण प्राप्ताया उत्तरवेदेः पर्युदासार्थमिदं वचनम् । तस्मात् प्रथमोत्तमयोः प्रतिषेधस्यान्यथासिद्धत्वेन तद्बलात् प्रणयनस्य प्रथमोत्तमयोर्व्यवस्थानुपपत्तेर्गत्यर्थवादान्मध्यमयोरेवेदं प्रणयनम् ।

ननु चोदकप्राप्तस्य प्रणयनस्य पुनश्श्रवणमर्थवादार्थमित्युक्त्वा अर्थवादस्य किं प्रयोजनमित्यपेक्षायामुत्तराधिकरणे वक्ष्याम इत्युक्तम् । किं तदिति चेदुच्यते । अत्र हि 'उत्तरवेद्यामग्निं निदधाति' इत्युत्तरवेदिलक्षणो गुणः श्रूयते । तस्य गुणस्य मध्यमयोरुपसंहारः प्रयोजनम् । यदि चोदकप्राप्तं प्रणयनं 'द्वयोः प्रणयन्ती'ति नानुकीर्त्येत तदा चतुर्ष्वपि चोदकप्राप्ताग्निनिधानसद्भावादुत्तरवेद्याम् अग्निं निदधाती'त्यग्निनिधानानुवादेन विधीयमान उत्तरवेदिलक्षणो गुणः चतुर्ष्वपि स्यात् । तस्मान्मध्यमयोरुत्तरवेद्युपसंहार एवार्थवादस्य प्रयोजनम् ।

## भाष्यसन्दर्भयोजिनी

प्रकृतिः । अतस्तस्मादङ्गानां प्राप्तिर्नास्ति, तथापि 'न वैश्वदेव' इत्युत्तरवेदेर्निषेधबलेन तत्प्राप्तिरनुमातव्या भवति, अन्यथा निषेधानुपपत्तिरित्याह—**प्राप्तिपूर्वो हीति** । अतः सौमिकमेवैतत्प्रणयनम् ॥२०॥

भाष्यम्

सिद्धान्तः

## प्राकृतं वाऽनामत्वात् ॥७.३.२१॥

प्राकृतं वैतत्प्रणयनम्, दार्शपौर्णमासिकम् । कुतः ? अनामत्वात् । प्रणयनशब्दस्सौमि-

टुप्टीका

प्राकृते प्रणयने स्थिते 'परिसङ्ख्यार्थं श्रवणम्' इत्येवमादीनि सूत्राणि परस्परेणासम्बद्धानि । कथम् ? यदा परिसङ्ख्या भवति तदा द्वयोः प्रणयनाभावादाहवनीयाभावः । आहवनीयाभावाद्यागाभावः । न च दर्शपूर्णमासयोः प्रणयनं धर्मवत्, येन धर्मपरिसङ्ख्यायां कृतायां प्रणयनं केवलं क्रियेत । गुणार्थमपि नोपपद्यते । कथम् ? यत्र तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयते । यथा 'दध्ना जुहोति' 'शरमयं

वार्तिकाभरणम्

अत्र यद्भाष्यकारेण प्रथमाधिकरणे प्राकृतमेवेदं प्रणयनमिति सिद्धान्तितम् । तस्मिन् सिद्धान्ते स्वीक्रियमाणे 'परिसङ्ख्यार्थं श्रवणं' 'गुणार्थमर्थवादो वा' । 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्' 'मध्यमयोर्वा गत्यर्थवादात् औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति चत्वार्यपि सूत्राण्यसम्बद्धानि स्युरिति दूषयितुं भाष्यकारीयप्रथमाधिकरणसिद्धान्तसूत्रं पठति प्राकृतं वानामत्वात् इति ।

सूत्राण्यसम्बद्धानीति वक्तुं प्रतिजानीते—प्राकृत इति । तत्र परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वेति सूत्रस्यासम्बन्धं प्रतिपादयन् परिसङ्ख्यापक्षं दूषयति—यदेति । यदा परिसङ्ख्या द्वयोरेव प्रणयनं न चतुर्ष्विति तदा इतरयोर्द्वयोः प्रणयनस्याभावादाहवनीयो न स्यात् । आहवनीयाभावाद्यागो न स्यात् । तस्मात् परिसङ्ख्यापक्षो न सम्भवतीत्यर्थः । ननु नेयं प्रणयनपरिसङ्ख्या येन यागो न स्यात् किन्तु प्रणयनधर्मपरिसङ्ख्यैवेत्यत आह—न चेति । न चेदं दार्शपूर्णमासिकं प्रणयनं धर्मवत् । येन धर्मपरिसङ्ख्यायां कृतायामपि केवलमधर्मकं प्रणयनमितरयोः पर्वणोः क्रियेतेति यागः सिध्येदित्यर्थः । परिसङ्ख्यापक्षं दूषयित्वा गुणार्थं श्रवणमिति पक्षं दूषयति—गुणार्थमपीति । गुणविधानार्थं पुनश्श्रवणमिति यदुक्तं तदपि नोपपद्यत इत्यर्थः । तदेवोपपादयति—यत्रेति । यत्र प्रदेशे तस्मिन् गुणविधायकत्वेन सम्मते वाक्ये गुणिनं प्रधानमुद्दिश्य तादर्थ्येन गुणो विधीयते । यथा दध्ना जुहोतीत्यत्र दधिलक्षणगुणो विधीयते, शरमयं बर्हिर्भवति इत्यत्र

तन्त्रशिखामणिः

सू० प्राकृतं वाऽनामत्वात् ॥

नात्र सौमिकधर्मकं प्रणयनं विधीयते । प्रणयतिशब्दस्यासुबन्तत्वात् क्रियासामानाधिकरण्याभावाच्च

भाष्यसन्दर्भयोजिनी

सिद्धान्तः

दार्शपौर्णमासिकमेवैतत्प्रणयनम् न सौमिकम् । तत्र हेतुः—अनामत्वादिति । सोमे प्रणयनशब्दो

## भाष्यम्

**कस्य प्रणयनस्य न नामधेयम्। नैतत्तस्य वाचकमित्यर्थः। यद्ययं तस्य वाचकस्स्यात्ततस्तदिह ब्रूयात्। इदन्तु पदार्थनामधेयं पदार्थस्य प्राङ्नयनस्य वाचकम्। यस्य वाचकं तदिह शक्नोत्यग्नेः**

## टुप्टीका

बर्हिर्भवति' तत्र भवति गुणविधिः। इह प्रणयनमुच्चार्य न कश्चिद्विधीयते। उत्तरवेदिविधिश्चे त्-तन्न; प्रणयन-वाक्याद्वाक्यान्तर उत्तरवेदिग्रहणात्। अर्थवादोऽप्यनुपपन्नः, यत्र विधिस्तत्रार्थवादः। प्रणयनं दर्शपूर्णमासयो-र्विधीयते, इह त्वविधानात्किमर्थवादेन ?

'मध्यमयोर्वा गत्यर्थवादात्' इति वरुणप्रघाससाकमेधयोर्विधीयमाने पुनः श्रवणादुपपद्यत एवार्थ-

## वार्तिकाभरणम्

बर्हिरुद्दिश्य शरमयलक्षणगुणो विधीयते। तत्र प्रदेशे गुणविधिः। प्रकृते च प्रणयनमुद्दिश्य न कश्चिद्गुणो विधीयते। द्वयोः प्रणयन्तीत्यत्र गुणस्याश्रवणादित्यर्थः। "उत्तरवेद्यामग्निं निदधाति" इति श्रवणादुत्तरवेदि-लक्षणो गुणः प्रणयने विधीयतामिति शङ्कते—**उत्तरवेदीति**। "उत्तरवेद्यामग्निं निदधाति" इति वाक्यान्तरे उत्तरवेदिः श्रूयते, न प्रणयनवाक्ये। यद्येकस्मिन् वाक्ये प्रणयनमुत्तरवेदिश्च विद्येत तत्र प्रणयनानुवादेन उत्तरवेदिलक्षणगुणविधानं सम्भवति। तथा प्रकृते नास्तीति परिहरति—**तन्नेति**। अर्थवादार्थं पुनश्श्रवणमिति यदुक्तं तन्न सम्भवति। अर्थवाद एवायं न भवति येन पुनश्श्रवणमर्थवादार्थमित्युच्यते। यत्र प्रणयनं विधीयते तत्र तदेकवाक्यतया अर्थवादः। प्रकृते च प्रणयनं न विधीयते; दर्शपूर्णमासयोरेव प्रणयनस्य विहितत्वात्। किन्तु अनूद्यते। तथा च नायमर्थवादः। विध्यभावेन प्ररोचनापेक्षाभावादित्याह—**अर्थवाद इति**।

अत्रैवार्थवाददूषणप्रसङ्गात् प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति भाष्यकारीयद्वितीयाधि-करणपूर्वपक्षसूत्रमुल्लङ्घ्य सिद्धान्तसूत्रं पठित्वा दूषयति—**मध्यमयोर्वा गत्यर्थवादादितीति**।

इदं सिद्धान्तसूत्रमनुपपन्नमित्यर्थः। अनुपपत्तिमेवाह—**विधीयमान इति**। वरुणप्रघाससाकमेधेषु विधीयमाने प्रणयने प्रणयनविध्येकवाक्यतया तावदुपपद्येतेत्यर्थः। अत्र प्रणयनस्यानुवादेन विधानाभावात् तदेकवाक्यत्वाभावात् कथमयमर्थवादः ? न चेदर्थवादः कथं मध्यमयोः प्रणयनं व्यवस्थापयति। तस्मात् प्राकृते प्रणयने स्थिते नेदं सूत्रं सङ्गच्छतामित्यर्थः।

## तन्त्रशिखामणिः

सौमिकप्रणयननामत्वाभावात्। अतः प्राकृतमेव प्रणयनमिह कीर्त्यते। ननु प्राप्तस्य पुनः श्रवणमनर्थकमित्युक्त-मित्यत आह—

## भाष्यसन्दर्भयोजिनी

यदि नामधेयं स्यात्तर्हि चातुर्मास्येषु श्रूयमाणः प्रणयनशब्दस्तद्धर्मग्राहकस्स्यात्, न च तन्नामधेयमित्यर्थः। किन्तु प्रणयनशब्दो यौगिकः प्रकर्षेण नीयत इति व्युत्पत्तिसिद्धो योऽर्थस्तदर्थवाचकः प्रणयनशब्दः। **न नामधेयम्** इत्यस्य विवरणम्—**नैतदिति**। एतत् चातुर्मास्यगतं प्रणयनपदम्। **तस्य** सौमिकप्रणयनस्य। ततः तादृशवाच्य-

## भाष्यम्

**प्राचीनं नयनं वक्तुम् । तच्चेहास्त्येव । तस्मात्तस्य वाचकः । एवं सन्निहितप्रत्ययो न बाधितो भवति ।**

## टुप्टीका

वादः । अस्मिन् पक्ष उक्तो दोषः परिसङ्ख्येति । 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्' इति । इदमपि कथम् ? प्रणयनेन प्राकृते प्रणयने स्थिते न सम्बध्यते । यत्र प्रणयनं तत्राग्निः, तत्रैव चोत्तरवेदिः प्राप्नोत्यग्निसंस्कारिका । सा यत्र प्रतिषिध्यते तत्राग्निर्निवर्तते । तत्र च प्रणयनम् । अनेन प्रतिषेधलिङ्गेन प्रथमोत्तमयोः प्रणयनम् । प्राकृते प्रणयने स्थिते संशयाभावः । अनियमपक्षस्य चानुत्थाने उत्तरवेदेश्चाप्रसङ्गात् । उत्तरवेदि-

## वार्तिकाभरणम्

ननु द्वयोः प्रणयन्तीत्येतत् चोदकप्राप्तप्राकृतप्रणयनानुवादकं न भवति, येन विध्येकवाक्यताभावादर्थवाद एवायं न भवेत् । किन्तु विधायकम् । तदेकवाक्यतया चायमर्थवादोऽस्तीत्यत आह—**अस्मिन् पक्षे इति ।** विधिपक्षे प्रणयनस्य चोदकप्राप्तत्वान्नापूर्वविधिस्सम्भवति । किन्तु परिसङ्ख्याविधिरिति वक्तव्यम् । तत्र परिसङ्ख्यैव दोष इति प्रागेवोक्तमित्यर्थः । इदानीं क्रमप्राप्तं द्वितीयाधिकरणपूर्वपक्षसूत्रं पठित्वा दूषयति—**प्रथमोत्तमयोरिति ।** प्रागेव सूत्रस्योपपादितत्वात् कथं सम्बन्ध इति पृच्छति—**कथमिति ।** सूत्रस्यासम्बन्धमुपपादयितुं सूत्रस्यार्थमाह—**प्रणयनेनेति ।** प्रणयनेनाग्निः प्राप्यते; अग्न्यर्थत्वात् प्रणयनस्य । ततश्च यत्र प्रणयनं तत्राग्निः तत्रोत्तरवेदिः प्राप्नोतीत्यर्थः । कुत इत्यत आह—**अग्नीति ।** यतस्सा उत्तरवेदिरग्निसंस्कारिका तस्मात् संस्कार्याग्न्यर्थत्वात् संस्कारकोत्तरवेदेः यत्राग्निस्तत्रोत्तरवेदिरित्येतदुपपद्यत इत्यर्थः । ततः किमित्यत आह—**यत्रेति ।** यत्रोत्तरवेदिः प्रतिषिध्यते तत्राग्निर्निवर्तत एव । उत्तरवेदिप्रतिषेधो हि उत्तरवेदिप्राप्तिमन्तरेण न सम्भवति । यत्रोत्तरवेदिः प्राप्यते तत्राग्निर्निवर्तत एव; उत्तरवेदेरग्न्यविनाभावात्, तत्रैव च प्रणयनम् । प्रणयनेन विनाग्न्यसम्भवात् इत्यर्थः । फलितार्थमाह—**अनेनेति ।** 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति; न शुनासीरीय' इति प्रथमोत्तमयोः वैश्वदेवशुनासीरीययोः उत्तरवेदिप्रतिषेधलिङ्गेन तयोरेव प्रणयनमिति सूत्रार्थ इत्यर्थः । सूत्रार्थमुक्त्वा प्राकृतं प्रणयनमिति भाष्यकारीयपूर्वाधिकरणसिद्धान्ते सूत्रस्यासम्बन्धमाह—**प्राकृतेति ।** द्वयोः प्रणयन्तीत्यत्र प्राकृतमेवेदं प्रणयनमिति स्थिते प्राकृते प्रणयने प्राकृतप्रणयनस्य चतुर्ष्वपि चोदकेन प्राप्तत्वात्कतरयोर्द्वयोरिति संशयस्याभावः । सति संशये ययोः कयोश्चिदित्यनियमपक्षस्योत्थितिः स्यात्; संशय एव नास्ति । कुतो वाऽनियमपक्षः प्रवर्तेत ? न चेदनियमपक्षः कथं वा तदुत्तरत्वेन प्रथमोत्तमयोरेव

## भाष्यसन्दर्भयोजिनी

वाचकभावे स्थिते सति प्रणयनपदमग्निहोत्रादिपदमिव न कर्मणो नामधेयम् । किन्तर्हि ? तदाह—**इदन्त्विति ।** **प्राङ्नयनस्य** पश्चिमायां दिशि विद्यमानाद्गार्हपत्यात् प्राच्यां दिशि विद्यमानाहवनीयकुण्डं प्रति अग्नेर्नयनस्येत्यर्थः । प्राङ्नयनरूपपदार्थवाचकत्वात्तादृशपदार्थस्यात्रापि सत्त्वात् सौमिकधर्मग्राहकतायाः कावश्यकतेति भावः । यदि तादृशधर्मग्राहकतोच्येत तर्हि सन्निहितार्थप्रत्ययपरित्यागस्स्यात्, असन्निहितार्थग्रहणञ्च भवेत् । सति सम्भवे सन्निहितार्थप्रत्ययस्य बाधो नेष्यत इत्याह—**सन्निहितप्रत्यय इति ।**

## भाष्यम्

**अथ यदुक्तं तीर्थशब्दवद्भविष्यतीति, तत्र ब्रूमः-तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते। तीर्थयात्रां गत इति तूक्त्वा कानिचित्तीर्थान्यनुक्रान्तानि। यतोऽसौ तद्विशिष्टार्थो विज्ञायते। यत्र**

## टुप्टीका

प्रतिषेधेन यः पक्षः प्रथमोत्तमयोरिति तस्य मूलाभावः। 'मध्यमयोर्वा गत्यर्थवादात्' इत्युक्तम्। अविधानात्प्रणयनस्यार्थवादो न घटते।

## वार्तिकाभरणम्

प्रणयनमिति व्यवस्था उपपद्येत? तस्मात् प्राकृते प्रणयने स्थिते असम्बद्धमिदं सूत्रं स्यादित्यर्थः। अत्र प्रणयनस्वरूपं न सन्दिह्यते; येन चतुर्ष्वपि चोदकेन प्रणयनप्राप्तेः कतरयोरिति सन्देहो न स्यात्; किन्तु चोदकेन चतुर्ष्वपि प्रणयनप्राप्तावपि द्वयोः प्रणयन्तीति वाक्यं कतरयोः पर्वणोः प्रणयनमनुवदतीत्यनुवाद एव सन्दिह्यते। तथा च प्राकृते प्रणयने स्थिते सन्देह उपपद्यते सन्देहसम्भवादनियमपक्षोऽप्युत्तिष्ठतीति चेदुच्यते। अनुवादस्य प्रयोजनाभावेन तद्विषयकविचारोऽनर्थक एव। न च ययोः पर्वणोः प्रणयनमनूद्यते तयोरेवोत्तरवेद्यामग्निं निदधातीति विधीयमानोत्तरवेदिर्भवतीति उत्तरवेद्युपसंहार एवानुवादस्य प्रयोजनमिति वाच्यम्। "उत्तरवेद्यामग्निं निदधाति" इत्यग्निनिधानानुवादेन विधीयमानाया उत्तरवेदेश्चतुर्ष्वपि चोदकप्राप्ताग्निनिधानसद्भावेन चतुर्ष्वपि प्राप्यमाणाया अनुवादेन द्वयोः पर्वणोर्नियन्तुमशक्यत्वात्।

अथ द्वयोः पर्वणोः प्रणयनस्यानूदितत्वेन सन्निहितत्वात् अग्निनिधानानुवादेन विधीयमानाप्युत्तरवेदिः प्रणयनानुवादः सन्निहितमेवाग्निनिधानमवलम्बते नाग्निनिधानमात्रमिति चेन्न; सन्निधानापेक्षया प्रकरणस्य बलीयस्त्वेन प्राकरणिकपर्वचतुष्टयगताग्निनिधानार्थत्वस्यैवोत्तरवेदेर्युक्तत्वात्। यदि च द्वयोः प्रणयन्तीति वाक्य एव उत्तरवेदिलक्षणो गुणश्श्रूयते; तदा प्रकरणापेक्षया वाक्यस्य प्रबलत्वात् द्वयोरेवोत्तरवेदिर्व्यवतिष्ठेत; न त्वेवमस्ति। तस्मात् प्राकृते प्रणयने स्थिते संशयाभावेनानियमपक्षस्याभावात् तदुत्तरत्वेन सूत्रं न सम्बद्धमेव। अनियमपक्षोत्तरत्वेन सूत्रमसम्बद्धमित्युक्त्वा भाष्यकारपक्षे सूत्रमनुपपन्नार्थकं चेत्याह—**उत्तरवेदेरिति**। यदीदं प्रणयनं प्राकृतमेव स्यात् तदा प्राकृतस्य प्रणयनस्योत्तरवेदेरभावेनोत्तरवेदेरप्रसक्तत्वादुत्तरवेदिप्रतिषेधेन लिङ्गेन प्रथमोत्तमयोरेव प्रणयनमिति यः पक्षः तस्य पक्षस्य मूलं नास्ति; मूलाभावात् प्रथमोत्तमयोः प्रणयनमिति पक्षप्रतिपादनार्थं सूत्रमनुपपन्नमित्यर्थः। भाष्यकारीयद्वितीयाधिकरणपूर्वपक्षसूत्रं दूषयित्वा मध्यमयोर्वा गत्यर्थवादात् इति सिद्धान्तसूत्रं प्रागेव दूषितमिति क्रमप्राप्तत्वात् स्मारयति **मध्यमयोरिति**। मध्यमयोर्वा गत्यर्थवादादित्यत्र सूत्रे उक्तं दूषणमिति शेषः। तदेव दूषणमाह—**अविधानादिति**। प्रणयनस्याविधानात् विध्येकवाक्यत्वाभावेनार्थवादा न घटत इत्यर्थः। अत्र भाष्यकारेण **'औत्तरवेदिकोऽनारभ्यवादप्रतिषेध'** इति सूत्रमानारभ्य कश्चित्पर्वविशेषं चातुर्मास्येषूत्तरवेदिराम्नाता 'उपात्र वपन्ति' इति। तस्याऽनारभ्यविधिरयं प्रतिषेध इति व्याख्येयम्।

## भाष्यसन्दर्भयोजिनी

सामान्यविशेषभावमाश्रित्य तीर्थशब्दोदाहरणं पूर्वपक्षिणा प्रदर्शितमनूद्य निरस्यति—**अथेत्यादिना**। तीर्थशब्दोऽपि तीर्थसामान्यमेव ब्रूते। नामग्राहं तीर्थविशेषो यावन्नोल्लिख्यते तावत्स शब्दस्सामान्यमेव

## भाष्यम्

तु केवलः प्रत्युज्यते तत्र तीर्थमात्रमेव ब्रूते। यथा 'तीर्थे स्नाति तीर्थमेव हि समानानां भवति'

## टुप्टीका

ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेवायं तेषामेवात्र वादस्स्यात्। कोऽयमर्थः? उपात्र वपन्तीति अवान्तरप्रकरणाद्वरुणप्रघासानामेवोत्तरवेदेः प्राप्तत्वात्प्रथमोत्तमयोः प्रतिषेधानुपपत्तिमाह। तत्र प्रतिषेधे त्रीण्यपि पर्वाण्यनुकीर्तयेत्। यद्यवान्तरप्रकरणेन वरुणप्रघासानामुत्तरवेदिस्तत्र त्रयाणामेवोत्तरवेदेरभावात् सर्वत्र कार्यः प्रतिषेधः सामर्थ्यादिति। न चायमनुवादः, यत्रार्थवादत्वेन प्रतिषेधस्तत्र नित्यानुवादो भवति। तस्मा-

## वार्तिकाभरणम्

ननु वरुणप्रघासानां गुणप्राप्तौ तेषामेवात्रेति वादः स्यादित्याशङ्क्य नेति ब्रूमः। प्रकरणाच्चातुर्मास्यानामेव। यदि वरुणप्रघासानां वादस्स्यात्तस्य प्रतिषेधे त्रीण्यपि पर्वाणि कोर्तयेदिति परिहृतम्। तत्राशङ्का तत्परिहारार्थत्वेन प्रवृत्तभाष्यस्यार्थे वर्ण्यमाने औत्तरवेदिकोऽनारभ्यवादप्रतिषेध इति सूत्रम्। प्राकृते प्रणयने स्थिते दूषित [त्वादि] त्यभिप्रायेण चोद्यभाष्यस्य परिहारभाष्यस्य चार्थं वक्तुं चोद्यभाष्यमनुवदति। शङ्काभाष्यस्य परिहारभाष्यस्यार्थः को वेति पृच्छति—**कोऽयमिति**। तत्र प्रथमम् 'उपात्र वपन्ति' इति वाक्यस्य वरुणप्रघासप्रकरणे आम्नातत्वेन अवान्तरप्रकरणेन वरुणप्रघासार्थत्वमेवेति, 'उपात्र वपन्ती'त्यस्यानारभ्यविधित्वाभावात् 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति प्रषेधो न तद्विषय इति शङ्काभाष्यस्यार्थमाह—**उपात्रेति**। उत्तरवेदेः प्राप्तत्वादिति ल्यब्लोपे पञ्चमी प्राप्तिमाशङ्क्येत्यर्थः। 'नेति ब्रूम' इत्यादिपरिहारभाष्यस्य तात्पर्यमाह—**प्रथमोत्तमयोरिति** 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति प्रथमोत्तमयोः प्रतिषेधेन लिङ्गेन शङ्काया अनुपपत्तिपरिहारं भाष्यकार आहेत्यर्थः।

ननु प्रथमोत्तमयोः प्रतिषेधेन शङ्काया अनुपपत्तिमाहेत्ययुक्तम् भाष्ये प्रतिषेधे त्रीण्यपि पर्वाणि कोर्तयेदित्येव परिहारोक्तेरित्याशङ्क्य तद्भाष्यस्यार्थं वक्तुमनुवदति—**तत्र प्रतिषेध इति**। भाष्यस्यार्थमाह—**यदोति**। यद्यवान्तरप्रकरणस्य महाप्रकरणापेक्षया बलीयस्त्वेन अवान्तरप्रकरणेन वरुणप्रघासानामेवोत्तरवेदिर्विहिता उपात्रवपन्तीत्यनेन, तथा सति वरुणप्रघासेष्वेव विधानसामर्थ्यात् वरुणप्रघासव्यतिरिक्तानां त्रयाणामपि पर्वणामुत्तरवेदेरभावात् सामर्थ्यात्प्राप्तः प्रतिषेधः त्रिष्वपि कार्यः स्यान्न प्रथमोत्तमयोरेव। एवं च प्रथमोत्तमयोः प्रतिषेधदर्शनमुपात्र वपन्तीत्यस्य वरुणप्रघासमात्रविषयत्वं बाधत इत्यर्थः। अवान्तरप्रकरणेन वरुणप्रघासविषयत्वं नास्तीत्यत्र युक्त्यन्तरमाह—**न चेति**। यद्यवान्तरप्रकरणेन उपात्र वपन्तीत्युत्तरवेदिः वरुणप्रघासेष्वेव स्यात्तदा न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय इति प्रथमोत्तमयोः श्रूयमाणः प्रतिषेधोऽनुवाद इति वक्तव्यम्। न चायमनुवादो भवितुमर्हति, आनर्थक्यादित्यर्थः। ननु 'न गिरा गिरेति ब्रूयादि'त्यत्र ऐरं कृत्वोद्गेयमिति गिरापदस्थाने

## भाष्यसन्दर्भयोजिनी

बोधयति। तीर्थशब्दस्य तीर्थमात्रवाचकत्वे प्रमाणं दर्शयति—**तीर्थे स्नातीति**। प्रणयनस्य धर्मग्राहकत्वं लक्षणयैव वाच्यम्, तदयुक्तं श्रुत्यर्थसम्भव इत्याह—**अपि चेति**। उपसंहरति—**तस्मादिति**।

## भाष्यम्

(तै. सं. ६.१.१.७) इति । अपि चाऽसम्भवति श्रुत्यर्थे लक्षणार्थो ग्राह्यः । सम्भवति चात्र

## टुप्टीका

दनारभ्य श्रवणाच्चातुर्मास्यानामुत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते । एवं प्राकृते प्रणयने सूत्राणि न घटन्त इत्यन्यथा वर्ण्यते ।

## वार्तिकाभरणम्

इरापदविधानादेव अर्थाद् गिरापदनिषेधस्य प्राप्तत्वेऽपि यथा प्रतिषेधोऽनूद्यते तथात्राप्यर्थप्राप्तस्यानुवादः किं न स्यादित्यत आह—यत्रेति । यत्र स्थले अर्थवादत्वेन दृश्यते प्रतिषेधः तत्रार्थप्राप्तस्य नित्यानुवादो युज्यते । प्रकृते तु न वैश्वदेव उत्तरवेदिमुपवपन्तीत्यस्य विध्यन्तरशेषत्वाभावादर्थवादत्वमेव न सम्भवतीति न नित्यानुवादत्वमुपपद्यत इत्यर्थः । उपसंहरति—तस्मादिति । उपात्र वपन्तीत्यस्यानारभ्यश्रवणाच्चातुर्मास्यानामेवोत्तरवेदिर्न वरुणप्रघासमात्रस्य । एवं च न 'वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्यनेन सर्वत्र प्राप्तोत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते । वैश्वदेवशुनासीरीयव्यतिरिक्ते पर्वद्वये उत्तरवेदिरितीत्यर्थः ।

एवं भाष्यार्थकथनेनैव 'औत्तरवेदिकोऽनारभ्य वादप्रतिषेध' इति सूत्रमपि न सम्बद्धमित्युक्तप्रायम् । तथाहि—"द्वयोः प्रणयन्ति" इति प्राकृतस्य प्रणयनस्य पुनः श्रवणम् । 'तस्माद् द्वाभ्यामेति' इति गत्यर्थवादवशात् मध्यमयोः पर्वणोरुत्तरवेद्यामग्निं निदधाति इति विहितामुत्तरवेदिं व्यवस्थापयतीति यदुक्तं भाष्यकारेण, यच्च 'उपात्र वपन्ति' इत्यस्यानारभ्यविधेरयं प्रतिषेध इति 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्यस्य पर्युदासत्वाभिधानं तदेतदुभयमपि परस्परविरुद्धम् । यद्युत्तरवेद्यामग्निं निदधाति इत्युत्तरवेदिविनियोगो 'द्वयोः प्रणयन्ति' 'तस्माद्द्वाभ्यामेति' इति सार्थवादप्रणयनपुनश्श्रवणेन मध्यमयोः पर्वणोः व्यवस्थाप्येत, तदा 'उपात्र वपन्ति' इत्यविशेषेण श्रुताया अप्युत्तरवेद्युत्पत्तेर्विनियोगानुसारेण मध्यमयोरेव पर्वणोर्व्यवस्थितत्वेन प्रथमोत्तमयोरुत्तरवेदेरप्रसक्तेः न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति प्रथमोत्तमवर्ज्यं मध्यमपर्वद्वय 'उत्तरवेदिमुपवपन्ती'ति पर्युदासोऽनर्थकः । यदि वा 'वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति पर्युदासबलात् मध्यमयोः पर्वणोरुपात्र वपन्तीत्युत्तरवेदिर्व्यवस्थाप्येत तदा उत्पत्त्यनुसारेण विनियोगस्य वर्णनीयतया 'उत्तरवेद्यामग्निं निदधाति' इति विनियोगस्यापि मध्यमयोः पर्वणोर्व्यवस्थितत्वात् सार्थवादपुनश्श्रवणस्य मध्यमयोः पर्वणोरुत्तरवेद्युपसंहारः प्रयोजनमित्येतदनुपपन्नं स्यात् । तस्मात् 'द्वयोः प्रणयन्ति' इति सार्थवादप्रणयनपुनश्श्रवणस्योत्तरवेद्युपसंहारलक्षणप्रयोजनाभिधानम् 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्यस्य पर्युदासत्वाभिधानं च परस्परविरुद्धमेव, अन्यतरेणैव मध्यमयोरुत्तरवेदिसिद्धेः । स्यादेतदेवम्-यद्यनारभ्य कञ्चित्पर्वविशेषं चातुर्मास्येषूत्तरवेदिराम्नाता उपात्र वपन्तीति तस्या अयं प्रतिषेध' इति भाष्यवाक्यम् 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्यस्य पर्युदासत्वाभिधानपरं स्यात् । न त्वेवमस्ति । किन्त्वनुवादत्वाभिधानपरम् । एवं च न परस्परव्याघात इति चेत्—तर्हि 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्र न सङ्गतं

## भाष्यसन्दर्भयोजिनी

'अवाच्यं हीतरदि'ति यदुक्तम् तत्राह-तस्य कः परिहार इत्यन्वयः । चातुर्मास्येषु प्रणयनशब्दस्य दार्शपौर्णमासिकप्रणयनवाचित्व आनर्थक्यादर्थवत्वाय सामान्यवचनस्यापि सौमिकप्रणयननामत्वमङ्गीकृत्य

## भाष्यम्

**श्रुत्यर्थः । तस्मान्न लक्षणार्थो ग्राह्य इति ॥२१॥**

## टुप्टीका

**इह हि त्रयः पक्षाः-किं दार्शिकं प्रणयनम् ? सौमिकम् ? अपूर्वं वा ? इति । दार्शिकमुत्सूत्रं पक्षं कृत्वा 'सौमिकन्तु प्रणयनम्' इत्यनेन वर्ण्यते। एवं तुशब्दोऽर्थवान् 'प्रणयनन्तु' 'उत्तरवेदिप्रतिषेधश्च' तद् भाष्य-**

## वार्तिकाभरणम्

स्यात् । तथाहि—यदुक्तं पूर्वपक्षवादिना प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति प्रतिषेधलिङ्गेन प्रथमोत्तमयोरेव प्रणयनमिति तस्य 'उपात्र वपन्ती'त्यनेन पर्वचतुष्टयेऽपि प्राप्ताया उत्तरवेदेः प्रतिषेधार्थत्वेन 'न वैश्वदेव' इत्यस्योपपत्तेः नेदं वचनं प्रथमोत्तमयोः प्रणयनव्यवस्थापकमित्येवं परिहारार्थमिदं सूत्रम्। इदं च न वैश्वदेव इत्यस्य पर्युदासत्व एव घटते, नानुवादत्वे। नन्वनेन सूत्रेण न वैश्वदेव इत्यस्यानुवादत्वमेव प्रतिपाद्यत इति चेन्न; तथा सति उपात्र वपन्ति इत्यस्यानारभ्यवादत्वाभावेऽपि न वैश्वदेव इत्यस्यानुवादत्वसम्भवेन सूत्रे अनारभ्यवादत्वोक्त्या आनर्थक्यप्रसङ्गात्।

ननु 'उपात्र वपन्तो'त्यस्यानारभ्यवादत्वाभ्युपगमेन वरुणप्रघासमात्रविषयत्वाभ्युपगमे, 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति विशिष्य प्रथमोत्तमयोरनुवादो नोपपद्यते। त्रिष्वपि पर्वसूत्तरवेदेरभावेन न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये न साकमेधेष्विति त्रिष्वपि पर्वसु निषेधानुवादस्य कर्तुमुचितत्वात्। अनारभ्यवादत्वे तु चतुर्ष्वपि पर्वसु प्राप्ताया उत्तरवेदेः 'द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेति' इति सार्थवादप्रणयनपुनश्श्रवणेन मध्यमयोरुपसंहारात् प्रथमोत्तमयोर्विशिष्य निषेधानुवाद उपपद्यते। तस्मात् सूत्रे अनारभ्यवादत्वोक्त्या आनर्थक्यं नास्तीति चेत्—तथा सति भाष्ये अथोच्येत द्वयोः पर्वणोर्वादो भवत्वित्युपात्र वपन्तीत्यस्य मध्यमपर्वद्वयविषयत्वमाशङ्क्य तत्र ब्रूमः—न द्वयोः पर्वणोः प्रकरणमिति। द्वयोः पर्वणोः प्रकरणाभावात् न पर्वद्वयविषयत्वमिति यत्परिहृतं तदसङ्गतं स्यात्। उपात्रवपन्तीत्यस्य मध्यमपर्वद्वयविषयत्वेऽपि प्रथमोत्तमयोः उत्तरवेद्यभावस्य विशिष्यानुवादोपपत्तेः। तस्मात् मध्यमपर्वद्वयविषयत्वनिराकरणेनानारभ्यवादत्वसमर्थनात् अनारभ्यवादत्वोक्तेः अनुवादोपपत्यर्थत्वमयुक्तमेव। नन्वेवमनारभ्यवादत्वोक्तेर्नास्त्यानर्थक्यम् उपसंहारार्थत्वेनार्थवादत्वादिति चेन्मैवम्, अस्य सूत्रस्य लिङ्गदर्शनान्यथाकरणार्थत्वेनोपसंहारार्थमनारभ्यवादत्वोक्त्ययोगात् भाष्यार्थकथनेनैव औत्तरवेदिकोऽनारभ्यवादप्रतिषेध इति। इदमपि सूत्रमसम्बद्धमित्युक्तप्रायमिति मत्वा चत्वार्यपि सूत्राणि प्राकृते प्रणयने स्थिते न सम्बद्धानीत्युपसंहरति—एवं प्राकृत इति। भाष्यकारीयव्याख्यानस्य दुष्टत्वात् सूत्रसप्तकमपि एकाधिकरणतया वर्ण्यत इति प्रतिजानीते—इत्यन्यथेति। तत्र द्वयोः प्रणयन्तीत्यत्र किमिदं प्रणयनं दार्शिकमुत सौमिकप्रणयनधर्मकं प्रणयनान्तरं आहोस्विदपूर्वमिति संशयमाह—इहेति। तत्र चोदकसन्निहितदार्शप्रणयनातिक्रमणे प्रमाणाभावात् केनापि प्रयोजनेन दार्शिकमेव प्रणयनं द्वयोः प्रणयन्तीत्यनेनानूद्यत इति उत्सूत्रपूर्वपक्षं कृत्वा **'सौमिकं तु प्रणयनमवाच्यं ह्यीतरत्'** इति सूत्रे विद्यमानेन तुशब्देन प्रथमपूर्वपक्षो निराक्रियत इत्याह—**दार्शिकमिति**। निराक्रियत इत्यत्र प्रथमान्ततया विपरिणतः पक्षशब्दोऽनुषज्यते, सौमिकमेवेदं प्रणयनं न प्रणयनान्तरमिह प्रणयनशब्दवाच्यमित्यर्थकसूत्रगततुशब्देन प्रथमपूर्वपक्षनिराकरणोक्तेः सौमिकमेवेदं प्रणयनमिति द्वितीयः पूर्वपक्ष इत्युक्तप्रायमिति द्रष्टव्यम्।

### भाष्यम्

## परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥७.३.२२॥

तत्राह—यदुक्तम् अवाच्यं हीतरदिति, तस्य कः परिहारः ? उच्यते-परिसङ्ख्यार्थं वा

### टुप्टीका

व्याख्यानमेव। 'प्राकृतं वाऽनामत्वात्' इति चापूर्वं प्रणयनान्तरं वरुणप्रघाससाकमेधयोर्विधीयते, अग्निप्रणयनोत्तरकालम्, 'आहवनीयाद् द्वावग्नी प्रणयतः' इति श्रूयते। प्रागपि होमादाहवनीयः श्रुतश्रपणनिर्वापोपस्थानप्रायश्चित्तैः प्रयुक्तो विद्यते। तस्मान्न देशलक्षणार्थ आहवनीयशब्दः। एवञ्चेत्प्रणयनान्तरं विधीयते, प्राकृतं' वेति

### वार्तिकाभरणम्

'सौमिकं तु प्रणयनमवाच्यं हीतरत्' इति सूत्रस्यायमर्थः-न हि द्वयोः प्रणयन्तीति प्राकृतप्रणयनपुनश्श्रवणं तस्य प्रयोजनं नास्तीति प्रागेव दूषितत्वात्, किन्तु प्रकरणान्तरन्यायेन प्रणयनान्तरविधानम्। तच्च न प्रणयनमात्रम्, तस्य प्राकृततुल्यत्वेन तद्विध्यानर्थक्यात्। किन्तु सौमिकप्रणयनधर्मकं प्रणयनान्तरमिति। ननु यत्र सिद्धान्तसूत्रमेव तत्रोत्सूत्रपूर्वपक्षकरणं इह च सौमिकं तु प्रणयनमवाच्यं हीतरत् इति पूर्वपक्षसूत्रसद्भावादुत्सूत्रपूर्वपक्षकरणं न युक्तमित्यत आह—एवन्त्विति। प्रणयनं त्वित्यत्रेतिशब्दोऽध्याहार्यः उत्सूत्रपूर्वपक्षकरणे सौमिकमिति सूत्रगतः प्रणयनं त्विति प्रणयनेनान्वितस्तुशब्दः पक्षव्यावर्तकत्वेनार्थवान् भवति। × × × × × × × × × × ×इतरथा पक्षव्यावृत्तेरभावेन पक्षव्यावर्तकस्तुशब्दो निरर्थकः स्यादित्यर्थः। अस्मिन् द्वितीयपूर्वपक्षे—उत्तरवेदिप्रतिषेधश्च तद्वत् इति सूत्रार्थो भाष्योक्त एव। तथाहि—न वैश्वदेव उत्तरवेदिमुपवपति; न शुनासीरीय इति वाक्येन प्रथमोत्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो विधीयते। स च प्रतिषेधः प्रथमोत्तमयोरुत्तरवेदिप्राप्तौ सत्यां घटते प्राप्तिपूर्वकत्वात् प्रतिषेधस्य। प्राप्तिश्च यदि 'द्वयोः प्रणयन्तो'त्यनेन सौमिकप्रणयनधर्मकं कर्मान्तरं विधीयते तदेव सम्भवति, न प्राकृतप्रणयनविधौ प्राकृतप्रणयनस्योत्तरवेदेरभावात्। तस्मात् प्रतिषेधलिङ्गेन सौमिकमेवेदं प्रणयनं न प्राकृतमिति द्वयोः प्रणयन्तीति विधीयमानं च सौमिकप्रणयनम् प्रथमोत्तमयोः प्रतिषेधलिङ्गेनैव भवति, उत्तरवेदेः सौमिकप्रणयनाङ्गत्वात् सौमिकप्रणयनं विना प्रथमोत्तमयोः

### तन्त्रशिखामणिः

सू० परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥

द्वयोरेव पवणोः प्रणयन्ति न चतुर्ष्विति प्रणयनपरिसङ्ख्यार्थं पुनः श्रवणम्। ननु यदि द्वयोरेव प्रणयनं तदेतरयोः प्रणयनाभावादाहवनीयाभावः। तदभावाच्च होमाभावः। किञ्च परिसङ्ख्यायां स्वार्थत्यागः परमार्थग्रहणम् प्राप्तबाधश्चेति त्रैदोष्यम्। न च द्वयोः प्रणयनमेवाङ्गं नाङ्गान्तराणीति गृहमेधीयाऽयभागन्या-

### भाष्यसन्दर्भयोजिनी

तत्सदृशं प्रणयनं 'द्वयोः प्रणयन्ति' इति वाक्यं विधत्त इति यदुक्तं तत्राह तस्य कः परिहारः इत्यर्थः। परिसङ्ख्यया परिहारं साधयति-परिसङ्ख्यार्थमिति। चतुर्षु पर्वसु तन्नास्ति किन्तु द्वयोः पर्वणोरिति

## भाष्यम्

**स्यात्-द्वयोः प्रणयन्ति न चतुर्षु इति। गुणार्थम् अर्थवादार्थं वा 'तस्माद् द्वाभ्यामेति' इति। तत्र**

## टुप्टीका

**स्वाभाविकमित्यर्थः। 'अनामत्वादि'ति भाष्यव्याख्यानमेव। प्रथमस्य प्रयोजनसूत्रमिदम् 'परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा' इति। यथासम्भवमेतेषु पुनः श्रुतिर्योजनीया। 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदि-**

## वार्तिकाभरणम्

उत्तरवेदिप्राप्त्यभावेन प्रथमोत्तमयोर्न वैश्वदेव उत्तरवेदिमुपवपन्तीति प्रतिषेधानुपपत्तेः। यदि मध्यमयोरिदं प्रणयनं स्यात्तदा तदङ्गभूतोत्तरवेदिरपि तयोरेव स्यादिति प्रथमोत्तमयोः प्रतिषेधो नावकल्पेत। स्यादेतदेवम्, यदि सौमिकप्रणयनाङ्गत्वेन प्राप्तोत्तरवेदेर्न वैश्वदेव उत्तरवेदिरिति वाक्यं प्रतिषेधकं स्यात्, न त्वेवमस्ति। किन्तु उपात्र वपन्तीति वाक्येन चतुर्ष्वपि पर्वसु प्राप्तोत्तरवेदेः प्रतिषेधकम्। तथा च प्रतिषेधानुपपत्तिरिति चेत्तथा सति 'द्वयोः प्रणयन्ति' इति विहितस्य सौमिकप्रणयनस्य गत्यर्थवादवशेन मध्यमयोर्निविष्टत्वात् तदङ्गोत्तर-वेदेरपि तत्रैव प्राप्तेः'उपात्र वपन्तो'ति वाक्यं प्रथमोत्तमयोः उत्तरवेदिं विदध्यात्। 'न वैश्वदेव उत्तरवेदिमुप-वपन्ति न शुनासीरीय' इति वाक्यमुत्तरवेदिं प्रथमोत्तमयोरेव निषेधतोत्युत्तरवेदेर्विहितप्रतिषेधत्वात् प्रथमोत्तमयोः विकल्पः स्यात्। स चान्याय्यः। तस्माद्गत्यर्थवादं यथाकथञ्चिन्नीत्वा द्वयोः प्रणयन्तीत्यनेन न वैश्वदेव इति वाक्यसहितेन प्रथमोत्तमयोः सौमिकं प्रणयनमुत्तरवेदिवर्ज्यं विधीयते, 'उपात्र वपन्ती'त्यनेन तु मध्यमयोरुत्तर-वेदिर्विधीयते। प्रमाणान्तरेण तत्रोत्तरवेदेरप्राप्तत्वात्। एवञ्च सर्वाणि वाक्यानि अर्थवन्ति भवन्ति, **प्राकृतं वाऽनामत्वात्** इति सूत्रेण सिद्धान्त उच्यत इत्याह—**प्राकृतमिति**। इति शब्दानन्तरं सिद्धान्त उच्यत इति शेषः इत्यनेन सूत्रेण सिद्धान्त उच्यत इत्यर्थः। सूत्रं व्याचष्टे—**अपूर्वमिति**। अपूर्वं प्राकृतप्रणयनापेक्षया प्रणय-नान्तरम्। द्वयोः प्रणयन्तीत्यनेन गत्यर्थवादवशात् मध्यमयोर्विधीयते इत्यर्थः।

ननु अपूर्वप्रणयनान्तरविधिर्व्यर्थः—तस्याप्यधर्मकत्वेन प्राकृततुल्यत्वादित्यत आह—**अग्निप्रणयनेति**। द्वयोः प्रणयन्तीति यस्यां शाखायां श्रुतं तदपेक्षया (प्रणयनान्तरं द्वयोः प्रणयन्तीत्यनेन) शाखान्तरे दार्शिक-प्रणयनानन्तरं 'आहवनीयाद्द्वावग्नी प्रणयत' इति श्रूयते। ततश्च आहवनीयाद्द्वावध्वर्यु प्रतिप्रस्थातारावग्निद्वयं स्वस्वविहारे प्रणयत इति। आहवनीयापादानकत्वलक्षणधर्मविशेषविशिष्टप्रणयनाम्नानात् द्वयोः प्रणयन्तीत्यस्यापि

## तन्त्रशिखामणिः

येनार्थादङ्गान्तरपरिसङ्ख्यार्थमस्तु पुनः श्रवणम्। एवञ्च गृहमेधीयन्यायादेव चोदकलोपेन चोदकप्राप्ताङ्गान्तर बाधाभावान्न त्रैदोष्यमपीति वाच्यम्, आरादुपकारकस्यैव साक्षादुपकारजनकतया कथम्भावाकाङ्क्षापूरण-समर्थत्वेन गृहमेधीयन्यायस्यारादुपकारकविषयत्वात्। प्रणयनस्य च सन्निपातित्वान्न तन्न्यायविषयत्वसम्भवः।

## भाष्यसन्दर्भयोजिनी

परिसङ्ख्या। परिसङ्ख्यायामङ्गीकृतायां 'द्वयोः प्रणयन्ति' इत्यस्य योऽर्थस्तस्य त्यागः, चतुर्षु न कर्तव्यमिति परार्थस्वीकारः चतुर्षु चोदकात् प्राप्तस्य प्रणयनस्य बाध इति दोषत्रयं स्यादित्यतः पक्षान्तरं-**गुणार्थमिति**।

## भाष्यम्

परिसङ्ख्यायां तावत्त्रयो दोषाः। गुणोऽपि न कश्चिद्विधीयते। परिशेषादर्थवादार्थम्। नन्वर्थ-

## टुप्टीका

प्रतिषेधात्' इति मध्यमस्य पक्षस्य प्रयोजनमिदं सूत्रम्। द्वयोः पर्वणोः प्रणयनान्तरं भवति, 'उत्तरवेदिप्रतिषेधश्च तद्वत्' इति। 'औत्तरवेदिकोऽनारभ्य प्रतिषेधः' इत्येतत्परिहारसूत्रम्, भाष्यव्याख्यानमेव ॥२१॥

## वार्तिकाभरणम्

तत्समानार्थकतया आहवनीयापादानकत्वलक्षणधर्मविशेषविशिष्टप्रणयनान्तरविधायकतया प्राकृतप्रणयनविलक्षणत्वात् नास्ति वैय्यर्थ्यम् इत्यर्थः।

ननु द्वावग्नी प्रणयत इति विहितप्रणयनकाले आहवनीय एव नास्ति—आहवनीयस्य होमार्थत्वात् होमानां चैतदनन्तरं करिष्यमाणत्वात्। एवञ्चाहवनीयशब्दो देशलक्षणार्थः सप्तम्यर्थे पञ्चमी। आहवनीयदेशे द्वावग्नी प्रणयत इति। तथा च आहवनीयाभावेनाहवनीयापादनकत्वलक्षणधर्मविशिष्टप्रणयनविधिर्नोपपद्यत इत्यत आह—**आहवनीय इति**। 'अग्ने व्रतपते व्रतं चरिष्यामि' इत्यादिमन्त्रकरणकसमिदाधानेन आहवनीये गार्हपत्ये वा हवींषि श्रपयतीति हविःश्रपणेन वैश्वानरं ज्योतिरिति निर्वापाङ्गभूतोपस्थानेन 'स्कन्ने जुहोति' 'भिन्ने जुहोति' इत्यन्तराप्रसक्तैः प्रायश्चित्तैश्च प्रयुक्त आहवनीयः 'द्वावग्नी प्रणयत' इति वाक्यविहितप्रणयनात्पूर्वमपि विद्यत एव। ततश्चाहवनीयसद्भावेन मुख्यार्थस्यैवोपपत्तेराहवनीयशब्दो न देशलक्षणार्थ इत्यर्थः।

वस्तुतस्तु वरुणप्रघाससाकमेधयोरग्न्यन्वाधानात्पूर्वमेव चोदकप्राप्ताहवनीयसद्भावात् आहवनीयशब्दस्य देशलक्षणार्थत्वशङ्का अत्यन्तानुपपन्नेति द्रष्टव्यम्।

यद्याहवनीयापादानकत्वलक्षणधर्मविशेषो लभ्यते तदा अपूर्वप्रणयनस्य विधीयमानस्य प्राकृतप्रणयनतुल्ययोगक्षेमत्वाभावेन सार्थकत्वात् द्वयोः प्रणयन्तीति वाक्येनादार्शिकमसौमिकमपूर्वं प्रणयनान्तरं विधीयत इत्याह—**एवं चेति**। नन्वप्राकृतं प्रणयनं विधीयत इत्युक्तम् तदनुपपन्नम्। प्राकृतमिति सूत्रस्थपदस्य दार्शपूर्णमासिकप्रणयनार्थकत्वप्रतीतेरित्याशङ्कायां प्राकृतमिति पदं स्वयमन्यथा व्याचष्टे—**प्राकृतमिति**। प्राकृतं वेति सूत्रे प्राकृतमिति पदस्य स्वाभाविकमित्यर्थः। स्वाभाविकं चोदकं सोमं चानपेक्ष्य प्रणयनशक्तिस्वाभाव्याद्यावन्मात्रं

## तन्त्रशिखामणिः

किञ्च चोदकेन होमस्याप्यप्राप्तेः प्रणयनमदृष्टार्थं स्यात्। तस्मान्न परिसङ्ख्यार्थत्वं युक्तमिति चेत्-अस्तु गुणार्थं श्रवणम्। न च तत्र गुणो न श्रूयते इति वाच्यम्। 'उत्तरवेद्यामग्निं निदधाति' इति तत्सन्निधावुत्तरवेदिरूपगुणश्रवणात्। ननु दध्ना जुहोतीत्यादिवद्यदि तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयेत तदा वाक्येन गुणविधि-

## भाष्यसन्दर्भयोजिनी

को गुणः कुत्र विधीयतामिति निश्चेतुमशक्यत्वात्पक्षान्तरमः **अर्थवादार्थं वेति**। 'तस्माद् द्वाभ्यामेति' इति वाक्यस्यार्थवादत्वसिद्धये 'द्वयोः प्रणयन्ति' इति विधिरित्यर्थः। विधिमन्तरा वाक्यस्यार्थवादत्वं न सिध्यतीति

भाष्यम्

**वादोऽपि निष्प्रयोजनः, प्रणयनस्य प्राप्तत्वात्। अर्थवादस्य प्रयोजनमुत्तरस्मिन्नधिकरणे वक्ष्यामः, 'मध्यममयोर्वा गत्यर्थवादात्' इति ॥२२॥**

**इति चातुर्मास्येषु प्रणयनस्य सौमिकधर्मानतिदेशाधिकरणम् ॥८॥**

## वार्तिकाभरणम्

प्रतीयते तावन्मात्रं विधीयत इत्यर्थः। अनामत्वादिति सूत्रस्थ पदस्य भाष्यव्याख्यानं सम्मतमित्याह—**अनमत्वादितीति**। अयमर्थः—द्वयोः प्रणयन्तीत्यत्र विद्यमानः प्रणयनशब्दः न सौमिकप्रणयनस्य नामधेयं भवति, येन तद्धार्मान् लक्षयेदिति।

ननु "परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा" इति सूत्रं भाष्यकारीयप्रथमाधिकरणसिद्धान्ते दार्शपूर्णमासिकप्रणयनपुनश्श्रवणप्रयोजनपरत्वेन सङ्गतम्। एकाधिकरणपक्षे कथमस्य सूत्रस्य उपपत्तिरित्यपेक्षायां प्रथमपूर्वपक्षे प्रयोजनपरमिदं सूत्रमित्याह—प्रथमेति। ननु वरुणप्रघाससाकमेधयोरिदं प्रणयनमिति सिद्धान्ते प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति उत्तरवेदिप्रतिषेधलिङ्गेन प्रथमोत्तमयोः प्रणयनव्यवस्थापकं सूत्रमसङ्गतं स्यादित्याशङ्क्य द्वितीयपूर्वपक्षप्रयोजनपरतया योजयति **प्रथमेति**। सूत्रस्यार्थमाह—**प्रथमोत्तमयोरिति** प्रथमोत्तमयोस्सौमिकप्रणयनस्योक्तरीत्या व्यवस्थिततत्वात् तत्प्रणयनाङ्गत्वेनोत्तरवेद्यां प्राप्तायां न वैश्वदेव उत्तरवेदिमित्यनेन उत्तरवेदिप्रतिषेधात् उत्तरवेदिमात्रं न भवति। किन्तु चोदकप्राप्तमवशिष्टं धर्मजातं यदस्ति प्रणयनाङ्गभूतं 'अग्नये प्रणीयमानायानुब्रूहि ? अग्नीदेकस्पृयानुसन्धेहि' इति सम्प्रेषः प्रदेवं देव्येति होतृकर्तृकानुवचनम् चात्वालादाहृतोपयमनीभिरुपयमनम् अग्नेर्भस्मासी'ति सम्भारनिवपनम् 'यज्ञ प्रतितिष्ठेति अग्निप्रतिष्ठापनमित्येवमादिकं तद्भवति। ततश्चैतादृशधर्मयुक्तं सौमिकं प्रणयनम् प्रथमोत्तमयोरनुष्ठेयमिति मध्यमपक्षप्रयोजनमित्यर्थः। अत्र पार्थसारथ्युपाध्यायैः यदुक्तं तन्त्ररत्ने तत्र तूत्तरवेदिमात्रं न भवति-प्रतिषेधात्। अवशिष्टंवेसर्जनहोमादि भवत्येव चोदकप्राप्तमिति तदनुपपन्नम्। द्वयोः प्रणयन्तीति विधीयमानस्य प्रणयनस्य चोदकेन प्राप्त्यभावात्।

## तन्त्रशिखामणिः

स्यात् इह तु वाक्यान्तरे उत्तरवेदिगुणविधानमिति न गुणार्थतासम्भव इति चेदस्तु 'तस्माद्द्वाभ्यामेति' इत्यर्थवादार्थं पुनः श्रवणम्, अर्थवादस्य च 'उपात्र वपन्ति' इत्युत्पन्नाया वेदेर्मध्यमपर्वद्वय उपसंहारः प्रयोजनमित्युत्तराधिकरणे वक्ष्यते॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

भावः। शङ्कते-नन्विति अर्थवादत्वस्वीकारेऽपि निष्प्रयोजनत्वमेव तस्य। न चात्र किञ्चिद्विधीयते, विधानार्हस्य प्रणयनस्य दर्शपूर्णमासतः प्राप्तत्वात्। अतोऽर्थवादो निष्प्रयोजन इत्यत आह-**अर्थवादस्येति** ॥ २२॥

इति चातुर्मास्येषु प्रणयनस्य सौमिकधर्मानतिदेशाधिकरणम् ॥ ८॥

भाष्यम्

९

## प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥७.३.२३॥

विषयः

'द्वयोः प्रणयन्ति' इति श्रूयते ।

संशयः

तत्र सन्देहः-कतरयोर्द्वयोरिति ।

पूर्वपक्षः

अनियमे प्राप्ते, उच्यते । प्रथमोत्तमयोः प्रणयनम् । कुतः ? उत्तरवेदिप्रतिषेधात् ।

### वार्तिकाभरणम्

ननु प्रथयोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति सूत्रस्य द्वितीयपूर्वपक्षप्रयोजनपरत्वेन योजितत्वेन पूर्वपक्षसूत्रत्वाभावात् तत्र सिद्धान्तार्थत्वेन प्रवृत्तं 'मध्यमयोर्वा गत्यर्थवादादि'ति सूत्रं न सङ्गतं स्यात् इत्याशङ्क्य, नेदं सिद्धान्तसूत्रं येनासङ्गतं स्यात्, किन्तु सिद्धान्तस्य प्रयोजनसूत्रमित्याह—**मध्यमयोरिति** । सूत्रस्यार्थंमाह—**द्वयोरिति** । मध्यमयोः द्वयोः पर्वणोस्तस्मात् द्वाभ्यामेतीति गत्यर्थवादवशात् इदमपूर्वं प्रणयनान्तरमाहवनीयापादानकं भवतीति मध्यमयोः पर्वणोरस्यानुष्ठानमेव सिद्धान्तपक्षप्रयोजनमित्यर्थः । नन्वेवं यदि प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति सूत्रं द्वियीयपूर्वपक्षप्रयोजनपरमित्यवगम्येत तदा एतत्परिहारार्थंत्वेन प्रवृत्तं 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेध' इति सूत्रमनर्थकं स्यात् । तस्मात् प्रथमोत्तमयोरिति सूत्रं पूर्वपक्षसूत्रमित्येव वक्तव्यम् ।

### तन्त्रशिखामणिः

सू० प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥

'द्वयोः प्रणयन्ति' इति वाक्ये प्रणयतीत्यस्मिन्नंशे चिन्तिते तत्प्रसङ्गाद् द्वयोरित्यंशश्चिन्त्यत इति सङ्गतिः । कतरयोर्द्वयोरिदं प्रणयनमनुकीर्त्यत इति विशये नियामकाभावात् अनियमे प्राप्ते, उच्यते-प्रथमोत्तम-

### भाष्यसन्दर्भयोजिनी

विषयवाक्यं तदेव । तत्र 'द्वयो' रिति पदे संशयः-**कतरयोः** द्वयोरिति । चतुर्षु पर्वसु कतरयोरित्यर्थः ।

पूर्वपक्षः

निर्णायकप्रमाणाभावादनिर्णये सति पूर्वपक्षी वदति—**प्रथमोत्तमयोरिति** । तत्र हेतुः—**उत्तरवेदिप्रतिषेधादिति** । वैश्वदेवे शुनासीरीये चोत्तरवेदिः प्रतिषिध्यते 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये'

### भाष्यम्

**तत्रोत्तरवेदिः प्रतिषिध्यते 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति। अस्मिन् प्रणयन उत्तरवेद्यामग्निनिधानं विहितम्। अतो यत्र प्रणयनं तत्रोत्तरवेदिप्राप्तिः। प्राप्तौ च सत्यां प्रतिषेधः। प्रथमोत्तमयोश्चासौ। तस्मात्तयोः प्रणयनमिति ॥२३॥**

### सिद्धान्तः

## मध्यममयोर्वा गत्यर्थवादात् ॥७.३.२४॥

**मध्यममयोर्वा पर्वणोः प्रणयनम्। कुतः? गत्यर्थवादात्। गत्यर्थवादेनैतद् द्वयोः प्रणयनमुच्यते 'तस्माद् द्वाभ्यामेति' इति। ऊरुसंस्तुते चैते पर्वणी 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाः**

### वार्तिकाभरणम्

तथा सति तत्परिहारार्थं औत्तरवेदिक इति सूत्रं सङ्गच्छत इत्यत आह—**उत्तरवेदीति**। स्यादेतदेवम् यदि प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति सूत्रपरिहारार्थमिदं स्यात्। न त्वेवमस्ति। किन्तु उत्तरवेदिप्रतिषेधश्च तद्वदिति यत्सूत्रं सौमिकं प्रणयनमित्यत्र लिङ्गप्रदर्शनपरम्, तत्परिहारार्थं इदं सूत्रमिति नानर्थकमित्यर्थः। 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इत्ययं प्रतिषेधः प्रथमोत्तमयोः प्रणयन्तीत्यनेन प्राप्तोत्तरवेदेर्न भवति,

### तन्त्रशिखामणिः

योरुत्तरवेदिप्रसक्तिरनुमीयते तत्प्रणयनं विना च तागिनरित्यग्निना प्रणयनमनुमीयते। तदेवमुत्तरवेदिप्रतिषेधेन लिङ्गेनानुमानपरम्परया प्रथमोत्तमयोः प्रणयनमिदमनुकीर्त्यत इत्यध्यवसीयत इति द्वितीयः पूर्वपक्षः।

सू० मध्यममयोर्वा गत्यर्थवादात् ॥

मध्यमयोः पर्वणोः प्रणयनमिदं गत्यर्थवादात्। 'तस्माद् द्वाभ्यामेति' इत्यर्थवादेन हि गतिसाधनयोरिदं प्रणयनमिति गम्यते। गतिसाधनत्वं मध्यममयोरेव श्रूयते-'ऊरू वा एतद्यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्च' इति

### भाष्यसन्दर्भयोजिनी

इति। प्रथमोत्तमयोः पर्वणोरुत्तरवेदिरेव नास्ति कथं प्रतिषिध्यत इत्यत आह—**अस्मिन् प्रणयन** इति। प्रणीतमग्निम् 'उत्तरवेद्यां निदध्यात्' इति निधानविधिबलादुत्तरवेदिप्राप्तिरित्याह—**अतो यत्रेति**। प्राप्तस्य प्रतिषेधः क्रियत इत्याह—**प्राप्तौ च सत्याम्** इति। असौ प्रतिषेधः अयं भावः-प्रकृतितः प्रणयनं प्राप्तम्। प्रणयनञ्चाग्नेस्संस्कारः। प्रणयनसंस्कारेण संस्कृतस्याग्नेरुत्तरवेद्यां निधानं विहितम्। 'उत्तरवेद्यामग्नि निदध्यात्' इति वाक्येन 'उत्तरवेद्यां' इत्यनेनोत्तरवेदिमनूद्याग्निनिधानं विधीयत इति ज्ञाते यत्रेदं प्रणयनं तत्रोत्तरवेदिरिति ज्ञातव्यं भवति। यत्रोत्तरवेदिः सा प्रतिषिध्यते। प्रतिषेधश्च स्पष्टं प्रथमोत्तयोरुपलभ्यत इति तयोरेव प्रणयनम् इति प्रथमोत्तमयोर्विहितप्रतिषिद्धत्वादुत्तरवेदिविकल्पे पर्यवस्यति इति ॥२३॥

### सिद्धान्तः

सिद्धान्तमाह—**मध्यममयोर्वेति**। मध्यममयोरेव पर्वणोः प्रणयनम्। तत्र च हेतुः—**गत्यर्थवादादिति**।

भाष्यम्

साकमेधाश्च' इति । ऊरू च गमनसाधने, तत्रैवमभिसम्बन्धो विज्ञायते । ऊरू यज्ञस्य वरुण-प्रघासाः साकमेधाश्चेति, तयोर्द्वयोः प्रणयन्ति । तस्माद्द्वाभ्यामूरुभ्यां यज्ञस्समाप्तिं याति । प्रणयनेन हि तौ बलवन्तौ भवतः, अङ्गभूयस्त्वादिति । एतदर्थवादस्य प्रयोजनम् ॥२४॥

अथ यदुक्तम्-उत्तरवेदिप्रतिषेधादिति, तत्र ब्रूमः—

## औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥७.३.२५॥

अनारभ्य कञ्चित्पर्वविशेषं चातुर्मास्येषूत्तरवेदिराम्नाता 'उपात्र वपन्ति' (मै. सं.

### तन्त्रशिखामणिः

मध्यमयोर्गतिसाधनीभूतोरुत्वेन संस्तवादिदमेवार्थवादस्य प्रयोजनं यत्तद्वशेन प्रणयनमिदं मध्यमयोर्व्यवतिष्ठते । ननु भवतु पुनः श्रवणमर्थवादार्थम् अर्थवादश्च मध्यमयोः प्रणयनव्यवस्थार्थः तद्व्यवस्थाया एव किं प्रयोजनमिति चेदुच्यते-मध्यमयोः प्रणयनव्यवस्थितौ 'उत्तरवेद्यामग्निं निदधाति' इति वाक्यान्तरविहिताप्युत्तरवेदिः सन्निधानादेतत्प्रणयनाङ्गं भवतीति मध्यमयोरेव सा व्यवतिष्ठते, इतरथा प्रकरणाविशेषाच्चतुर्ष्वपि चोदकप्राप्ताग्निविधानसम्भवात् सर्वपर्वगताग्निनिधानाङ्गं स्यात् । तदेवमर्थवादमुखेनोत्तरवेद्यामग्निनिधानस्य मध्यमयोरुपसंहारः पुनः श्रवणप्रयोजनमिति सिद्धम् । ननूत्तरवेदिप्रतिषेधलिङ्गात् प्रथमोत्तमयोरिदं प्रणयनम् । अन्यथा प्राप्त्यभावात् अनर्थकः प्रतिषेधः स्यात् । आह—

औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः

यद्यपि 'उत्तरवेद्यामग्निं निदधाति' इति श्रुतोत्तरवेदिः द्वयोः प्रणयन्ति इत्येतत्सन्निधानात् मध्यमयोरुपसंहृता । तथापि औत्तरवेदिक उत्तरवेदिसम्बन्धी प्रतिषेधोऽनारभ्यवादस्यैव प्रतिषेधं पर्वविशेषमनारभ्य 'उपात्र वपन्तीति' विहितोत्तरवेदिः प्रकरणाविशेषात् सर्वपर्वसु प्रसज्यमाना 'न वैश्वदेव उत्तरवेदिमुपवपन्ती' त्यादिना प्रथमोत्तमयोः पर्युदस्यते । न तूत्तरवेद्यामपि निदधाति' इत्यनेन प्राप्ता प्रतिषिध्यते, विकल्पप्रसङ्गात् । ननु श्रुत्यादिविहितवरुणप्रघासाङ्गसन्दंशात् 'उपात्र वपन्तीति' विहितोत्तरवेदिः वरुणप्रघासानामेवाङ्गम्, अवान्तरप्रकरणस्यैव महाप्रकरणापेक्षया बलीयस्त्वात् । अतस्तस्याः सर्वपर्वसु प्रसक्त्यभावात् न तत्पर्युदासः । किन्तु 'उत्तरवेद्यामग्निं निदधाति' इति वाक्यविहितोत्तरवेदिप्रतिषेध एव न वैश्वदेव इत्यादिवाक्यम् ।

### भाष्यसन्दर्भयोजिनी

'तस्माद् द्वाभ्यामेति' इत्यत्र एतिशब्देन गतेर्गमनस्य कीर्तनादित्यर्थः । गमनं प्रति ऊर्वोरावश्यकता । ऊरुत्वेन च मध्यमे पर्वणी स्तूयेते इति साधयति—**ऊरुसंस्तुते चैते** इति । एभिरर्थवादैर्मध्यमयोरेव पर्वणोः प्रणयनं सिध्यतीत्यर्थः । 'अर्थवादप्रयोजनमुत्तरस्मिन्नधिकरणे वक्ष्यामः' इत्युक्त्यनुसारेणार्थवादप्रयोजनं निगमयति—**एतदिति** ॥२४॥

वैश्वदेवे शुनासीरीये चोत्तरवेदिप्रतिषेधेन तत्र तत्प्राप्तिमनुमाय प्रथमोत्तमयोरेव प्रणयनमिति यत्साधितं पूर्वपक्षिणा तदनुवदति **अथ यदुक्तमिति** । परिहरति—**तत्र ब्रूम** इति । 'न वैश्वदेव उत्तरवेदिमुपवपन्ति,

## भाष्यम्

१.१०.१५) इति । तस्यानारभ्यविधेरयं प्रतिषेधः । ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेवायं तेषामेव-अत्रेति वादस्स्यात् । नैतदेवम्; प्रकरणाच्चचातुर्मास्यानामेव । यदि वरुणप्रघासानां वादस्स्यात्, तत्र प्रतिषेधे त्रीण्यपि पर्वाण्युत्कीर्तयेत् ।

## तन्त्रशिखामणिः

अतस्तत्प्रतिषेधवशात् प्रथमोत्तमविषयमेव द्वयोः प्रणयन्तीति वाक्यमपीति चेन्न; विध्येकवाक्यस्यार्थवादस्य प्रदेशान्तरश्रुतप्रतिषेधवाक्यापेक्षया बलीयस्त्वात् अर्थवादवशेन द्वयोः प्रणयन्तीत्यस्य मध्यमपर्वविषयत्व-व्यवस्थितौ तदर्थतया विहितोत्तरवेदिरपि नान्यत्र नेतुं शक्येति न वैश्वदेव इत्यादेः न तत्प्रतिषेधपरत्वमिति निश्चीयते । 'यदि उपात्र वपतीत्यस्याप्यवान्तरप्रकरणात् वरुणप्रघासाङ्गत्वं स्यात् तदा प्रतिषेधोऽनर्थकः स्यात् । आनर्थक्ये च विपरीतं बलाबलमित्यवान्तरप्रकरणबाधेन महाप्रकरणात् चातुर्मास्यानामविशेषेणैव उपात्र वपन्तीत्यङ्गम् । तदेव च न वैश्वदेव इत्यादिना पर्युदस्यत इत्येव युक्तमिति ।

अत्र वार्तिकानुसारिणः—यदुक्तं प्रथमाधिकरणे 'तस्माद्द्वाभ्यामेतीत्यर्थवादार्थं द्वयोः प्रणयन्तीति पुनः श्रवणमि'ति तन्न, यत्र किञ्चिद्विधीयते तत्रैवार्थवादो भवति 'विधिना त्वेकवाक्यत्वात्' इत्यत्र शब्दभावनारूप-विध्यपेक्षितप्राशस्त्यसमर्पकतया विध्येकवाक्यत्वेनैवार्थवादस्य प्रामाण्यमित्युक्तत्वादिह च प्राकृतस्य प्रणयनस्य चोदकप्राप्तत्वेनाविधेयत्वान्नार्थवाद एव सम्भवति, कुतस्तदर्थता पुनःश्रवणस्य । यत्त्वत्र द्वयोः प्रणयन्तीति प्रणयनमिह विधीयत इति नार्थवादासम्भव इत्येकदेशिभिरुक्तं तदयुक्तम्; किमिह विधेयं प्रणयनं प्राकृतमेव आहोस्विदन्यद्वा ? नाद्यः, तस्य चोदकत एव प्राप्तत्वेनाविधेयत्वात् । न द्वितीयः, चोदकप्राप्तप्रणयनेनैवाह-वनीयसिद्धेस्तद्वैय्यर्थ्यात् । अदृष्टार्थत्वे च स एव दोषः । न च यथा 'प्राकाशावध्वर्यवे ददाति' इत्यत्र प्राकृतकार्यं दानान्तर विधीयते तथैव प्राकृतकार्यं प्रणयनान्तरं विधीयतामिति वाच्यम्, तत्र चोदकप्राप्तदानानुवादेनाध्वर्यु-रूपसम्प्रदानस्य प्राकाशरूपकर्मकारकस्य च विधौ वाक्यभेदप्रसङ्गेन विशिष्टदानान्तरविध्यङ्गीकारेऽपि प्रकृते

## भाष्यसन्दर्भयोजिनी

'न शुनासीरीये' इति प्रतिषेधस्य प्रतिषेध्यं दर्शयति—अनारभ्येति । पर्वविशेषमनारभ्येत्यर्थः । 'उपात्र वपन्ति' इति प्रकरणाविशेषेण विहितोत्तरवेदिः सर्वेषु पर्वसु प्रसक्ता 'न वैश्वदेव' इत्यनेन प्रथमोत्तमयोः पर्वणोः प्रतिषिध्यते तस्य अनारभ्यवादेन प्राप्तस्य । अयं 'न वैश्वदेव' इति प्रतिषेधः । ननु 'उपात्र वपन्ति' इति वाक्यविहितो-त्तरवेदिः महाप्रकरणापेक्षया प्रबलादवान्तरप्रकरणात् वरुणप्रघासानामेवाङ्गम्, अतः सर्वपर्वसु प्रसक्त्यभावात् प्रथमोत्तयोः प्रसक्त्यभावेन न भवेत् पर्युदासः, किन्तु 'उत्तरवेद्यामग्निं निदध्यात्' इति गुणवाक्यविहितोत्तर-वेदिप्रतिषेध एवायमिति शङ्कते—नन्विति । गुणवाक्येति । 'उत्तरवेद्यामग्निं निदध्यादिति वाक्यप्राप्तेत्यर्थः । शङ्कां निरस्यति—नैतदेवमिति । प्रकरणात् महाप्रकरणादवान्तरप्रकरणं बलीय इति चेन्न; अवान्तरप्रकरणेन 'उपात्र वपन्ति' इति वरुणप्रघासाङ्गं यदि स्यात्तर्हि प्रतिषेधोऽनर्थकस्स्यात् । 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल' मिति न्यायेनावान्तरप्रकरणबाधेन चातुर्मास्यानामेवाङ्गमित्याह—चातुर्मास्यानामेवेति । किञ्चावान्तर-प्रकरणेन वरुणप्रघासाङ्गत्वे 'न वैश्वदेव' इति वाक्ये त्रयाणां पर्वणामुल्लेखस्स्यादित्याह—यदीति । उत्कीर्तयेत् उल्लिखेदित्यर्थः ।

## तन्त्रशिखामणिः

चोदकप्राप्तप्रणयनानुवादेन द्वयोरिति विधिसम्भवे विशिष्टप्रणयनान्तरविध्यङ्गीकारायोगात्। यदपि द्वितीयाधिकरणपूर्वपक्षे उत्तरवेदिप्रतिषेधलिङ्गेनानुमानपरम्परया प्रथमोत्तमयोः प्रणयनमिदमनुकीर्त्यत इत्यध्यवसीयत इत्युक्तं तदप्ययुक्तम्, प्राकृतमेवेदं प्रणयनमर्थवादार्थमनुकीर्त्यत इति हि प्रथमाधिकरणे स्थितम्। ततश्च प्राकृतस्य प्रणयनस्योत्तरवेद्यभावादुत्तरवेदिप्रतिषेधलिङ्गेन प्रथमोत्तमयोरिदं प्रणयनमनुकीर्त्यत इत्यध्यवसितुमशक्यत्वात्। ननु तथापि द्वयोः प्रणयन्तीत्येतत्सन्निधौ हि 'उत्तरवेद्यामग्निं निदधाति' इति श्रूयते। तदनुवादस्य सन्निहितविषयत्वनियमादेतत्प्रणयनानुवादेनैवोत्तरवेदिविधिः। अतो यत्रेदं प्रणयनं तत्रोत्तरवेदिः, यत्र च सा तत्र प्रतिषेधोऽर्थवान् भवति, प्रसक्तिपूर्वकत्वात्प्रतिषेधस्य। स च प्रथमोत्तमयोरुपलभ्यत इति तयोरेव प्रणयनमिदमनुकीर्त्यत इत्यध्यवसातुं शक्यम्। न च प्रथमोत्तमयोर्विहितप्रतिषिद्धत्वादुत्तरवेदिविकल्पस्स्याद्यत 'उपात्र वपन्ति' इति विहिता उत्तरवेदिः 'न वैश्वदेव उत्तरवेदिम्' इत्यादिना पर्युदस्यतामिति वाच्यम्। उपात्रेति विहिताया वेदेरेवावान्तरप्रकरणलाभाद्वरुणप्रघासमात्राङ्गत्वेन पर्युदासासम्भवात्। न हि सम्भवति-वैश्वदेवशुनासीरीयवर्जं वरुणप्रघासेषु 'उपवपति' इति पर्युदासस्यापि प्रसक्त्यपेक्षत्वादतो विकल्प एव श्रेयानिति चेन्न; द्वयोः प्रणयन्तीति वाक्यसन्निधावाम्नातेनाप्युत्तरवेद्यामग्निं निदधाति इति वाक्येनाग्निनिधानानुवादेन विधीयमानोत्तरवेदिश्चतुर्ष्वपि पर्वसु स्यात्। चतुर्ष्वपि पर्वसु चोदकप्राप्ताग्निनिधानसम्भवात्। न च सन्निधिविशेषादस्मिन्नेव प्रणयने सा स्यादित्युक्तमिति वाच्यम्, सन्निध्यपेक्षया प्रकरणस्य बलीयस्त्वात्। अतः प्रतिषेधबलात्प्रथमोत्तमयोरिदं प्रणयनमित्युक्तो द्वितीयाधिकरणपूर्वपक्षः।

तदधिकरणसिद्धान्ते च गत्यर्थवादवशान्मध्यमयोरिदं प्रणयनमिति व्यवस्थितो सन्निधिवशात् तदनुवादेन विधीयमानोत्तरवेदिर्मध्यमयोर्व्यवतिष्ठत इत्युत्तरवेदेर्मध्यमयोरुपसंहारः पुनः श्रवणप्रयोजनमित्युक्तमप्यत एव निरस्तम्—अर्थवादवशेन मध्यमयोः प्रणयनव्यवस्थितावपि सन्निध्यपेक्षया बलीयसा प्रकरणेनोत्तरवेद्यास्सर्वपर्वार्थतया मध्यमयोरुपसंहारासिद्धेः। यदप्यौत्तरवेदिकोऽनारभ्यवादप्रतिषेध इति सूत्रे 'न वैश्वदेव' इत्यादि प्रतिषेधानर्थक्यापत्त्या वरुणप्रघासावान्तरप्रकरणबाधेन महाप्रकरणाच्चातुर्मास्यानामविशेषेणैव 'उपात्र वपन्ति' इत्यङ्गं तदेव च 'न वैश्वदेव' इत्यनेन पर्युदस्यत इत्युक्तं तदप्ययुक्तम्। एवं हि उपात्रवपतीत्यनेनैव पर्युदाससहितेन मध्यमयोरेवोत्तरवेद्युत्पत्तिः, उत्पत्त्यपेक्षश्च विनियोग इत्युत्तरवेद्यामग्निं निदधातीति विनियोगोऽपि मध्यमपर्वविषय एवेति व्यर्थं 'द्वयोः प्रणयन्ती'त्येतत् स्यात्। तदभावेऽपि मध्यमयोरुत्तरवेद्युपसंहारसिद्धेः। अथ उपात्र वपतीत्युत्पन्नोत्तरवेदिर्विनियोगमपेक्षमाणा यावदवान्तरप्रकरणबाधेन महाप्रकरणवशात् सर्वपर्वसु विनियोजिकां श्रुतिं कल्पयितुं उपक्रमते तावत् प्रत्यक्षेण मध्यमपर्वविषययोः 'उत्तरवेद्यामग्निं निदधाति' इति वाक्येन विनियुक्तानुपपत्तिक्षयान्न सर्वपर्वविषयिणीं विनियोजिकां श्रुतिं कल्पयितुं क्षमत इति प्राप्त्यभावात् पर्युदासानुपपत्तिः। तेन यदि 'न वैश्वदेव' इति पर्युदासस्तत्सहितेन 'उपात्र वपती'त्यनेनैव मध्यमपर्वणोरुत्तरवेदिसिद्धेर्व्यर्थं द्वयोः प्रणयन्तीत्येतत् अर्थवादद्वारेण मध्यमयोरुत्तरवेद्युपसंहारार्थं तदा पर्युदासानुपपत्तिरिति। यदिदं 'न वैश्वदेव उत्तरवेदि' मित्यस्यानारभ्यवादपर्युदासत्वेनार्थवत्त्वाभिधानम्, यच्च द्वयोः प्रणयन्तीत्यस्योत्तरवेद्युपसंहारार्थत्वाभिधानं तदुभयं मिथो व्याहतम्। अत्रैकदेशिनः—उपात्र वपतीत्युत्पन्नोत्तरवेद्यामग्निं निदधातीति विनियुक्ता चोत्तरवेदिः द्वयोः प्रणयन्तीत्यनेनार्थवादद्वारा मध्यमयोरुपसंह्रियते। न चैवं प्रसक्त्यभावान् 'न वैश्वदेव' इत्यत्र प्रतिषेधः पर्युदासो वा न स्यादिति वाच्यम्, इष्टत्वात्। 'न गिरा गिरेति ब्रूयात्' इतिवन्नित्यानुवादत्वेन तस्योपपत्तेः। न च 'गिरा गिरे'त्यस्य नित्यानुवादत्वेऽपि गिरापदनिन्दया ऐरं कृत्वोद्गेयमि'ति विधेरिरापदस्तुत्यर्थतया नानर्थकम्. इह तु नैवं सम्भवतीति वाच्यम्, इहाप्युत्तरवेद्यभावेन वैश्वदेवप्रणयननिन्दया 'द्वयोः प्रणयन्ति' इति

## तन्त्रशिखामणिः

प्रणयनविधिस्तावकतया अर्थवत्वोपपत्तेरित्याहुः। तदयुक्तम्; अत्र हि प्रणयनानुवादेन विनियुक्तोत्तरवेदिः। प्रणयनञ्चातिदिष्टं सर्वपर्वस्वस्तीत्युत्तरवेदिरपि सर्वपर्वान्वियावश्यम्भावेन पर्वद्वयोपसंहारासम्भवात्। यदि चोपदेशश्चोपदेशमुपोद्वलयतीति न्यायादुत्तरवेद्युपदेशः प्रणयनोपदेशैकवाक्यतया यत्रोपदिष्टं प्रणयनन्तत्रैव वेदिं प्रापयति न त्वतिदिष्टप्रणयनकेऽन्यत्रापोत्यभिमानस्तथापि 'न वैश्वदेव' इत्यस्य नित्यानुवादत्वाङ्गीकारे 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्रविरोधः। तेन हि सूत्रेण प्रथमोत्तमयोरेवेदं प्रणयनमुत्तरवेदिप्रतिषेधात् यदि मध्यमयोः स्यात् तदा प्रथमोत्तमयोरुत्तरवेदिप्रसक्त्यभावात् प्रतिषेधोऽनर्थकः स्यादिति यत् पूर्वपक्षिणोक्तं परिह्रियते-चातुर्मास्येष्वनारभ्य विहिताया वेदेः पर्युदासार्थं 'न वैश्वदेव' इत्यादिवचनम्। अतो नानार्थत्वमिति तावदिदमनुवादकत्वाङ्गीकारे विरुध्येत। किञ्च 'द्वयोः प्रणयन्ती'त्यस्यैवानुवादत्वमङ्गीकर्तुमुचितम् 'न वैश्वदेव उत्तरवेदिमि'ति पर्युदासहितेन 'उपात्र वपती'त्यनेन स्पष्टं मध्यमयोरुत्तरवेद्युपसंहारसिद्धेः द्वयोः प्रणयन्तीत्यस्यार्थवादमुखेन त्विष्टगत्या तदुपसंहाराङ्गीकारायोगादशक्यञ्च (?) द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्यामग्निं निदधातो'ति वाक्यान्तर विहितोत्तरवेद्युपसंहारस्सन्निध्यपेक्षया प्रकरणस्य बलीयस्त्वेन सत्यपि 'द्वयोः प्रणयन्ती'त्येतत्सन्निधौ प्रकरणेन चातुर्मास्यमात्र एव चोदकप्राप्ताग्निनिधानानुवादेनोत्तरवेदिविधेरेवौचित्यादित्युक्तत्वात्। अतो 'न वैश्वदेव उत्तरवेदिमि'ति पर्युदाससिद्धिः द्वयोः प्रणयन्ती'त्यनुवाद इत्येव युक्तम्।

अत्रैकदेशिनः-पर्युदासे हि 'उपात्र वपति' इत्युपदिष्टाया वेदेरौपदेशिकसर्वपर्वान्वयबाधः स्यात् प्रतिषेधवत्पर्युदासस्यापि प्रसक्तिं विनानुपपत्तेः 'द्वयोः प्रणयन्ती'त्यनेनोपसंहारे तु प्रसक्तिरेव नान्यत्रेत्यौपदेशिकबाधो न सम्भवति। न च प्रकरणबलीयस्त्वादुपसंहार एवानुपपन्न इत्युक्तमिति वाच्यम्। 'द्वयोः प्रणयन्ती'त्यस्य विधित्वेनोपदेशश्चोपदेशमुपोद्वलयतोति न्यायादुत्तरवेद्यामग्निं निदधातीति विहितोत्तरवेद्युपसंहाराविरोधादित्याहुः। तदयुक्तम्; 'यजतिषु येयजामहं करोति नानूयाजेष्वि'त्यादिषु बहुलमौपदेशिकयेयजामहादिपर्युदासोपलम्भेनौपदेशिकबाधस्यादोषत्वादुपदेशश्चोपदेशमुपोद्वलयतीति न्यायस्य परिभाषामात्रत्वेनोभयसिद्धप्रकरणबलीयस्त्वयागानौचित्येनोपसंहारासम्भवाच्च। तस्माद् भाष्यकारीयमधिकरणद्वयस्य व्यख्यानमयुक्तमिति मत्वा यथावार्तिकमेकाधिकरणतयैव सप्तापि सूत्राणि वर्णयाञ्चक्रुः। तदुच्यते—

सू० सौमिकन्तु प्रणयनमवाच्यं हीतरत्।

'द्वयोः प्रणयन्ति' इत्यत्र किं दार्शिकं प्रणयनं कीर्त्यते? किं वा सौमिकप्रणयनधर्मकं प्रणयनान्तरं विधीयते? किं वाहवनीयापादानकमपूर्वं प्रणयनं पशुबन्धवद्विधीयते? इति त्रेधा संशयः। दार्शिकमेवेदं प्रणयनं चोदकसन्निहितत्वात्तस्य सन्निहितातिक्रमे कारणाभावात् पुनःश्रवणस्य च परिसङ्ख्यादिप्रयोजनं वक्ष्यत इत्युत्सूत्रः प्रथमः पक्षः। परिसङ्ख्याद्यसम्भवस्य वक्ष्यमाणत्वान्न दार्शिकं प्रणयनमिहानुकीर्त्यते, वैयर्थ्यात् किन्तु सौमिकप्रणयनधर्मकं प्रणयनान्तरमेव विधीयत इति सूत्रेण द्वितीयः पक्षः। एवञ्च सूत्रे तुशब्दः प्रथमपूर्वपक्षव्यावृत्त्यर्थतया न मन्दप्रयोजनो भवति। भाष्यकृन्मते व्यावर्त्यपक्षान्तरानुपन्यासात् केवलं संशयव्यावर्त्यतया मन्दप्रयोजनं स्यात्।

सू० उत्तरवेदिप्रतिषेधश्च तद्वत्।

'न वैश्वदेव उत्तरवेदिमुपवपन्ति' इति पर्युदासबलेन च सौमिकप्रणयनसदृशं प्रणयनमिदम्। न चोपात्रवपति इत्यस्यायं प्रतिषेध इति वाच्यम्, तस्यावान्तरप्रकरणेन केवलं वरुणप्रघासविषयत्वात् प्रथमोत्तमयोरप्राप्तेः प्रतिषेधो न स्यात्। तस्मान्न वैश्वदेन इति पर्युदासो द्वयोः प्रणयन्तोत्यस्यैव शेषः। ततश्चोत्तरवेदिवर्जं प्रथमोत्तमयोः

## तन्त्रशिखामणिः

सौमिकधर्मकं प्रणयनं विधीयते। न च तस्माद् द्वाभ्यामेतीत्यर्थवादवशाद् द्वयोः प्रणयन्तीत्येतन्मध्यमपर्वद्वय-विषयमेव युक्तम् न तु प्रथमोत्तमविषयमिति द्वयोः प्रणयन्तीत्यस्य न वाक्यशेषो न वैश्वदेव इति वाक्यमिति वाच्यम्। यदि द्वयोः प्रणयन्तीत्येतदर्थवादवशान्मध्यमयोर्निविशेत तदा तेनैव तयोरुत्तरवेदिसिद्धेः 'उपात्र वपति' इत्येतत् केवलवैश्वदेवशुनासीरविषयं स्याद्। वरुणप्रघासावान्तरप्रकरणेऽप्यानर्थक्यप्रतिहतानां विपरीतं बला-बलम् इति न्यायात्तयोरेव च प्रतिषेध इति ग्रहणाग्रहणवद्विकल्पः स्यात्। स च सतिसम्भवे न न्याय्यः। तस्मादूरुत्वेन संस्तुतयोरपि मध्यमयोः न गतिसाधनत्वं पादयोरेव गतिसाधनत्वात्। पादस्थाने च प्रथमोत्तम-पर्वणी यतस्ताभ्यां यज्ञसमाप्तिमेतीत्यर्थवादं कथञ्चिदन्यथा नीत्वा प्रथमोत्तमयोरेवोत्तरवेदिवर्जं सौमिक प्रणयनधर्मकं प्रणयनं द्वयोः प्रणयन्तीत्यनेन विधीयते। उपात्र वपतीत्यनेन तु अवान्तरप्रकरणेन वरुणप्रघासे-षूत्तरवेदिविधिः। अवान्तरप्रकरणानङ्गीकर्त्रेकदेशिमते तु मध्यमयोर्द्वयोरपि तद्विधिरुत्तरवेद्यामग्निं निदधातीति चोत्पन्नोत्तरवेदिविनियोगार्थमिति सर्वेषामर्थवत्तेति द्वितीयः पूर्वः पक्षः।

सू० प्राकृतं वानामत्वात्।

प्रणयतिशब्दस्य सौमिकप्रणयननामत्वाभावात् नात्र मासाग्निहोत्रन्यायेन तद्धर्मकप्रणयनं विधीयते, किन्तु प्राकृतं स्वाभाविकं प्रणयतिशब्दात्प्रतीतं प्रणयनमात्रं विधीयते। न च प्रणयनमात्रं चोदकप्राप्तान्न विशिष्यत इत्येतद्विध्यानर्थक्यमिति वाक्यम्। शाखान्तरे हि 'आहवनीयाद् द्वावध्वर्युप्रतिप्रस्थातारौ अग्नी प्रणयत' इति प्राकृताद् गार्हपत्यापादानकादाहवनीयादन्यदाहवनीयापादानकं पशुबन्धवद्विहितं तद्वचनैकार्थत्वाय द्वयोः प्रणयन्तीत्यनेनापि तादृशं प्रणयनं विधीयते। न च शाखान्तरवचनस्य वरुणप्रघासमात्रविषयत्वात् कथमस्य वचनस्य तदेकार्थत्वसम्भव इति वाच्यम्। शाखान्तरवचनस्य वरुणप्रघासमात्रविषयत्वेऽपि द्वयोरिति वाक्ये प्रणयन्तीत्यस्य तदेकार्थत्वायाहवनीयापादानकप्रणयनविषयत्वसिद्धौ द्वयोरिति पदेन ? साकमेधेष्ववधितादृश प्रणयनसिद्धेरविरोधात्। तच्च गत्यर्थवादान्मध्यमयोर्भवति। न चार्थवादस्यान्यथानयनं युक्तम्। प्रथमोत्तमयोः पादत्वेन संस्तवाभावात् ऊरुत्वेन संस्तुतयोरेव गतिसाधनत्वकल्पनौचित्यात्।

सू० परिसङ्ख्यार्थं श्रवणं अर्थवादो वा।

इदं हि सूत्रं प्राकृतमेवेदं प्रणयनमिति प्रथमपूर्वपक्षस्य प्रयोजनं वक्तुम्। एतेनापूर्वं प्रणयनमिति सिद्धे परिसंख्येत्यादि पुनःश्रवणप्रयोजनपरं सूत्रं असङ्गतमित्यपास्तम्। अस्मिंश्च प्रथमपूर्वपक्षे प्रकृतितोऽननुष्ठानमिति विशेषः।

सू० प्रथमोत्तमयोः प्रणयनं उत्तरवेदिप्रतिषेधात्।

इदं च सूत्रं सौमिकप्रणयनधर्मकं प्रणयनं विधीयत इति द्वितीयपूर्वपक्षस्य प्रयोजनकथनपरम्। अस्मिंस्तु पक्षे प्रथमोत्तमयोः प्रणयने उत्तरवेदिवर्जं वैसर्जनहोमादयः सौमिकप्रणयनधर्माः प्रणयतिशब्देनातिदिष्टाः अनुष्ठेया इत्यनुष्ठानेऽस्ति विशेषः।

सू० मध्यमयोर्वा गत्यर्थवादात्।

इदञ्चापूर्वं प्रणयनमिति सिद्धान्तस्य प्रयोजनकथनपरं सूत्रम्। गत्यर्थवादादाहवनीयापादानकं प्रणयन-मिदं मध्यमयोर्भवतीति।

### भाष्यम्

अथोच्येत-द्वयोः पर्वणोः वादो भवत्विति । अत्र ब्रूमः—न द्वयोः पर्वणोः प्रकरणम् वरुणप्रघासानां वा । वरुणप्रघासानां प्रकरणे द्वयोः पर्वणोरुत्कीर्तनं प्रतिषेधे न स्यात् । तस्माच्चातुर्मास्यानामेव वादः । नन्वेवमप्यर्थवादेनैतज्ज्ञातम्—मध्यमयोः प्रणयनमिति । किमर्थं प्राप्तस्य प्रणयनस्य पुनःश्रवणमिति ? अत्र प्रयोजनं नोक्तम् । असति प्रयोजनेऽन्यस्मिन्

### वार्तिकाभरणम्

किन्तु 'उपात्र वपन्ती'ति पर्वविशेषमनारभ्य विहिताया उत्तरवेदेः पर्युदासार्थमिदं वचनमिति भाष्योक्तमेव व्याख्यानं सम्मतमित्याह—भाष्येति । भाष्ये व्याख्यानं यस्य सूत्रस्य तद् भाष्यव्याख्यानम् इति व्यधिकरणबहुव्रीहिः । उत्तरवेदिप्रतिषेधश्च तद्वदित्यस्य सूत्रान्तरेण परिहाराकथनात् इदमेव सूत्रं तत्परिहारार्थमिति वक्तव्यम् ।

### तन्त्रशिखामणिः

सू० औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ।

यदुक्तम् उत्तरवेदिप्रतिषेधश्च तद्वदिति सूत्रेण उत्तरवेदिप्रतिषेधरूपलिङ्गादपि सौमिकमेवेदं प्रणयनमिति तत्परिहारार्थं इदं सूत्रम् । नहि द्वयोः प्रणयन्तीति वाक्यं पर्युदस्यते । न च उपात्र वपतीत्यस्यावान्तरप्रकरणात् वरुणप्रघासमात्रविषयत्वान्न ततः प्रथमोत्तमयोरुत्तरवेदिप्राप्तिः येन तत्पर्युदासः स्यादिति वाच्यम् । एकदेशिमते अवान्तरप्रकरणानङ्गीकारात् अस्मन्मते च उपात्र वपतीत्यस्य वरुणप्रघासमात्रविषयत्वेन वैश्वदेव इति वाक्यद्वयमनर्थकं स्यात् तयोरुत्तरवेद्यप्रसक्तेः द्वयोः प्रणयन्तीत्यस्यापि गत्यर्थवादवशात् मध्यमयोरेव व्यवस्थितत्वात् । तस्मात् आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इत्यवान्तरप्रकरणबाधेन महाप्रकरणात् उपात्र वपतीति सर्वपर्वसु प्रसक्ता वेदिः न वैश्वदेव इति वाक्येन पर्युदस्यत इत्येव वक्तव्यमित्युक्तत्वात् । एवं च सूत्रकृतोऽपि ऐकाधिकरण्यमेवाभिमतम् नाधिकरणभेदः । तथा सति प्रथमाधिकरणोक्तं लिङ्गं तत्रैव परिह्रियेत । न च परिहृतम् । एतेन यदि प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् इति सूत्रम् मध्यमपक्षप्रयोजनकथनपरं न त्वधिकरणान्तरपूर्वपक्षपरम् । तदा औत्तरवेदिकोऽनारभ्यवादप्रतिषेध इति तत्परिहारार्थं सूत्रमनर्थकं स्यात् । तस्मात् अधिकरणभेद एव युक्त इत्यपास्तम् । औत्तरवेदिक इति सूत्रस्य उत्तरवेदिप्रतिषेधश्च तद्वदिति एतत्परिहारार्थकत्वात् । तस्मादेकमिदमधिकरणं सप्तसूत्रकं त्रिपक्षकमिति दिक् ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

'उपात्र वपन्ति' इति पर्वद्वयसम्बन्धी भवतु । तेन प्रतिषेधोपपत्तिस्स्यादिति शङ्कते—अथोच्येतेति । वादः उपात्र वपन्तीति । प्रतिवदति—अत्रेति । द्वयोः पर्वणोः वरुणप्रघासानां वा न प्रकरणम्, चोदकप्राप्तप्राकृतपदार्थैर्निराकाङ्क्षत्वेनोभयाकाङ्क्षाभावादिति भावः । किन्तु चातुर्मास्यानामेवायं वादः उपात्र वपन्तीति । तदिदं प्रागभिहितम्—'अनारभ्य कञ्चित्पर्वविशेषम्' इत्यादिना । ननु चातुर्मास्यानामेवेति कुतः ? ऊरुसंततवेन मध्यमयोः पर्वणोः प्रणयनं ज्ञातम् किमर्थमिदं पुनःश्रवणम् उपात्र वपन्तीति । पुनःश्रवणस्य किं प्रयोजनमिति

### भाष्यम्

परिसङ्ख्यार्थमेव भवति। तत्र दोषा उक्ताः। तस्माद्गुणार्थमेवैतच्छ्रवणम्। ननु नास्ति कश्चिद्गुणः। उच्यते—गुणः श्रूयते उत्तरवेद्यामग्निनिधानम्। तस्मात्तदर्था पुनःश्रुतिः ॥२५॥

इति चातुर्मास्येषु प्रणयनस्य मध्यमपर्वनिवेशित्वाधिकरणम् ॥९॥

१०

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥७.३.२६॥

### टुप्टीका

अपवादापवादप्रसङ्गेनेदमारभ्यते नामधेयेनातिदेशः। स्वराणि सामान्यस्येति यथैव गवामयने

### वार्तिकाभरणम्

एवं चाधिकरणान्तरोक्तस्य लिङ्गस्याधिकरणान्तरे परिहारकथनायोगात् सप्तभिरपि सूत्रैः एकाधिकरणत्ववर्णनमेव भगवतो जैमिनेस्सम्मतमिति भावः ॥

### वृत्तमधिकरणम्

स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्।

गवामयने श्रूयते—'अभितो दिवाकीर्त्यमहस्त्रयः स्वरसामानो भवन्ति' इति। तेषां च स्वरसाम्नां केचिद्धर्मविशेषा आम्नाता 'सप्तदशा भवन्ति, सन्ततया निग्राह्या भवन्ती'त्येवमादयः। पुनरन्यत्राष्टरात्रे श्रूयते पृष्ठ्यष्षडहो द्वौ स्वरसामानाविति। तथा वैश्वदेवे पर्वणि श्रूयते द्यावापृथिव्य एककपाल इति तत्रापि केचिद्धर्माः

### तन्त्रशिखामणिः

सू० स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्।

यथा प्रणयतिशब्दस्यानामत्वात् अनतिदेशकत्वं तथा स्वरसामादिशब्दानामपि इत्युत्थितेः सङ्गतिः। गवामयने संवत्सरसत्रे मासषट्कयोर्मध्ये दिवाकीर्त्यं विषुवन्नामकं एकमहः तस्य च पुरस्तात् परस्ताच्च त्रयः स्वरसामानोऽहर्विशेषाः। तदेतदभिप्रेत्य श्रूयते 'अभितो दिवाकीर्त्यमहः त्रयः स्वरसामानो भवन्ती'ति। तेषां धर्मविशेषाश्चाम्नाताः सप्तदशा भवन्तीति सप्तदश स्तोमादयः। तथाष्टरात्रे पृष्ठ्यः षडहो द्वौ स्वरसामानाविति श्रुतम् तत्र किमयं स्वरसामशब्दो गावामयनिकस्वरसामधर्मातिदेशको नेति संशयः।

### भाष्यसन्दर्भयोजिनी

नोक्तमिति पृच्छति-नन्विति। परिसङ्ख्यार्थमित्युच्येत तर्हि तत्र दोषा उक्ताः। तेन गुणार्थमिति वक्तव्यम्। को वा स गुणः? न कश्चिद् दृश्यत इति पृच्छति—ननु नास्तीति। 'उत्तरवेद्यामग्नि निदध्यात्' इति विहितोऽग्निनिधानरूपो गुणोऽस्तीति प्रतिवदति—उच्यत इति। उपसंहरति—तस्मादिति ॥२५॥

इति चातुर्मास्येषु प्रणयनस्य मध्यमपर्वनिवेशित्वाधिकरणम् ॥ ९ ॥

'उक्तं क्रियाभिधानम्' (जै. सू. ७-३.१) इति नामातिदेशाधिकरणमारभ्य तदपवादपरम्परां परिसमाप्य स एव नामातिदेशो विचार्यते।

## भाष्यम्

### विषयः

गवामयने श्रूयते 'अभितो दिवाकीर्त्यमहः, त्रयः स्वरसामानो भवन्ति' इति। तेषां विशेषधर्मा आम्नाताः। यथा—'सप्तदशा भवन्ति, सन्तततयातिग्राह्या गृह्यन्ते' इत्येव-

## टुप्टीका

गुणविधिस्तथेतरत्रापि—'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति। आमिक्षैककपालावपि द्रव्यविधित्वाद्गुणविधी।

## वार्तिकाभरणम्

समाम्नाताः 'सर्वहुतं जुहोति' 'अपर्यावर्तयन् जुहोति' इत्येवमादयः। पुनरन्यत्र वरुणप्रघासेषु श्रूयते—'काय एककपाल' इति। तत्रैव वैश्वदेवे श्रूयते—'वैश्वदेव्यामिक्षे'ति। तत्रापि केचिद्धर्मा आम्नाताः 'तप्ते पयसि दध्यानयती'ति दध्यानयनादयः। पुनरन्यत्र ज्योतिष्टोमे अनुबन्ध्यास्थाने 'मैत्रावरुण्यामिक्षे'ति।

तत्र सन्देहः—किमष्टरात्रादिगतस्वरसामादिषु गावययनिकधर्माणां द्यावापृथिव्येककपालधर्माणां वैश्वदेविकामिक्षाधर्माणां च अतिदेशोऽस्ति न वेति। अस्याधिकरणस्यास्मिन् अध्याये सङ्गतिमाह—अपवादेति। 'गुणविधिस्तु न गृह्णीयात् समत्वात्' इत्यधिकरणे वैष्णवशब्दस्य गुणविधायकत्वेनातिदेशकत्वं नास्तीति नामातिदेशापवादः कृतः अपवादप्रसङ्गादपि स्वरसामादिशब्दानां गुणविधित्वादेवातिदेशकत्वं नास्तीति पूर्वपक्षं कृत्वा तदपवादतया चिन्त्यते। एवं च गुणविधिस्तु न गृह्णीयादित्यत्र कृतस्य नामातिदेशापवादस्य पुनरस्मिन् अधिकरणे अपवादः क्रियत इति अपवादप्रसङ्गेनेदमधिकरणमारभ्यत इत्यर्थः।

## तन्त्रशिखामणिः

तथा वैश्वदेवपर्वणि द्यावावृथिव्य एककपालः श्रुतः तस्य धर्मा 'सर्वहुतं जुहोति' 'अपर्यावर्तयञ्जुहोति' इत्यादयश्च श्रुताः। तथा तत्रैव संशयः।

तत्र स्वरसंज्ञाः सामानि एषामिति स्वरसामशब्दो गवामयने अष्टरात्रे च तुल्यवद्गुणविधिपरः। तथा वैश्वदेवे अन्यत्र च तुल्यवदेककपालामिक्षाशब्दौ गुणविधिपराविति वैष्णवशब्दवत् न धर्मातिदेशो नामत्वाभावादिति प्राप्ते,

## भाष्यसन्दर्भयोजिनी

### विषयः

विषयमुपस्थापयति—गवामयन इति। गवामयनाख्यं संवत्सरसाध्यं सत्रं सत्रात्मकद्वादशाहविकृतिभूतम् कुण्डपायिनामयनादिसत्राणां प्रकृतिभूतञ्च। तत्रेदमाम्नायते—'अभितो दिवाकीर्त्यमहः, त्रयस्स्वरसामानः' इति। अस्यार्थः–संवत्सरसाध्ये गवामयने पूर्वं मासषट्कं पूर्वं पक्ष इति उत्तरञ्च मासषट्कमुत्तरं पक्ष इति व्यवह्रियते। उभयोः पक्षसोः मध्यमं दिनं दिवाकीर्त्यमिति विषुवदिति प्रसिद्धम्। तद्दिनमुभयतः त्रयस्त्रयस्स्वरसामानो भवन्ति। पूर्वस्य पक्षसः षष्ठे मासि अन्तिमानि त्रीणि दिनानि, उत्तरस्य पक्षसः सप्तममासस्यादौ त्रीणि दिनानि स्वरसामशब्देनाभिधीयन्ते। येन क्रमेण पूर्वस्मिन् पक्षसि अन्हां क्लृप्तिः तत्प्रातिलोम्येनोत्तरस्मिन् पक्षस्यन्हां क्लृप्तिः। तथा सति दिवाकीर्त्यमभितः पूर्वं पश्चाच्च त्रयस्त्रयस्स्वरसामानो भवन्ति। स्वराणि सामानि येषामन्हां तान्यहानि स्वरसामानीति कथ्यन्ते। तेषामन्हामुक्थ्यसंस्थाकत्वं सप्तदशस्तोमकत्वञ्च विशेषेण

## भाष्यम्

मादयः । पुनरन्यत्र श्रूयते—पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति ।

तथा वैश्वदेवे श्रूयते—'द्यावापृथिव्य एककपालः' इति । तत्राम्नाता विशेषधर्माः—'सर्वंहुतं जुहोति, 'अपर्यावर्तयञ्जुहोति' इति । पुनरन्यत्र 'काय एककपालः' इति । तत्रैव श्रूयते 'वैश्वदेव्यामिक्षा' इति । तत्रापि विशेषधर्माः केचिदाम्नाताः । पुनरन्यत्र 'मैत्रावरुण्यामिक्षा' इति ।

## टुप्टीका

एवं गुणविधित्वाऽतिदेशाभावे प्राप्ते 'यस्य लिङ्गमर्थसंयोगात्' (जै. सू. ८.१.२.) इत्यनेनातिदेशः प्राप्यते ॥२६॥

## वार्तिकाभरणम्

ननु किमस्मिन् अधिकरणे चोदनाया लिङ्गेनातिदेशो व्युत्पाद्यते उत नामधेयेन ? नाद्यः—चोदनालिङ्गेनातिदेशव्युत्पादने गुणविधिस्तु न गृह्णत्वादित्यत्रोक्तस्य नामातिदेशस्यास्मिन् अधिकरणे अपवादः क्रियत इति यदुक्तं तद्विरोधप्रसङ्गात् यद्यस्मिन् अधिकरणे नाम्ना धर्मातिदेशो व्युत्पाद्येत; तदानीमपवादापवादोऽस्मिन् अधिकरणे क्रियत इत्येतत् सङ्गच्छते-उत्सर्गतः प्राप्तस्यार्थस्य स्थिरीकरणार्थो ह्यपवादापवादः । न ह्युत्सर्गतः प्रसक्तस्य साप्तमिकस्य नामातिदेशस्य विजातीयेनाष्टमिकेन चोदनालिङ्गातिदेशेन स्थिरीकरणं सम्भवति । न द्वितीयः-नामधेयेनैवास्मिन् अधिकरणे अतिदेशव्युत्पादने साक्षादेवास्याधिकरणस्याध्यायसङ्गतत्वेन प्रसङ्गसङ्गत्यभिधानविरोधात् इति चेन्न; चोदनालिङ्गेनातिदेशव्युत्पादनेऽप्यतिदेशमात्राभिप्रायेणापवादापवादत्वोक्तिसम्भवेन विरोधाभावात् ।

ननु भाष्ये 'कुतः प्राप्तिः, उच्यते लक्षणया प्राप्तिः लिङ्गैरेतैर्लक्षणया परिग्रहः' इति स्वरसामादिशब्दानां लक्षणया धर्मातिदेशकत्वस्योक्तत्वेन साक्षादध्याये सङ्गतत्वेन कथं प्रसङ्गसङ्गतिरित्युच्यत इति चेत्—

## तन्त्रशिखामणिः

ब्रूमः,-अनन्यगतिकलिङ्गानुगृहीतात् स्वरसामत्वादिचोदनासामान्यादतिदेशः । तत्राष्टरात्रे श्रुतं 'यत् तृतीयं सप्तदशमहः त्रयस्त्रिंशस्य स्थानमभिपर्याहरति षडुत्तराणां स्तोमानां अव्यवायाय त्रयाणां सप्तदशानां अनूचीनताया' इति । अयमर्थः पृष्ठ्ये हि षडहे त्रिवृत् पञ्चदश सप्तदशैकविंश त्रिणव त्रयस्त्रिंशत् स्तोमकानि क्रमेण षडप्यहानि

## भाष्यसन्दर्भयोजिनी

विहितम् । एवमतिग्राह्यग्रहाणां सन्ततया ग्रहणञ्च विहितमिति । पुनरन्यत्र अष्टरात्रेऽहर्गणे 'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति श्रूयत इति शेषः । एकैकस्मिन्नहनि समाप्यमानास्सोमयागा एकं दिनमारभ्य द्वादशदिन पर्यन्तमनुष्ठेया आहर्गणशब्देनोच्यन्ते । तत्राष्टरात्रे पृष्ठस्तोत्रयुक्तानि षडहानि पृष्ठ्यषडहशब्देनोच्यन्ते । पृष्ठस्तोत्राणि रथन्तर-बृहद् वैरूप-वैराज-शाक्वर-रैवत सामभिः क्रियन्ते । तेषु स्तोत्रेषु क्रमशः त्रिवृत्-पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशस्तोमा भवन्ति । पृष्ठ्यषडहानन्तरं द्वौ स्वरसामानौ भवत इत्यष्टरात्रस्याहःक्लृप्तिरित्यर्थः ।

तथा वैश्वदेवे चातुर्मास्येषु वैश्वदेवे पर्वणि द्यावापृथिवीदेवताक एककपालः पुरोडाशो विहितः । तत्रत्यान् विशेषधर्मान् प्रदर्शयति—'सर्वंहुतं जुहोति' इति । पुरोडाशान्तरेष्ववदानादिकं यथा भवति, न तथात्र, किन्तु सर्वस्य पुरोडाशस्य होम इत्यर्थः । अपर्यावर्तं हूयमानस्य पुरोडाशस्य पर्यावर्तनं यथा न भवेत्तथा होतव्यमित्यर्थः । पुनरन्यत्र आग्रयणे । कायः कदेवतावाचकः । तत्रैव वैश्वदेवपर्वण्येव पुनरन्यत्र अनुबन्ध्यायाः स्थाने । त्रिषु स्थलेषु विचारः ।

## भाष्यम्

### संशयः

तत्र सन्देहः—किं स्वरसामशब्दोऽन्यत्र श्रूयमाणो गायामयनिकेभ्यः स्वरसामभ्यो धर्माणां ग्राहकः ? उत नेति ? एवमेककपालामिक्षाशब्दावपि ।

### पूर्वपक्षः

तत्र गुणविधिस्तु न गृह्णीयात्समत्वात् ( ७.३.१७ ) इत्यग्रहणे प्राप्ते,

## वार्तिकाभरणम्

सत्यम्, चोदनालिङ्गसामान्याद्वा स्वरसामान्यादेककपालत्वसामान्यादामिक्षात्वसामान्याच्च 'यस्य लिङ्गमर्थसंयोगादभिधानवदि'ति न्यायेन प्राप्तिरिति भाष्य एव पक्षान्तरस्याप्युक्तत्वेन तदभिप्रायेण प्रसङ्गसङ्गतिराचार्यैरुपपादिता ।

नन्वस्मिन् पक्षे किं स्वरसामशब्दोऽन्यत्र श्रूयमाणो गावामयनिकेभ्यः स्वरसामभ्यो धर्माणां ग्राहक उत नेति । एवं एककपालामिक्षाशब्दावपीति भाष्ये संशयोपन्यासः कथमुपपद्यत इति चेत्-सत्यम्, सोऽयं संशयोपन्यासः प्रथमपक्षाभिप्रायेण । द्वितीयपक्षे तु संशय उन्नेयः । अत एव पार्थसारथ्युपाध्यायैः शास्त्रदीपिकायां द्वितीयपक्षाभिप्रायेण संशय उपन्यस्तः । किमेतौ स्वरसामानौ गावामयनिकस्वरसामविकारावुत न, एककपालामिक्षे वैश्वदेविकैककपालामिक्षाविकारावुत नेति ।

पूर्वपक्षमाह—**नामधेयेनेति** । नामधेयेन ह्यतिदेशो वक्तव्यः । न हि स्वरसामादिशब्दो नामधेयं येनातिदेशः स्यादित्यर्थः । कुतः स्वरसामशब्दो नामधेयं न भवतीत्यत आह—**स्वराणीति** । यथा गवामयने स्वरसामशब्देन

## तन्त्रशिखामणिः

भवन्ति । अष्टरात्रे च यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशादूर्ध्वं उत्कष्टव्यम् । तथा सति षट् षट् संख्योत्तराणां स्तोमानामव्यवायेन भवति त्रिवृत्स्तोममारभ्य पञ्चदशस्य षट्सङ्ख्योत्तरत्वात् । एवं पञ्चदशमारभ्य एकविंशस्य षट्संख्योत्तरत्वात् । एवमुत्तरत्रापि । न तु सप्तदशस्य तस्य त्रयस्त्रिंशादूर्ध्वं उत्कर्षे च त्रयाणां सप्तदशानां

## भाष्यसन्दर्भयोजिनी

### संशयः

अन्यत्र अष्टरात्रे श्रूयमाणः स्वरसामशब्दः गावामयनिकस्वरसामविहितान् धर्मान् गृह्णाति वा नवेति संशयः । अन्यत्र श्रूयमाण एककपालशब्द आमिक्षाशब्दश्च वैश्वदेविकधर्मग्राहकौ किं भवतः ? उत नेति संशयः ।

### पूर्वपक्षः

वैष्णवशब्दस्य गुणसमर्पकत्वेन यथा धर्मग्रहकत्वं नास्तीति 'गुणविधिस्तु' इत्यत्र प्रतिपादितम्, तथैव स्वरसामशब्दस्यापि व्युत्पत्तिसिद्धगुणसमर्पकत्वेन गावामयिनकधर्मग्राहकत्वं नास्तीति पूर्वपक्षं सङ्गृह्णाति-अग्रहणे प्राप्ते इति ।

## भाष्यम्

### सिद्धान्तः

इदमुच्यते स्वरसामैककपालामिक्षञ्च धर्माणां ग्राहकम् । किं कारणम् ? लिङ्गदर्शनात् । लिङ्गं तत्र तादृशं दृश्यते, येन ज्ञायते सर्वं एते धर्माणां ग्राहका इति । स्वरसामसु तावत् 'पृष्ठ्यः षडहो द्वौ स्वरसामानौ' इत्युक्त्वाह—तत्र यत्तृतीयं सप्तदशमहस्तत् त्रयस्त्रिंशस्य स्थानमभिपर्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय त्रयाणाञ्च सप्तदशानामनूचीनताया' इति यद्येतौ

## वार्तिकाभरणम्

स्वराणि स्वराख्यानि सामान्यस्येति स्वराख्यसामलक्षणगुणविधिः तथा इतरत्राष्टरात्रेऽपि गुणविधिः। तथा आमिक्षैककपालशब्दावपि आमिक्षापुरोडाशद्रव्यविधिपरत्वात् गुणविधायकावित्यर्थः। **द्रव्यविधित्वादिति**। द्रव्यं विधीयते आभ्यां शाब्दभ्यामिति द्रव्यविधिशब्दौ तयोर्भावः द्रव्यविधित्वम्; तस्मादित्यर्थः। एवं गुणविधी इत्यत्रापि व्युत्पत्तिर्द्रष्टव्या। नन्वस्तु स्वरसामादिशब्दानां गुणविधायकत्वं तावता प्रकृते किमायातमित्यत आह—**एवमिति**। पूर्वोक्तप्रकारेण स्वरसामादिशब्दानां गुणविधित्वान्नामधेयत्वं नास्ति। नामधेयत्वाभावादेव गावामायनिकधर्माः सप्तदशत्वादयः, एककपालधर्माः सर्वहुतकरणादयः, आमिक्षाधर्माः दध्यानयनादयः, अष्टरात्रे वारुणप्रघासिके कार्यैककपाले अनूबन्ध्याप्रतिनिधित्वेनाम्नातायामामिक्षिकायां चातिदेशेन प्राप्नुवन्तीत्यर्थः।

सिद्धान्तमाह—**यस्येति**। स्वरसामादिशब्दानां नामत्वाभावेनातिदेशत्वाभावेऽपि 'यस्य लिङ्गमर्थसंयोगादभिधानवदि'त्याष्टमिकन्यायेन यथा निर्वपतिसामान्यात् सौर्यादावाग्नेयधर्मा भवन्ति एवं स्वरसामत्वसामान्याद्गावामयनिकधर्मा अष्टरात्रे, आमिक्षात्वसामान्यात् वैश्वदेविकामिक्षाधर्माः अनू-

## तन्त्रशिखामणिः

नैरन्तर्यं भवतीति। यद्यष्टरात्रे स्वरसामशब्दो गावामयनिकस्वरसामधर्मातिदेशः तदा तयोरपि गावामयनिकवत् सप्तदशता भवति। तयोः सप्तदशत्वे च तृतीयस्य च सप्तदशस्यानूत्क्रष्टत्वात् त्रयाणां सप्तशानां अनूचीनता भवतीति स्वरसामशब्दस्यातिदेशत्वे लिङ्गम्। तथाग्रयणे द्यावापृथिव्यमेककपालं विधाय यत् सर्वंहुतं करोति सा

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

स्वरसामैककपालामिक्षं गावामयनिकादिधर्मग्राहकमिति सिद्धान्तं दर्शयति-**स्वरेति**। तत्र कारणम्-**लिङ्गदर्शनादिति**। **तत्र अष्टरात्रे**। गुणसमर्पकत्वाभावे **तादृशं लिङ्गं** येन स्वरसामशब्दस्य धर्मग्राहकत्वमङ्गीकर्तव्यं भवतीत्यर्थः। **सर्वं एते** स्वरसामैककपालामिक्षाशब्दाः। किं तल्लिङ्गम् तदुपस्थापयति-**स्वरसामसु तावदिति**। पृष्ठ्यषडहे षण्णां पृष्ठस्तोत्राणां षट्स्तोमाः त्रिवृत् पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशसंख्याकाः सन्ति। एतैर्युक्तानि षडहानि भवन्ति। तत्र **यत् तृतीयं** अहः **सप्तदशम्** तत् **त्रयस्त्रिंशस्य** अन्हः **स्थानमभि** स्थानानन्तरं **पर्याहरन्ति** नयन्ति। तृतीयस्थाने कर्तव्यं यत् सप्तदशमहः तत् त्रयस्त्रिंशतस्थानानन्तरं कर्तव्यमित्यर्थः। एवमनुष्ठाने को लाभ इत्यत्राह-**स्तोमानामव्यवायाय** सर्वेषां तुल्यं षट् सङ्ख्यया व्यवधानं सिध्ये-

## भाष्यम्

**स्वरसामानौ गावामयनिकानां धर्माणां ग्राहकौ तत्रैतावपि सप्तदशौ। तथात्र त्रयस्सप्तदशा अनूचीना भवन्ति। तत्रैतद्वचनं युज्यते त्रयाणां सप्तदशानामनूचीनताया इति।**

**तथा आग्रयणे 'द्यावापृथिव्यमेककपालं विधायाह—'यत्सर्वंहुतं करोति सा त्वेका परिचक्षा, हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत' इत्याज्यविधिपरे वाक्ये सर्वंहोममपर्यावृत्तिञ्च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति।**

## वार्तिकाभरणम्

बन्ध्यास्थाने प्रतिनिधीयमानायामामिक्षायामेककपालत्वसामान्यात् द्यावापृथिव्येककपालधर्माः काय एककपाले च भवन्तीत्यर्थः। एवं च लिङ्गमुपपत्स्यते। तथाहि—अष्टरात्रे श्रूयते 'पृष्ठ्यष्षडहो द्वौ स्वरसामानौ तत्र यत्तृतीयं सप्तदशमहः तत्त्रयस्त्रिंशस्य स्थानमभिपर्याहरन्ति षडुत्तराणां स्तोमानामव्यवायाय त्रयाणां सप्तदशानामनूचीनताया' इति। यद्यष्टरात्रान्तर्गतस्वरसाम्नो गावामयनिकस्वरसामधर्मा न भवेयुः तदा अष्टरात्रगतस्वरसाम्नोरतिदेशतस्सप्तदशत्वाभावेन त्रयाणां सप्तदशानामनूचीनताया इति त्रयाणामपि सप्तदशत्वसिद्धिवत् निर्देशोऽनुपपन्नः स्यात्, पृष्ठ्यषडहान्तर्गतस्य तृतीयस्याह्नः त्रयस्त्रिंशानन्तरमुक्तस्य सप्तदशत्वेऽपि तदनन्तरकर्तव्ययोः स्वरसाम्नोस्सप्तदशत्वाभावात्। सति च गावामयनिकस्वरसामधर्मातिदेशे अष्टरात्रान्तर्गतयोः स्वरसम्नोरपि

## तन्त्रशिखामणिः

त्वेका परिचक्षा यद्धुतोऽहुतः पर्यावर्तते सा द्वितीयेति सर्वहुतत्वापर्यावृत्तिसम्भावनाभ्यामेककपालयागस्य निन्दामुद्भाव्याज्यस्यैव द्यावापृथिव्यौ यजेत इत्याज्यहविष्को यागो विहितः। तत्र सर्वहोमापर्यावृत्तिसम्भवेन वैश्वदेविक

## भाष्यसन्दर्भयोजिनी

दित्यर्थः। त्रिवृत् ९ + ६ पञ्चदश १५ + ६ एकविंशः २१ + ६ त्रिणवः २७ + ६ त्रयस्त्रिंशदित्येवं तुल्यं व्यवधानं सिध्यति। सप्तदशस्य त्रयस्त्रिंशदुत्तरं नयनेन त्रयस्सप्तदशा अन्वञ्चतया भवन्ति। तदिदं गावामयनिकधर्मग्राहकत्वे सत्येवोपपद्यत इत्याह-**यद्येताविति**।

**अनूचीनाः** अन्वञ्चः। गवामयनतोऽतिदेशे सत्येवाष्टरात्रे स्वरसामानां त्रित्वमुपपन्नं भवेदित्याह-**त्रयाणां सप्तदशानामिति**। द्वौ स्वरसामानाविति विहितत्वादिति भावः।

द्वितीयं स्थलं दर्शयति-**तथा आग्रयणे** इति। वैश्वदेवे एककपालस्य सर्वहोमः होमसमये पुरोडाशस्यापर्यावर्तनञ्च श्रुतम्। एककपालं जुह्वां निक्षिप्य न होमः क्रियते। तथा सति पुरोडाशस्य पर्यावर्तनं कदाचिद् भवेदिति शिक्यायां निक्षिप्य पुरोडाशं हस्तेनैवाध्वर्युर्जुहोति पर्यावर्तनं माभूदिति। तदिदं सर्वहोमं अपर्यावर्तनञ्चानूद्याग्रयणे प्रतिषिध्यते। प्राप्तस्यैव प्रतिषेध इति प्रतिषेधबलाद्वैश्वदेवतः प्राप्तिरङ्गीकार्या। अनेन लिङ्गेन धर्मग्राहकत्वमकेकपालस्य साधितं भवति। **परिचक्षा** निन्दा। एककपालस्य प्रतिषेधे तत्स्थाने किं क्रियत इत्यत आह—'आज्यस्यैव' इति। एककपालस्थाने आज्येनैव द्यावापृथिव्ययागः कर्तव्य इत्यर्थः।

## भाष्यम्

तथा मैत्रावरुण्यामिक्षायां 'न वाजिनेन प्रचरन्ति' इति वाजिनेज्यां वैश्वदेविकं धर्मं प्रतिषेधंस्ततो न धर्मप्राप्तिं दर्शयति । एतेभ्यो लिङ्गेभ्य एतज्ज्ञायते—यथास्वं धर्माणां ग्राहका इति । प्रतिपत्त्यर्थकर्म वाजिनेज्या, स्विष्टकृत्तुल्यां मत्वैतदुक्तम् । आह—लिङ्गमपदिष्टम्, कुतः प्राप्तिरिति ? उच्यते—लक्षणया प्राप्तिः लिङ्गन्तु लक्षणापरिग्रहः ॥२६॥

## वार्तिकाभरणम्

सप्तदशत्वेन त्रयाणां सप्तदशत्वनिर्देश उपपद्यते । तथा आग्रयणे द्यावापृथिव्येककपालविधानानन्तरमाम्नायते—'यत्सर्वंहुतं करोति सा त्वेका परिचक्षा यद्धुतोऽहुतः पर्यावर्तते सा द्वितीया परिचक्षा आज्यस्यैव द्यावपृथिव्यौ यजेत' इति । यद्येककपालेषु सर्वेषु वैश्वदेविकैककपालधर्मप्राप्तिर्न स्यात् तदा आग्रयणे आज्यविधिपरे वाक्ये द्यावापृथिव्येककपाले सर्वहोमदर्शनं पर्यावृत्तिदर्शनं चायुक्तं स्यात् । वैश्वदेविकैककपालात् सर्वहोमस्य अपर्यावृत्तेश्चाप्राप्तौ द्यावापृथिव्ययागे एककपालस्य पुरोडाशस्य द्रव्यत्वे तस्य सर्वहोमकरणमेव × × × × एका निन्दा तथा तस्यापर्यावृत्तस्य प्रतिष्ठितस्य होतव्यात् दैवात् पर्यावृत्तौ सत्यां सैवैका निन्देति निन्दानुपपत्तेः । तथा मैत्रावरुण्यामिक्षायां आम्नायते 'न वजिनेन प्रचरन्ती'ति तदिदं वाजिनयागप्रतिषेधदर्शनं वैश्वदेविकामिक्षातो वाजिनयागप्राप्तौ सत्यां घटते नान्यथा । तस्मादुक्तलिङ्गबलात् स्वरसामादिष्वनिदेशः स्वीकर्तव्य इति ॥

वृत्तमधिकरणम्

## तन्त्रशिखामणिः

धर्मातिदेशकत्वे लिङ्गम् । तथा मैत्रावरुण्यामिक्षायां न वाजिनेन प्रचरन्तीत्येतत् वैश्वदेविकामिक्षाधर्मातिदेशकत्वे लिङ्गम् । अन्यथा वाजिनप्रसक्त्यभावेन निषेधानुपपत्तेरिति दिक् ॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

तृतीयं स्थलं दर्शयति-मैत्रावरुणीति । वैश्वदेवे पर्वणि आमिक्षायागेन सह 'वाजिभ्यो वाजिनम्' इति वाजिनयागोऽप्यनुष्ठीयते । स यागोऽत्र प्रतिषिध्यते-न वाजिनेनेति । प्रतिषेधश्च प्राप्तिसापेक्षः । अतो वैश्वदेवाद्धर्मप्राप्तिरङ्गीकर्तव्या । तदिदं कीर्तयति-एतेभ्यो लिङ्गेभ्य इति ।

प्रतिपत्त्यर्थकर्मेति । ननु वैश्वदेवपर्वणि 'सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र गुणात्कर्मभेदः साधितो द्वितीये । तेनामिक्षायागस्य वाजिनयागस्य च नाङ्गाङ्गिभावः, स्वतन्त्रे इमे द्वे कर्मणीति सिध्यति । अस्यां स्थितौ 'न वाजिनेन प्रचरन्ति' इति वाजिनेज्यानिषेधकमत्रत्यं वाक्यं वैश्वदेविकाङ्गकलापग्राहकत्वे लिङ्गं कथं भवितुमर्हति ? वाजिनेज्याया निषेधेनावगम्यते यद्वैश्वदेविकवाजिनयागोऽत्र प्राप्तः प्राप्तस्य निषेधः क्रियत इति वक्तव्यम् । वाजिनयागश्च वैश्वदेवे आमिक्षावत्प्रधानयागः । न हि प्रधानस्यातिदेशो भवति । तथासति 'न वाजिनेन' इति वाजिनेज्यानिषेधबलादत्रत्यामिक्षापदं वैश्वदेविकाङ्गग्राहकमिति कथं वक्तुं शक्यमित्यत आह—स्विष्टकृत्तुल्यां मत्वेति । वाजिनश्चानुनिष्पादिद्रव्यम्, अनुनिष्पादिनस्तस्य प्रतिपत्तिरूपत्वं मत्वा कृत्वाचिन्तयेदमुक्तमित्यर्थः । लिङ्गमुक्तं न्यायः क इति प्रत्यवतिष्ठते-आहेति । लक्षणया सादृश्येनेत्यर्थः । लक्षणायास्तात्पर्यग्राहकं प्रदर्शयति-लिङ्गन्त्विति ॥२६॥

भाष्यम्

## चोदनासामान्याद्वा ॥७.३.२७॥

स्वरसामत्वसामान्यात् एककपालत्वसामान्यात् आमिक्षासामान्याद्वा 'यस्य लिङ्गमर्थसंयोगात्' (जै. सू. ८.१.२) इत्यनेन प्राप्तिरिति ॥२७॥

इति स्वरसामैककपालामिक्षाधिकरणम् ॥१०॥

११

## कर्मजे कर्म यूपवत् ॥७.३.२८॥

विषयः

क्वचिच्छ्रूयते—'वासो ददाति, अनो ददाति' इति ।

वार्तिकाभरणम्

कर्मजे कर्म यूपवत्

कर्मनामधेयानामग्निहोत्रादिशब्दानां यौगिकानामपि प्रायणीयशब्दानामतिदेशकत्वम्, गुणविधायकानां वैष्णवादिशब्दानां लिङ्गविशेषशून्यानामनतिदेशकत्वम् चोक्तम् । कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशकत्वम् । इदानीं तत्प्रसङ्गात् वासःप्रभृतीनां संस्कारनामत्वमेवास्ति नास्तीति चिन्त्यते ।

ननु संस्कारनामत्वे संस्कारातिदेशकत्वं नामत्वाभावे नातिदेशकत्वमिति नामातिदेशप्रस्तावे साक्षादेव सङ्गतत्वात् कथं प्रसङ्गसङ्गत्यभिधानमिति चेत्-स्यादेतदेवम्, यदि संस्कारनामत्वेऽतिदेशकत्वं स्यात्, न त्वेत-

तन्त्रशिखामणिः

सू० कर्मजे कर्म यूपवत् ।

नामातिदेशप्रसङ्गात् वासश्शब्दप्रभृतीनां किं वानादिक्रियानामत्वम् ऊत जातिवचनत्वमिति चिन्त्यत इति सङ्गतिः । क्वचित् श्रूयते 'वासो ददाति' 'अनो ददाति' इति वासोऽनःशब्दप्रभृतयो वानतक्षणादिक्रियावचनाः ? उत जातिवचनाः ? इति संशयः । संस्करनामत्वे वासो ददातीत्यादिना वानक्रियैव कर्माङ्गतया विधेयेति वानादिकं कृत्वा वासो निष्पाद्य दातव्यम् । जातिवचनत्वे तु यथासिद्धमेव वासःप्रभृति देयमिति

भाष्यसन्दर्भयोजिनी

'लक्षणया' इति कथनमात्रेण 'कुतः प्राप्तिः' इति प्रश्नो नोत्तरित इत्यत आह-यस्य लिङ्गमिति । आष्टमिकोऽयं न्यायः । यस्य प्रकृतित्वेनाभिमतस्य लिङ्गं चिन्हम्-सदृशधर्म इत्यर्थः, तद्यस्यां विकृतौ दृश्यते तस्यां तदीयविध्यन्तस्स्यादर्थस्य लिङ्गस्य तेन विध्यन्तेन संयोगात्, अभिधानवत् अग्निहोत्रादिनामवत् इति न्यायस्वरूपम् ॥२७॥

विषयः

नामातिदेशप्रसङ्गेन संस्कारातिदेशार्थमुदाहरति—'वासो ददाति' 'अनो ददाति' इति ।

## भाष्यम्

### संशयः

तत्र विचार्यते—किं वाससोऽनसश्च क्रिया प्राप्यते ? उत नेति ? एवं तावन्नः परीक्ष्यम्—किं कर्मनिमित्तावेतौ शब्दौ ? उताकृतिनिमित्तौ ? इति । यदि कर्मनिमित्तौ ततः प्राप्यते । अथाकृतिनिमित्तौ ततो नेति । किं तावत्प्राप्तम् ?

## वार्तिकाभरणम्

दस्ति । अन्यत्रोपदिष्टस्य ह्यन्यत्र प्राप्तिरतिदेशः । न चैते वानतक्षणादयः संस्काराः कस्मिंश्चित् कर्मविशेषे उपदिष्टा येनातिदेशेनान्यत्र प्राप्नुयुः, किन्त्वेते लोकसिद्धाः । यदि च लोकसिद्धानां कर्मणि विनियोगमात्रेणातिदेश इत्युच्यते तदा "व्रीहीनवहन्ति" इत्यादीनामपि लोकसिद्धावहननादिविनियोजकानामवहननाद्यतिदेशकत्वं स्यात् । तस्मान्न साक्षात्सङ्गतिः ।

नन्वेवं सति कथं पार्थसारथ्युपाध्यायैः 'वासश्शब्देन लोकसिद्धा वा न क्रिया कर्माङ्गत्वेनातिदिश्यत' इति तन्त्ररत्ने पूर्वपक्षे, 'तस्मान्न क्रियातिदेशकत्वं शब्दयोरि'ति शास्त्रदीपिकायां सिद्धान्ते चातिदेशकत्वानतिदेशकत्वमुक्तमिति चेन्न, अतिदेशानतिदेशोक्तेर्वानतक्षणक्रियाकर्तव्यत्वाकर्तव्यत्वपरत्वात् । यदि चातिदेशशब्दमात्रेणातिदेशविचारः स्यात्तदा शास्त्रदीपिकायां 'संस्कारमुपधानाङ्गत्वेनातिदिशतीति प्राप्ते ब्रूमः । वह्निमात्राभिधायित्वं न संस्कारातिदेशनमि'त्यग्निमाधिकरणे पार्थसारथ्युपाध्यायैरुक्तत्वात् तदप्यधिकरणमतिदेशानतिदेशविचारात्मकं स्यात् । तस्मात् अतिदेशशब्दः कर्तव्यत्वपर एव । ज्योतिष्टोमदक्षिणाप्रकरणे श्रूयते 'वासो ददाति

## तन्त्रशिखामणिः

फलफलिभावः । तत्र जात्यभावेऽपि वयनावस्थायां 'वासो वयतीति' प्रयोगात् वानादिक्रियावचनाः । न च विनष्टायामपि क्रियायां वासो जीर्णमिति प्रयोगात् विनिगमनाविरहेण जातिवचनता किं न स्यादिति वाच्यम् तथापि वानक्रियायाः प्राथम्यात् तत्पूर्वकत्वाच्च जातेर्मुख्यातिक्रमे कारणाभावात् क्रियानिमित्तेति प्राप्ते,

ब्रूमः —न ह्यत्र पाचकलावकादिशब्दवत् धातुविभागादिना क्रियावाचकत्वमस्ति अखण्डेनैव शब्देन क्रियामभिधाय तदुपहिताभिधाने गौरवम् । किञ्च क्रियावचनत्वे विनष्टायां प्रयोगो न स्यात् । न चेह यूपवत्

## भाष्यसन्दर्भयोजिनी

### संशयः

वासश्शब्दस्यानश्शब्दस्य च प्रवृत्तिनिमित्तं किमिति विचारः । **वाससः अनसः** इति च पञ्चम्यन्तं पदम् । तस्मात्किं **क्रिया प्राप्यते** ज्ञायते **उत नेति** संशयः । तदर्थमिदं परीक्ष्यते—**एवं तावन्नः परीक्ष्यमिति** । **नः** सपक्षिविपक्षिणामित्यर्थः । अनयोश्शब्दयोः प्रवृत्तिनिमित्तं किं क्रिया उत जातिरिति **परीक्ष्यम्** । फलफलिभावं दर्शयति—**यदि** इति । **ततः प्राप्यते** क्रियेति शेषः ।

## भाष्यम्

### पूर्वपक्षः

कर्मनिमित्ताविति । कुतः ? कर्मागमे तद्दर्शनात् । यदा तस्मिन् द्रव्ये दारुणि सूत्रे वा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति तदैतौ शब्दौ प्रवर्तेते न प्राक् । अतो विज्ञायते कर्मनिमित्ताविति । यदा कर्मनिमित्तौ तदेतदारभ्यते 'कर्मजे कर्म यूपवत्' । कर्मजे-एतस्मिन् वास आदौ द्रव्ये श्रूयमाणे कर्म प्राप्यते । कथम् ? यूपवत् । यथा यूपशब्दो जोषणादिक्रिया-निमित्तः स यत्र श्रूयते तत्र जोषणाद्याः क्रियाः प्राप्यन्ते, एवमिहापीति ॥२८॥

## वार्तिकाभरणम्

अनो ददाति' इति । तत्र संशयः-किं वासश्शब्दः अनश्शब्दश्च क्रियावाचकौ उताहो जातिवाचकाविति । यदि क्रियावाचकौ तदा वानं तक्षणं च कृत्वा वासः अनश्च निष्पाद्य तदुभयं दातव्यम् । यदि च जातिवाचकौ तदा लोकसिद्धमेव तदुभयं दातव्यमिति । तत्र वासश्शब्दोऽनश्शब्दश्च न केवलतन्तुजाते दारुणि प्रयुज्यते, किन्तु क्रियान्विते; अतो ज्ञायते क्रियावाचकौ तौ शब्दाविति । यथा यूपशब्दः प्रयुज्यते तक्षणादिक्रियायुक्ते दारुणि न केवल इति तक्षणादिसंस्कारवाचको यूपशब्दः एवमिहापि । तस्माल्लोकसिद्धतक्षणादिक्रियैव कर्माङ्गत्वेन विधीयत इति पूर्वः पक्षः ।

## तन्त्रशिखामणिः

क्रियाजन्यमदृष्टमस्ति यद्विशिष्टायामपि क्रियायां वाच्यं स्यात् । तस्मात् जातिवचना एते । न चैवं वयनावस्थायां प्रयोगो न स्यादित्युक्तमिति वाच्यम्, तदानीमपि जात्यर्हतया प्रयोगसम्भवात् । त्वयापि वयनात् प्राक् वसो वयत इति प्रयोगस्य वयनार्हतयैवोपपादनीयत्वात् । तस्मात् जातिनिमित्ता वासःप्रभृतिशब्दाः॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

कर्मनिमित्तौ कर्मप्रवृत्तिनिमित्तकौ । कर्मागमे वयनादिकर्मणि कृते तद्दर्शनात् वाससो वा अनसो वा दर्शनात् । वासः प्रति तन्तवस्समवायिकारणम् । तन्तुषु दृष्टेषु पटबुद्धिर्न भवति । तन्तुवायेन यद्वयनं कर्म तस्मिन् कृते एव पटबुद्धिर्जायते, दारुकारेण यत्कर्म तक्षणादिकं तस्मिन् कृते एवानोबुद्धिर्जायत इति हेतोः एतौ शब्दौ अनोवासश्शब्दौ प्रयोगपथमागच्छतः- न प्राक् तन्त्वाद्यवस्थायामित्यर्थः । अतः क्रियाप्रवृत्तिनिमित्तकाविमौ शब्दावित्याह—अत इति । एवं क्रियाप्रवृत्तिनिमित्तत्वे सिद्धे तदेतत् सूत्रमारभ्यते कर्मजे इति, इत्यर्थः । सूत्रं विवृणोति—कर्मजे वयनादिकर्मनिष्पन्ने द्रव्ये वाससि श्रूयमाणे कर्म प्राप्यते वाससोऽनसो वा दानावसरे तत्कर्म वयनतक्षणादिकं सम्पाद्य दातव्यमित्यर्थः । अत्र दृष्टान्तः—यूपवदिति । जोषणं श्लक्ष्णीकरणम् । आदिपदेन रन्धनाष्टाश्रीकरणादिकं ग्राह्यम् । एवञ्च यूपशब्देन केवलं दारु न गृह्यते किन्तु तक्षणजोषणादिसंस्कारकाः क्रिया गृह्यन्ते, तथा वासोऽनश्शब्दाभ्यां वयनतक्षणादयः क्रिया एव गृह्यन्त इत्यर्थः ॥२८॥

## भाष्यम्

# रूपं वाऽशेषभूतत्वात् ॥७.३.२६॥

### सिद्धान्तः

अत्रोच्यते—नैतौ कर्मनिमित्तौ। किं कारणम्? ये नैमित्तिकाः शब्दास्ते निमित्तमुपलभ्य प्रयुज्यन्ते। यथा—दण्डी छत्रीति। इमौ त्वनुपलभ्य क्रियामाकृतिमात्रे प्रयुज्येते। तस्मान्नैतौ क्रियानिमित्तकाविति।

अथोच्येत—आकृत्या क्रियामनुमाय ततः शब्दं प्रयुङ्क्त इति। अत्र ब्रूमः—प्रत्यक्षमाकृतिनिमित्ततां गम्यमानामुत्सृज्य अदृष्टायां क्रियायां निमित्तत्वकल्पनायां हेतुर्नास्तीति।

## टुप्टीका

आकृतिवचना एवैते। कुतः क्रिया न समुच्चार्यते? यथा लावकः पावक इत्यनेन। शब्देनाकृति-

## वार्तिकाभरणम्

सिद्धान्तसूत्रमाह—

रूपं वाऽशेषभूतत्वात्

वासोऽनश्शब्दप्रभृतयो जातिवाचका एव, न तक्षणादिक्रियावाचकाः। तथा च कर्मकाल एव वासः अनश्च स्वयं निष्पाद्य दातव्यमित्याह—आकृतीति। ननु क्रियायुक्तेषु वासोऽनःप्रभृतिशब्दानां प्रयोगात् कथं क्रियावाचकत्वं नास्तीत्युच्यत इति पृच्छति—कुत इति। यथा पाचको लावक इत्यत्र प्रत्ययांशेन पाकलवनक्रियाकर्तुरभिधानेऽपि धातुभागेन क्रिया अभिधीयते; एवं प्रकृते केनचित् भागेन न क्रिया अभिधीयते। सर्वं नामपदं धातुजमिति औणादिकव्युत्पत्तिपक्षेऽपि वासः अन इत्यत्र वस-आच्छादने, अन-प्राणने इति विद्यमानयोरपि धातु-

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

**नैतौ** अनोवासश्शब्दौ कर्म निमित्तीकृत्य न प्रवृत्तावित्यर्थः। अत्र कारणमुपपादयति—**ये नैमित्तिका** इति। निमित्तमवलम्ब्य प्रवृत्ताः शब्दा नैमित्तिका भवन्तीत्यर्थः। तच्च निमित्तं द्रव्यमपि भवति क्रियापि। दण्डं द्रव्यं निमित्तीकृत्य दण्डीति, छत्रं द्रव्यं निमित्तीकृत्य छत्रीति, लवनं क्रियां निमित्तीकृत्य लावक इति, पावनं क्रियां निमित्तीकृत्य पावक इति च शब्दाः प्रयुज्यन्त इत्यर्थः। प्रकृतवासोऽनश्शब्दयोरेतद्वैलक्षण्यं प्रदर्शयति—**इमौ त्विति**। दण्डीत्युक्ते दण्डमनवबुध्य दण्डिनं न जानाति यथा, तथा वयनजोषणाद्यनवबुध्य वास इति अन इति च न जानातीति न विलोक्यते कश्चन। गृहीतपदपदार्थो वास इत्युक्ते वस्त्रं जानाति, अन इत्युक्ते शकटम्। वस्त्रस्य शकटस्य वा बोधे निमित्तमाकृतिरेव। आकृतिमवबुध्य वस्त्रं जानाति। तदिदमाह—**आकृतिमात्रे** इति। शङ्कते—**अथोच्येत** इति। आकृतिनिमित्तकत्वं शब्दस्य भवतु, तया क्रियानुमानपुरस्सरं शब्दप्रयोग इष्यतामित्यर्थः। निरस्यति—**प्रत्यक्षमिति**। प्रत्यक्षेण ज्ञातामाकृतिमुत्सृज्यानुमानिकक्रियाया निमित्तत्वकल्पने न किमपि कारणमस्तीत्यर्थः।

## भाष्यम्

**यत्तूक्तम्—क्रियोत्तरकालं प्रवृत्तिदर्शनादिति, अत्र ब्रूमः—प्राक् क्रियाया आकृतिरनभिव्यक्ता सा क्रिययाभिव्यज्यते। यतः क्रियोत्तरकालं शब्दप्रयोगः। तस्मादाकृतिनिमित्तौ। यदैवं तदा सिद्धं रूपं देयम्। कुतः ? अशेषभूतत्वात्। नात्र क्रिया शेषभूता, क्रियावाचिनश्शब्दस्याभावात्। यूपे तु प्रत्यक्षविहिता जोषणादयः क्रियाः। तस्माद्यूपवदिति अतुल्योपन्यासः ॥ २९॥**

**इति वासःप्रभृतिशब्दानामाकृतिवाचित्वाधिकरणम् ॥११॥**

## टुप्टीका

**बोध्यते, क्रिया लक्षणया। श्रुतिश्च लक्षणाया ज्यायसी ॥२९॥**

## वार्तिकाभरणम्

भागयोः केवलं-व्युत्पत्तिमात्रार्थत्वेन वानतक्षणक्रियावाचकत्वाभावात्। तस्मात् वासोऽनश्शब्दप्रभृतयो न क्रियावाचकाः किन्तु जातिवाचका इत्यर्थः।

अथ अखण्डा एव वासोऽनश्शब्दप्रभृतयः प्रथमं क्रियामुक्त्वा पश्चाज्जातिमभिदध्युरिति चेन्न। शब्दानामनेकार्थाभिधाने गौरवप्रसङ्गात्। विनष्टायामपि वानतक्षणादिक्रियायां जातिमात्रे शब्दप्रयोगदर्शनाच्च। तस्माज्जातिरेवाभिधेया।

यत्तूक्तम्—यथा यूपशब्दः क्रियावाचकः तद्वदिमेऽपि क्रियावाचका इति। तन्न ; यूपशब्दो हि न क्रियावाचक; किन्तु क्रियाजन्यादृष्टवाचकः। ततश्च क्रियानाशेऽपि तज्जन्यादृष्टसद्भावाद् विनष्टायामपि क्रियायां यूपशब्दप्रयोग उपपद्यते। इह तु न वानतक्षणादिजन्यं किञ्चिददृष्टमस्ति। तस्माद् जातिवाचका एव ते शब्दाः।

नन्वनभिधेयाऽपि क्रिया लक्षणया प्रकृते प्रतिपाद्यतामित्यत आह—**शब्देनेति**। शब्दशक्त्या जातिरभिधीयते; क्रिया तु लक्षणया; श्रुतिश्च लक्षणायाः ज्यायसी। तस्माल्लक्षणयापि नात्र क्रियापरा इत्यर्थः ॥

**वृत्तमधिकरणम्**

## भाष्यसन्दर्भयोजिनी

वासोऽनश्शब्दयोः यूपदृष्टान्तेन क्रियाप्रवृत्तिनिमित्तकत्वशङ्कामनुवदति—**यत्तूक्तमिति**। निरस्यति—**प्राक्क्रियाया** इति। यूपशब्दार्थः क्रियाया जोषणादेः पूर्वं लोके नावगतः, क्रियानन्तरञ्च वेदे स शब्दः प्रयुज्यते। वासोऽनश्शब्दौ तु न तथा। लोके वयनतक्षणादि क्रियातः पूर्वमपि तयोश्शब्दयोः प्रयोगो दृश्यते। यथा लोके तयोश्शब्दयोराकृतिनिमित्तकत्वं गृहीतं तथैव 'वासो ददाति' 'अनो ददाति' इति वेदे प्रयुक्तौ तौ जातिवाचकावेवेत्यर्थः। **यदैवं** यूपापेक्षया वासोऽनश्शब्दयोर्वैलक्षण्यं **तदा सिद्धं रूपं** सिद्धं वस्तु वासोरूपम् अनोरूपञ्च देयमित्यर्थः। नात्र वयनादि क्रियायास्सम्पादनमिति यावत्। अत्र हेतुः—**अशेषभूतत्वादिति**। यथा यूपे तक्षणादिक्रिया विधिविहितत्वेन शेषभूता न तथा वयनादिक्रिया विहिता वर्तत इत्यशेषभूतेत्यर्थः। अतो यूपदृष्टान्तोपन्यासो नानुरूप इत्युपसंहरति **तस्मादिति** ॥२९॥

इति वासःप्रभृतीनामाकृतिवाचित्वाधिकरणम् ॥११॥

### भाष्यम्

१२

## विशये लौकिकस्स्यात्सर्वार्थत्वात् ॥७.३.३०॥

### विषयः

गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य श्रूयते—'अग्निमुपनिधाय स्तुवते' इति ।

### टुप्टीका

आहवनीयादयः कैमर्थ्याभिलाषिणः प्रयोजने दत्ते निराकाङ्क्षीभूताः । अन्यत्र शेषभावे एषां नास्ति

### वार्तिकाभरणम्

विशये लौकिकः स्यात् सर्वार्थत्वात् ।

गर्गत्रिरात्रे आज्यदोहाख्यानि सामानि प्रकृत्य श्रूयते—'अग्निमुपनिधाय स्तुवीत' इति । तत्र संशयः—किमाधानसंस्कृतोऽग्निराहवनीयादिरूप उपनिधेयः, उत लौकिकोऽग्निरिति । तत्र सर्वकर्मार्थमाधानेनाहवनीयाग्निरुत्पादितः, स चेदत्र नोपादीयेत तदाविशेषेण सर्वकर्मार्थं प्रवृत्तस्य संस्कृतस्याग्नेः सङ्कोचः स्यात् । तस्मात् सामान्यवचनोऽप्यग्निशब्दः संस्कृताग्निपरो विज्ञायते । तस्माद् वैदिक एवाग्निरुपनिधेयः ।

ननु द्वादशे विहाराधिकरणे लौकिकपाकादिरपि आधानसंस्कृताहवनीयाद्यग्नावेव कर्तव्य इति पूर्वपक्षं कृत्वा "यदाहवनीये जुहोति" इति वचनैः आहवनीयादिरूपवैदिकाग्नीनां सामर्थ्याद्वैदिककर्मवद्धोमादिविषयत्वेन

### तन्त्रशिखामणिः

सू० विशये लौकिकः स्यात् सर्वार्थत्वात् ।

वासःशब्दस्य जातिमात्रप्रापकत्वेऽपि अग्निशब्दस्य न जातिमात्रप्रापकत्वमित्युत्थितेः सङ्गतिः । गर्गत्रिरात्रे 'अग्निमुपनिधाय स्तुवीत' इत्याज्यदोहसामानि प्रकृत्य श्रुतम् । तत्र किमग्निशब्दः आधानसंस्कृताग्निप्रापकः ? उत लौकिकाग्निप्रापकः ? इति विशये यद्यप्यग्निशब्दः सामान्यवचनः तथाप्यग्नीनादधीतेति आधानसंस्कृतस्याग्नेः प्रयोजनाकांक्षायां यद्यपि वैदिकस्य लिङ्गात् न लौकिककार्यार्थतेति द्वादशे वक्ष्यते तथापि वैदिकमग्निसाध्यं यद्यत् कार्यं तत्तदर्थता लिङ्गादवगतेति उपनिधानार्थताध्यवसीयत इति संस्कृताग्निविषयत्वेन गम्यते । ततश्च संस्कृत एवोपनिधेयः । न च 'यदाहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' 'दक्षिणाग्नावन्वाहार्यं

### भाष्यसन्दर्भयोजिनी

### विषयः

वासश्शब्दस्यानश्शब्दस्य च क्रियाप्रवृत्तिनिमित्तत्वं निराकृत्याकृतिवाचित्वं पूर्वं व्यवस्थापितम् । तत्प्रसङ्गादग्निशब्दो विचार्यते । गर्गत्रिरात्रमिति त्रिदिनसाध्यस्सोमक्रतुः । तत्राज्यदोहसंज्ञकानि सामानि गेयानि । तेषु गीयमानेषु उद्गातारः स्वसम्मुखमग्निं निधाय स्तुयुरिति विधत्ते-'अग्निमुपनिधाय स्तुवते' इति ।

भाष्यम्

संशयः

अत्र विशयः—किं लौकिकोऽग्निरुपनिधेयः ? उत वैदिकः ? इति ।

पूर्वपक्षः

किं प्राप्तम् ? वैदिक इति । कुतः ? सर्वकर्मार्थं उत्पन्नोऽसौ । यान्यहं कर्माणि करिष्ये यैश्चाहमधिकृत इति । अतो वैदिक उपनिधेय इति । एवं प्राप्त उच्यते—

टुप्टीका

प्रमाणम् धैष्ण्या अपि व्याघारणार्थमुत्पन्नास्तेनैव निराकाङ्क्षा नान्यत्र विनियोक्तव्याः । व्याघारणे कृतेऽप्रवृत्ते

वार्तिकाभरणम्

सिद्धान्तितत्वात् कथं स्तोत्राङ्गत्वेन विहितोपनिधानविनियोगेनात्र पूर्वपक्ष इति चेन्न । अग्निमुपनिधाय स्तुवीत इति वचनेन होमादाविवोपनिधानेऽपि वैदिकस्यैवाग्नेः विनियोग इति पूर्वपक्षसम्भवात् । सिद्धान्तसूत्रमाह—

विशये लौकिकः स्यात् सर्वार्थत्वात् ।

आहवनीयादय इति । आहवनीयादयो वयं किमर्था इति कैमर्थ्याभिलाषिणोऽपि 'यदाहवनीये जुहोती'-त्यादिवाक्यैः होमादिरूपप्रयोजने दत्ते निराकाङ्क्षीभूताः । एषां निराकाङ्क्षत्वादेवान्यत्र होमादिव्यतिरिक्ते ऽन्युपनिधानादौ शेषभावे प्रमाणं नास्तीत्यर्थः । अत्र अन्यत्र शेषभाव इति च व्यधिकरणे सप्तम्यौ (?) । ननु

तन्त्रशिखामणिः

पचति' इत्याहवनीयादीनां प्रयोजननिर्देशेनाकांक्षाशान्तेः न लिङ्गादन्यत्र विनियोग इति वाच्यम् तेषां वचनानां होमादय आहवनीयादिष्वेव इति व्यवस्थार्थंतयाहवनीयादीनां कार्यान्तरार्थत्वेऽप्यविरोधादिति प्राप्ते,

ब्रूमः—यदाहवनीयादिवाक्यानामाधानवाक्योत्पन्नाग्न्यपेक्षितप्रयोजननिर्देशपरत्वे सम्भवत्यनपेक्षित-व्यवस्थार्थत्वकल्पनमयुक्तम्, अपेक्षितविधिनैवार्थात् व्यवस्थाया अपि सिद्धेः । तस्मान्न प्रयोजनाकांक्षावशात्

भाष्यसन्दर्भयोजिनी

संशयः

तत्राग्निः किमाधानसंस्कारसंस्कृतो वैदिको ग्राह्यः ? उत लौकिकः ? इति संशयः । सन्देहस्य बीजम्-यदिदं स्तवनं वैदिकं कर्म, वैदिकञ्च कर्माधानसिद्धाग्निना क्रियते । वैदिकेऽग्नौ यागहोमादिकं क्रियते, स्तोत्रञ्च न यागो होमो वेति संशयः ।

पूर्वपक्षः

पूर्वपक्षं गृह्णाति-वैदिक इति । आधानेनाग्निः सर्वकर्मार्थतया निष्पन्न इत्यत्रापि असौ वैदिकोऽग्नि-र्भवतीति ।

## भाष्यम्

### सिद्धान्तः

विशये लौकिकस्स्यात्सर्वार्थत्वात् । एतस्मिन् विशये लौकिकं वैदिकमिति लौकिकस्स्यात् । कुतः ? सर्वार्थत्वात् । लौकिकस्सर्वार्थः । न तस्य कार्यं किञ्चिन्निर्दिष्टम् । अतो

## टुप्टीका

कर्मणि लौकिक इति प्रसङ्गादुपनिधाने सम्भवति योऽन्य आनीयते तत्र प्रयत्नः कर्तव्य इति ॥३०॥

## वार्तिकाभरणम्

अग्निमुपनिधाय स्तुवीत इति वचनेनाग्निनिधानस्य विहितत्वादाहवनीयादीनामाकाङ्क्षामुत्थाप्योपनिधानमाहनीयादीन् गृह्णाति इति चेन्न; निधानस्य लोकसिद्धाग्निजातिमात्रेणापि चारितार्थ्येनान्यतराकाङ्क्षाभावेनोत्थापिताकाङ्क्षाया अभावात् । नन्वाहवनीयस्य द्वे रूपे—आधानसंस्कृतत्वं अग्नित्वञ्चेति । तत्र संस्कारांशस्योपयोगाभावेऽपि लोकसिद्धाग्न्यंशस्योपयोगोऽस्त्विति चेन्न; विशिष्य वचनाभावे क्लृप्तायतनदेशादाहावनीयादीनां चालने विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायेदि'ति दोषश्रवणेनाहवनीयादिचालनस्यायुक्तत्वात् । ननु धिष्ण्येष्वाग्नीध्रीयाग्नेस्सकाशादङ्गारविहरणस्य विहितत्वात्तत एव धैष्ण्याग्नय उपनिधानाङ्गत्वेन गृह्यन्तामित्यत आह—धैष्ण्या इति । धैष्ण्या अप्यग्नयोव्याघारणार्थमुत्पन्ना न सर्वार्थम् । एवं च तेनैव व्याघारणेन निराकाङ्क्षास्सन्तोऽन्यत्रोपनिधानादौ न विनियोक्तव्याः । यथा आहवनीयादयः यदाहवनीये जुहोति इति होमादिभिरेव निराकाङ्क्षास्सन्तोऽन्यत्र न विनियोज्यास्तथेत्यर्थः । धिष्ण्येषु विहृतानामग्नीनां स्तोत्रदेशानयनेऽपि 'विवा एष इन्द्रियेण वीर्येण'ति प्रागुक्तदोषस्तुल्यो बोध्यः ।

## तन्त्रशिखामणिः

वैदिकानामुपधानं नाप्यग्निमुपनिधायेति विधिबलादग्निशब्दस्य जातिमात्रवचनत्वेन तज्जातीययत्किञ्चिदुपनिधानेऽपि विधेः कृतार्थत्वात् । न च तर्हि मा भूदाहवनीयादिरूपेणोपनिधानाङ्गत्वं लौकिकेनाग्निरूपेणैव वैदिकस्य तदङ्गत्वमस्तु इति वाच्यम् । साक्षात् वचनं विना वैदिकानामन्यत्र नयनासम्भवात् । श्रूयते हि 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायति' इति । तस्माल्लौकिक एवोपनिधेयः । नन्वेवमपि धैष्ण्या उपधीयन्ताम् 'यदि च प्राङ सुरो धिष्ण्यान्व्याधारयति' इति व्याघारणार्थतया विहिताः । तेनान्यत्र नेतुं युक्ता-

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

उत्पन्नस्याग्नेः कार्यं प्रदर्शयति-यानीति । अहम् आधानसिद्धाग्निमान् । यैः अग्निहोत्रदर्शपूर्णमासादिश्रौतकर्मभिः । येषु कर्मस्वधिकृतस्तेषु स्तोत्रमपीति वैदिक एवोपनिधेय इत्युपसंहरति-अत इति ।

सूत्रं पठति-विशये इति । लौकिको वैदिको वाग्निरिति विशये लौकिकोऽग्निस्स्यात् । अत्र हेतुः-सर्वार्थत्वात् इति सर्वकर्मनिष्पादनार्थत्वाल्लौकिकाग्नेरित्यर्थः । लौकिकाग्निना-इमानि कर्माणि कर्तव्यानीति केनचन

### भाष्यम्

**यद्यदग्निना कर्तव्यं दृष्टमदृष्टं वा तत्तदुपादीयमानमविरुद्धम् । तस्माल्लौकिकस्स्यात् ॥३०॥**

**अथ यदुक्तं वैदिकं सर्वकर्मार्थमुत्पन्नम् । तस्मात्तदुपनिधेयमिति । अत्र ब्रूमः—**

## न वैदिकमर्थनिर्देशात् ॥७.३.३१॥

**न; वैदिकमग्निद्रव्यं शास्त्रेणोत्पादितम् । तस्य शास्त्रेणैव कार्यं निर्दिष्टम्-'यदाहवनीये जुहोति' इत्यारभ्य । तस्मिन् सर्वार्थे कल्प्यमाने निर्देशोऽर्थकस्स्यात् । तस्माल्लौकिकोऽग्निरुपनिधेयः । सर्वार्थत्वञ्च तेषां स्वे स्वे कार्ये वर्तमानानां भविष्यति । एवमुभयमविरुद्धम्-सर्वार्थत्वं निर्देशश्चेति ॥३१॥**

### वार्तिकाभरणम्

नन्वेवं तर्हि व्याधारणानन्तरं धैष्ण्यानामग्नीनां लौकिकत्वात्तेषां उपनिधाने उक्तदोषाभावात् लाघवाच्च तेषामेवोपनिधानमस्त्वित्याशङ्क्य इष्टापत्तिरित्याह—**व्याघारण इति** । कृते व्याघारणे अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति तत्तत्कर्मार्थं प्रणीतानामग्नीनामपवृत्ते तस्मिन् कर्मणि लौकिकत्वाविशेषेण सन्निहितानां धिष्ण्याग्नीनामेव प्रसङ्गादुपनिधाने सम्भवति अन्यस्यासन्निहितस्याग्नेश्चानयने यत्नगौरवप्रसङ्गात् व्याघारणानन्तरं धिष्ण्याग्नयः स्थिताश्चेत्त एवोपनिधेयाः सौकर्यादित्यर्थः ॥

**वृत्तमधिकरणम्**

### तन्त्रशिखामणिः

स्तथापि अपवृत्ते कर्मणि लौकिकत्वात् सन्निधानात् प्रयोगप्राशुभावायोपनिधीयन्तामिति चेत्—यदि ते निधीयन्ते तदा काममुपनिधीयन्ताम् न चान्यत्र हरणीयः प्रयोगविलम्बोऽपि प्रामाणिकत्वात् [न] दोषायेति दिक् ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनो

प्रमाणेन निर्दिष्टानि भवेयुस्तर्हि तत्र लौकिकोऽग्निरिति विशेषो ज्ञातुं शक्यते, न च तादृशो निर्देशोऽस्तीत्याह-**न तस्येति । उपादीयमानम्** अनुष्ठीयमानम् । उपसंहरति-**तस्मादिति** ॥३० ॥

पूर्वपक्ष्यभिमतं सर्वार्थत्वमाधानसिद्धाग्नेरनुवदति—**अथेति** । सर्वकर्मार्थमुत्पन्नं वैदिकमग्निद्रव्यमिति शेषः । निरस्यति—**नेति** । 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिशास्त्रेण **वैदिकमग्निद्रव्यमुत्पादितम्** इति सम्बन्धः । **शास्त्रेणोत्पादितस्य तस्य शास्त्रेणैव कार्यं** विनियोगः 'यदाहवनीये जुहोति' इत्यादिना **निर्दिष्टम्** । यदा सर्वार्थोऽग्निस्तदा शास्त्रेण विनियोगनिर्देशस्य काऽऽवश्यकतेत्याह—**तस्मिन्निति** । ननु सर्वार्थत्वावगतेः का गतिरित्यत आह—**सर्वार्थत्वञ्चेति** । यत्र यत्र कार्ये शास्त्रेण विनियोगः कृतः तत्र तत्र सर्वार्थत्वं ज्ञातव्यमित्यर्थः । एवमङ्गीकृते सर्वार्थत्वस्य निर्देशविशेषस्य च न कोऽपि विरोध इत्युपसंहरति—**एवमिति** ॥३१॥

### भाष्यम्

अथ धैष्ण्या अग्नयः कस्मान्नोपधीयन्ते ? अत्रोच्यते—

## तथोत्पत्तिरितरेषां समत्वात् ॥७.३.३२॥

इतरेषामप्यग्नीनां धैष्ण्यानां तथैवोत्पत्तिः, न सर्वार्थं इत्यर्थः। कुतः ? समत्वात्। एतेऽपीतरैरग्निभिस्समाः। एतेषामपि निर्दिष्टं कार्यम्-'प्रागासीनो धिष्ण्यान् व्याधारयति' इति। अतस्ते नोपनिधेया इति ॥३२॥

इति गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥१२॥

१३

## संस्कृतं स्यात्तच्छब्दत्वात् ॥७.३.३३॥

### विषयः

ऐकादशिन्यां श्रूयते—'उपशयो यूपो भवति' इति।

### वार्तिकाभरणम्

अत्राचार्यैरेकमधिकरणं त्यक्तम्। तद्वयं वर्णयामः—

संस्कृतं स्यात्तच्छब्दत्वात्।

यूपैकादशिन्यां श्रूयते 'उपशयो यूपो भवति' इति। तत्र संशयः—किं उपशयाख्ये काष्ठविशेषे परि-

### तन्त्रशिखामणिः

सू० संस्कृतं स्यात् तच्छब्दत्वात्।

कर्मनामवत् संस्कारनाम्नामपि सिद्धमतिदेशकत्वमपोद्यत इति चाग्निशब्दस्य संस्कृतवाचित्वाभावेऽपि यूपशब्दस्य संस्कृतवाचित्वादतिदेशकत्वं स्यादिति चोदितेः सङ्गतिः। यूपैकादशिन्यामुत्तरतः दश यूपा भवन्ति

### भाष्यसन्दर्भयोजिनी

लौकिकाग्निः किमित्युपनिधीयते ? धिष्ण्येषु सिद्धा अग्नय एवोपनिधीयन्तामिति शङ्कते—अथेति। सन्ति सोमे धिष्ण्या अग्नयः। सूत्रगतेतरशब्दविवरणम्—अग्नीनामिति। अधानसिद्धाग्निभ्य इतरे धिष्ण्याग्नयः। तथोत्पत्तिः इत्यस्य विवरणम्—न सर्वेति। अत्र हेतुः—समत्वादिति। 'यदाहवनीये जुहोति' इति यथा निर्दिष्टं कार्यमाधानसिद्धाग्नीनां तथा धिष्ण्यानामपि 'प्रागसीनो धिष्ण्यान् व्याघारयति' इत्याघारणं निर्दिष्टं कार्यम्। अत इमेऽपि नोपनिधेया इत्यर्थः॥ ३२॥

इति गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥१२॥

१३

### विषयः

पश्वेकादशिनी यूपैकादशिनीति द्विविधैकादशिनो। पश्वेकादशिन्यां पशव ऐकादश, यूपस्त्वेकः। यूपैकादशिन्यां पशव एकादश, यूपा अप्येकादश। एकस्मिन्नेव यूपे एकादश पशवो बध्यन्ते पश्वेकादशिन्याम्।

## भाष्यम्

### संशयः

तत्र सन्देहः—किमेतदुपशयद्रव्यं संस्कृतम् ? जोषणादयस्संकारा अत्र कर्तव्याः ? उत न ? इति । किं युक्तम् ?

### पूर्वपक्षः

संस्कृतं स्यात् । कर्तव्या अत्र जोषणादयस्संस्काराः । कुतः ? तच्छब्दत्वात् ? अयं

## वार्तिकाभरणम्

व्याणादयः संस्कारविशेषाः कर्तव्याः न वेति । यूपशब्दो हि परिव्याणादिसंस्कारवाचकाः-यद्युपशये संस्काराः न क्रियन्ते तर्हि 'उपशयो यूपो भवती'ति यूपशब्दो निरर्थकः स्यात् । तस्मादन्यत्र पुनरुच्चार्यमाणो यूपशब्दोऽग्निहोत्रशब्दवत् यूपधर्मातिदेशकः । तस्मादुपशयेऽपि परिव्याणादिधर्माः कर्तव्या इति पूर्वपक्षः ।

सिद्धान्तस्तु यूपधर्मा हि नियोजनादिद्वारा पशुयागापूर्व एवोपयुज्यन्ते । न चोपशये पशुर्नियुज्यते । तस्मात् प्रयोजनाभावान्न कर्तव्याः । प्रयोजनाभावेऽप्यदृष्टार्थतया वचनात्कर्तव्या इति चेत्—स्यादेतदेवम्, यदि यूपत्वविधायकं वचनं स्यात् । न ह्य'पशयो यूपो भवती'ति उपशयस्य यूपत्वं विधीयते भवतीत्यस्य वर्तमानापदेशत्वेन विधायकत्वाभावात् भवत्यर्थस्य भवनस्य यजत्यर्थयागादिवत् पुरुषव्यापारात्मकत्वाभावेन विधिविषयत्वा-

## तन्त्रशिखामणिः

दक्षिणा उपशयाख्यः काष्ठविशेषः स्थापनीयः 'यद्दक्षिणत उपशय' इति श्रवणात् । तत्र यूपशब्दः प्रयुक्तः 'उपशयो यूपो भवतीति' उप समीपे शेत इत्युपशयः । तत्र संसयः-किमयं यूपशब्दः उपशये परिव्याणादीन् धर्मान् अतिदिशति ? न वेति ? तत्र यूपशब्दः तक्षणादिसंस्कारान् निमित्तीकृत्य खादिरादिकाष्ठविशेषे वर्तत इति अविवादम् । ततश्च परशब्दः परत्र प्रयुज्यमानोऽग्निहोत्रनामवत् तद्धर्मानतिदिशेत् इति प्राप्ते,

ब्रूमः—विधिवाक्ये हि परत्र प्रयुक्तः परशब्दः विध्याकांक्षावशात् धर्मातिदेशको भवति । यथाग्निहोत्रादिशब्दः । इह तु वर्तमानापदेशतया अर्थवादे प्रयुज्यमानो यूपशब्दः परशब्दोऽपि न धर्मातिदेशकः । अत एव

## भाष्यसन्दर्भयोजिनी

यूपैकादशिन्यान्तु एकैकस्मिन् यूपे एकैकः पशुर्बध्यते । 'द्वादश उपशयो भवति' इति यूपैकादशिन्यां 'उपशयो यूपो भवति' इत्युपशयो विहितः । उप शेत इत्युपशयः, सर्वेषां यूपानां दक्षिणतोऽस्योपशयशब्दवाच्यस्य काष्ठस्य निखननं भवति ।

### संशयः

उपशयः यूपवत् संस्कृतो ग्राह्यः ? उत संस्काररहितः ? इति संशयः । संस्काराश्च जोषणादयः । संस्कृतं उपशयद्रव्यं स्यात् । अत्र उपशये जोषणादयस्संस्काराः कर्तव्याः । अत्र हेतुः—तच्छब्दत्वात् । यूपशब्देनो-

भाष्यम्

यूपशब्दः संस्कारनिमित्तः । स एषोऽसत्सु संस्कारेषु नोपपद्यते । तस्मात्ते कार्या इति ॥३३॥

सिद्धान्तः

## भक्त्या वा अयज्ञशेषत्वाद् गुणानामभिधानत्वात् ॥७.३.३४॥

न वा कर्तव्याः । कुतः ? अयज्ञशेषत्वात् । एवं संस्कारा अस्मिन् काष्ठे क्रियन्ते, एतेन द्वारेण यजतिना सम्भत्स्यन्ते । इत्थं संस्कृते काष्ठे नियुक्तेन पशुना यजिः क्रियमाणोऽपूर्वं

वार्तिकाभरणम्

योगाच्च । तस्मादुपशये संस्कारा न कर्तव्याः । न चो'पशयो यूपो भवती'ति वचनानर्थक्यभयाल्लेट्परिकल्पनेन भवेदिति विपरिणामेन वा कर्तव्य इत्यध्याहारेण वा विधायकत्वमभ्युपगन्तव्यमिति वाच्यम् । 'उपशयो यूपो भवती'त्यस्य विध्यन्तरशेषत्वेनार्थवादतयानर्थक्याभावात् । 'स्फ्यो यूपो भवती'त्यस्य तु विध्यन्तरशेषत्वाभावाद्विधित्वं युक्तम् । नन्वयं यदि यूपो न भवेत् कथं तर्हि यूपत्वेन स्तुतिरिति चेत् उपशयस्य यूपत्वाभावेऽपि तक्षणादीनां केषाचित्प्रत्यक्षवचनविहितत्वेन यूपसादृश्यात् गौण्या वृत्या अयूपस्यापि यूपत्वेन स्तुतिसम्भवादिति ॥

वृत्तमधिकरणम्

तन्त्रशिखामणिः

दार्शपूर्णमासिकेऽपांव्युत्सेके 'एष वै दर्शपूर्णमासयोरवभृथः' इति प्रयुक्तोऽवभृथशब्दो न धर्मातिदेशकः स्तुत्यर्थतयोपपत्तेः । न च धर्मानतिदेशे सादृश्याभावात्कथं गौण्या वा प्रवृत्तिरिति वाच्यम् । साध्यसादृश्याभावेऽप्यर्थसिद्धानां चोदनादीनां केषाञ्चिद्यूपधर्माणामुपशये सत्वात्तन्निमित्तीकृत्य गौण्युपपत्तेः । किञ्च यूपसंस्काराः पशुनियोजनद्वारा यज्ञार्थाः । उपशये च न पशुनियोजनमस्ति । 'सर्वे वान्ये यूपाः पशुमन्तोऽथोपशय एवापशुः' इति श्रवणात् । तस्मादुपशये यूपशब्दो न संस्कारातिदेशकः ॥

वृत्तमधिकरणम्

भाष्यसन्दर्भयोजिनी

पशयस्य सामानाधिकरण्यात् एकार्थवाचित्वादित्यर्थः । संस्काररहिते काष्टे यूपशब्दप्रयोगो न भवति, उपशयश्च यूपार्थकः, अतस्तत्र संस्काराः कर्तव्या इति भावः ॥३३॥

सिद्धान्तः

न वा कर्तव्या इति । अत्र कारणम्—अयज्ञशेषत्वादिति । उपशयस्य यूपसामानाधिकरण्ये सत्यपि यूपो यथा यज्ञशेषभूतो न तथोपशयश्शेषभूत इत्यर्थः । ननु कथं ज्ञायते यूपो यज्ञाङ्गम्, उपशयो नाङ्गमित्यत आह—एवं संस्कारा अस्मिन् काष्ठे इति । जोषणादयस्संस्काराः काष्ठस्वरूपनिष्पादनाय न क्रियन्ते, काष्ठस्वरूपमेतेषां न प्रयोजकम्, किन्त्वपूर्वम्, अपूर्वप्रयुक्ता इमे संस्काराः । एतेषां यागेन सम्बन्धे सत्येवापूर्वोत्पाद-

## भाष्यम्

निर्वर्तयतीति । अस्मिश्चोपशये न पशुर्नियुज्यते । तत्र कृतास्संस्कारा अनर्थकास्स्युः ।

ननु वचनसामर्थ्याददृष्टार्था भविष्यन्ति । उच्यते-नात्र वचनं यूपः कर्तव्य इति; वर्तमानापदेशोऽयम् । ननु वर्तमानापदेशोऽपि न घटते संस्काराणामभावे । उच्यते-भक्त्या भविष्यति । यथा-'यजमानो वै यूप' इति । आह-तत्र सादृश्यात् । इह पुनः कथमिति । उच्यते-गुणानामभिधानत्वात् । यूपगुणानां यूपसंस्काराणामभिधानत्वात् । यूपसंस्कारास्तत्र केचिदर्थवादप्राप्ताः छेदनादयस्तूष्णीं कृतास्सन्ति । तैरयभिधीयते यूप इत्ययूपस्सन् । यथा-स्नाता कन्याऽनलङ्कृता मालागुणेनाप्यलङ्कृतेति । एवमेकदेशेनापि संस्काराणां संस्कृत इति स्तुत्वाऽभिधीयते ॥३४॥

इत्युपशये यूपधर्मानतिदेशकत्वाधिकरणम् ॥१३॥

## भाष्यसन्दर्भयोजिनी

कत्वं सिध्येत् । अतो यजतिसम्बन्धमुपपादयति—एतेन द्वारेणेति । अपूर्वद्वारेणेत्यर्थः । तदिदं प्रदर्शयति इत्थं संस्कृते काष्ठे इति । एवं संस्कारेषु सम्पादितेषु तस्मिन् पशुनियोजनादिकं कृत्वा यागेऽनुष्ठीयमाने सत्यपूर्वं उत्पद्येत नान्यथेति भावः । उपशये तु पशुनियोजनादिकं न क्रियत इति स यागसम्बन्धी न स्यात् । यागसम्बन्धाभावे च तत्र क्रियमाणास्संस्कारा अनर्थका एवेत्यर्थः ।

ननूपशये क्रियमाणास्संस्कारा अनर्थका न भवेयुः विधिबलात्तेऽदृष्टार्था भवेयुरिति शङ्कते—नन्विति । वचनसामर्थ्यात् 'द्वादश उपशयो भवति' उपशयो यूपो भवतीति वचनसामर्थ्याददृष्टार्थत्वं संस्काराणामित्यर्थः । उच्यते-नात्रेति । प्रदर्शितवाक्यद्वये कर्तव्यत्वेन विधिर्नास्ति, भवति इति वर्तमाने वर्तत इत्यर्थः । यदि संस्कारा न सन्ति तर्हि वर्तमानकालनिर्देशोऽपि न घटत इति शङ्कते—नन्विति । 'उपशयो यूपो भवति' इति वर्तमानापदेशेन विधिर्न भवति यदि, तर्हि स्तावकोऽपि न भवितुमर्हति विधेरभावात् । तस्यामप्यवस्थायां वर्तमानापदेशो न घटत इत्यर्थः । समाधत्ते—उच्यते इति । यजमानो वै यूप इत्यत्र लक्षणया यजमानपदस्य यथा स्तावकत्वं तथा भक्त्या लक्षणया स्तावको भविष्यतीत्यर्थः । आह शङ्काभाष्यमिदम् । यजमानो वै यूप इत्यत्रोर्ध्वत्वादिसादृश्यमादाय स्तावकत्वमुपपद्यते । प्रकृते च न किञ्चित्सादृश्यमस्तीति शङ्कितुराशयः । सादृश्यं घटयति—उच्यते इति । उपशये यूपसंस्कारा एव न सन्तीति वक्तुं न शक्यते । 'द्वादश उपशयो भवति' इति उपशये यूपद्वादशत्वमुक्तम् । एकादश यूपास्ते अयमुपशयो द्वादश इत्युक्ते ज्ञायत एव यदयमुपशयः छेदनादिना समानेतव्य इति । तेन कतिपये छेदनादयस्सन्तीति सिद्धं भवति । एवं छेदनादीन् गुणानादाय सादृश्याद् अयूपोऽपि यूप इति तैरभिधीयत इत्यर्थः । अत्र दृष्टान्तः—यथेति । स्नाता कन्याऽनलङ्कृतेत्यभिधाने आभरणाद्यलङ्काराभावेऽपि मालासूत्रधारणेनालङ्कृता व्यवह्रियत इति दृष्टान्तार्थः । तथैवायूपोऽपि यूप इत्यभिधानं भक्त्या सिध्यतीति भावः ॥३४॥

इत्युपशये यूपधर्मानतिदेशाधिकरणम् ॥१३॥

## भाष्यम्

१४

### कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ।।७.३.३५।।

विषयः

अग्नौ श्रूयते-'पृष्ठैरुपतिष्ठते' इति ।

संशयः

तत्र चिन्त्यते—किं पृष्ठधर्माः कर्तव्याः ? उत न ? इति । के पुनस्ते ? सामान्यधर्माः

## वार्तिकाभरणम्

कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ।

अग्नौ श्रूयते 'पृष्ठैरुपतिष्ठत' इति । तत्र संशयः—किं पृष्ठधर्माः 'रथन्तरे प्रस्तूयमाने नेत्रे निमीलयेत् बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्' इत्यादयः कर्तव्याः न वेति । तदर्थञ्च किं पृष्ठशब्दः स्तुतिरूपकर्मवाचकः उत ऋग्रूपद्रव्यवचन इति । यदि कर्मवचनस्तदा अग्निसमीपे स्थित्वा ज्यौतिष्टौमिकपृष्ठधर्मकाणि स्तुतिरूपाणि कर्माणि कुर्यादिति 'पृष्ठैरुपतिष्ठत' इति वाक्यस्य पर्यवसितोऽर्थः । यदि द्रव्यवचनस्तदा अग्निसमीपे स्थित्वा

## तन्त्रशिखामणिः

सू० कर्मणः पृष्ठसब्दस्स्यात्तथाभूतोपदेशात् ।

अर्थवादस्थयूपशब्दस्यानातिदेशकत्वेऽपि विध्युद्देशस्थपृष्ठशब्दस्याग्निहोत्रशब्दवदतिदेशकता स्यादित्युत्थितेस्सङ्गतिः ।

अग्नौ श्रूयते—'पृष्ठैरुपतिष्ठते' इति । तत्र किमयं पृष्ठशब्दोऽतिदेशको नेति संशयः । तदर्थञ्च किमग्निसमीपे स्थित्वा पृष्ठसदृशैः कर्मभिरग्न्युपकारं भावयेदिति वाक्यार्थः ? किं वा बृहद्रथन्तरादिपृष्ठस्तोत्रसा-

## भाष्यसन्दर्भयोजिनी

१४

विषयः

अग्नौ चयने 'पृष्ठैरुपतिष्ठते' इति श्रूयते । पृष्ठस्तोत्रैरग्निसमीपं गच्छेदिति साधारणो विषयवाक्यस्यार्थः । पृष्ठस्तोत्राणि ज्योतिष्टोमे सन्ति, द्वादशाहिकषडहेऽपि सन्ति । तैरुपतिष्ठत इति यावत् ।

संशयः

तत्र चिन्त्यते विचार्यते किं पृष्ठपदेन तद्धर्मान् लक्षयित्वा प्रसिद्धपृष्ठधर्मा अत्रोपस्थाने कर्तव्याः ? उत न कर्तव्ता इति । पृष्ठधर्माः क इति पृच्छति—के पुनरिति । पृष्ठधर्माः सामान्येन विशेषेण च विभक्ता

## भाष्यम्

हिङ्कारादयः, विशेषधर्माः-'रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्' 'बृहति समुद्रम्' इत्येवमादयः ।

किं तावत्प्राप्तम् ? एतत्तावन्नः परीक्ष्यम्—किमयं पृष्ठशब्दः कर्मणो वाचकः ? उत द्रव्यस्य ? इति । ननु सिद्धमेतत्कर्मनामधेयं पृष्ठशब्द इति-'यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः' (जै. सू. १.४.३) । इत्यत्र । तत्रैव चोदनास्वेतदुक्तम् 'सप्तदशानि पृष्ठानि' 'वैरूपं पृष्ठम्, 'वैराजं पृष्ठम्' इति । इहेदानीं 'पृष्ठैरुपतिष्ठते' इत्यस्यां चिन्त्यते-किं पुनरत्र युक्तम् ? तत आह-कर्मणः पृष्ठशब्दस्यात्तथाभूतोपदेशात् ।

## वार्तिकाभरणम्

ऋग्भिरग्निप्रकाशनं कुर्यादिति । तत्र नामधेयपादे 'यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः' इति चित्राधिकरणे पृष्ठशब्दस्य स्तोत्ररूपकर्मवाचकत्वस्य सिद्धत्वादिहापि पृष्ठशब्दः कर्मवचनः । तस्मात् 'पृष्ठैरुपतिष्ठत' इत्यत्र उपतिष्ठत इत्यनेनापूर्वं स्तोत्ररूपं कर्म विधीयते । पुनरुच्चार्यमाणः पृष्ठशब्दोऽपि स्तोत्ररूपकर्मणः ज्यौतिष्टोमिकपृष्ठधर्मातिदेशकः । अयमर्थः-अग्निसमीपे स्थित्वा पृष्ठसदृशं स्तोत्ररूपं कर्म कुर्यादिति । यद्युपतिष्ठतिधातुरभिधानवचनः स्यात्, समीपस्थितिवचनस्योपतिष्ठतिधातोर्लाक्षणिकत्वं स्यात् । पृष्ठशब्दोऽपि लाक्षणिक इति पदद्वयस्यापि

## तन्त्रशिखामणिः

[ साधनकैः ] 'अभित्वा शूर नोनुमः' इत्यादिमन्त्रैस्समीपे स्थित्वाग्निमभिध्यायेदिति । तत्र नामधेयपादे हि पृष्ठशब्दो गुणिनिष्ठगुणाभिधानात्मकानां रथन्तरादिसामसाध्यस्तोत्राणां नामधेयमिति स्थितम् । ततश्चात्रोपतिष्ठत इत्यनेन प्रकरणान्तराधिकरणन्यायेन विधीयमानेऽपूर्वे कर्मणि प्रयुज्यमानः पृष्ठशब्दस्तत्सादृश्यमग्निहोत्र-

## भाष्यसन्दर्भयोजिनी

इति तान् दर्शयति—हिङ्कारादयः, पृथिवीसमुद्रमनोध्यानादयः । तैर्धर्मैस्सह पृष्ठानि कृत्वोपस्थानमग्नेः कर्तव्यमिति उत नेति संशयः ।

तदर्थंसंशयमवतारयति—किं तावत्प्राप्तमिति । परीक्ष्यं विषयवस्तु निर्दिशति—किमयमिति । यदि कर्मवाचकत्वं पृष्ठशब्दस्य तर्हि धर्माः कर्तव्याः; यदि वा पृष्ठशब्दस्य द्रव्यवाचकत्वम् द्रव्यस्य इति पदं मन्त्रपरम्, तर्हि धर्मा न कर्तव्या इति सिध्यति । अर्थादग्निसमीपं गत्वा पृष्ठसाधनीभूता ऋचोऽभिदध्यादिति । ननु संशयकोटौ द्रव्यस्येति पक्षः कथमुत्थितः ? यदा हि नामधेयपादे चित्राधिकरणे पृष्ठशब्दस्य कर्मणो नामत्वं प्रसाधितमिति शङ्कते—नन्विति । अतः कर्मणो वाचकः पृष्ठशब्द इति तद्धर्माः कर्तव्या इति शङ्कितुराशयः । चित्राधिकरणे पृष्ठशब्दस्य कर्मणो नामधेयत्वं प्रसाधितम् तेन प्रकृते किं सिद्ध्यति ? इत्यत आह—इहेदानीमिति । चयनप्रकरणे समाम्नातपृष्ठशब्दे चिन्त्यते किं पृष्ठशब्दः कर्मवाचकः ? उत मन्त्रवाचक इति विचार्यत इत्यर्थः । किमत्र युक्तमित्यत्र सूत्रं पठति—कर्मण इति ।

## भाष्यम्

### पूर्वपक्षः

कर्मणो वाचकः पृष्ठशब्दस्स्यात्। कुतः ? तथाभूतोपदेशात्। यथाभूतस्य उपदेशः, यत्रायं पृष्ठशब्दः कर्मनामाधिगतस्तथाभूतोऽयमपि। किमस्य तथात्वम् ? पृष्ठशब्दसामान्यम्। पृष्ठशब्दस्तत्र कर्मवचनोऽधिगतः। स एवायम्। तस्मादिहापि तद्वचन एवाधिगन्तुं न्याय्यः, विशेषाभावात्। यद्यत्रान्योऽर्थः कल्प्येत, एकः शब्दोऽनेकार्थस्स्यात्। तत्र को दोषः ? शब्द उच्चरिते संशयस्स्यान्नार्थप्रत्ययः। तत्र व्यवहारो न सिध्येत्। व्यवहारार्थश्च शब्दप्रयोगः। कारणान्तरं वा प्रकरणाद्यपेक्ष्यम्। एकार्थत्वे तु निरपेक्षोऽर्थप्रत्ययः। तस्मादनेकार्थत्वमन्याय्यम्। तस्मात्कर्मनाम पृष्ठशब्दः। यदा कर्मनाम तदा यदि तावत्तानि कर्माणीहोपदिश्यन्ते, तत्रोत्पत्तिरेषामनर्थिका।

## वार्तिकाभरणम्

लक्षणा स्यात्। अस्मत्पक्षे पुनः पृष्ठशब्दस्यैव लक्षणेति पृष्ठशब्दस्य कर्मवचनत्वपक्ष एव ज्यायान्। ननु पृष्ठशब्दः तृतीयान्ततया नोपपूर्वकतिष्ठतिधातुसमानाधिकरणः कथं नामधेयमिति चेत्, इत्थम्भूतलक्षण इति सूत्रेण तृतीयायाः प्रकारवाचित्वेन करणवाचित्वाभावेन पृष्ठशब्दस्य सामानाधिकरण्यसम्भवात्। ननु 'उपात् मन्त्र-

## तन्त्रशिखामणिः

शब्दवत् तस्मिन् कर्मणि विधत्ते। ननु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र गार्हपत्यमैन्द्र्याभिदध्यादिति वचनव्यक्तिस्तथात्रापि पृष्ठसदृशैः कर्मभिरग्निमभिदध्यादिति वचनव्यक्तिराश्रयणीया। सा चायुक्ता, पृष्ठसदृशतया स्तुतिरूपाणां कर्मणां मन्त्रकरणिकायामभिधानक्रियायां करणत्वासम्भवादतः पृष्ठशब्दो मन्त्रवचनोऽङ्गीकार्य इति

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

पृष्ठशब्दः कर्मणो वाचकस्स्यात्। तत्र हेतुः-तथाभूतोपदेशात्। हेतुं विवृणोति-**यथेति**। यादृशानुपूर्वीविशिष्टस्य पृष्ठशब्दस्य 'सप्तदशानि पृष्ठानि' इत्यादिविधिवाक्येषु श्रवणं तादृशमेव 'पृष्ठैरुपतिष्ठते' इत्यत्रापि। यथा तत्र तस्य कर्मनामत्वम् तथैवात्रापीत्यर्थः। उभयत्र विद्यमानस्य पृष्ठशब्दस्य समानत्वात्कोऽपि विशेषो नास्तीत्याह-**विशेषाभावात्** इति। तत्रत्यपृष्ठशब्दस्यान्योऽर्थः अत्रत्यस्य चान्योऽर्थ इति स्वीकारे दोषमाह-**अनेकार्थस्यादिति**। भवत्वनेकार्थ इत्यत आह-**संशयस्स्यान्नार्थप्रत्यय** इति। मा भवत्वर्थप्रत्यय इत्यत आह-**व्यवहारो न सिध्येदिति**। सन्देहेन कस्मिन्नप्यर्थे व्यवहारो बाधितस्स्यादित्यर्थः। शब्दप्रयोगश्च व्यवहारार्थ एव भवति न तु सन्देहजननार्थः।

शब्दस्यानेकार्थत्वेऽन्यतरनिर्णयाय प्रमाणान्तरमन्वेषणीयमित्याह-**कारणान्तरं वेति**। प्रकरणादीत्यादिपदेन संयोगादयो ग्राह्याः। एकार्थवाचित्वे न प्रमाणान्तरसापेक्षत्वमिति नानार्थत्वमन्याय्यमित्यर्थः। अतः पृष्ठशब्दः कर्मणो नामेत्युपसंहरति-**तस्मादिति**। ननु पृष्ठशब्दः कर्मनाम यदि तदा तदीया धर्माः 'पृष्ठैरुपतिष्ठते' इति

भाष्यम्

अथ माभूदेष दोष इत्येतदुपस्थानं तत्र विज्ञायते, तत इदं प्रकरणं बाध्येत। तस्मात्सादृश्यविधिरयम्-पृष्ठैरुपतिष्ठते पृष्ठसदृशैः कर्मभिरुपतिष्ठत इति। तत्सादृश्यञ्च धर्मैर्भवति। तस्मात्कर्तव्या धर्मा इति ॥३५॥

## अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दस्स्यात् ॥७.३.३६॥

सिद्धान्तः

न चैतदेवम्—कर्मणः पृष्ठशब्द इति। किन्तर्हि द्रव्येषु पृष्ठशब्दस्स्यात्। ऋग्द्रव्येषु

टुप्टीका

द्रव्यवचनः पृष्ठशब्दः। कुतः? आत्मनेपदं मन्त्रकरणे स्मर्यते। तच्च मन्त्रकरणं नाभिधानमन्तरेण

वार्तिकाभरणम्

करण' इति पाणिनीयसूत्रेणोपपूर्वकतिष्ठतिधातुं प्रति मन्त्रकरणत्वे आत्मनेपदं विहितम्। धातोर्मन्त्रकरणत्वं चाग्न्यभिधानार्थकत्वे भवति, न समीपस्थित्यर्थकत्वे। तथा चात्मनेपदविधानसामर्थ्यादग्न्यभिधानार्थकत्वमेव वक्तव्यमिति चेन्न; व्यत्ययो बहुलमित्यात्मनेपदोपपत्तेः। तस्मात्कर्मवचनः पृष्ठशब्द इति पूर्वः पक्षः। सिद्धान्तसूत्रमाह—

अभिधानोपदेशाद्वा विप्रतिषेधात् द्रव्येषु पृष्ठशब्दः स्यात्।

सिद्धान्तमुपपादयति—ऋग्द्रव्येति। ऋग्रूपद्रव्यवचन एव पृष्ठशब्दो भवतीत्यर्थः। ननु चित्राधिकरणोक्तरीत्या पृष्ठशब्दस्य कर्मवचनत्वात् कथं द्रव्यवचनत्वमित्यभिप्रायेण पृच्छति—कुत इति। उपतिष्ठत

तन्त्रशिखामणिः

चेन्न; यद्यत्राभिधानं विधीयेत तदा समीपस्थितिवचनस्योपतिष्ठतेरभिधाने लक्षणा स्यात्तथा स्तोत्रवचनस्य पृष्ठशब्दस्य तत्साधनेषु मन्त्रेषु लक्षणा स्यादस्मत्पक्षे तु पृष्ठशब्द एव धर्मलक्षणेति ज्यायानयं पक्षः। 'ऐन्द्र्या गार्हपत्य'मित्यत्र तु पदद्वयलक्षणाभावात्तिष्ठतिमात्रे लक्षणायामपि न दोषः। तदयमर्थः-समीपे स्थित्वा पृष्ठसदृशैः

भाष्यसन्दर्भयोजिनी

यत्राम्नातं तत्रैव त उपदेष्टव्याः, किमिति ज्योतिष्टोमे षडहे वोपदिश्यन्ते? तत्रोपदेशो निष्प्रयोजनः। दोषादस्मान्मुक्तये 'पृष्ठैरुपतिष्ठते' इत्युपस्थानं तत्रैवेति स्वीक्रियतामित्यत्राह तत इदमिति। अतस्तेषामत्र अस्य वा तत्रेति विनिमयो दुष्कर इति भावः। अतः 'पृष्ठैरुपतिष्ठते' इत्यत्र पृष्ठपदं सादृश्यलक्षकमेष्टव्यमित्याह-तस्मादिति। उपस्थानं पृष्ठसदृशैः कर्मभिः कर्तव्यम्, सादृश्यञ्च धर्मद्वारकम्। तेषु धर्मेष्वत्र क्रियमाणेषु द्वयोस्सादृश्यं प्रसिध्यतीत्याह-तस्मादिति ॥३५॥

सिद्धान्तः

कर्मणः कर्मसम्बन्धी, कर्मवाचक इत्यर्थः। कर्मवाचकः पृष्ठशब्द इति नैतदेवम्। कीदृशेषु द्रव्येषु पृष्ठ-

## भाष्यम्

'अभित्वा शूर नोनुमः' इत्येवमादीनामृचां वाचकः। कुतः ? अभिधानोपदेशात्। अभिधानोपदेशोऽयम्-पृष्ठैरुपतिष्ठते' इति। पृष्ठैरभिदधातीत्यर्थः। कथं पुनरयमुपस्थानवचनोऽभिधानार्थः शक्यो विज्ञातुम्। उच्यते-उपग्रहविशेषात्। मन्त्रकरण उपतिष्ठतेरात्मनेपदं भवति। मन्त्रस्त्वभि-

## टुप्टीका

सम्भवतीत्यभिधानतो धातुरनुमीयते परस्तात्। अतोऽत्र श्रुतानुमितौ द्वौ धातू। तत्र तिष्ठतिः सामर्थ्यप्राप्तोऽ-

## वार्तिकाभरणम्

इत्यत्र 'उपान् मन्त्रकरण' इति पाणिनीयसूत्रेण मन्त्रकरणेऽर्थे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं विहितम्; उपतिष्ठतिधातोर्मन्त्रकरणकार्यवृत्तित्वमग्निप्रकाशनरूपाभिधानार्थत्वे सम्भवति समीपस्थितिमात्रार्थकत्वे तु मन्त्रं विनापि समीपस्थितिसम्भवेन समीपस्थितेर्मन्त्रकरणकत्वाभावादात्मनेपदे प्रयोगोऽनुपपन्नः स्यात्। न च 'व्यत्ययो बहुलमि'त्यनेन सूत्रेण परस्मैपदस्थलेऽप्यात्मनेपदविधानात् मन्त्रकरणकत्वाभावेऽप्यात्मनेपदं नानुपपन्नमिति वाच्यम्। अभिधानार्थकत्वेनात्मनेपदप्रयोगोपपत्तौ व्यत्ययाश्रयणस्यायुक्तत्वात्। तस्मात् आत्मनेपदस्मरणबलात्कर्मवचनोऽपि पृष्ठशब्दः प्रकृते ऋग्रूपपर इत्याह—आत्मनेपदमिति। नन्वात्मनेपदलिङ्गादुपतिष्ठतेरभिधानार्थकत्वमुक्तम्; तदनुपपन्नम्; उपतिष्ठतेश्श्रुत्या समीपस्थित्यर्थकत्वेन तस्याभिधानार्थकत्वासम्भवादित्यत आह—तच्चेति। तच्च मन्त्रकरणकत्वमर्थप्रकाशनरूपाभिधानमन्तरेण न सम्भवति; मन्त्रस्याभिधानक्रियायामेव करणत्वयोग्यत्वात्। तेनोपतिष्ठतिधात्वर्थस्य समीपस्थितेः मन्त्रकरणकत्वनिर्वाहार्थमभिधानार्थकोऽभिदधातिर्धातुः तस्मादुपतिष्ठतिधातोः परस्मैपदापेक्षयाऽन्य आत्मनेपदलिङ्गादनुमीयते। तस्मादत्र श्रुतः उपतिष्ठतिधातुरेकोऽनुमितश्चाभिदधातिधातुरपर इति श्रुतानुमितौ द्वौ धातू। एवं चोपतिष्ठति धातोस्साक्षान्मन्त्रकरणकत्वाभावेऽप्यनुमितधात्वर्थस्याभिधानस्य मन्त्रकरणकत्वात् तद्द्वारा उपतिष्ठतिधात्वर्थस्यापि मन्त्रकरणकत्वं सम्भवति इत्यनुमितधातुद्वारा अभिधानार्थकत्वमित्यर्थः।

## तन्त्रशिखामणिः

कर्मभिरन्युपकारं भावयेदिति। एतेन'उपान्मन्त्रकरण' इत्युपपूर्वान्मन्त्रकरणकेऽर्थे वर्तमानात्तिष्ठतेरात्मने पदं विहितं स्तुत्यात्मकपृष्ठसदृशकर्मकरणिकायां भावनायाञ्च मन्त्रस्य करणत्वं न सम्भवति-मन्त्रस्याभिधानादन्यत्र करणत्वासम्भवात् इत्यात्मनेपदबलादुपतिष्ठतेर्मन्त्रकरणत्वं वाच्यम्। अतः पृष्ठशब्दो मन्त्रवचनः उपतिष्ठतिश्चाभिधानवचन इति पृष्ठसाधनकैर्मन्त्रैरभिदध्यादित्यात्मनेपदबलादङ्गीकार्यमित्यपास्तम्, पदद्वयलक्षणादोषात्। आत्मनेपदञ्चाकर्मकाच्चेति वा व्यत्ययो बहुलमिति वा समर्थनीयमिति प्राप्ते,

## भाष्यसन्दर्भयोजिनी

शब्दो वर्तत इत्याह-ऋग्द्रव्येषु। एतेन शब्दो द्रव्यमभिप्रैति सूत्रकार इत्यवगतं भवति। अत्र हेतुः-अभिधानोपदेशात् इति। 'उपतिष्ठते' इति विधिरभिधानमुपदिशति यतः, तत इत्यर्थः। 'उपतिष्ठते' इत्यत्रात्मनेपदं श्रूयते। तच्च 'उपाङ्मन्त्रकरणे' इति मन्त्रकरणार्थे विहितम्। मन्त्रकरणं नाम मन्त्रोच्चारणम्। उच्चारणञ्चाभिधानम्।

## भाष्यम्

**धानस्य करणम् नोपस्थानस्य । उपस्थानं शरीरेण क्रियते मनसा वा । तस्मादभिधानार्थः । स एष विप्रतिषेधः । यदि पृष्ठशब्दः कर्मसु कल्प्यते आत्मनेपदं बाध्यते । न हि तदा मन्त्रः करणं भवति । अथात्मनेपदमनुरुध्यते उपस्थानविप्रतिषेधस्तदा अभिधानार्थता भवतीति । तत्रात्मनेपदानुरोधो न्याय्यः । पृष्ठशब्दो हि लक्षणया पृष्ठसाधनं मन्त्रं ब्रुवन्नर्थवान् । आत्मनेपदन्तु मन्त्रकरणेनैवोपपद्यते । अतः पृष्ठसाधनेषु मन्त्रेषु पृष्ठशब्दः ।**

## टुप्टीका

**नूद्यते । उपसर्गार्थोऽनुवादः । सामीप्यस्य प्राप्तत्वात् । यस्योपस्थानं क्रियते तस्य समीप एव स्थित्वा तत्क्रियते नान्यथा । तस्मादुपग्रहात्पृष्ठशब्द आत्मीयान् मन्त्रान् लक्षयति । पृष्ठशब्दे श्रुतिवृत्ते गृह्यमाणेऽत्यन्तबाध आत्मनेपदस्य स्यात् । तस्मात्पृष्ठशब्दो मन्त्राभिधायी ।**

## वार्तिकाभरणम्

ननु पृष्ठैरुपतिष्ठत इत्यत्र धातुद्वयाङ्गीकारे अग्निसमीपे स्थितिरभिधानं चोभयं विधेयमिति वाक्यभेदः स्यादित्यत आह—**तत्रेति** । स्यादेतदेवम् । यदि द्वावपि धात्वर्थौ विधीयेयाताम् । न त्वेवमस्ति । किन्तु अनुमिताभिदधातिधात्वर्थोऽभिधानरूपो विधीयते, तिष्ठतिधात्वर्थस्सामान्यात्प्राप्तः स चानूद्यते । उपसर्गार्थोऽपि सामर्थ्यात्प्राप्तिमेवोपपादयति—**यस्येति** । यस्योपस्थानमभिधानरूपं क्रियते, तस्य समीपे स्थित्वा तत्कर्तव्यम् ; इतरथा 'अभित्वा शूर नोनुम' इति मन्त्रे शूरेति सम्बोधनस्य प्रयोगोऽनुपपन्नः स्यात् । तस्मात् सामीप्यलक्षण उपसर्गार्थः स्थितिलक्षणः तिष्ठतिधात्वर्थश्चार्थप्राप्ताविरत्यर्थः । नन्वभिधानविधिर्न सम्भवति; अभिधानसाधनस्य मन्त्रस्योपदेशेनातिदेशेन वा प्राप्तेरसम्भवादित्यत आह—**तस्मादिति** । तस्मादात्मनेपदबलात् कर्मवचनोऽपि पृष्ठशब्दः पृष्ठसाधनीभूतानभित्वा शूर नोनुम इत्यादिमन्त्रान् लक्षणया प्रतिपादयतीत्यर्थः । नन्वेवं तर्हि लक्षणैव दोषः स्यादित्यत आह—**पृष्ठशब्द इति** । पृष्ठशब्दस्य श्रुत्या कर्मवचनत्वे स्वीक्रियमाणे प्रागुक्तरीत्या आत्मनेपदा

## तन्त्रशिखामणिः

ब्रूमः—न ह्यत्राकर्मकाच्चेत्यात्मनेपदं सम्भवति बृहद्रथन्तरं..........उपतिष्ठत इति पदस्यानुषञ्जनीयत्वेनाकर्मकत्वाभावात् । व्यत्ययानुशासनकथनञ्च सत्यां गतावयुक्तम् । अतस्सर्वथा आत्मनेपदानुपपत्तेः पृष्ठसाधनमन्त्रकरणकाभिधानविधिरित्यङ्गीकार्यम् । ननु यथा सिद्धान्ते पृष्ठसाधनभूतैर्मन्त्रैरग्निसमीपे स्थित्वाग्निमभिदध्यादिति वाक्यार्थपर्यवसानात् समीपस्थितिसाध्याभिधानकरणानां मन्त्राणां समीपस्थितावपि

## भाष्यसन्दर्भयोजिनी

तदिदमाह-**पृष्ठैरभिदधातीत्यर्थ** इति । प्रश्नपूर्वकमेतद्विशदयितुमुपक्रमते-**कथं पुनरिति** । उत्तरयति-**उपग्रहविशेषात्** आत्मनेपदादित्यर्थः ।

'मन्त्रकरण' पदार्थं विवृणोति-**मन्त्रस्त्विति** । अभिधानक्रियायाः करणं मन्त्रः उपस्थानस्य करणं शरीरं मनो वा न मन्त्र इत्यर्थः । उपतिष्ठतिशब्दस्योपस्थानं समीपगमनं यद्यर्थस्तर्हि तच्छरीरसाध्यम्, यदि च तस्याभि-

## भाष्यम्

आह—नैतद्युक्तम्; उपस्थानार्थता हि श्रुत्योपतिष्ठतेः। आत्मनेपदाल्लिङ्गादभिधानार्थता। न च लिङ्गेन श्रुतिर्बाधितव्या। उच्यते-नैवात्र श्रुतिर्बाध्यते। स्वार्थमेवोपतिष्ठतिराह समीपस्थानम्, तत्त्वभिधानाय। अभिधानं निर्वर्तयितुमग्निसमीपे तिष्ठेदिति तिष्ठतिराह, अत्मनेपदात्। अतोऽविरोधः।

## टुप्टीका

आह—उपस्थानवचनः कथमभिधाने वर्तते? धातूपसर्गयोरर्थः सोऽभिधानसामर्थ्यलभ्यत्वान्न

## वार्तिकाभरणम्

नुपपत्तेः लक्षणापि नात्र दोष इत्यर्थः। ननु उपतिष्ठतेस्समीपस्थित्यर्थकत्वेनोपान्मन्त्रकरण इत्यात्मनेपदाभावेऽपि 'अकर्मकाच्चे'ति सूत्रेण आत्मनेपदं भवतीति चेन्न; अत्र त्वस्योपतिष्ठतेरकर्मकत्वाभ्युपगमे पृष्ठैरुपतिष्ठत इति वाक्यसमीपश्रुतेः बृहद्रथन्तराभ्यां पक्षौ ऋतूस्था यज्ञायज्ञियेन पुच्छमिति वाक्ये उपतिष्ठत इत्यस्यानुषङ्गाभावप्रसङ्गात्। न चात्राध्याहारकल्पनेति वाच्यम्; अनुषङ्गसम्भवेऽध्याहारकल्पनस्यान्याय्यत्वात्। अत्र सिद्धान्ते भाष्यकारेणात्मनेपदलिङ्गादुपतिष्ठतेरभिधानार्थत्वमित्युक्त्वा 'आह—नैतद्युक्तम्। उपस्थानार्थता हि श्रुत्या। उपतिष्ठतेरात्मनेपदाल्लिङ्गादभिधानार्थता। न च लिङ्गेन श्रुतिर्बाधितव्या' इत्यशङ्क्य 'उच्यते—नैवात्र श्रुतिर्बाध्यते। स्वार्थमेवोपतिष्ठतिराह समोपस्थानम्, तत्त्वभिधानाय। अभिधानं निर्वर्तयितुमग्निसमीपे तिष्ठेदित्यात्मनेपदादतो न विरोध' इति परिहृतम्। 'आह। एवमप्यभिधानस्य मन्त्रः करणं नोपतिष्ठतेस्तत्रासम्बन्ध एव उपस्थानस्य मन्त्रेण। तथा पृष्ठैरुपतिष्ठत इति समुच्चारणमात्रं स्यादि'ति पुनराशङ्क्य 'उच्यते। अभिधानमभिनिवर्तयन् मन्त्र उपस्थानस्य करणं भवति। यतोऽस्य प्रयोजनमभिनिवर्तयति। न हि निष्प्रयोजनमनुष्ठीयते' इति परिहृतम्। तत्र आद्यशङ्कायाः तात्पर्यविशदीकरणाय तदनुसारेण शङ्कते—आहेति। उपस्थानवचनस्समीपस्थिति-

## तन्त्रशिखामणिः

करणत्वमस्तीत्यात्मनेपदोपपत्तिः तथा पूर्वपक्षेऽपि पृष्ठसदृशैः गुणिनिष्ठगुणाभिधानात्मकैः कर्मभिः अग्निसमीपे स्थित्वाग्न्युपकारं भावयेदिति वाक्यार्थपर्यवसानात् गुणिनिष्ठगुणाभिधानात्मककरणत्वनियमेन तादृशाभिधानार्थता समीपस्थितेरपि मन्त्रकरणत्वादात्मनेपदोपपत्तिस्सम्भवतीति चेन्न; सिद्धान्ते......समीपस्थितेर्मन्त्रकरणकत्वम् न पूर्वपक्षे.....पृष्ठशब्दस्य मन्त्रपरत्वाभावात्। अतस्स्वरसत आत्मनेपदोपप [त्तौ सत्यां] न पृष्ठपदं पृष्ठसदृशकर्मपरं युक्तम्। अस्तु वा कथञ्चिदात्मनेपदोपपत्तिः, तथापि पूर्वपक्षे पृष्ठपदे गौणी, सिद्धान्ते

## भाष्यसन्दर्भयोजिनी

धानसमर्थस्तर्हि तन्मन्त्रसाध्यम्। स एष विप्रतिषेधः। उपस्थानार्थकत्वे आत्मनेपदस्य नोपपत्तिः, अभिधानार्थकत्वे चानुशासनबलेन तदुपपत्तिः। तदत्र कस्यानुग्रह इत्यत्राह-तत्रेति। उपसर्गान्तरमादाय तिष्ठतेः परस्मैपदस्योपपत्तिः कर्तुं शक्यते, उपोपसर्गकतिष्ठतेरात्मनेपदं विना नोपपत्तिरिति हेतोः-न्याय्य इत्युक्तम्। धात्वर्थस्साधितः, पृष्ठपदस्य का गतिरित्यत आह-पृष्ठशब्दो हीति। पृष्ठशब्दोत्तरं तृतीया साधनत्ववाचिनी श्रुता तस्या उपपत्तिर्न भवति

## भाष्यम्

आह—एवमप्यभिधानस्य मन्त्रः करणम्, नोपतिष्ठतेः। तत्रासम्बन्ध एवोपस्थाने मन्त्रेण। तथा-'पृष्ठैरुपतिष्ठते' इति समुच्चारणमनर्थकं स्यात्। उच्यते-अभिधानमभिनिर्वर्तयन्

## टुप्टीका

विरुध्यते। इतरस्त्वाह-अभिधानस्य मन्त्रो नोपतिष्ठतेः। एवञ्चेदभिधानार्थस्य कथमुपतिष्ठतेस्तादर्थ्यं प्रति-

## वार्तिकाभरणम्

वचन उपतिष्ठतिः कथमभिधानार्थे वर्तते। श्रुत्या तावदुपतिष्ठतेस्समीपस्थित्यर्थकत्वमात्मनेपदलिङ्गादभिधानार्थकत्वम् लिङ्गं च श्रुतेर्दुर्बलम्। तस्मादात्मनेपदं व्यत्ययो बहुलमिति नेतव्यमित्यर्थः। परिहारभाष्यस्यार्थमाह—धातूपसर्गयोरिति। स्यादेतदेवम् यद्युपतिष्ठतिरभिधानार्थक इति कल्प्यते, न त्वेवमस्ति। किन्तु अभिधानार्थकोऽभिदधातिधातुरात्मनेपदलिङ्गादनुमीयते। न चैवं सति धातुद्वयार्थविधानाद्वाक्यभेदः। न ह्युपतिष्ठतिधात्वर्थः समीपस्थितिरूपो विधीयते येन वाक्यभेदः स्यात्। किन्त्वनुमितधात्वर्थः। मन्त्रकरणकोऽभिधानरूपोऽर्थो विधीयते। उपपूर्वस्य तिष्ठतेः समीपस्थितिं विना अभिधानासम्भवादर्थप्राप्तोऽनूद्यते। एवञ्च न वाक्यभेद इत्यर्थः। यद्यप्याचार्यैः अयमर्थः प्रागेवोक्तः; तथापि भाष्यतात्पर्यविशदीकरणाय तदनुसारेण पुनः शङ्कते—इतरस्त्विति। अभिधानस्य मन्त्रः करणं नोपस्थानस्य। अभिधानस्य चेन्मन्त्रः करणम् अभिधानस्य करणीभूतः सन् मन्त्रः कथमुपस्थानस्य करणत्वं प्रतिपद्यते। ततश्चानुमिताभिदधातिधात्वर्थरूपाभिधानस्य विधिस्वीकारेऽपि

## तन्त्रशिखामणिः

लक्षणेति सैव ज्यायसी। न चैवमुपतिष्ठतिरपि अभिधानं लक्षयेत् मन्त्रस्याभिधानादन्यत्र करणत्वाभावादिति पदद्वयलक्षणा स्यादित्युक्तमिति वाच्यम्। न हि वयमुपतिष्ठतिधातुनाभिधानं लक्षयामः, किन्तु धातुना समीपस्थितिरेवाभिधीयते सा तु समीपस्थितिरभिधानापेक्षेति ब्रूमहे। न चैतावता कथं समीपस्थितेर्मन्त्रकरणत्वम्? तदभावे च कथमात्मनेपदोपपत्तिरिति वाच्यम्। यथा भावनाकार्यं भाव्यं निर्वर्तयद्यागादिकं भावनां प्रति करणं भवति, यथा वा यागकार्यफलग्रहणयोग्यताधायकदीक्षणीयादिपुरुषसंस्कारका यागाः कार्यभोक्तृत्वांशे शेषभूता यागार्था भवन्ति, तथा समीपस्थितिसाध्याभिधानकरणभूता मन्त्रास्समीपस्थितावपि करणं भवन्तीति मन्त्रकरणकेऽर्थे उपतिष्ठतेरात्मनेपदञ्चोपपद्यते। ननु भवेदेवं यद्युपतिष्ठतेरभिधानार्थत्वे प्रमाणं स्यात्। न च तदस्ति, श्रुत्याद्य-

## भाष्यसन्दर्भयोजिनी

यावल्लक्षणा न स्वीक्रियते। अतः अभिधानक्रियाकरणेषु मन्त्रेषु लक्षणा-पृष्ठमन्त्रैरुपतिष्ठत इत्यर्थः। उपसंहरति-अत इति।

शङ्कते-आह इति। उपतिष्ठतेरुपस्थानार्थता श्रुत्या-अभिधया भवति। अभिधानार्थकत्वमुपतिष्ठतेः श्रुत्या न भवति, आत्मनेपदरूपाल्लिङ्गादिति वक्तव्यम्। लिङ्गाच्च श्रुतिर्बलीयसी, न लिङ्गेन श्रुतेर्बाध उचित इति शङ्कार्थः। समाधत्ते-उच्यते इति। नात्र किञ्चिद्बाध्यते। उपतिष्ठतेः स्वार्थः शक्यार्थः समीपस्थितिः। सा

## भाष्यम्

मन्त्र उपस्थानस्य करणं भवति । यतोऽस्य प्रयोजनं निर्वर्तयति । न हि निष्प्रयोजनमनुष्ठीयते । तस्मान्मन्त्रेष्वेव पृष्ठशब्दः । मन्त्रेषु चेत्, नास्ति धर्माणां प्राप्तिः । न हि मन्त्राणां धर्माः

## टुप्टीका

पद्यते ? उच्यते-यथा दीक्षणीयादयः पुरुषसंस्काराः फलं प्रति ग्रहणयोग्यं पुरुषं कुर्वन्तो यागकार्ये वर्तमानास्त-

## वार्तिकाभरणम्

उपस्थाने मन्त्रस्य करणत्वाभावादुपतिष्ठत इत्यात्मनेपदं न स्यादित्यर्थः । परिहारभाष्यस्यार्थमाह—उच्यत इति । यथा दीक्षणीयादयः पुरुषस्य संस्काराः पुरुषस्य यत्फलभोक्तृत्वं तदंशपातिनस्सन्तः पुरुषं फलं प्रति ग्रहणयोग्यं कुर्वन्तः फलोपयोगिनोऽपि यागकार्यफलोपयोगित्वात् यथा यागार्था एवमिहापि समीपस्थितेरभिधानं प्रयोजनम् । तच्च समीपस्थितिप्रयोजनमभिधानं मन्त्राः कुर्वन्ति । अभिधानार्था अपि मन्त्राः उपस्थानार्थतां प्रतिपद्यन्ते । उपस्थानेऽपि मन्त्राणां तत्फलोपयोगिनां करणत्वादुपतिष्ठत इत्यात्मनेपदमुपपद्यत इत्यर्थः ।

वस्तुतस्तु पृष्ठशब्दस्य कर्मवचनत्वेऽपि तस्य कर्मणः स्तुतिरूपत्वात् स्तुतौ च मन्त्रस्य करणत्वात् यथा

## तन्त्रशिखामणिः

भावादिति चेन्न, 'उपान्मन्त्रकरणे' इति मन्त्रकरणकेऽर्थे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदविधानादात्मनेपद सामर्थ्यरूपलिङ्गस्यैवोपतिष्ठतेरभिधानर्थत्वे प्रमाणत्वात् । नन्वेवमपि मन्त्रः मन्त्राश्रितमुपस्थानमात्मनेपदानुमिताभिधानश्चेति त्रयं विधेयमिति गौरवम् । मन्मते पृष्ठसदृशानि कर्माणि उपस्थानश्चेति द्वयं विधेयमिति लाघवमिति चेन्न; 'त्वामिद्धि हवामहे' 'अभित्वा शूर नोनुमः' इत्याद्याः पृष्ठसाधनमन्त्राः सत्वा····त्यादि सन्दिग्धाभिधानलिङ्गाः समीपे स्थित्वैव प्रयोक्तव्या इति समीपस्थितेरर्थप्राप्तत्वादभिधानं मन्त्राश्चेत्युभयमेवास्मन्मतेऽपि विधेयमिति तुल्यम् । त्वन्मते तु पृष्ठशब्दे गौणी । मन्मते तु लक्षणेति सैव ज्यायसी । नन्वेवमात्मनेपदानुमितस्याभि-

## भाष्यमन्दर्भयोजिनी

चाभिधानार्था । आत्मनेपदसाहाय्येन मन्त्रैरभिधानं निर्वर्तयितुं सम्पादयितुमग्निसमीपे तिष्ठेत् । अत्रात्मनेपदस्याप्यनुग्रहः धातूपसर्गयोश्चानुग्रह इति न किञ्चिद्बाध्यत इत्यर्थः । विरोधे सत्येव बाध्यबाधकभावः, असति च विरोधे प्रबलमित्येव दुर्बलं न बाधत इति भावः । तदिदमुक्तम्-अतोऽविरोध इति ।

ननु धातूपसर्गयोरभिधानमर्थो भवतु, मन्त्रश्च तत्र करणं भवतु, उपस्थानेन सह मन्त्रस्य कस्सम्बन्धः ? तदर्थं 'पृष्ठैरुपतिष्ठते' इत्यस्य पाठः कस्मै प्रयोजनायेति शङ्कते-आहेति । मन्त्रा अभिधानक्रियां निर्वर्तयन्त-उपस्थानस्यापि करणमिति स्वीकारे का हानिः ? अभिधानकार्ये वर्तमाना अपि मन्त्रा अग्निसमीपमगत्वाऽभिधान

## भाष्यम्

अधर्मकास्त इति ॥३६॥

इति पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम् ॥१४॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्य तृतीयः पादः ॥३॥

## टुप्टीका

दर्थाः । एवमिहाप्युपतिष्ठतेरभिधानं कार्यम् । एवञ्च तद्व्यापारं कुर्वन्तस्तदर्थतां प्रतिपद्यन्ते ॥३६॥

## वार्तिकाभरणम्

अभिधानस्य उपस्थानफलत्वादभिधानार्थस्यापि मन्त्रस्योपस्थाने करणत्वम्, एवं स्तुतिकर्मणोऽपि समीपस्थानफलत्वात् तेन स्तुत्यर्थस्यापि मन्त्रस्य करणत्वात् आत्मनेपदमुपपद्यत एव, तथापि कर्मवचनत्वे गौणी वृत्तिः स्यात् । तद्वरं पृष्ठशब्दस्य मन्त्रेषु लक्षणाश्रयणम् इत्याशयो बोध्यः ॥

वृत्तमधिकरणम्

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितवरनन्दनस्य साग्निचित्य-सर्वपृष्ठाप्तोर्यामयाजिश्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्यावैशद्यस्य साग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु टुप्-टीका-व्याख्याने वार्तिकाभरणे सप्तमस्याध्यायस्य तृतीयः पादः ॥

## तन्त्रशिखामणिः

धानस्य विधेयत्वे 'सोमेन यजेत' त्यत्र सोमवता यागेन भावयेदितिवत् पृष्ठसाधनमन्त्रवताभिधानेनाग्न्युपकारं भावयेदिति वाक्यार्थो वर्णनीयः । ततश्च पृष्ठशब्दे मन्त्रेष्वेव काललक्षणा मत्वर्थलक्षणा वापरेति लक्षणद्वयापत्तिरिति चेन्न; गौण्यपेक्षया लक्षणाद्वयस्यैव ज्यायस्त्वात् । त्वत्पक्षे वाक्यार्थविधिः अस्मत्पक्षे तु आत्मनेपदानुमिताभिधानविधेः श्रुत्यनुग्रहश्चेत्याहुः । लाघवात् पृष्ठशब्दे लक्षणायामाश्रयणीयायां 'यदि राजन्यो वैश्यो वा सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य दधन्युन्मृद्य तमस्मै भक्षं प्रयच्छेत्' इत्यत्र यागसाधनद्रव्यसंस्कारभक्षयोगानुमितस्य यागसाधनत्वस्येवात्मनेपदानुमितस्याभिधानस्य विधेयत्वाङ्गीकारोऽपि न दोषावह इति ध्येयम् ॥

इति श्रीराजचूडामणिदीक्षितकृते तन्त्ररत्न सारे सप्तमाध्यायस्य तृतीयः पादः ॥

## भाष्यसन्दर्भयोजिनी

कार्यं न सम्पादयन्ति । अतस्तदर्था अपि मन्त्रा इति समाधत्ते-उच्यत इत्यादिना । अतः पृष्ठशब्दो मन्त्रेष्वेव वर्तत इति न तत्र केषाञ्चन धर्माणामावश्यकतेत्याह-नास्ति धर्माणामिति ॥३६॥

इति पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम् ॥१४॥

इति महामहोपाध्याय श्रीचिन्नस्वामिशास्त्रिणामन्तेवासिना पट्टाभिरामशास्त्रिणा विरचितायां भाष्यसन्दर्भयोजिन्यां सप्तमस्य तृतीयः पादः ॥

## चतुर्थः पादः

१

## इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ ७.४.१ ॥

### भाष्यम्

अनारभ्य क्वचिच्छ्रूयते—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' (मै० सं० २.२.२)।

### टुप्टीका

नाम्नातिदेशोऽभिहितः। इदानीमानुमानिकेन वचनेनातिदेशः। उच्यते, किमत्र तृतीयया कार्यम्,

### वार्तिकाभरणम्

**इतिकर्तव्यताविधेः यजतेः पूर्ववत्त्वम्**

नामातिदेशापेक्षया आनुमानिकवचनातिदेशस्य दुर्बलत्वात् तदानन्तर्यं दर्शयति—नाम्नेति। नन्वानुमानिकवचनातिदेशस्याष्टमाध्यायार्थत्वात् कथमस्मिन् अध्याये सङ्गतिरिति चेन्न; अस्मिन् अधिकरणे करिष्यमाणस्य विचारस्यानुमानिकवचनातिदेशोपोद्घातत्वेनानुमानिकवचनत्वव्यपदेशसम्भवात्। अत्र भाष्यकारेण 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्युदाहृत्य तत्रातिदेशेनेतिकर्तव्यताप्राप्तिं चिन्तयितुमपूर्वभेदाधीनत्वात्तस्या अपूर्वभेद एकेन न्यायेनापूर्वस्वरूपञ्च न्यायद्वयेन यत् साधितं तत्प्रदर्शितम्। तथा हि—"यजतिस्तु द्रव्यफलभोक्तृ-संयोगादेतेषां कर्मसम्बन्धात्" इति द्वितीयाध्यायतृतीयपादाधिकरणे 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यनेन

### तन्त्रशिखामणिः

**इतिकर्तव्यता विधेर्यजतेः पूर्ववत्त्वम् ॥**

वृत्तो नामातिदेशः। इदानीं सामान्यत आनुमानिकवचनातिदेशश्चिन्त्यत इति पादान्तरता। नाम्नि वत्यर्थमात्रं कल्पनीयम्। इह तु वचनस्वरूपमेव कल्पनीयमिति नामापेक्षया आनुमानिकवचनस्य जघन्यतया

### भाष्यसन्दर्भयोजिनी

**विषयः**

पूर्वस्मिन् पादे नाम्नातिदेशस्सपरिकरो निरूपितः। इदानीनुमानिकवचनातिदेशः प्राप्तावसरो निरूप्यते—अनारभ्येति। किञ्चित्प्रकरणमनारभ्येत्यर्थः। एतेनास्य स्वतन्त्रयागविधायकत्वं सूचितम्। द्रव्य-

## भाष्यम्

**इति । तत्रैषोऽर्थस्समधिगतः—यागोऽयं चोद्यत इति । 'यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात्' (जै० सू० २.३.१४) इति । तथेदमप्युक्तम्—कर्मफलयोस्सम्बन्धे कर्म गुणतः फलं**

## टुप्टीका

**यदा स्वभावसिद्ध एव कर्मणां गुणभाव इति । एतदयुक्तम्, साध्यसाधनसम्बन्धस्य वैदिकत्वात् । यथाश्रुतं तथा**

## वार्तिकाभरणम्

यागो विधीयते न तु दार्शपूर्णमासिके निर्वापे सौर्यलक्षणो गुणो विधीयत इत्युक्तम् । तस्मात् सौर्यवाक्ये यागान्तरं विधीयते यागभेदाद् भावनाभेदः, भावनाभेदादपूर्वभेदः, अपूर्वभेदाच्चातिदेशः सिध्यति । तत्रापि यदि फलस्य गुणत्वं कर्मणः प्राधान्यं स्यात् ततोऽपूर्वाभावात् नातिदेशः सिध्येत् ।

**"द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः"** इति षष्ठाद्ये स्वर्गकामाधिकरणे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिवाक्येषु फलस्य प्राधान्यं यागस्य गुणत्वमुक्तम् । तदपि याग एव स्वयं स्थित्वा फलं साधयेत् ततोऽपूर्वं न स्यात् । स तु यागो भङ्गुरत्वादपूर्वद्वारेण फलसाधनम् । **'चोदना पुनरारम्भ'** इत्यत्र द्वितीयाध्याये द्वितीयाधिकरणे उक्तम् । तस्मात् सौर्ययागेनापूर्वं कृत्वा ब्रह्मवर्चसं साधयेत् इति वाक्यार्थोऽवगन्तव्यः । एवञ्चापूर्वभेदादतिदेशेनेतिकर्तव्यताप्राप्तिचिन्ता घटते । अत्र भाष्यकार आह—'यत्र तृतीयानिर्दिष्टो यजिः तत्र युक्तो गुणभावाभ्युपगमः । यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । इह त्वसत्यां तृतीयायां कथं तृतीयार्थोऽवगम्यते इत्याक्षिप्य 'उच्यते, किमत्र तृतीयया कार्यम्, यदा स्वभावसिद्ध एव कर्मणां फलं प्रति गुणभाव' इति समाहितम् । तत्र समाधानभाष्यमाक्षेप्तुं तदनुवदति—**उच्यत इति** । आक्षिपति—**एतदयुक्तमिति** "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इति वेदवाक्ये ब्रह्मवर्चसफलस्य सौर्ययागस्य च यः साध्यसाधनभावरूपः सम्बन्धः प्रतीयते तस्य वैदिकत्वादित्यर्थः । अस्तु सम्बन्धस्य वैदिकत्वम्, ततः प्रकृते किमायातमित्यत आह—

## तन्त्रशिखामणिः

तदानन्तर्यञ्चेति ध्येयम् । 'सौर्यं चरुं निर्वपेत्' इत्यादिकमनुपदिष्टधर्मकं सर्वमत्रोदाहरणम् । तत्र कुतश्चित्कर्मणोऽतिदेशेनेतिकर्तव्यताप्राप्तौ सिद्धायां हि लौकिकाद्वैदिकाद्वा कर्मणस्तदतिदेश इति चिन्ताया अवसर इति प्रथमन्तावदिदं चिन्त्यते—किमत्र सौर्यादौ कुतश्चिद्धर्माः प्राप्यन्ते ? नन्वत्र दार्शपूर्णमासिके निर्वापे गुणविधित्वात्

## भाष्यसन्दर्भयोजिनी

देवतासम्बन्धबलेन निर्वपतिर्यागे वर्तते । प्रत्ययार्थभावनायां प्रकृत्यर्थस्य यागस्य करणत्वेनान्वये सति यागेन भावयेदिति सम्पद्यते । यागः कीदृश इत्याकाङ्क्षायां सूर्यदेवताकश्चरुद्रव्यकश्चेति ज्ञाते सूर्यदेवताकचरुद्रव्यकयागेन ब्रह्मवर्चसं भावयेदिति वाक्यार्थो निर्गलति । तदिदं स्मारयति-समधिगत इति । द्वितीय-तृतीय-पञ्चमाधिकरण इति शेषः । तत्र हि 'आलभेत' 'निर्वपेत्' इत्यादीनां शब्दानां द्रव्यदेवताफलभोक्तृत्वसम्बन्धेन यागपरत्वमेव न केवलमालम्भननिर्वापपरत्वमिति सिद्धान्तितम् । अन्यदपि किञ्चित्स्मारयति-**तथेदमपीति** । षष्ठप्रथमप्रथमाधिकरण इति शेषः । तत्र हि स्वर्गादेरेव भावनायां साध्यत्वेनान्वयः, न तु यागस्येति साधितम् । **कर्म गुणतः** गुणबोधक-

## भाष्यम्

**प्रधानत इति—'प्रत्यर्थं चाभिसंयोगात्कर्मणो ह्यभिसम्बन्धस्तस्मात्कर्मोपदेशस्स्यात्' (जै० सू० ६.१.३.) इति। इदमपि चोक्तम्—यजिरपूर्वं साधयति। ततश्चापूर्वात्कालान्तरे फलं भवतीति**

## टुप्टीका

**भवति। न चाश्रवणे तृतीयायाः साधनतां प्रतिपद्यते। न च सामान्यतो दृष्टं लौकिकं कर्म गुणभूतम्।**

## वार्तिकाभरणम्

**यथाश्रुतमिति**। वेदवाक्ये यथाश्रुतं साध्यसाधनत्वं तथैव भवति नान्यथेत्यर्थः। यद्वेदसम्बन्धिसाध्यत्वं साधनत्वं च तत् श्रुत्यैव भवति। शब्दशक्त्यैव भवतीति यावत्। स्वेच्छया साध्यसाधनत्वावधारणे अलौकिकस्यापूर्वस्य साधनजन्यत्वं साध्यजनकत्वं च न स्यात्। तस्मात् श्रुतिमनुसृत्य वेदवाक्ये साध्यसाधनत्वं ज्ञातव्यमित्यर्थः। ततश्च प्रकृते किमायातमित्यत आह—**न चेति**। 'कर्तृकरणयोस्तृतीये'ति पाणिनीयसूत्रेण करणार्थे तृतीया विहिता। न च प्रकृते ज्योतिष्टोमेनेतिवत् तृतीया श्रूयते, प्रत्युत सौर्यमिति द्वितीयैव श्रूयते। तथा च करणत्ववाचिन्याः तृतीयाया अभावात् सौर्ययागः साधनतां न प्रतिपद्यत इत्यर्थः। ननु लोके क्रियामात्रस्य फलसाधनत्वस्याभावात् यथैव प्रकृते च तृतीयाभावेऽपि सौर्ययागक्रियायाः फलसाधनत्वमस्तीत्यत आह—**न चेति**। सत्यम्, लोके क्रियामात्रं साधनत्वेन गुणभूतं सामान्यतो दृष्टमस्ति, तथा वेदेऽप्यनेनापि कर्मणा गुणभूतेन भवितव्यम्, सौर्ययागस्यापि कर्मत्वादिति सामान्यतो दृष्टानुमानस्याप्रामाणिकत्वात्। तस्मात् तृतीयानिर्देशाभावात् न सौर्ययागः करणमित्यर्थः।

ननु सप्तमाद्ये 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तृतीयान्तदर्शपूर्णमासादिपदनैरपेक्ष्येणैव यागसामान्यस्यैव पदश्रुत्या भावनाकरणत्वे सिद्धे पश्चाद्दर्शपूर्णमासादिपदं यागं विशिनष्टीत्युक्तत्वेन तृतीयायाः करणीभूतयागसामानाधिकरण्यार्थकत्वेन यागसामान्यस्य करणवाचित्वाभावात्कथं भाष्यकारेण **'आह यत्र तृतीयानिर्दिष्टो यजिः तत्र युक्तो गुणभावाभ्युपगमः, यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत'** इत्युक्तमिति चेन्न, दर्शपूर्णमासज्योतिष्टोमपदगततृतीयाया यागसामान्यस्य करणत्ववाचित्वाभावेऽपि

## तन्त्रशिखामणिः

दर्शपूर्णमासातिरिक्तापूर्वभावादपूर्वार्थानां धर्माणामिहातिदेशचिन्ता न युक्तेति चेन्न; 'यजतिस्तु द्रव्यफलभोक्तृसंयोगात्' (जै० सू० २·३·१४) इत्यत्र द्रव्यदेवतासम्बन्धाद्यागचोदनेयमित्युक्तत्वात् अस्त्यपूर्वम्। न चैवं स्वर्गादिना यागं कुर्यादिति कर्मणः प्राधान्यं कामस्य गुणत्वमस्तु, ततश्चापूर्वाभावान्नातिदेशसिद्धिरिति वाच्यम्, 'प्रत्यर्थञ्चा-

## भाष्यसन्दर्भयोजिनी

तृतीयाद्यभावेऽपि, **फलं प्रधानतः** प्राधान्यबोधकद्वितीयाद्यभावेऽपीत्युभयत्र शेषः। **प्रत्यर्थमिति**। स्वर्गकामाधिकरसूत्रमिदम्। स्वर्गादीनां कर्मभिः कर्मभाव्यत्वेनैवाभिसम्बन्धः, न तु साधनत्वेन। प्रत्यर्थञ्चाभिसंयोगात्—अर्थ्यत इत्यर्थः फलं तत्प्रति विधेरभिसंयोगात्-अन्वयात् प्रत्ययार्थभावनायामित्यर्थः। तस्माद् विशिष्य भाव्यांशस्य लाभात् कर्मोपदेशः-कर्मणां धात्वर्थानां साधनतया विधिस्स्यादिति सूत्रार्थः। अर्थात् प्रत्ययार्थभावनायां स्वर्गादिः फलं साध्यम्, धात्वर्थश्च साधनमिति। अन्यदपि स्मारयति—**इदमपीति**। धात्वर्थस्य यागादेस्साध्यं फलमिति

## भाष्यम्

'चोदना पुनरारम्भः' (जै० सू० २.१.५) इत्यत्र। एवमेतस्मिन् सति 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र सौर्ययागेनापूर्वं कृत्वा ब्रह्मवर्चसं साधयेद् ब्रह्मवर्चसकाम इत्येवं विज्ञायते।

## टुप्टीका

अनेनापि कर्मणा गुणेनैव भवितव्यम्। अतः को ग्रन्थार्थः? यजेतेत्युच्चरिते किं केन कथमिति तिस्र आकाङ्क्षा जायन्ते। तत्र किमिति नित्यमेव पुरुषार्थापेक्षः साक्षात्पारम्पर्येण वा। धातुस्तु तत्करणं भवति।

## वार्तिकाभरणम्

प्रमाणान्तरसिद्धकरणत्वाभिव्यञ्जकत्वात्। तदभिप्रायेण भाष्योक्तेः सप्तमाद्यविरोधाभावात्।

ननु उच्यत इत्यादिभाष्ये प्रतीयमानार्थस्य दूषितत्वात् भाष्यार्थः क इति पृच्छति—**अत इति**। भाष्यतात्पर्यार्थं वक्ष्यन्नेव समाधत्ते—**यजेतेति**। यजेतेत्युच्चरिते तिस्र आकाङ्क्षा जायन्त इत्यर्थः। अत्र यद्यपि 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादौ यजेतेति शब्दो नास्ति, तथापि भावनाया एवाकङ्क्षात्रयोत्थापकत्वात् यजेत निर्वपेत् इति स्थलद्वयेऽपि विध्यर्थकस्य लिङ्प्रत्ययस्य सत्वेनोभयत्रापि भावनाप्रतीतेर्यजेतेत्याख्यातस्यापि भावनावाचकत्वात् तदभिप्रायेण यजेतेत्युक्तम्। नन्वेवं प्रकृते किमायातमित्यत आह—**किमिति**। भावयेदित्युक्ते किं भावयेदिति पुरुषार्थ एव भाव्यत्वेन प्रथमं नित्यं समुपनिपतति। पुरुषार्थस्य भाव्यत्वाभावे विधेः प्रवर्तनानुपपत्तेरित्यर्थः। नन्वेवं 'समिधो यजति' इत्यादौ विहितानां प्रयाजयागानां पुरुषार्थत्वमेव स्यान्न क्रत्वर्थत्वम् क्रतूपकारस्य स्वतः पुरुषार्थत्वाभावात् इत्यत आह—**साक्षादिति**। सत्यम् न हि क्रतूपकारः साक्षात्पुरुषार्थः; तथापि प्रयाजयागैः क्रतूपकारे निष्पादिते स च क्रतूपकारः फलं साधयतीति प्रयाजयागेष्वपि क्रतूपकारद्वारा पुरुषार्थ एव भाव्यत्वेन समुपनिपतति। तथा च 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यादौ ब्रह्मवर्चसादि-

## तन्त्रशिखामणिः

भिसंयोगात्कर्मणो ह्यभिसम्बन्धस्तस्मात्कर्मोपदेशस्स्यात्' (जै० सू० ६·१·३) इत्यत्र कर्मफलसम्बन्धे कर्म गुणतः फलं प्रधानत इत्युक्ततया कालान्तरभावि फलसिध्यर्थमपूर्वायम्भाव इत्युक्तत्वात्। न चैवमपि कर्मैव स्थिरं फलं साधयतु किमपूर्वेणेति वाच्यम्। 'चोदना पुनरारम्भः' (जै० सू० २·१.५) इत्यत्र कर्मणः भङ्गुरत्वात् अपूर्वद्वारेव

## भाष्यसन्दर्भयोजिनी

ज्ञातेऽपि तस्य नश्वरत्वेन साधनताया अनुपपन्नत्वात् साधनत्वोपपत्तये यागादपूर्वम्, तस्माच्च फलमित्यपूर्वाधिकरणसिद्धान्तोऽपि स्मारितः। **एवमेतस्मिन् सति** एवमेतस्मिन् विषये ज्ञाते सति सौर्यवाक्येन यद् ज्ञातं भवति तन्निर्दिशति—**सौर्ययागेनापूर्वं कृत्वेति**। यागे सम्पन्ने त्वरितमेव फलं न जायते, तच्च कालान्तर एव, यदा फलं न तदा यागस्तिष्ठति। अतो यागोऽपूर्वमुत्पाद्य नश्यति। तस्मादपूर्वं कृत्वा निर्दिष्टं फलं साधयेदित्यर्थः।

ननु धात्वर्थस्य कर्मणो गुणभावे तस्य करणत्वेन भावनायां सम्बन्धस्तत्रोचितः, यत्र तृतीयान्तं नामपदं 'ज्योतिष्टोमेन' 'दर्शपूर्णमासाभ्यां' 'उद्भिदा' इत्येवमादि स्यात्। 'यजेत' 'जुहुयात्' इत्यादौ तृतीयाविभक्तिर्न

## भाष्यम्

आह—यत्र तृतीयायुक्तो यजिस्तत्र युक्तो गुणभावाभ्युपगमः। यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। इह त्वसत्यां तृतीयायां कथं तृतीयार्थो गम्यत इति। उच्यते-किमत्र तृतीयानिर्दिष्टेन यजिना कार्यम्, यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभावः। यत्राप्यसौ

## टुप्टीका

अतः पुरुषार्थस्य कर्मभूतत्वादाह—'स्वभवावसिद्धः कर्मणां गुणभाव' इति। अथवा स्वर्गं प्रार्थयमानस्य करणमभिलषतस्तृतीयया करणं निर्दिश्यते। तद्विवक्षायां दर्शपूर्णमासादीनि निर्दिश्यन्ते। स्वर्गं प्रार्थयमानः कमुपायं कुर्यात्-यागं कुर्यादिति। केनोपायेन कुर्यात्-यागं कुर्यादिति। ईदृश्यां विवक्षायां सौर्यादीनि विधीयन्ते।

## वार्तिकाभरणम्

लक्षणफलं भाव्यतया प्रथमं साक्षात्समुपनिपतति। 'समिधो यजति' इत्यादौ तु क्रतूपकारद्वारा पारम्पर्येण फलं समुपनिपततीत्यर्थः।

नन्वेतावता प्रकृते किमायातमित्यत आह—धातुस्त्विति। 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' 'समिधो यजति' इत्यत्र विद्यमानो निर्वपतिधातुः यजिधातुश्च अपुरुषार्थत्वात् भावनायां भाव्यतया न सम्बध्यत इति परिशेषात् पुरुषार्थ एव करणोभवति; धातोः पुरुषार्थं प्रति कर्मभूतत्वात् इत्यर्थः। ननु धातोः कर्मवाचकत्वे किमर्थं करणत्वेन गुणभावोऽभ्युपगन्तव्य इत्याशङ्क्य उक्तार्थे भाष्यसम्मतिमाह—अत इति। सर्वत्र कर्मणां गुणभाव एव स्वभावसिद्धः कर्मणां फलं प्रति करणत्वात् इति भाष्यार्थः। आहेत्यत्र भाष्यकार इति शेषः।

ननु यागस्य पुरुषार्थत्वाभावेन भाव्यत्वेनान्वयासम्भवात् पुरुषार्थं प्रति कर्मभूतत्वात्करणत्वम् इत्युक्ते प्रणाड्या सामान्यतो दृष्टानुमानेनैव करणत्वमुक्तप्रायमित्यस्वरसादुच्यते। किमत्र तृतीयया कार्यम्? यदा स्वभावसिद्ध एव कर्मणः फलं प्रति गुणभाव इति भाष्यस्य प्रकारान्तरेण अर्थमाह—अथवेति। स्वर्गं प्रार्थयमानस्य पुरुषस्य करणाभावे स्वर्गप्राप्त्यसम्भवात् स्वर्गप्राप्त्यर्थमेव तत्करणमभिलषतः पुरुषस्य करणाकाङ्क्षायां तृतीयया करणं निर्दिश्यते न तु करणाकाङ्क्षायाः पूर्वमेवाहृत्य तृतीयया करणं न प्राप्यत इत्यर्थः। तदेवोदाहरण-

## तन्त्रशिखामणिः

फलसाधनत्वमित्युक्तत्वात्। तस्मादिह सौर्यादियागेनापूर्वं कृत्वा ब्रह्मवर्चसादिकं फलं भावयेदिति वाक्यार्थः इत्यपूर्वान्तिरसद्भावात् तदर्थतया धर्मातिदेशचिन्ता युक्ता। ननु तथापि यत्र ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तृतीयानिर्देशः तत्र भवतु कर्मणः करणत्वं सौर्यादौ तृतीयाभावात् कथं करणत्वावगतिः। तदभावे च कथं

## भाष्यसन्दर्भयोजिनी

श्रूयते, गुणभावस्तु वर्तते। तस्योपपत्तये लक्षणया तृतीयार्थः कल्प्यते, तत्र च तृतीयान्तं नामपदं तात्पर्यग्राहकमिष्यते, किन्तु 'सौर्यं चरुं निर्वपेत्' इत्यत्र तादृशतृतीयान्तपदस्याभावेन कथं तृतीयार्थ इति शङ्कते—आहेति इह 'सौर्यं चरु' मित्यत्र। समाधत्ते—उच्यत इति। तृतीयान्तनिर्देशस्य किं प्रयोजनम्? स्वर्गादिकं फलं साध्यमित्यवगते यत्कर्मोपदिश्यते तस्य साधनत्वं स्वत एव सिध्यति। तदिदमुच्यते—स्वभावसिद्धः कर्मणां फलं

## भाष्यम्

**श्रुतस्तत्राप्यकिञ्चित्कर एव गतार्थत्वात्। तथा यत्रापि द्वितीया श्रुतिः यथा—'अग्निहोत्रं जुहुयात्' इति तत्रापि विभक्तिव्यत्ययो वा ईप्सिततमत्वस्य वाऽविवक्षा, कामं वाऽऽनर्थक्यं स्यान्न तु कथञ्चिदपि कर्मणः प्रति गुणभावश्शक्योऽपह्नोतुम्। तस्माद्यागेनापूर्वंसाधनमत्रोच्यते।**

## वार्तिकाभरणम्

मुखेनोपपादयति—**ईदृश्यामिति**। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिषु स्वर्गादिफलं प्रार्थयमानस्य पुरुषस्य स्वर्गादिफलार्थमेव यागकरणाकाङ्क्षा उत्पन्ना। तादृश्यामेव करणापेक्षायां सत्यामेव दर्शपूर्णमास-ज्योतिष्टोमपदानि तृतीयान्तानि निर्दिश्यन्ते, न तु करणाकाङ्क्षायाः प्रागेवाहृत्य तृतीयया करणं न प्राप्यत इत्यर्थः। अत्र विवक्षाशब्द आकाङ्क्षापरः। करणाकाङ्क्षाप्रकारमेव स्वयमभिनीय दर्शयति—**स्वर्गमिति**। स्वर्गं प्रार्थयमानः पुरुषः केनाभ्युपायेन कुर्यामितीदृश्यामाकाङ्क्षायां तत्र स्वर्गे उपायत्वेन साधनत्वेन यागं कुर्यादिति विनापि तृतीयया करणाकाङ्क्षा जायत इत्यर्थः। तृतीयानिर्देशस्थले करणाकाङ्क्षामुपपाद्य तृतीयानिर्देशा-भावस्थलेऽपि उदाहरणमुखेन करणाकाङ्क्षामुपपादयति—**ईदृश्यामिति**। पूर्वोक्तायां करणाकाङ्क्षायां तृतीया-निर्देशश्रुत्या सौर्यादयोऽपि ब्रह्मवर्चसलक्षणफलादौ साधनत्वेन विधीयन्त इत्यर्थः। अत्रापि विवक्षाशब्द आकाङ्क्षापरः। तथा च फलं प्रार्थयमानस्य पुरुषस्य करणाकाङ्क्षायां फलं प्रति कर्मण एव गुणभावः स्वभावसिद्ध इति यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभाव इति भाष्यस्यार्थ इत्युक्तं भवति। एवं च तृतीयासद्भावे तृतीयाभावेऽप्याकाङ्क्षावशादेव करणत्वसिद्धेः तृतीया अकिञ्चित्करैव। अत एव भाष्यकारोऽप्यनुपदमेव वक्ष्यति—'यत्राप्यसौ श्रुता तत्राप्यकिञ्चित्करैवावगतार्थत्वादि'ति। किञ्च—यदि पाणिनीयस्मृतिबलेन तृतीयायाः करणार्थे विधानाद्यत्र तृतीया तत्र करणत्वं नान्यत्रेत्यभिमानस्तर्हि "अग्निहोत्रं जुहोति" इत्यत्राग्नि-होत्रशब्दस्य तृतीयान्तत्वाभावात् अग्निहोत्ररूपकर्मणः स्वर्गलक्षणफलं प्रति करणत्वं न स्यात्, प्रत्युत द्वितीया-श्रवणात् कर्मत्वमेव स्यात्। तच्चानिष्टम्। तस्मादग्निहोत्रमिति विभक्तिव्यत्ययो वा ईप्सितार्थस्याविवक्षा वा अनार्थक्यं वेति तृतीयाभावेऽपि तत्र करणत्वमभ्युपगन्तव्यम्। वक्ष्यते चानुपदमेव भाष्यकारेण—'तथा यत्रापि द्वितीयाश्रुतिः, अग्निहोत्रं जुहोतीति तत्रापि विभक्तिव्यत्ययो वा ईप्सितार्थस्याविवक्षा वा कामं वानर्थक्यं स्यात्; न तु कथञ्चिदपि कर्मणः फलं प्रति गुणभावश्शक्यते अपह्नोतुमि'ति। ननु करणाकाङ्क्षायां सत्यां तदनन्तरम्

## तन्त्रशिखामणिः

करणानुग्राहकत्वमितिकर्तव्यताकाङ्क्षेति चेन्न; सौर्यादौ द्रव्यदेवतासम्बन्धानुमितयागे यजेतेति विहिते किं केन कथमिति भावनास्वाभाव्यात् तिस्र आकाङ्क्षास्समुत्पद्यन्ते। किमित्याकाङ्क्षायां फलम् ईप्सितत्वात् भाव्यतया

## भाष्यसन्दर्भयोजिनी

**प्रति गुणभावः इति**। 'ज्योतिष्टोमेन' 'दर्शपूर्णमासाभ्याम्' इति तृतीयान्तशब्दश्रवणाद्धेतोः धात्वर्थः करणमिति न निश्चीयते, कर्मणां स्वभावतो गुणभावे सिद्धे तस्यानुवादकानीमानि तृतीयान्तानि पदानीत्यर्थः। अतएव **गतार्थत्वात् इत्युक्तम्**। तृतीयान्तेनैव नामानि भवन्तीति न नियमः, द्वितीयान्तमपि 'अग्निहोत्रम्' इति नामधेयं भवत्येव। तादृशस्थलेऽप्येवमेव नयनं कर्तव्यमित्याह—**तथा यत्रापीति**। कर्मणः स्वभावतस्सिद्धो गुणभावः

## भाष्यम्

**तत्र यागो विज्ञायते, लौकिकोऽसौ पदार्थः। तेन तु कथमपूर्वं साध्यत इत्येतन्न विज्ञायते। इह तु यजिनापूर्वं साधयेदित्येतावदेवोक्तम्। कथं साधयेदितीतिकर्तव्यता नोक्ता। येषाञ्चार्थानां ज्ञायत**

## टुप्टीका

**भवति हि द्विप्रकारस्यापेक्षा। तस्मादविरोधः। येषाञ्चार्थानां ज्ञायत एवेतिकर्तव्यता तेषां कर्तव्यत्वमात्र-मुपदिश्यते, यथौदनं पचेदिति।**

## वार्तिकाभरणम्

तृतीयया करणं निर्दिश्यत इत्युक्तम्—तदनुपपन्नम्, करणस्य दुःखात्मकत्वेन तत्र पुरुषस्याकाङ्क्षाभावात् इत्यत आह—**भवतीति**। प्रथमं फलाकाङ्क्षायां तत्फलं केन कर्तव्यमिति द्विप्रकारस्य साध्यत्वप्रकारस्य साधनत्व-प्रकारस्य वस्तुद्वयस्यापि लोकेऽपेक्षास्ति; यथा परशुना छिन्धि इत्युक्ते प्रथमं छेदनलक्षणफलाकाङ्क्षायां छेदनं कर्तव्यमिति पुरुषस्य साधनीभूतपरशोरप्याकाङ्क्षा जायते, तथेहापि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ फलं भावयेदिति प्रथमं फलाकाङ्क्षायां तत्फलं केन साधयेदिति साध्यत्वसाधनत्वोभयप्रकारकस्य स्वर्गयागादेरु-भयविधस्यापि पुरुषापेक्षास्ति। एवं चोक्तरीत्या भाष्यार्थे वर्ण्यमानेऽपि न भाष्यविरोधः। तथा च 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यत्र तृतीयाभावेऽपि यागः स्वर्गजनकस्यापूर्वस्य साधनमित्यर्थः। अत्र भाष्यकारेण 'अत्रोच्यते—तत्र यागो विज्ञायतेऽलौकिकोऽसौ पदार्थः। तेन तु कथमपूर्वं साध्यत इत्येतन्न ज्ञायते। इह तु

## तन्त्रशिखामणिः

सम्बध्यते। करणाकाङ्क्षायामुपदेशाविशेषात् [धात्वर्थः]। न च फलमेव पुरुषेणाकाङ्क्ष्यते न करणं दुःखात्मक-त्वादिति वाच्यम्। तस्यापि फलसाधनत्वेन पुरुषार्थतयाकाङ्क्षासम्भवात्। तस्मादपूर्वसद्भावादिह युक्तातिदेश-चिन्ता। तत्र ये लौकिके स्थालीपाकादावग्निस्थापनादयो धर्मा विहिताः ये च वैदिके दर्शपूर्णमासादौ प्रयाजाव-घातादयो धर्मास्ते तत्रैव भवेयुर्न सौर्यादौ, तदङ्गत्वबोधकप्रमाणाभावादिति प्राप्ते—

अभिधीयते—यागेनापूर्वं कृत्वा ब्रह्मवर्चसं भावयेदित्युक्ते, यथा लोके परशुगतोद्यमननिपतनादिव्या-पारेऽनुष्ठिते सत्येव परशुना द्वैधीभावरूपफलदर्शनात् सर्वत्र करणगतव्यापारानुष्ठाने सत्येव करणेन फलं साधितं

## भाष्यसन्दर्भयोजिनी

तृतीयान्तनामपदेन यथानूद्यते तथैव द्वितीयान्तनामस्थलेऽपि सिद्धस्य गुणभावस्य या साध्यावस्था तदनुवादकत्वेन द्वितीयान्तपदानामुपपत्तिरिति भावः। एतदर्थं विभक्तिव्यत्ययो वा ईप्सिततमत्वादिकल्पनं वा न विवक्षित-मित्यर्थः। **कामं वेति**। तृतीयाया द्वितीयाया वानुवादकत्वेनानर्थक्यं काममस्तु, किन्तु धात्वर्थनिष्ठो गुणभावो नापह्नोतुं शक्य इत्यर्थः। एवञ्च 'सौर्यं चरुमि'त्यत्र सूर्यदेवताकचरुद्रव्यकयागो विधीयते, यागश्चापूर्वसाधन-मित्युपसंहरति—**तस्मादिति**। यागस्साधनम् अपूर्वं साध्यम्। तत्र उभयोर्मध्ये यागं करोति, यागे व्यापृत इत्यादि लौकिकव्यवहारेण **यागो विज्ञायते**। यागस्यापूर्वसाधनत्वं कथमिति न ज्ञायत इत्याह—**तेन त्विति**। **इह तु** सौर्यं चरुमित्यत्र। साध्यं साधनञ्चोक्तम्, कथं यागेनापूर्वं साधनीयमिति नोक्तमित्याह—**कथमिति**। **इतिकर्तव्यता** कर्तव्यत्वेनावगतस्य यागस्य प्रकार इत्यर्थः। **सा च नोक्ता**। इतिकर्तव्यताया अनुक्तत्वेऽपि ओदनं पचेदित्यादौ

## भाष्यम्

एवेतिकर्तव्यता, तेषां कर्तव्यत्वमात्रमुपदिश्यते, यथा ओदनं पचेदिति। येषान्तु न ज्ञायते ते सहेतिकर्तव्यतयैवोपदिश्यन्ते, यथा दर्शपूर्णमासौ। एवञ्चेन्नूनं ज्ञायते-यागेनापूर्वनिर्वृत्ताविति-कर्तव्यता यस्मान्नोक्ता तस्मान्नूनमसावस्तीति। आह—यद्यस्ति लोके ततो ज्ञायेतैव। अथ

## टुप्टीका

नन्वयुक्तमिदम्—ओदनं पचेत् इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते। एवञ्चेत् किं केन कथमित्याकाङ्क्षायामितिकर्तव्यता सम्बध्यते। तत्र प्रत्यक्षादिना निर्दिश्यते, इह शास्त्रेण निर्दिश्यते। आकाङ्क्षात्रयन्तु तुल्यम्। अत ओदनं पचेदिति केवलो न निर्दिश्यते। फलेनायन्तु ग्रन्थः। पचेदित्येतावत्यपि निर्दिष्टे केन

## वार्तिकाभरणम्

यागेनापूर्वं साधयेदित्येतावदेवोक्तम्। कथं साधयेदितीतिकर्तव्या नोक्ता' इत्युक्त्वा 'येषान्तु कर्मणां विज्ञायत एवेतिकर्तव्यता तेषां कर्तव्यतामात्रमुपदिश्यते। यथा ओदनं पचेदि'त्युक्तम्। तत्र येषामित्यादि पचेदित्यन्तं भाष्यमाक्षेप्तुमनुवदति—येषामिति। आक्षिपति—अयुक्तमिदमिति। ओदनं पचेदित्यत्रापि भावनावगमात् काष्ठादिजन्यज्वालाभिरुपकृत्य पाकेनौदनं भावयेदिति तिस्र आकाङ्क्षा विद्यन्त इत्यर्थः। ततः प्रकृते किमायातमित्यत आह—एवं चेदिति। तिसृष्वप्याकाङ्क्षासु सतीषु इतिकर्तव्यता प्रत्यक्षादिना श्रुतार्थापत्तिकल्पितेन इदं कृत्वेदं कृत्वेत्येवंरूपेण शास्त्रेण इतिकर्तव्यतास्तत्र पाके निर्दिश्यन्ते। इह दर्शपूर्णमासादौ तु शास्त्रेण 'व्रीहीनवहन्ति' 'समिधो यजति' इत्येवंरूपेण पठितेन शास्त्रेणेतिकर्तव्यता निर्दिश्यते। इयांस्तु विशेषः—ओदनं पचेदित्यत्र श्रुतार्थापत्तिकल्पितेन शास्त्रेणेतिकर्तव्यता निर्दिश्यते। दर्शपूर्णमासादौ तु पठितेन शास्त्रेण। तथा चोभयत्रापि तिस्रः आकाङ्क्षा विद्यन्त इत्यर्थः।

अत्र प्रत्यक्षग्रहणं प्रमाणान्तरोपलक्षणार्थं, आदिग्रहणं तु श्रुतार्थपत्तिव्यतिरिक्तप्रमाणान्तरपरम्। ततः किमित्यत आह—आकाङ्क्षेति। उक्तमाकाङ्क्षात्रयं तुल्यमेव लोकवेदयोः। अत ओदनं पचेदित्यत्र केवलपाको नैव निर्दिश्यते—येन कर्तव्यतामात्रमुपदिश्यत इत्युच्येत। किन्तु प्रमाणान्तरकल्पितशास्त्रसमर्पितेतिकर्तव्यतायुक्तः पाको निर्दिश्यते। तथा च कथमोदनं पचेदित्यत्र कर्तव्यतामात्रमुपदिश्यत इत्युक्तमित्यर्थः। समाधत्ते—फलेनेति।

## तन्त्रशिखामणिः

भवतीति तथा भवत्यत्रापि कोऽसौ सौर्यंगतो व्यापारो यस्मिन्ननुष्ठिते सौर्येण ब्रह्मवर्चसं भवतीति सौर्यादिगत-

## भाष्यसन्दर्भयोजिनी

पाककर्तुः पाचकस्य पाके प्रवृत्तिर्दृश्यते, तथैव यागेनापूर्वं साधयेत् इत्येतावतैव प्रवृत्तिर्जायतामित्यत आह—येषान्त्विति। एतावता ओदनं पचेदित्यत्रेतिकर्तव्यताकाङ्क्षैव नास्तीति न भाष्यकाराशयः, किन्त्ववगतत्वादितिकर्तव्यताया नोपदेश इत्यत्र तात्पर्यम्। यत्र च सा नावगता तत्र तत्साहितस्यैव कर्मणो निर्देश इत्यर्थः। यथा दर्शपूर्णमासौ इति। अत्र च प्रकरणे स्वापेक्षितसकलेतिकर्तव्यता समाम्नातेत्यर्थः। फलितमाह—एवञ्चेदिति। अपूर्वसाधनत्वं फलसाधनत्वं वा यागस्य केवलस्य नास्ति किन्त्वङ्गसहितस्यैव यागस्येत्यर्थः। अत्र शङ्कते—आहेति। अविहितेतिकर्तव्यताकेषु यागेष्वपीतिकर्तव्यताया अस्तित्वे लोकत एव सा ज्ञायेत, यदि

## भाष्यम्

**नास्त्येव कथं शक्या ज्ञातुमिति। उच्यते—बाढमस्ति लौकिकी वैदिकी च। लौकिकी तावत्पार्वणस्थालीपाकादिषु वैदिकी दर्शपूर्णमासादिषु। यदि तत्पूर्वा एताश्चोदनास्तदपेक्षाः,**

## टुप्टीका

**कथमिति-ज्ञायत एवेतिकर्तव्यताविधिः। यत्रेतिकर्तव्यता समीपे नाम्नायते तत्र कथम्भावस्य साकाङ्क्षत्वात्**

## वार्तिकाभरणम्

येषामित्यादि भाष्यग्रन्थस्तु फलाभिप्रायेण पर्यवसितार्थाभिप्रायेण योजयितव्य इत्यर्थः। पर्यवसितार्थमेवोपपादयति—**पचेदिति।** पचेदित्येतावति शब्देन निर्दिष्टेऽपि कथमित्याकाङ्क्षा जायत एवेतिकर्तव्यता श्रुतार्थापत्तिरूपप्रमाणान्तरकल्पितेन शास्त्रेण इतिकर्तव्यतालाभात्। तथाचेतिकर्तव्यताविधायकशास्त्रं विनैव पठितशास्त्रेण प्रधानस्य कर्तव्यतामात्रोपदेशेऽपि इतिकर्तव्यतासहितप्रधानकर्तव्यता सिध्यति। दर्शपूर्णमासादौ तु पठितशास्त्रेणैव सेतिकर्तव्यताकं प्रधानं निर्दिश्यत इत्यस्ति वैषम्यम्। सौर्यादौ तु 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यादिभिः प्रधानमात्रं निर्दिश्यते। तत्र पठितशास्त्रेणेतिकर्तव्यता न विधीयते। नापि श्रुतार्थापत्तिरूपप्रमाणान्तरकल्पितेन शास्त्रेणेतिकर्तव्यता प्रसिद्धेतिकर्तव्यताभावे च सौर्ययागेनापूर्वं कर्तुं न शक्यते। अपूर्वाभावे च फलं न स्यात्। तस्मात् सौर्यादावप्यन्यत्रेतिकर्तव्यतायाः प्राप्तिः प्रतीयते इत्यर्थः। येषां च कर्मणां विज्ञायत एवेतिकर्तव्यतेत्यत्र भाष्ये विद्यमानेनेतिकर्तव्यताशब्देन श्रुतार्थापत्तिरूपप्रमाणान्तरकल्पितेतिकर्तव्यताविधायकशास्त्रमुच्यत इति ध्येयम्। तथा च येषामित्यादि पचेदित्यन्तस्य भाष्यस्य अयं निर्गलितोर्थः-येषां च कर्मणां प्रमाणान्तरेणेतिकर्तव्यताशास्त्रं विज्ञायते तेषां कर्तव्यतामात्रमुपदिश्यते—यथा ओदनं पचेदिति। इतिकर्तव्यविधेर्यजतेः पूर्ववत्वं इति सूत्रस्यार्थमाह—**यत्रेति।** यत्र सौर्यादौ समीपे इतिकर्तव्यता नाम्नायते, तत्र

## तन्त्रशिखामणिः

व्यापारविशेषात्मकेतिकर्तव्यताकाङ्क्षा, सत्यामपि च तस्यां स्थालीपाकदर्शपूर्णमासादिवदिहेतिकर्तव्यताया अनुपदेशात्·········स्थालीपाकाद्दर्शपूर्णमासादेश्चेतिकर्तव्यता शास्त्रेण प्राप्यत इति निश्चीयते। नन्वोदनं पचेत्यत्र सत्यामपि भावनास्वाभाव्यादितिकर्तव्यताकाङ्क्षायामनुपदेशेऽपि यथा नान्यतः कर्मण इतिकर्तव्यता

## भाष्यसन्दर्भयोजिनी

चेतिकर्तव्यता नास्ति तर्हि कथं सा ज्ञातुं शक्या ? इति शङ्कार्थः। समाधत्ते—**उच्यत इति।** लौकिक्या इतिकर्तव्यताया अस्तित्वमङ्गीकृत्य लौकिकवैदिकयोरितिकर्तव्यतयोर्व्यवस्थितत्वं प्रदर्शयति—**बाढमस्तीत्यादिना पार्वणस्थालीपाकादिषु** वैवाहिकौपासनाग्नौ क्रियमाणेषु कर्मस्वित्यर्थः। प्रत्यहं यस्तण्डुलहोमः क्रियते सायं प्रातः, स एव होमः तण्डुलान् पक्त्वा पर्वकाले चरुणा क्रियमाणं कर्म स्थालीपाकः। अस्य लौकिकत्वं स्मार्तत्वमभिप्रेत्य द्रष्टव्यम्। श्रौतत्वमादाय वैदिकत्वव्यवहारः। **तत्पूर्वाः** दर्शपूर्णमासप्रकृतिका इत्यर्थः। **एताश्चोदनाः** सौर्यादयः। दर्शपूर्णमासप्रकृतिकत्वेन ज्ञातेषु सौर्यादिषु तत्रेतिकर्तव्यताया विधानमनावश्यकमित्याह—

## भाष्यम्

सौर्ययागेनापूर्वं साधयेत् यथा ज्ञातयेतिकर्तव्यतयेति, ततो युक्त इतिकर्तव्यताया अविधिः। न च विधीयते। अत इतिकर्तव्यताया अविधेर्यजतेः पूर्ववत्त्वम्, विहितेतिकर्तव्यताकत्वमिति।

अत्र य आहुः—यजेत यागं कुर्यादिति जुहुयात् होमं कुर्यादिति तेषां किं नैव

## टुप्टीका

कस्यापि सम्बन्धिन्या इतिकर्तव्यतया भवितव्यम्। यथा-विश्वजिति किमंशसाकाङ्क्षत्वात्फलमनुषज्यते,

## वार्तिकाभरणम्

कथम्भावस्य साकाङ्क्षत्वात् तस्यापि सौर्यादेरपि उपदिष्टेतिकर्तव्यताककर्मसम्बन्धिन्या इतिकर्तव्यतया भवितव्यम् इत्यर्थः। स्वसमीपे इतिकर्तव्यतायाः आम्नानाभावेऽन्यत्र स्थिताया इतिकर्तव्यतायाः कथमनुषङ्ग इत्यपेक्षायां अन्यत्रोपदिष्टस्यापि अनुषङ्गोऽस्तीति दृष्टान्तमाह—यथेति। यथा 'विश्वजिता यजेत' इत्यत्र किमंशस्य साकाङ्क्षत्वात् प्रदेशान्तरे उपदिष्टं स्वर्गलक्षणफलमनुषज्यते एवमिहापि 'इतिकर्तव्यता कुतश्चिदाहर्तव्येत्यर्थः। अत्र अनुषज्यत इत्यस्य अध्याह्रियत इत्यर्थः। यद्यपि न हीतिकर्तव्यताशून्यं करणमस्तीत्यविहितेतिकर्तव्यताकेषु सौर्यादिषु कुतश्चिदितिकर्तव्यताहर्तव्येति न्यायादेवैतत् ज्ञायते, तथापि 'इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वमि'ति सूत्रमुत्तरविवक्षार्थमित्याह—इदं सूत्रमिति। ननु ये यजेतेत्यस्य यागेनापूर्वं कुर्यात्, जुहुयादित्यस्य होमेनापूर्वं कुर्यादित्यर्थं वर्णयन्ति तेषां मते करणानुग्राहिण्या इतिकर्तव्यताया अभावे करणेनापूर्वं साधयितुमशक्यत्वात् कुतश्चिदितिकर्तव्यता अध्याहर्तव्येति युक्तम्। ये तु यजेतेत्यस्य यागं कुर्यात्; जुहुयादित्यस्य होमं कुर्यात्; इत्यर्थं वर्णयन्ति तेषां मते इतिकर्तव्यतापेक्षाभावेन न्यायेनेतिकर्तव्यताया अलाभात् कथं सौर्यादावितिकर्तव्यताप्राप्तिरिति चेन्न; न्यायेनेतिकर्तव्यतालाभाभावेऽपि शिष्टाचारादितिकर्तव्यताप्राप्तिसम्भवात्। उक्तञ्च भाष्यकारेण 'य आहुः—यजेत यागं कुर्यादित्यर्थः; जुहुयात् होमं कुर्यादित्यर्थः। तेषां किं नैव धर्माकाङ्क्षा भवति? भवतीति ब्रूमः। यद्यपि प्रज्ञातेतिकर्तव्यताको यजिर्द्रव्यं देवतां प्रत्युत्सृज्यत इति; तथापि यदा अनेन

## तन्त्रशिखामणिः

प्राप्यते तद्वदिहापि स्यादिति चेन्न; तत्र हि काष्ठादिभिरग्निसमिन्धनादिरूपो व्यापारः पाकगतो व्यापार इति प्रत्यक्षादिप्रमाणत एव, सौर्यादिगतो व्यापारस्त्वलौकिकत्वान्न लोकतो ज्ञायते। ततश्च यत्र श्रुतार्थापत्तिकल्पितेन शब्देनेतिकर्तव्यतालाभः तत्र प्रधानमात्रं निर्दिश्यते यथोदनं पचेति। यत्र तु न प्रकरणान्तरेणेति-

## भाष्यसन्दर्भयोजिनी

अविधिरिति। अविहितेतिकर्तव्यताकत्वादेव पूर्ववत्त्वम् दर्शपूर्णमासपूर्ववत्त्वम्। तत्पूर्वकत्वे सौर्यादिः विहितेतिकर्तव्यताको भवतीत्यर्थः।

धात्वर्थस्य करणत्वेनान्वयावसर एवेतिकर्तव्यताकाङ्क्षा भवति इति कथनमसहमानानां केषाञ्चित्प्रश्नमुत्थापयति—अत्र य आहुरिति। यजेत इत्यस्य यागेन कुर्यादिति यथा विवरणम् तथा यागं कुर्यादिति जुहुयात्

### भाष्यम्

धर्माकाङ्क्षा भवति ? भवतीति ब्रूमः । यद्यपि प्रज्ञातेतिकर्तव्यताको यजिर्द्रव्यं देवतां प्रत्युत्सृज्यत इति, तथापि यदानेन फलं क्रियते तदा धर्मानाकाङ्क्षति । न ह्यधर्मकात्फलं भवति । कथं

### टुप्टीका

एवमिहापि । इदं सूत्रमुत्तरविवक्षार्थम् । न्यायादेवैतत् ज्ञायते भवितव्यमिति ॥ १ ॥

### वार्तिकाभरणम्

फलं क्रियते तदा धर्मानाकाङ्क्षति । न ह्यधर्मकात् फलं भवति । कथं ज्ञायते ? यो ह्यमेध्याहँ द्रव्यमुच्छिष्टं शयानो वा प्रौढपादो वामेन हस्तेन पादेन वा यथा कथञ्चित् देवताया उत्सृजति तस्य फलं न भवतीति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमना मन्त्रवन्नियमवच्च देवताया उत्सृजति-तस्य फलं भवतीति शिष्टाः स्मरन्ति । तस्माद्यावान् यजिः फलायाम्नायते स सर्वो धर्मानाकाङ्क्षति । अतस्तेषा-मप्यस्ति धर्माकाङ्क्षे'ति । 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादौ कुतश्चिदितिकर्तव्यता सम्पादनीयेति प्रथमसूत्रे सामान्यरूपेण इतिकर्तव्यताप्राप्तिमुपपाद्य पश्चात्तस्मिन्नेव वाक्ये इत्थंरूपेण इति ज्ञाते विचार्यत इत्याह इदमिति । इदं वक्ष्यमाणं विशेषरूपविचारमेव दर्शयति किमिति । या इतिकर्तव्यता कुतश्चिदाहर्तव्येत्युक्तम् सोतिकर्तव्यता लौकिकी वैदिकी वेत्यर्थः ।

अत्र भाष्यकारः—'स लौकिकः स्यात् दृष्टप्रवृत्तित्वात्' इति सूत्रेण सा लौकिक्येव न तु वैदिकी, लौकिक्याः दृष्टप्रवृत्तित्वात् । तथाहि—पार्वणस्थालीपाके अष्टकाचरौ आग्रहायणीयकर्मणि लौकिकेतिकर्तव्यतायाः प्रवृत्तिर्दृष्टा । एवं सौर्यादावपि लौकिक्येव साहर्तव्येति पूर्वपक्षमभिधाय—'वचनात्तु ततोऽन्यत्वम्' 'लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात्' इति सूत्राभ्यामुपसत्सु गृहमेधीये च प्रत्यक्षवचनादेव वैदिकेतिकर्तव्यताप्राप्तेः कथं सर्वत्र लौकिकेतिकर्तव्यतेत्युच्यते; अत्यल्पमिदमुच्यते, लिङ्गात् सर्वत्रापि वैदिक्येव । तथाहि—सौर्ये श्रूयते 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति । इदञ्च दार्शपूर्णमासिकप्रयाजप्राप्तावेव तदनुवादेन कृष्णलहोमं विधातुमीष्टे ।

### तन्त्रशिखामणिः

कर्तव्यतालाभस्तत्र सेतिकर्तव्यताकमेव प्रधानं निर्दिश्यते । यथा दर्शपूर्णमासादिकम् । सौर्यादावपि न प्रकरणान्त-रेणेतिकर्तव्यतालाभः तथापि प्रधानमात्रं निर्दिश्यते, ततो.......नमस्यान्यतस्सिध्यतीतिकर्तव्यतालाभः । तस्माद्यथा विश्वजिति किमित्याकाङ्क्षापूर्तये फलमध्याह्रियते तथा सौर्येष्टावपि कथमित्याकाङ्क्षापूर्तये

### भाष्यसन्दर्भयोजिनी

इत्यस्य होमं कुर्यादिति च विवरणावसरे साकाङ्क्षा किं न भवति ? इति प्रश्नः । उत्तरयति—भवतीति ब्रूम इति ननु यागो नाम देवतोद्देशेन द्रव्यत्यागः । अत्रेतिकर्तव्यता प्रसिद्धैव । कुतो धर्माणामाकाङ्क्षा जायेत इति शङ्कते—यद्यपीति । सत्यमत्र धर्माकाङ्क्षा नोदेति, किन्तु यदा स एव यागः फलसम्पादनायानुष्ठीयते तदा धर्माणामाकाङ्क्षोदेत्येवेति समाधत्ते—तथापीति । अङ्गसहितप्रधानानुष्ठानेनैव फलोदयादित्यर्थः । तदिदं

### भाष्यम्

ज्ञायते ? यो ह्यमेध्यं द्रव्यमुच्छिष्टः शयानो वा प्रौढपादो वामेन हस्तेन वा पादेन वा यथाकश्चिद्देवताया उत्सृजति, तस्य फलं न भवतीति शिष्टाः स्मरन्ति। यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमाः मन्त्रवन्नियमवच्च देवताया उत्सृजति तस्य फलं भवतीति स्मरन्ति। तस्माद्यावान् यजतिः फलायाम्नायते स सर्वो धर्मानाकाङ्क्षति। अतस्तेषामप्यस्ति धर्माकाङ्क्षा, सत्यामाकाङ्क्षायां सन्निहितैर्धर्मैरविप्रतिषिद्धस्सम्बन्धः प्रकृतौ। विकृतौ त्वानुमानिकैः ॥१॥

इत्यानुमानिकवचनातिदेशाधिकरणम् ॥ १ ॥

### वार्तिकाभरणम्

तथा वार्हस्पत्ये श्रूयते—'अर्धं बर्हिषो लुनाति, अग्रं स्वयन्दितम्, अर्धं वेद्यां करोति, अर्धं ने'ति। इदं च दर्शपूर्णमासवत् सर्वेषां लवनप्राप्तावेव तदनुवादेनार्धं लुनाति अर्धं स्वयन्दितं इति विधातुमीष्टे। दर्शपूर्णमासवत् सर्वेषां बर्हिषां वेद्यास्तरणे प्राप्ते तदनुवादेनार्धं वेद्यां करोति; अर्धं नेति विधातुमीष्टे, तथा महापितृयज्ञे श्रूयते—'न होतारं वृणीते आर्षेयमि'ति। इदं च दार्शपूर्णमासिकहोतृवरणार्षेयवरणप्राप्तौ तन्निषेद्धुमीष्टे। तस्मादेतैर्लिङ्गैः सर्वत्र वैदिक्येवेतिकर्तव्यता आहर्तव्या; न लौकिकीति सिद्धान्त्येकदेशिमतमुपन्यस्य तत्परिहारार्थत्वेन **अपि वा न्याय-पूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः** इति पूर्वपक्षसूत्रमवतारयति स्म। सूत्रस्य चायं तात्पर्यार्थः न हि लिङ्गैः वैदिकीतिकर्तव्यता सौर्यादावाहर्तुं शक्यते। न हि लिङ्गानि स्वातन्त्र्येण सन्दिग्धार्थं गमयन्ति; किन्तु न्यायसिद्धार्थानेव व्यञ्जयन्ति। न हि न्यायेन वैदिकीतिकर्तव्यता सौर्यादौ प्राप्यते, येन लिङ्गानि व्यञ्जयेयुः। वैदिकया इतिकर्तव्यतायाः दर्शपूर्णमासादिषु प्रकरणादिभिर्निबद्धत्वात् न सान्यत्र नेतुं शक्यते। एवं च न्यायेनेतिकर्तव्यतायाः प्राप्त्यभावात् लिङ्गान्यकिञ्चित्कराणि।

### तन्त्रशिखामणिः

कुतश्चिदितिकर्तव्यताध्याहर्तव्येति सिद्धम्। यद्यपि न हि करणमितिकर्तव्यताशून्यं किञ्चिदस्तीति न्यायादेव साकाङ्क्षं सौर्यादिवाक्यमवश्यमन्यतः प्राप्तेनेतिकर्तव्यताशास्त्रेण पूर्यत इति स्पष्टमवगम्यमानोऽनेन सूत्रेण [न] प्रयोजनं तथाप्युत्तरविवक्षार्थमिदमित्याहुः ॥

वृत्तमधिकरणम्।

### भाष्यसन्दर्भयोजिनी

विवृणोति—**यो ह्रीत्यादिना**। **उच्छिष्टः** अशुचिः। **प्रौढपादः** प्रसारितपादः। **प्रयतः** शुचिः। स्पष्टोऽर्थः ॥ १ ॥

**इत्यानुमानिकवचनातिदेशाधिकरणम् ॥ १ ॥**

## भाष्यम्

२

## स लौकिकस्स्याद्दृष्टप्रवृत्तित्वात् ॥ ७.४.२ ॥

### विषयसंशयौ

अधुनैवं चिन्त्यते-किमनियमो लौकिकी वैदिकी चेतिकर्तव्यता ? उत लौकिक्येव ? आहोस्विद्वैदिक्येव ? इति ।

### टुप्टीका

इदन्तु चिन्त्यम्—किमसौ लौकिकी वैदिकी वेति ॥२॥

### वार्तिकाभरणम्

नन्वेवं सति उक्तवाक्यानां का गतिः ?, उच्यते "अर्धं बर्हिषो लुनाति अर्धं स्वयन्दितम् अर्धं वेद्यां करोति, अर्धं न" इत्यनेन यत्र दर्शपूर्णमासयोः बर्हिर्वेदिश्च तत्रैव तद्बर्हिरनुवादेन तदर्धस्य लवनम्, अर्धं स्वयन्दितम्, अर्धं बर्हिषो वेद्यामास्तरणम्, अर्धस्य न इत्येवंरूपा गुणा विधीयन्न इति बार्हस्पत्ये श्रुतस्यास्य वाक्यस्योत्कर्षः । 'न होतारं वृणीते नार्षेयं वृणीते' इति वाक्यं 'नान्तरिक्षे न दिव्यग्निश्चेतव्य' इतिवन्नित्यानुवादः । 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति वचनं तु दर्शपूर्णमासयोरेव प्रयाजान् विधत्ते । सौर्ये श्रुतस्यास्य पूर्ववदुत्कर्षः । कथमेकेन वाक्येन प्रयाजाः कृष्णलहोमाश्च विधातुं शक्यन्ते वाक्यभेदप्रसङ्गात् इति चेत्-स्यादेतदेवम्, यदि

### तन्त्रशिखामणिः

स लौकिकस्स्याद् दृष्टप्रवृत्तित्वात् ॥

कुतश्चित्कर्मण इतिकर्तव्यतातिदेश इति स्थिते तद्विशेषचिन्तेति सङ्गतिः । किमत्र लौकिकी वैदिकी वा या काचिदितिकर्तव्यता प्राप्नोतीत्यनियमः ? उत लौकिक्येव ? किं वा वैदिक्येवेति विशये नियामकाभावादनियमे प्राप्ते, उच्यते—सौर्यादावितिकर्तव्यताकाङ्क्षायां लौकिकीतिकर्तव्यतैव स्यात् । तस्यानुपदिष्टेतिकर्तव्यताकेष्वष्टकादिषु प्रवृत्तिदर्शनात् ततश्च भूयोदर्शनेन लौकिकस्यानुपदिष्टेतिकर्तव्यताकेन यागेन व्याप्त्यवगमात् सौर्यादियागेऽपि तादृशे सानुमीयते । न च वैदिक्या दर्शपूर्णमासयोर्दृष्टप्रवृत्तिरवगतेति वाच्यम् ।

### भाष्यसन्दर्भयोजिनी

#### विषयसंशयौ

पूर्वस्मिन्नधिकरणे फल प्रति विधीयमानो यागादिः तत्साधयितुं धर्मानाकाङ्क्षति । सौर्ययागोऽपि ब्रह्मवर्चसोद्देशेन विधीयमानस्तान् आकाङ्क्षति । ते च सन्निधौ न सन्ति । अत आनुमानिकैर्वचनैस्समर्प्यन्ते त इति स्थितम् । अधुनैवं चिन्त्यते तत्रैव सौर्यादौ प्रकारान्तरेण चिन्त्यत इत्यर्थः—किं लौकिक्या इतिकर्तव्यतायाः प्राप्तिरुत वैदिक्या इति । लौकिकशब्देन स्मार्तकर्मसम्बन्धिनीतिकर्तव्यता, वैदिकशब्देन श्रौतकर्मसम्बन्धिनीति कर्तव्यताऽभिप्रेता । संशयः किं प्रयुक्त इति चेत्—लौकिकेषु कर्मसु नियामकं धर्माणां प्रकरणादिकं नास्ति, यत्र तत्र वा धर्मा नेतुं शक्यन्ते, वैदिकेषु तु दर्शपूर्णमासप्रकरणं ज्योतिष्टोमप्रकरणमिति नियामकस्य सत्वेन सन्देहः । अतस्त्रेधा सन्देहः—किमनियमः ? उत लौकिक्येवेतिकर्तव्यता, अथवा वैदिक्येवेति ।

भाष्यम्

पूर्वपक्षः

अत्र विशेषाभावादनियमे प्राप्ते, उच्यते-स लौकिकस्स्यात् । स खलु कर्तव्यतोपायो लौकिकस्स्यात् । कुतः ? दृष्टप्रवृत्तित्वात् । दृष्टा ह्यस्य तत्र तत्र प्रवृत्तिः । यथा पार्वणस्थाली-

वार्तिकाभरणम्

अनेनैव वाक्येनोभयं विधीयेत, न त्वेवमस्ति । किन्त्विदं वाक्यं प्रयाजेषु कृष्णलहोमं विधास्यति । न हि प्रयाजाभावे कृष्णलहोमश्शक्यते विधातुमित्यर्थात् प्रयाजानां विधिरुपपद्यत इति न वाक्यभेदः । तस्मात् न लिङ्गेन वैदिक्या नियमः । किन्तु यथोक्तेन न्यायेन लौकिक्यैवेतिकर्तव्यता आहर्तव्या इति ।

अत्र भाष्यकारेण यत्र नित्यानुवादवचनानि स्युरिति सूत्रोत्तरावयवव्याख्याने यदाशङ्क्य परिहृतं तच्छङ्काभाष्यमाक्षिपन् तत्सूत्रं पठति 'अपि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युरिति' तद्भाष्यमनु-

तन्त्रशिखामणिः

सत्यम्, तथापि व्याप्तिर्भूयोदर्शनगत्या । तस्मान्न वैदिक्या यागेन व्याप्त्यवगमः । यदि च व्यभिचारज्ञान-विरहसहकृतं सहचारज्ञानमेव व्याप्तिग्राहकं तच्च भूयोदर्शनादिव क्वचित्सकृद्दर्शनादपि भवतीति मतम्, तथापि वैदिक्याः प्रकरणादिना व्यवस्थितत्वात् नान्यत्र नयनं युक्तम्, लौकिक्या बहुषु दृष्टप्रवृत्तित्वादितिकर्तव्यतापेक्ष-सर्वयागसाधारण्यमेवानुमीयत इति लौकिक्येव व्याप्यते । ननु सौर्यचरौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति प्रयाजदर्शनरूपलिङ्गबलेन, महापितृयज्ञे 'नार्षेयं वृणीते न होतारम्' इत्यर्षेयवरणपर्युदासलिङ्गेन तत्प्रसक्तिमन्त-रेणानुपपद्यमानेन, पशौ 'पृषदाज्येनानुयाजान् यजति' इत्यनूयाजलिङ्गेन च तत्र वैदिकीतिकर्तव्यता नियम्येतेति चेन्न; वैदिक्याः प्रकरणादिना नियन्त्रितत्वेनान्यत्र नेतुमशक्यत्वात् प्रयाजे प्रयाजे इति वाक्य यत्र दर्शपूर्णमासयोः प्रयाजस्तत्र तदनुवादेन कृष्णलविधिपरम्, आर्षेयवाक्यन्तु 'नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इतिवन्नित्यानुवादः, पृषदाज्येनेति वाक्यन्तु पृषदाज्यविशिष्टानूयाजविधायकं भविष्यति । न चैवं प्रयाजे प्रयाजे इति वाक्यमपि कृष्णलविशिष्टप्रयाजविधिरित्येव किं न ब्रूयादिति वाच्यम्, उद्देश्यतासमर्पकवीप्सावशेन प्रयाजादीना-मुद्देश्यतावश्यम्भावादित्याहुः । तस्मात्प्रयाजादिदर्शनस्यान्यथासिद्धत्वात् लौकिक्येव प्राप्यते । नन्वेवं प्रयाजे प्रयाज इत्यस्य सौर्यचरुप्रकरणादुत्कर्षस्स्यात्, स चायुक्तः । नार्षेयमित्यस्यापि निरर्थकानुवादत्वकल्पनमयुक्तम् । पृषदाज्येनानूयाजानित्यत्रापि द्वितीययानुयाजानामुद्देश्यताप्रतीतेर्विधेयत्वोक्तिरयुक्ता विशिष्टविधिगौरवञ्च स्यात् । तस्माल्लिङ्गबलाद्वैदिक्येव निश्चितेति चेन्न; एवमपि यत्र यस्यैव प्रयाजादेरनूयाजादेर्वा दर्शनं तत्र तस्यैव प्रवृत्तिस्स्यात् । न तु प्रयाजादिदर्शनेनानूयाजादीनामपि प्रवृत्तिः, 'गुणानाञ्च परार्थत्वादिति' न्यायेन तेषाम्मिथोऽङ्गाङ्गिभावाभावात् । ततश्च प्रयाजादिदर्शनेनानूयाजानां [न] प्रवृत्तिः । नन्वेवमप्यनितिकर्तव्यताक-

भाष्यसन्दर्भयोजिनी

पूर्वपक्षः

तत्र नियामकाभावेनानियमे प्राप्ते लौकिक्येवेति पूर्वपक्षयति स लौकिकस्स्यादिति । अत्र हेतुः-दृष्टप्रवृत्तित्वादिति । स्मार्तानि यानि यानि स्थालीपाकप्रभृतीनि कर्माणि अपूर्वसाधकानि तेषु सर्वेषु समाना धर्माः

## भाष्यम्

**पाके, अष्टकाचरौ, आग्रयणे कर्मणि इत्येवं यत्र यत्र यागेनापूर्वं साध्यते तत्र तत्रास्य प्रवृत्तिर्दृष्टा। अतोऽन्वयाद्विज्ञायते यागस्यापूर्वं साधयतोऽयमभ्युपाय इति। अयञ्चापि यागः। तस्मादस्यापि स एवाभ्युपायः॥ २॥**

## तन्त्रशिखामणिः

प्रधानासम्भवात् सौर्यादिप्रधानविधिस्सेतिकर्तव्यताकमेव प्रधानं विधत्ते। सा चेतिकर्तव्यता लौकिकी वैदिकी वेति विशये वाक्यशेषभूतात् प्रयाजादिवाक्याद्वैदिक्येवेति निश्चीयत इति चेत्—यदि हि 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा ह्येतेन सहस्रदक्षिणेन पशुकामो यजेत' इत्यत्रेवात्र प्रधानवाक्ये वा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्रेव वा अङ्गानि श्रूयेरन् तदानीं तानि प्रधानविधिना विधीयेरन् नत्वेवमिहास्ति। यदि च प्रधानवाचकेन यजिनैवाङ्गान्यप्यभिधीयन्त इत्यभिमानस्तदाङ्गानामपि प्रधानवत् फलसम्बन्धात् प्राधान्यं स्यात्। तस्मात्प्रधानविधिना प्रधानमात्रं विधीयते तस्य चेतिकर्तव्यताकाङ्क्षायां दृष्टप्रवृत्तिकत्वात् लौकिक्येव प्राप्नोतीति प्राप्ते, ब्रूमः—

सौर्यादिचोदना हि कथम्भावापेक्षिणी आकाङ्क्षापू [रणसमर्था] मितिकर्तव्यतां सन्निधावपश्यन्ती सदृशवाक्यं बुद्धावुपस्थापयति। वैदिकत्वसामान्याद्वैदिकमेव वाक्यं तत्सदृशमिति तदेव बुद्धावुपस्थितमिह भवति। तच्च स्वार्थमेव बोधयति। वाक्यञ्च फलकरणेतिकर्तव्यतारूपम्। तत्र फलकरणयोराकाङ्क्षा स्ववाक्य एव तयोः श्रुतत्वात्, किन्त्वितिकर्तव्यतायामेव आकाङ्क्षेत्याकाङ्क्षिता प्राकृतेतिकर्तव्यतैव सौर्यभावनया सम्बध्यते, न तु लौकिकी तद्बोधकवाक्यस्यावैदिकत्वेन सादृश्याभावादनुपस्थितेः। न च मास्तूपमानेन लौकिक्याः प्राप्तिः, दृष्टप्रवृत्तित्वादित्यनुमानेन तत्प्राप्तिरिहास्त्विति वाच्यम्। अधर्मकेषु मातृगणयागेषु तत्प्रवृत्तिदर्शनेन व्यभिचारात्। ननु लौकिक्यप्यनुमितवेदविहितत्वाद्वैदिकसदृश्येवेति चेन्न; तथापि प्रत्यक्षवेदविहितस्य प्रत्यक्षवेदविहितमेव सदृशं नानुमितवेदविहितम्। यदि च नित्यानुमेयवेदनिराकरणाल्लौकिकेतिकर्तव्यताविधायकोऽपि वेदः कस्यचित्प्रत्यक्षः तथापि वैदिककर्माधिकारेणैव वेदत्रयी प्रवर्तते तन्मध्ये तु मलवद्वासोव्रतकलापवत् स्मार्तानि प्रसङ्गादुच्यन्ते। ततश्च स्वाधिकारप्रवृत्तवेदविहितत्वसामान्यात् वैदिकस्यैव सौसादृश्यात्। ननु सर्वथा वेदत्रय्यामेव काचिच्छाखा स्मार्तकर्माधिकारेण प्रवर्तनामिति कश्चिद् ब्रूयात्, तथापि लौकिकी शिष्टाचाराल्लौकिकेऽग्नौ कर्तव्या सौर्यादयस्त्वाहवनीये। ततश्च प्रधानवैदेश्याद्वैगुण्यप्रसङ्गः वैदिक्येवेतिकर्तव्यता सौर्यादिषु प्रकृतिवत् विकृतिः कर्तव्येति शब्देन वाक्यशेषतया कल्पितेन दर्शपूर्णमासादिभ्यः प्राप्नोति। नन्वेवं प्रकृतिवच्छब्दस्यैव सौर्यादिविधिवाक्यशेषत्वे पौराडाशिकब्राह्मणं सौर्यादिविधीनां वाक्यशेष इति कथं भाष्यकृतोक्तमिति चेदुच्यते—इतिकर्तव्यता हि प्रयाजावघातादिभिस्तत्तत्पदार्थैर्यथायथं दृष्टादृष्टोपकारसम्पादनरूपा। ततश्च तस्यां प्रकृतिवच्छब्देन प्राप्तायां तद्विशेषणभूतोपकारास्तज्जनकाश्च पदार्थास्तद्विधायकञ्च शास्त्रं साक्षात्क्रमेण प्राप्नुवन्तीत्येतदभिप्रायं भाष्यमित्यदोषः। एतेन यदि पौरोडाशिकं

## भाष्यसन्दर्भयोजिनी

प्रवर्तन्ते। अनेन ज्ञायते-यत्रक्वचन यागद्वाराऽपूर्वं साधनीयं तत्रायमभ्युपाय इति। अयमपि यागः। अतोऽत्रापि स एव लौकिकः प्रवर्तत इत्यर्थः। लौकिकवैदिकयोरयं भेदः-वैदिकस्तु प्रकरणादिना नियमितत्वादन्यत्र नेतुं न शक्यते, लौकिकस्तु सर्वसाधारण इति भावः॥ २॥

भाष्यम्

## वचनात्तु ततोऽन्यत्वम् ॥ ७.४.३ ॥

**आह—किमेष एवोत्सर्गः ? सर्वत्र लौकिकीतिकर्तव्यतेति । एवं खलु प्राप्तम् । एवं प्राप्ते ब्रूमः—वचनात्तु ततोऽन्यत्वमिति । यत्र प्रत्यक्षं वचनं वैदिक्यास्तत्र न लौकिकी स्यात् । वचनसामर्थ्याद् वैदिक्येव स्यात् यथा-उपसत्सु गृहमेधीये च ॥ ३ ॥**

### तन्त्रशिखामणिः

ब्राह्मणं सौर्यविधिवाक्यशेषस्तदा प्रकृतौ धर्मा न स्युः । यदि प्रकृतिविधिवाक्यशेषः तदा सौर्यादौ न धर्मप्राप्तिः विधायकाभावात् । न च सकृदुच्चरितमेव ब्राह्मणं प्रथमं प्रकृतिसम्बन्धितया स्वार्थं विधाय पश्चाद्विकृतिसम्बन्धितयापि विधीयतामिति युक्तम्, विरम्य व्यापारानुपपत्तेरिति परास्तम् । न हि पौरोडाशिकं ब्राह्मणं सकृच्छ्रुतमेव प्रथमं प्रकृत्यन्वितं स्वार्थमभिधाय पश्चाद्विकृत्यन्वितमपि स्वार्थमभिदधातीति ब्रूमः, येन विरम्यव्यापारमपि सौर्यादिवद् विकृतिविधिवाक्यशेषीभवतीति ब्रूमः । ततश्च प्रकृतिसम्बन्धेऽपि न विकृतिसम्बन्धानुपपत्तिः, प्रत्युत इत्थं कुर्यादिति विहित एव तद्वत्कुर्यादिति अतिदेशोऽवकल्पत इति प्रथमं प्रकृतिसम्बन्धोऽतिदेशानुगुण एव । तस्मात्पौरोडाशिकब्राह्मणस्योपकारातिदेशमुखेनैव सौर्यादिविधिवाक्यशेषता, न तूपकाराद्यतिदेशमनादृत्येति ध्येयम् । अस्तु वा पृथगेव पौरोडाशिकब्राह्मणातिदेशः तथापि नानुपपत्तिः । ननु यदि शास्त्रमेव पृथगतिदिश्येत तदा प्रकृतिवद्दृष्टासम्भवेऽपि अदृष्टं कल्पयित्वा शास्त्रीयाणां पदार्थानामनुष्ठानं स्यात् । ततश्च नैवारचरौ व्रीहीनाहृत्य एतेष्वेवावहननं स्यादिति नीवारेष्ववहननस्योहो न सिध्येत् । तथा सौर्यचरौ अग्नये जुष्टमित्ययं मन्त्रो यथापाठमेव प्रयोक्तव्य इत्यग्निपदस्थाने सूर्यपदं नोह्येत । अग्निपदञ्च न बाध्येतेत्यूहबाधौ न स्यातामिति चेन्न; पृथगतिदिष्टमपि ब्राह्मणं न स्वरूपेण पदार्थानां प्रकृतिसम्बन्धितया बोधयति, किन्तु प्रकृत्युपकारकत्वरूपेण । प्रकृतौ च व्रीहीनवहन्ति इति शास्त्रं न व्रीहिस्वरूपेऽवघातं प्रापयति वैयर्थ्यात् । किन्त्वपूर्वसाधनविशेषरूप इति नीवारेष्वपि तादृशरूपसद्भावात् भवत्यवघातस्योहः, तथाग्नये जुष्टमिति मन्त्रमपि न स्वरूपेणानुष्ठापयति, अदृष्टार्थतापतात्, किन्त्वपूर्वीयदेवताप्रकाशनाय सूर्यपदस्योहोऽग्निपदस्य च बाधस्सिध्यतीति दिक् ॥

वृत्तमधिकरणम् ॥२॥

### भाष्यसन्दर्भयोजिनी

#### सिद्धान्तः

पूर्वपक्षिणं पृच्छति—**किमेष एवोत्सर्गः ?** सर्वेषु यागेषु लौकिक्येवेतिकर्तव्यतेति यदुक्तं त्वया, तत्र किमपवादोऽपि वर्तते ? उतोत्सर्ग एवेत्यर्थः । पूर्वपक्षी उत्तरयति-**एवं खलु प्राप्तम्** एवमेवास्ति मया किं क्रियतामिति भावः । सिद्धान्ती प्रतिवदति-**एवं प्राप्ते ब्रूमः** इति । नायमुत्सर्गः, वचनन्त्वत्र निर्णयकं भविष्यतीति सूत्रं पठति-**वचनात्त्वति** । अस्येमे धर्मा इति प्रत्यक्षवचने सति कथं तद्भिन्नानां प्रवृत्तिस्स्यादित्यर्थः । वचनेन वैदिकेतिकर्तव्यताकत्वे स्थलं प्रदर्शयति-**उपसत्सु गृहमेधीये चेति** । ज्योतिष्टोमे सन्ति तिस्र उपसदिष्टयः 'या ते अग्ने अयाशया' इत्यादिमन्त्रैः क्रियमाणाः । इमाः दर्शपूर्णमाससदृशाः । गृहमेधीयेष्टिश्चातुर्मास्येषु साकमेधपर्वणि 'मरुद्भ्यो गृहमेधिभ्यः' इति वाक्यविहिता । उपसत्सु गृहमेधीये च श्रुतप्रत्यक्षवचनसामर्थ्याद् वैदिक्येवेतिकर्तव्यता स्यादित्यर्थः ॥ ३ ॥

भाष्यम्

## लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ।। ७.४.४ ।।

लिङ्गेन वेतिकर्तव्यता नियम्येत । कतरा ? यस्या लिङ्गम् । वैदिक्याश्च लिङ्गम् । तस्माद्वैदिकी । किं पुनर्लिङ्गम् ? सौर्ये तावच्चरौ श्रूयते—'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति । तथा ऐन्द्राबार्हस्पत्ये 'अर्धं बर्हिषो लुनाति, अर्धं न' 'स्वयंदितमर्धं वेद्यां करोत्यर्धं न' इति । तथा पितृयज्ञे 'न होतारं वृणीते नार्षेयम्' (मै. सं ३. ८.२) इति । एतैर्लिङ्गैर्ज्ञायते वैदिकीतिकर्तव्यतेति । कथम् ? लिङ्गस्य तद्गुणत्वात् । एते हि प्रयाजादयो वैदिकस्यापूर्वस्य गुणाः । यदि च तदीयेतिकर्तव्यता प्रवर्तिता तत एतेषु कर्मस्वेते सन्ति । तत्रैतानि वचनान्युपपद्यन्ते 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यादीनि । तस्माद्वैदिकीतिकर्तव्यता नियम्येत ।। ४ ।।

## अपि वाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ।। ७.४.५ ।।

अपि वा नैवं स्यात्—वैदिकीतिकर्तव्यतेति । यत्कारणम्—एतैर्लिङ्गैर्न शक्यते

टुप्टीका

अपि वाऽन्यायपूर्वत्वात् । कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च युगपच्छक्या अभिधातुम् भिद्यते

वार्तिकाभरणम्

वदति—कथं पुनरति । आक्षिपति अयुक्तमित्यादिना । प्रयाजे प्रयाजे कृष्णलं जुहोतीति वाक्ये विशिष्ट-

भाष्यसन्दर्भयोजिनी

प्रत्यक्षश्रुतवचनेन वैदिकेतिकर्तव्यताकत्वं सौर्यादिकर्मणामुपपाद्य सम्प्रति लिङ्गेनापि तन्नियमनं प्रदर्शयति-लिङ्गेन वेति । नियम्यमानेतिकर्तव्यता किं लौकिकी उत वैदिकीति पृच्छति-कतरेति । यस्या लिङ्गं यत्रोपलभ्यते सा तत्र लिङ्गमित्यस्पष्टमेवोत्तरयत्ति-यस्या इति । स्पष्टमुच्यतां कतरा सेति चेदाह-वैदिक्याश्च लिङ्गमिति । उपलभ्यत इति शेषः । कुत्र किमुपलभ्यत इति दर्शयति-सौर्ये तावदिति । ऐन्द्राबार्हस्पत्ये चरौ । बर्हिषोलवनमर्धं कुर्यादर्धं न कुर्यात्, एवं स्वयन्दितम् स्वयंखण्डितं बर्हिर्वेद्यामास्तृणुयातदर्धम्, अर्धं नेत्यादयो धर्माः । पितृयज्ञे । चातुर्मास्यान्तर्गत पितृयज्ञे होतृवरणनिषेधः । इमानि विशेषलिङ्गानि । विकृतिषु दृश्यमानानीमान्यद्योतयन्ति-यद्विकृतिषु वैदिकीतिकर्तव्यताया एव ग्रहणमित्याह-एतैर्लिङ्गैरिति । अत्र हेतुः-तद्गुणत्वादिति । प्रयाजादयो हि प्रकृतावपूर्वप्रयुक्ता अनुष्ठिताः । तेषामत्र दर्शनं समुचितं स्यान्नान्यथेत्यर्थः । अपूर्वस्य गुणाः अपूर्वप्रयुक्ता इत्यर्थः । उपसंहरति-तस्मादिति । वैदिक्या इतिकर्तव्यताया नियमने वैदिकत्वसामान्यं नियामकम् । विकृतिभावनायाः कथम्भावाकाङ्क्षायां सत्यामुपस्थितस्य तदाकाङ्क्षापूरकत्वं वक्तव्यम् । उपस्थितिश्चोपमितिलक्षणप्रमाणेन साधनीया । तच्च सादृश्यमूलकम् । लौकिक्या इतिकर्तव्यतायास्तु यथाकथञ्चित्सादृश्यं कल्पनीयम् । तच्च विलम्बोपस्थितिकम् । वैदिक्यास्तु झटित्युपस्थितत्वेन वैदिक्या एव नियमनमुचितमिति भावः ।। ४ ।।

पूर्वपक्षी प्रत्यवतिष्ठते—अपि वेति । प्रयाजादिदर्शनं न वैदिकीतिकर्तव्यताया लिङ्गं भवितुमर्हति,

## भाष्यम्

वैदिकी नियन्तुम्। कुतः? अन्यायपूर्वत्वात्। न्यायपूर्वकं हि वचनं तत्साधकं भवति। न चैतानि न्यायपूर्वाणि। न हि वैदिक्याः प्रवृत्तिर्युक्ता। निबद्धा हि सा प्रकरणादिभिः कारणैर्दर्शपूर्णमासादिषु। कथं तर्ह्येतानि लिङ्गानि? उच्यते—यत्र नित्यानुवादवचनानि स्युः। इह तावत् 'अर्धं बर्हिषो लुनाति अर्धं न' इति यत्र बर्हिस्तत्रैव भविष्यति। यत्कारणम् सतो बर्हिष एतदुच्यते। न चेहास्ति बर्हिः। 'न होतारं वृणीते नार्षेयम्' इति नित्यानुवादो भविष्यति। ननु नित्यानुवादस्सन्ननर्थो भवति। किं क्रियताम् यस्यार्थो नास्ति। 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति वचनं प्रयाजानां भविष्यति। कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च युगपच्छक्या वक्तुम्। भिद्यते हि तदा वाक्यम्। एवं तर्हि न प्रयाजान् वक्ष्यति। प्रयाजे कृष्णलहोमं

## टुप्टीका

हि तदा वाक्यम्। एवं तर्हि न प्रयाजान् वक्ष्यति। प्रयाजेषु कृष्णलहोमं विधास्यति। न चासत्सु प्रयाजेषु कृष्णल होमः शक्यते कर्तुमित्यर्थाच्छक्यः कर्तुमित्यर्थात् प्रयाजान् करिष्यतीति। अयुक्तमिदम्। विशिष्टविधाने न भवति वीप्सा। यथा ग्रामो ग्रामो रमणीय इति नानवगते च ग्रामार्थे वीप्सा, एवमिहाप्यनवगतोऽत्र

## वार्तिकाभरणम्

विधानेऽभ्युपगम्यमाने सति प्रयाजे प्रयाज इति वीप्सा न भवतीत्यार्थः। ननु वीप्सास्थले विशिष्टविधानं कुतो नास्तीत्याशङ्क्य लौकिकदृष्टान्तमुखेन तत्समर्थयते—यथेति। यथा ग्रामो ग्रामो रमणीय इत्यवगते ग्रामरूपेऽर्थे वीप्सा प्रवर्तते, उद्देश्यविषयत्वाद्वीप्साया उद्देश्यस्यावगतार्थविषयत्वात् यो यो ग्रामः स रमणीय इति अवगतार्थविषयिणी वीप्सा विज्ञायते। एवं प्रयाजे प्रयाजे कृष्णलं जुहोति इत्यत्रापि अवगतार्थविषयिण्येव वीप्सेत्यर्थः।

## भाष्यसन्दर्भयोजिनी

न्यायपूर्वकत्वाभावाद्दर्शनस्येत्याह-न्यायपूर्वकं हीति। केवलं लिङ्गवचनदर्शनमात्रेण पदार्थसिद्धिर्न भवति। लिङ्गवचनानि स्थितिप्रदर्शकान्येव न साधकानि। साधकत्वञ्च न्यायेन सिध्यति। अतो न्यायपूर्वकत्वं तेषामावश्यकमिति भावः। प्रयाजादयो धर्माः प्रकरणादिप्रमाणेन नियन्त्रिता दर्शपूर्णमासादिषु। तेषामन्यत्र नयने कथमिमानि लिङ्गानि भवितुमर्हन्तीति पृच्छति-कथमिति। एतानि 'प्रयाजे प्रयाजे' इत्यादीनि लिङ्गानि कथं भवेयुरित्यर्थः। समाधत्ते-उच्यत इति। यत्र नित्यानुवादवचनानि स्युः तत्र तानि न लिङ्गानि भवेयुः-यथा 'न पृथिव्यामग्निश्चेतव्यः नान्तरिक्षे न दिवि' इत्यादिः। नचेहास्ति बर्हिः ऐन्द्राबार्हस्पत्ये बर्हिषो विधानं नास्ति, कथं तर्हि लवनप्रकारविधानम् भवितुमर्हति। अतो नित्यानुवादः। एव 'न होतारं वृणीते' इत्ययमपि नित्यानुवादः। नित्यानुवादत्वे आनर्थक्यं स्यादित्यत्र पूर्वपक्ष्याह—किं क्रियताम् भवत्वानर्थक्यमित्यर्थः। यस्य चार्थो नास्ति सोऽनर्थक एवेत्याशयः। 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यत्र प्रश्नपूर्वकं स्वाभिमतं साधयति-कथं पुनरिति। प्रयाजानां विधानं तत्र च कृष्णलहोम इति विधेयद्वये वाक्यभेदमाह-भिद्यते हीति। कृष्णलहोमविशिष्टप्रयाजानां विधानन्तु न भवति, वीप्साया अनुपपत्तेरिति भावः। तथाच सूत्रस्यायं निर्गलितोऽर्थः-प्रयाजादिदर्शनं न वैदिकीतिकर्तव्य-

## भाष्यम्

विधास्यति । न चासत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्तुमित्यर्थात्प्रयाजान् करिष्यति । तस्मान्न लिङ्गेन वैदिक्या नियमः । यथोक्तेन न्यायेन लौकिक्येवेतिकर्तव्यतेति ॥ ५ ॥

## टुप्टीका

प्रयाजार्थः विधेयत्वात् । तस्मादन्यथा वर्ण्यते वाक्यान्तरेण प्रयाजानां विहितत्वात् । ऐवञ्चेत् तत्र प्रयाज इत्युपपद्यते गुणविधित्वेन, वीप्सा च ॥ ५ ॥

## वार्तिकाभरणम्

अस्तु को दोषः ? तावता प्रकृते किमायातम् ? इत्यत आह—अनवगते चेति । विशिष्टविधाने प्रयाजरूपार्थस्यापि विधेयत्वात् विधानस्य चानवगतार्थविषयत्वात् अत्र प्रयाजरूपोऽर्थोऽनवगत एव, तथा च ये ये प्रयाजास्तेषु कृष्णलहोम इत्येवंरूपा अवगतार्थविषयिणी वीप्सा नोपपद्यते । तस्मात् प्रयाजे कृष्णलं जुहोति इत्यत्र विशिष्ट-विधानपरशङ्काभाष्यमनुपपन्नमित्यर्थः । प्रयाजे प्रयाजे कृष्णलं जुहोति इति वाक्यस्य भाष्योक्तार्थं दूषयित्वा तद्वाक्यस्य स्वयमन्यथार्थो वर्ण्यत इत्याह—तस्मादित्यादिना । न हि प्रयाजे प्रयाजे कृष्णलं जुहोतीत्यनेन वाक्येन प्रयाजा विधीयन्ते, येन प्रयाजानामनवगतार्थत्वात् वीप्सा नोपपद्येत । किन्तु समिधो यजतीत्यादिवाक्यैः दर्शपूर्णमासयोः प्रयाजानां विहितत्वेन प्राप्तत्वादित्यर्थः । ततः प्रकृते किमायातमित्यत आह—एवञ्चेदिति । प्रयाजानां विधानं वाक्यान्तरप्राप्तं चेत् अत्र प्रयाजा अवगतार्था विद्यन्ते, तथा सति प्रयाजे प्रयाजे कृष्णलं जुहोतीत्यनेन ये ये प्रयाजास्तेषु कृष्णलहोमं कुर्यादिति कृष्णलरूपगुणविधिः उपपद्यते । तथा च प्रयाजानामनु-वाद्यत्वेनोद्देश्यत्वादवगतार्थविषयिणी वीप्सा चोपपद्यत इत्यर्थः । तत्र तथासतीत्यर्थः । प्रयाज इति प्रयाजे प्रयाजे कृष्णलं जुहोतीति वाक्यस्य प्रतीकग्रहणम् ।

अत्र पार्थसारथ्युपाध्यायैः—तस्मादन्यथा वर्ण्यत इति वाक्यस्य सूत्रमन्यथा वर्ण्यत इत्यर्थो वर्णितः । तदनुपपन्नम्—आचार्यैरग्रे सूत्रस्यार्थान्तरवर्णनाभावात् प्रयाजे प्रयाजे कृष्णलं जुहोतीति वाक्यस्यैवार्थान्तरव-र्णनात् । तस्मात् श्रुतिवाक्यमन्यथा वर्ण्यत इति वक्तव्ये सूत्रमन्यथा वर्ण्यत इत्यनास्थयोक्तमिति द्रष्टव्यम् ।

ननु भाष्यकारेण 'नित्यानुवादवचनानीति' सूत्रोत्तरावयवव्याख्याने 'अर्धं बर्हिषो लुनाति' इत्यादीनि प्राकृतबर्हिरनुवादेनार्धलवनादिगुणविधायकानि, 'न होतारं वृणीते' इत्यादीनीति तु नित्यानुवादपराणीति 'प्रयाजे प्रयाजे कृष्णलं जुहोतीति' वाक्यन्त्वपूर्वार्थविधायकत्वाद्वचनमिति त्रैविध्योपन्यासपूर्वकं लिङ्गदर्शना-

## भाष्यसन्दर्भयोजिनी

ताया लिङ्गम् न्यायपूर्वकत्वाभावात् न्यायपूर्वकं हि लिङ्गं भवति । वैदिकीतिकर्तव्यतायाः प्रकरणेन नियन्त्रित-त्वेन न्यायपूर्वकत्वाभावात् । अतः यत्र प्रयाजास्तत्रोत्कर्षः क्रियताम् । 'न होतारं वृणीते इति तु नित्यानुवाद एव । एव यथासम्भवं सौर्यादिदर्शनमुपपादनीयमिति । न प्रयाजान् वक्ष्यति न प्रयाजान् विधास्यतीत्यर्थः । प्रयाजोद्देशेन कृष्णलं विधास्यतीति । ननु कथं कृष्णलविधानं सङ्गच्छते प्रयाजानामप्राप्तत्वादित्यत आह-न चेति । प्रयाजा-नामार्थिको प्राप्तिरित्यर्थः । एवञ्च वैदिकेतिकर्तव्यताया लिङ्गेनोपपादनं दुष्करम् पूर्वोक्तप्रकारेण लौकिक्या एवेतिकर्तव्यताया आश्रयणमुचितमित्युपसंहरति-तस्मादिति ॥ ५ ॥

### भाष्यम्

## मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ७.४.६ ॥

तत्राह—अथ कस्मान्नोभे अपीतिकर्तव्यते सह प्रवर्तेते इति । किमेवं भविष्यति ? एवं तुल्यापेक्षा कर्मणामन्यतरतो न बाधिता भवति । उच्यते—सहप्रवृत्तावेकया चेत्कर्म निरपेक्षं कृतं द्वितीयस्याः प्रवृत्तिर्विप्रतिषिद्धा । अतो मिथः प्रवृत्तेर्विप्रतिषेधाद्यथार्थकल्पना स्यात् एकस्याः प्रवृत्तिः स्यादित्यर्थः । कथमेकस्याः प्रवृत्तेर्धर्माणां यथार्थकल्पना भवति ? ये धर्मा येषु कार्येषु प्रकृतावुत्पन्नास्त इहापि तेष्वेव भवन्ति । इतरथा द्वितीयस्या धर्मा अयथार्था भवेयुः पूर्वैर्धर्मैः, तेषां कार्याणां निर्वर्तितत्वात् । एवमेकस्याः प्रवृत्तेर्यथार्थकल्पना भवति । अतो

### वार्तिकाभरणम्

नामन्यथानयनं कृतम् । उक्तरीत्या 'प्रयाजे प्रयाजे कृष्णलं जुहोतीति' वाक्यमपि 'अर्धं बर्हिषो लुनातीतिवदनुवादेन गुण विधायकं जातम् । तथा च किं तर्हि वचनस्योदाहरणमिति चेत्—उच्यते, 'प्रयाजे प्रयाजे कृष्णलं जुहोतीति' वाक्यस्य वचनोदाहरणत्वाभावेऽपि 'पृषदाज्येनानूयाजान्यजतीति' पशौ श्रूयमाणं वाक्यं विशिष्टविधिपरत्वेन वचनोदाहरणं भवितुमर्हतीति न त्रैविध्यानुपपत्तिः । लिङ्गदर्शनवाक्यस्य स्वयमर्थान्तरमुक्त्वा पूर्वपक्षमाह—तस्मादिति । लिङ्गदर्शनवाक्यानामन्यथानीतत्वात् लौकिक्येवेतिकर्तव्यता आहर्तव्येत्यर्थः । अत्राचार्यैः—'मिथो वा प्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात्' इति तटस्थशङ्कापरिहारार्थपूर्वपक्षसूत्रम्, 'भागित्वात्तु नियम्येत गुणानामभिधानत्वात् सम्बन्धादभिधानवत् यथा धेनुः किशोरेण' इति सिद्धान्तसूत्रम् 'उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात्' इति तत्परिहारार्थपूर्वपक्षसूत्रम् 'उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन्' इति सिद्धान्त्येकदेशिशङ्कापरिहारार्थपूर्वपक्षसूत्रञ्च स्पष्टत्वात् त्यक्तानि । चत्वार्यप्येतानि सूत्राणि तच्चतुस्सूत्रीभाष्यञ्च सङ्क्षेपेण व्याख्यास्यामः । तथा हि—

'मिथो वा विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात्'

अथ कस्माल्लौकिकीमेवाभ्युपगम्य वैदिकीमुत्सृजसि किमपराद्धं वैदिक्या ? उभे अप्यभ्युपगम्येयाताम् । एवञ्च सौर्यादिकर्मणामविशेषेण प्रवृत्ता या इतिकर्तव्यतापेक्षा सा अन्यतरत्र न बाधिता भविष्यति । उच्यते—न

### भाष्यसन्दर्भयोजिनो

प्रकारान्तरेण शङ्कते—तत्राहेति । अथेति । लौकिकवैदिकेतिकर्तव्यतयोरुभयोस्सहप्रवृत्तिः कुतो नाङ्गीक्रियते ? एवमङ्गीकारे तव किं प्रयोजनं सिध्यतीति पृच्छति-किमेवमिति । उभयोः प्रवृत्तौ लौकिक्या वैदिक्या वा न बाधो भविष्यति अन्यथाऽन्यतरस्य बाधस्स्यादित्याह-एवं तुल्येति । उत्तरमाह-उच्यते इति । उभयोः प्रवृत्तिः कथम्भावाकाङ्क्षाया निवृत्यर्थं वक्तव्या । तत्रान्यतरया यद्याकाङ्क्षा शान्ता तर्हि द्वितीयस्य किं प्रयोजनम् । बाधस्तु तस्या अनिवार्य एवेत्याह-सहप्रवृत्ताविति । विप्रतिषिद्धा विरुद्धा स्यादित्यर्थः ।

एवं लौकिक्या वैदिक्याश्चोभयोरेकत्र प्रवृत्तौ विरोधे सति यथार्थकल्पनाया अवसरस्स्यादित्याह-यथार्थकल्पनेति । यथार्थकल्पनां विवृणोति-एकस्या इति । एकस्याः प्रवृत्तौ यथार्थकल्पनायास्सिद्धिः कथमिति प्रश्न-

भाष्यम्

यथार्थकल्पना स्यादित्यनेनैकस्याः प्रवृत्तिरित्युक्तं भवेत्। एकस्याः प्रवृत्तौ यथोक्तेन न्यायेन लौकिक्याः प्रवृत्तिरिति ॥ ६ ॥

## भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७.४.७ ॥

तुशब्दः पक्षनिवृत्तौ। न त्वेवं स्यात् लौकिकीतिकर्तव्यतेति। किन्तर्हि? वैदिकी नियम्येत। कुतः? भागित्वात्। वैदिक्यपि भागिनी प्रवृत्तेः। सापि ह्यपूर्वस्येतिकर्तव्यता। समाने च भागित्वे उभयोर्वैदिक्येव स्यात्-गुणानामभिधानत्वात्। गुणा एते प्रयाजादयः सौर्यादिषु दृश्यमाना अभिधायका भवन्त्येतस्यार्थस्य। यथा वैदिक्येवेतिकर्तव्यतेति बोधका

वार्तिकाभरणम्

हि सौर्यादिकर्माणि राजाज्ञया सम्भाविताशेषेतिकर्तव्या अपेक्षन्ते स्वयमनुपदिष्टेतिकर्तव्यताकत्वात् स्वांशपूरणायेतिकर्तव्यतामपेक्षन्ते। यद्येकयेतिकर्तव्यतया स्वांशः पूर्येत, अलमन्ययेतिकर्तव्यतया। यदि चोभे गृह्णीमः एकत्रोपदिष्टैर्धर्मैः प्रकृतिवत् कार्यस्य निर्वर्तितत्वात् अपरत्रोपदिष्टा धर्मा अतिदेशागतास्त्वयथार्थाः भवेयुः। तस्मादेकैव। सा च दृष्टप्रवृत्तित्वादित्युक्तहेतुना लौकिक्येव।

'भागित्वात्तु नियम्येत गुणानामभिधानत्वात् सम्बन्धादभिधानवत् यथा धेनुः किशोरेण।

यथा यागान्वयिनी लौकिकी दृष्टा तथैव वैदिक्यपि यागान्वयिनी दृश्यते। तथा चोभयोस्तुल्येऽपि भागित्वे प्रत्युत वैदिक्येव नियन्तव्या-सौर्यचरौ प्रयाजे प्रयाजे कृष्णलं जुहोतीति लिङ्गदर्शनात्। ननु न्यायाभावे लिङ्गमकिञ्चित्करमिति प्रागेवोक्तमिति चेन्न, वैदिक्यपि यागान्वयित्वेन न्यायस्योक्तत्वात्।

भाष्यसन्दर्भयोजिनी

मुत्तरयति ये धर्मा इति। अयं भावः-प्रकृतौ वैदिकानि यान्यङ्गानि यत्कार्यकरत्वेन विहितानि तान्यङ्गानि अन्यत्र प्राप्तानि सन्ति तान्येव कार्याणि कुर्युरिति स्वीकर्तव्यम्। अन्यथा द्वितीयप्रवृत्तधर्मा अयथार्थास्स्युः पूर्वैरेव धर्मैः कार्याणां निर्वर्तितत्वात्। अत एकस्याः प्रवृत्तिरिति वक्तव्यम्। यथार्थकल्पना नाम एकस्या इतिकर्तव्यतायाः प्रवृत्तिरित्युक्तं भवति। तत्र 'स लौकिकस्स्यात्' इत्युक्तन्यायेन लौकिक्याः प्रवृतिरिति ॥ ६ ॥

पक्षमिमं निरस्यति—न त्वेवं स्यादिति। अपूर्वोपकारकत्वं यथा लौकिक्या इतिकर्तव्यताया अस्ति, तथा वैदिक्या अप्यस्ति इति भागित्वात् इति हेतुना साधयति-वैदिक्यपीति। उभयोरपि भागित्वे समानेऽपि प्रयाजादीनामत्र दर्शनाद्वैदिक्येवेतिकर्तव्यता ग्राह्येत्यर्थः। गुणानामभिधानत्वात् दर्शपूर्णमासयोर्विद्यमाना गुणाः-धर्मा अत्र सौर्यादौ कीर्तिताः प्रयाजादयो द्योतयन्ति यद् वैदिक्येवेतिकर्तव्यता ग्राह्येति भावः। अत्रापि हेतुः-

## भाष्यम्

भवन्तीत्यर्थः। कस्मात्? सम्बन्धात्। एते हि तयेतिकर्तव्यतया सम्बद्धाः। अतस्साहचर्यात्तां गमयन्ति अभिधानवत्। यथा कौण्डपायिनामयने-अग्निहोत्रमित्यभिधानं कर्मणो वाचकं तत्कर्मसहचरितान् धर्मानानयति। तेष्वसत्स्वैतदाभिधानमिह न युज्यत इति तेषां धर्माणां तत्र भावो विज्ञायते। एवमिहापि प्रयाजादीनां दर्शनमसत्यां वैदिक्यां न युज्यत इति तस्या अपीह भावो विज्ञायते। नन्वसति न्याये लिङ्गमकारणम्। सत्यमेवम्, उक्तस्तु न्यायो भागित्वादिति।

यत्तु दृष्टप्रवृत्तिर्लौकिकीति, तत्र ब्रूमः—यद्यपि दृष्टप्रवृत्तिस्स्यात् तथापि वैदिक्येव नियम्येत। कथम्? यथा धेनुः किशोरेण। तद्यथा—कृष्णकिशोरा धेनुरिति। यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिस्तथाप्यभिधानसामान्यादश्वधेन्वामपि भागीति किशोरेण लिङ्गेनाश्वधेन्वां विज्ञायते। एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः तथापीतिकर्तव्यतासामान्येन भागित्वाल्लिङ्गेन वैदिकी विज्ञेया ॥ ७ ॥

## वार्तिकाभरणम्

यत्तु दृष्टप्रवृत्तित्वात् लौकिक्येव ग्राह्येति तत्र ब्रूमः—सत्यम् लौकिक्यापि दृष्टप्रवृत्तिः, तथापि वैदिक्येव यथा दोग्ध्रीषु दृष्टप्रवृत्तिरपि धेनुशब्दः धेनुः कृष्णकिशोरेणेत्युक्तेः किशोरशब्दस्य अश्वशाबवाचित्वात् तत्समभिव्यहारात् दोग्ध्रीसामान्यवाचिनोऽपि धेनुशब्दो बडबापरो विज्ञायते। एवं प्रकृतेऽपि लौकिक्या वैदिक्याश्च दृष्टप्रवृत्तित्वेऽपि वैदिक्येव लिङ्गेन विज्ञायते। तस्मात् वैदिक्येवेतिकर्तव्यता ग्राह्या।

## भाष्यसन्दर्भयोजिनी

**सम्बन्धादिति**। यथा दर्शपूर्णमासयोः प्रयाजादय इतिकर्तव्यतारूपेणापूर्वोपकारका अभवन् तथा अत्रापि तादृशोपकारजननेन ते सम्बद्धा इति। अत्र दृष्टान्तः-**अभिधानवदिति**। नामधेयवदित्यर्थः। यथा अग्निहोत्रपदं कुण्डपायिनामयनान्तर्गतं नित्याग्निहोत्रधर्मप्रापकमित्युक्तं तथेत्यर्थः। तेषु नित्याग्निहोत्रधर्मेषु **एतदभिधानम्** अग्निहोत्रनाम। न सङ्गतमिति **तेषां धर्माणां** नित्याग्निहोत्रधर्माणां **भावः** सत्ता कुण्डपायिनामयनेऽप्यस्तीति **विज्ञायते** तथैव सौर्येऽपीत्यर्थः। नन्विदं केवलं लिङ्गमभिहितम्, न्यायस्तु नोक्त इत्यत आह—**भागित्वादिति**।

पार्वणस्थालीपाकादिषु लौकिक्या इतिकर्तव्यतायास्तत्र तत्र प्रवृत्तिर्दृष्टेति सौर्यादावपि सैवेतिकर्तव्यता प्रवर्तत इत्याशङ्कामनूद्य निरस्यति **यद्यपीति**। सत्य लौकिक्या इतिकर्तव्यातायाः प्रवृत्तिर्दृष्टा, किन्तु तादृशदर्शनमात्रेण न निश्चयः कर्तुं शक्यते लौकिक्येवेतिकर्तव्यतेति। अत्रोदाहरति—**कृष्णकिशोरा धेनुरिति**। धेनुशब्दो 'धेनुर्गोमात्रके धेन्वाम्' इत्यादिकोशबलेन गोमात्रवाचकोऽपि किशोरादिसमभिव्याहारबलेनाश्वधेन्वा अपि वाचक इतीष्यते, तथैव प्रकृतेऽपि इतिकर्तव्यतात्वं यथा लौकिक्यास्तथा वैदिक्या अपि सङ्गच्छत इति सौर्यादौ वैदिकीतिकर्तव्यतैव भवतीत्यर्थः ॥ ७ ॥

## भाष्यम्

### उत्पत्तीनां समत्वाद्वा यथाधिकारं भावस्स्यात् ॥ ७.४.८ ॥

अथवा नैव लिङ्गेन नियम इति । कुतः ? उत्पत्तीनां समत्वात् । धर्माणां प्रयाजादीनामुत्पत्तयः समास्सर्वेषामाग्नेयाद्यङ्गभावेन, न परस्पराङ्गत्वेन । किमतः ? यदि प्रयाजादीनामनुयाजादयोऽङ्गानि स्युः, ततो यत्र प्रधानं तत्राङ्गानीति प्रयाजदर्शनेनानूयाजादयोऽनुमीयेरन् । यदा तु समप्रधाना एते तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन्, प्रयाजधर्मा वा, न त्वनुयाजादयः । तस्माल्लिङ्गमनियामकम् ।

यत्तु- अभिधानवदिति, अत्र ब्रूमः---युक्तं तत्र । यत्र हि परशब्दः परत्र प्रयुक्तस्संस्तद्धर्मानतिदिशतीत्युक्तम् । अपि च विधिरसौ-अग्निहोत्रवद्धोतव्यमिति । अयं पुनरनुवादः । तेनात्र प्रयाजादीनामेव नास्ति प्राप्तिः, कुतोऽनुयाजादीनाम् । तस्माद्विषम उपन्यासः-अभिधान-

## वार्तिकाभरणम्

### उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ।

अस्तु वा लिङ्गं प्रापकम्, तथाप्यकिञ्चित्करं लिङ्गं भवति । प्रयाजानामनूयाजादीनां च दर्शपूर्णमासाङ्गत्वेन तदुत्पत्तीनां समत्वान्न प्रयाजाङ्गमनूयाजादयः, येन प्रयाजावृत्या अनूयाजादयोऽप्यावर्तेरन् । अतः प्रयाजदर्शनेन प्रयाजमात्रस्य प्राप्तिः; न तु दार्शपूर्णमासिकसकलविध्यन्तस्य । न हि प्रयाजप्राप्तिमात्रेणेतिकर्तव्यतापौष्कल्यं सिध्यति । तस्मात् लिङ्गं न त्रापकम् । मा भवतु प्रापकम् लिङ्गं नियामकन्तु भवत्येव न्यायेन वैदिक्याः प्राप्तेः

## भाष्यसन्दर्भयोजिनी

लिङ्गेन वैदिकीतिकर्तव्यतानियमनं न सङ्गतमिति प्रकारान्तरमवलम्बते—**अथवेति** । लिङ्गस्यानियामकत्वं साधयति—**उत्पत्तीनामिति** । प्रयाजादयो दर्शपूर्णमासयोरुत्पन्नाः प्रधानीभूताग्नेयाद्यङ्गभूताः- तत्रैवोत्पन्ना अनूयाजादयोऽपि । तैस्सह प्रयाजादयो नाङ्गभावं भजन्ते, यतो ह्युभयेऽपि समानाः परस्परमङ्गाङ्गिभावं कथमाप्नुयुरित्यर्थः । अङ्गाङ्गिभावाभावेन किं सिध्यतीति पृच्छति—**किमत इति** । प्रयाजानामनूयाजानाञ्चाङ्गाङ्गिभावे स्वीकृते प्रयाजा यत्र सन्ति तत्र तदङ्गभूता अनूयाजादय आगच्छेयुः यतः प्रधानानुसारीणि तदङ्गानि वर्तेरन् । तदिदमाह—**ततो यत्र प्रधानमिति** । प्रयाजा अनूयाजाश्च यदा समप्रधानाः तदा क्वचित्प्रयाजदर्शनमात्रेणानूयाजानामनुमानं कथमिव स्यादित्याह—**यदा त्विति** । प्रयाजदर्शनं **कामं** प्रयाजाननुमिनोतु, तद्धर्मान् अभिक्रमणादीन् वा, अनूयाजादींस्तु कथमपि नानुमिनुयात् इत्यर्थः । अतो लिङ्गं वैदिक्या इतिकर्तव्यताया न नियामकं भवितुमर्हतीत्युपसंहरति—**तस्मादिति** ।

अग्निहोत्रदृष्टान्तेन 'अभिधानवत्' इति यदुक्तं तदनूद्य निरस्यति—**अत्र ब्रूम इति** । तत्र कुण्डपायिनामयने । गौण्या वृत्याग्निहोत्रशब्दो नित्याग्निहोत्रे वर्तत इति **युक्तं** तत् । युक्त्यन्तरं सङ्गृह्णाति—**अपि चेति** । 'मासमग्निहोत्रं जुहोति' इति विधायकं वाक्यम् । अतस्तत्र नित्याग्निहोत्रवदस्यानुष्ठानमिति तद्धर्माणामतिदेश

## भाष्यम्

वदिति । अतो यथाधिकारं भावस्स्यात् । ये धर्मा यस्यापूर्वस्याधिकारे आम्नातास्ते तत्रैव भवेयुः ॥ ८ ॥

एवं तर्हि 'सौर्यं चरुं निर्वपेत्' इत्यनेनाख्यातेन प्रधानस्य विधानोत्पत्तिः शेषाणाञ्च वचनं भवतु । कथं कृत्वा ? नानङ्गं प्रधानमुच्यमानं कस्मैचित्प्रयोजनाय कल्पत इति । तेन च प्रापितानामङ्गानामेतेभ्यो लिङ्गेभ्यो विशेषावधारणं भविष्यति । तत्रेदमुच्यते--

### उत्पत्तिशेषवचनञ्च विप्रतिषिद्धमेकस्मिन् ॥ ७.४.६ ॥

## वार्तिकाभरणम्

प्रागेवोक्तत्वात् इति चेत् तत्र ब्रूमः—न हि यागान्वयित्वमात्रेण प्राप्तिर्विवक्षिता येन वैदिक्यपि न्यायात् प्राप्येत, किन्तु भूयोदर्शनसहकृतेन यागान्वयित्वेन प्राप्तिर्विवक्षिता । सा च प्राप्तिः लौकिक्या एव । लौकिकी च बहुशो यागान्वयिनी दृश्यते, न वैदिकी दर्शपूर्णमासादिकतिपययागान्वयदर्शनात् । अस्तु वा वैदिक्या अपि भूयोदर्शन-सहकृतं यागान्वयित्वम्; तथापि वैदिकी नान्यत्र नेतुं शक्यते तस्याः दर्शपूर्णमासादिषु प्रकरणादिभिर्निबद्धत्वात् । एवञ्च सत्यां वैदिक्याः प्राप्तौ न लिङ्गं नियामकं भवितुमर्हतीति नियामकान्तरं गवेषणीयम् । न च तदस्ति तस्माल्लौकिक्येव ।

**उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ।**

मा भवतु प्रमाणान्तरं वैदिकेतिकर्तव्यताप्रापकम्, किन्तु 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इति प्रधानविधिरेवानितिकर्तव्यताकप्रधानासम्भवात् सामान्येनेतिकर्तव्यतासहितमेव प्रधानं विधत्ते । सामान्यतः सत्यां चेतिकर्तव्यताप्राप्तौ वाक्यशेषस्थानीयं प्रयाजादिदर्शनं वैदिकेतिकर्तव्यताप्राप्तौ नियामकमस्त्विति चेदुच्यते

## भाष्यसन्दर्भयोजिनी

उचित इत्यर्थः । अयं पुनः प्रयाजादिः अनुवादमात्रेण विधानमन्तरेण प्राप्तिर्न भवति । यदा प्रयाजादय एवं न सन्ति, तदानूयाजानां प्राप्तिः कथमिव स्यादित्याह—कुतोऽनुयाजादीनाम् इति । अतोऽभिधानवदिति दृष्टान्तः विषमः । एवञ्च येषामङ्गानां यदपूर्वोपकारकत्वेनाधिकारे प्रकरणे समाम्नानं तेषां तत्रैवावस्थितिः नान्यत्र तानि गन्तुं प्रभवेयुरित्युपसंहरति – अत इति ।

एवं तावत्प्रदर्शितलिङ्गानामतिदेशनियामकत्वं नास्तीति निरूपिते तत्र प्रकारान्तरेण शङ्कामुपस्थापयितु मुपक्रमते –एवं तर्हीत्यादिना । 'सौर्यं चरुं निर्वपेत्' इत्याख्यातेन प्रधानं कर्म द्रव्यदेवताविशिष्टं विधीयत इत्यत्र न कश्चन विवादः । केवलस्य प्रधानस्य फलसम्पादकत्वमसम्भवमित्यप्यविवादम् । प्रधानं विदधानोऽयमेव विधिः फलसम्पादनायापेक्षिताङ्गकलापमपि विधत्त इति स्वीकारे का हानिरित्यर्थः । अङ्गरहितं प्रधानं विधीयमानं निष्प्रयोजनं भवेदित्याह—नानङ्गं प्रधानमिति । तेन चेति । अनेन विधिना साधारणतया प्रापितेष्वङ्गेषु विशेषावधारणं 'प्रयाजे प्रयाजे' इत्यादिलिङ्गान्यवबोधकानि भवन्तीत्यर्थः । एतेन वैदिकेति-कर्तव्यताया नियमनं भविष्यतीति शङ्कितुराशयः ।

## भाष्यम्

एकस्मिन् शब्दे प्रधानस्योत्पत्तिरङ्गानाञ्च वचनं न सम्भवति। किं कारणम्? उत्पन्नं हि प्रधानमङ्गान्यपेक्षते। अपेक्षया च तानि गृह्यन्ते। तस्मान्नैतदपि युक्तम्। यदि च निर्वपेदित्यनेन शब्देनाङ्गान्यपि विधीयेरन् तेषामपि फलसम्बन्धस्स्यात्। तथाङ्गत्वमेव व्याहन्येत। ततोऽयमपि वादो न घटते। तस्माद्यथोक्तो लौकिक एवाभ्युपायः॥ ९॥

### विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम्॥ ७.४.१०॥

विध्यन्तो वा सौर्यादिकानां चोदनायां प्रवर्तेत, न धर्मा लौकिकाः। कः पुनरयं विध्यन्तो नाम? विधेरन्तो विध्यन्तः। अथ विधिः कः? यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते स विधिः। विधीयते ह्यनेनार्थः। यथा लोके-देवदत्त गामभ्याज शुक्लामिति तस्याभ्याजेति विध्यादिः, इतरोऽन्तः। वेदेऽपि 'दर्शपूर्णमासाभ्यां यजति' इति विध्यादिः, विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम्। तेन समेतोऽयं

## वार्तिकाभरणम्

'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यनेनाङ्गान्यपि विधातुं न शक्यन्ते। स्ववाक्येऽङ्गानामनुक्तत्वेन विधानासम्भवात्। यदि मन्यसे पदान्तरेण वाक्यान्तरेण वा श्रुतेन वा कल्पितेन वाङ्गान्युपस्थाप्य तानि प्रधानविधिना विधीयेरन् इति, तथा सति प्रधानविधिनैवाङ्गान्यपि विधानात्तेषामपि फलसम्बन्धात् प्राधान्यं स्यात्, नाङ्गत्वम्। तस्माददृष्टप्रवृत्तित्वात् लौकिकयेव इतिकर्तव्यतेति सिद्धे सिद्धान्ततयाह—

## भाष्यसन्दर्भयोजिनी

अत्र प्रतिपक्षी उत्तरयति—**एकस्मिन् शब्दे** इति। एकमेव वाक्यं प्रधानं तदङ्गानि च विधातुं न शक्नुयादित्यर्थः। एवं विधाने किं सङ्कटमापवतीत्यत्राह—**यदि चेति**। अत्रत्यो निर्वपतिः ब्रह्मवर्चसफललाभाय प्रधानं विधत्ते, स एवाङ्गान्यपि विधत्त इति स्वीकारेऽङ्गानामुद्देश्यं किं भवेत्—किं कर्म उत फलम्? नाद्यः, कर्मणो विधेयत्वात्। नान्त्यः यथा फलसम्पादकत्वं प्रधानस्य तथाङ्गानामपि तत्सम्पादकत्वमापतेत्। भवत्विति-चेदाह—**अङ्गत्वमेव व्याहन्येत** इति। अतो लौकिक्येवेतिकर्तव्यतेष्टव्येत्युपसंहरति-तस्मादिति॥ ९॥

पूर्वपक्षिणा कृतां शङ्कां निरसितुं सिद्धान्ती भूमिकां रचयति-**विध्यन्तो वेति**। सौर्यादीनामितिकर्तव्यताकाङ्क्षायां वैदिको विध्यन्त एव प्रवर्तेत न लौकिकीतिकर्तव्यतेत्यर्थः। कोऽयं विध्यन्तो नाम नूतनश्शब्द इति पृच्छति-कःपुनरयमिति। व्युत्पत्त्या विध्यन्तशब्दं साधयति-**विधेरन्त** इति। विधिसम्बन्ध्यन्त इत्यर्थः। विधिःक इति पृच्छति-**अथेति**। गृहीतपदपदार्थसङ्गतिको यद्वाक्यमाकर्ण्य पुरुषः क्वचित्प्रवर्तते कुतश्चिच्च निवर्तते तद्वाक्यं विधिरित्याह-**यद्वाक्यमिति**। **यथा लोके** इति। गामभ्याज इति विध्यादिः, गमनं मोचनम् आनयनञ्चेति विध्यन्त इति लोके प्रतीमः। तद्वदेव वेदेऽपीत्याह-**वेदेऽपीति**। दर्शपूर्णमासवाक्यं विध्यादिः, तदितरब्राह्मणवाक्यं विध्यन्तः। प्रधानविधिं परित्यज्यान्यद् ब्राह्मणं सर्वं विध्यन्तशब्देन ग्राह्यमित्यर्थः। तेन विध्यन्तेन **समेतः** युक्तः विशिष्ट

विध्यादिर्विशिष्टापूर्वनिर्वृत्तिं प्रति पुरुषं प्रवर्तयति। तस्मात्सोऽस्यान्तः। तथा 'सोमेन यजेत' इति विध्यादिः, सौमिकमपि ब्राह्मणं विध्यन्तः। एवं विध्यन्तो नाम।

एतेषु च सौर्यादिषु विध्यादिरस्ति विध्यन्तो नास्ति। एतेष्वपि स विध्यन्तः कल्प्येत। कथं कृत्वा? अपरिपूर्णं यद्वाक्यं तदध्याहारेण वा पूर्येत व्यवहितकल्पनया वा। तत्राध्याहाराद् व्यवहितकल्पना ज्यायसी, अध्याहारे ह्यश्रुतश्शब्दः कल्प्येत, इतरत्र श्रुतेन सम्बन्धः। तस्माद् व्यवहितो ब्राह्मणावयवोऽस्य परिपूरकः कल्प्येत। यथा-'वसन्ताय कपिञ्जलानालभते (मै. सं. ३. १४.१. मा. सं. २४.२०) 'ग्रीष्माय कलविङ्कानालभते' इति। तेन वैदिकीतिकर्तव्यता प्राप्यते।

ननु यदि तद् ब्राह्मणमस्यान्तः कल्प्यते तत्र न भवति। तदेतन्मयूरनृत्यमापद्यते।

## टुप्टीका

कथम्भावाकाङ्क्षायां यत्रेतिकव्यता नाम्नायते तत्र कथम्भावस्यावृत्तत्वाच्चोदनासदृशं वाक्यं

## वार्तिकाभरणम्

विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम्।

सूत्रस्यार्थमाह—कथमिति। यत्र सौर्यादौ इतिकर्तव्यता समीपे नाम्नायते तत्र कथम्भावापेक्षायां तस्याश्च कथम्भावापेक्षाया अनिवृत्तेः सौर्यचोदना दर्शपूर्णमासादिसम्बन्धिसाङ्गप्रधानविधायकं स्वसदृशं कृत्स्नं वाक्यमुपमानेन बुद्धावुपस्थापयति। न त्वसदृशं स्मार्तवाक्यमित्यर्थः। ततः प्रकृते किमायतमित्यत आह—तद्वाक्यमिति। सादृश्येन बुद्धावुपस्थापितं तद्वाक्यमाकाङ्क्षायोग्यतासन्निधिभिः स्वार्थं बोधयतीत्यर्थः। एतावता वा प्रकृते

## भाष्यसन्दर्भयोजिनी

इत्यर्थः। यथा दर्शपूर्णमासयोः विध्यादिर्विध्यन्तेन युक्तोऽपूर्वनिर्वर्तनं करोति तथा सोमेऽपीत्याह-तथेति। एतेन विध्यन्तानां व्यवस्थितत्वं प्रतिपादितं भवति। विध्यन्तशब्दस्यायमेवार्थ इत्याह-एवमिति।

विध्यन्तपदार्थं निरुच्य निर्वचनप्रयोजनं सङ्गमयति-एतेष्विति। 'सौर्यं चरुं निर्वपेत्' इत्यादिषु विध्यादिरस्ति विध्यन्तो नास्ति अङ्गविधायकं ब्राह्मणं नास्तीत्यर्थः। विध्यन्ताभावेऽपि तेषां कल्पनेन विना विध्यादेः फलसम्पादकत्वं न सेत्स्यतीति तत्कल्पनमावश्यकमित्याह-स विध्यन्त इति। कया विधया तत्कल्पनमित्यत आह-अपरिपूर्णमिति। विध्यादौ वाक्ये साध्यं साधनञ्चास्ति, किन्तु कथमित्याकाङ्क्षापूरणाय नास्ति सामग्री। विना तया वाक्यमिदमपरिपूर्णमेव। अपरिपूर्णमिति न तत्परित्यक्तुं शक्यते। परिपूर्णतायै किञ्चित्कर्तव्यम्-अध्याहारो वा व्यवहितकल्पना वा। तत्र व्यवहितकल्पनापेक्षयाध्याहारे गौरवं प्रदर्शयति-अध्याहारे हीति। अश्रुतशब्दकल्पनापेक्षया व्यवहितेन साकं सम्बन्धमात्रकल्पने लाघवं दर्शयति-इतरत्रेति। व्यवहितकल्पनाया-मित्यर्थः। एवं कल्पनायां वाक्यं परिपूर्णं भवतीत्यर्थः। व्यवहितकल्पनाया एवोदाहरणम्-वसन्तायेति। अतो वैदिकेतिकर्तव्यतैव ग्राह्येति निगमयति-तेनेति।

## भाष्यम्

तद्यथा-मयूरस्य नृत्यतोऽन्यदपाव्रियते ऽन्यत्संव्रियते । एवमिहापीदं संव्रियते तदपाव्रियते । नैष दोषः । प्रत्यक्षस्तस्य तत्र भावः, इह पुनरानुमानिकः । न चानुमानिकं प्रत्यक्षं बाधते । इह तर्हि न प्राप्नोति, प्रत्यक्षविरोधात् । स्यादेवं यदि विरोधस्स्यात् । न त्वस्ति विरोधः । तत्रापि भविष्यतीहापि । तदेतदुक्तम्–'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेतेति । उच्यते-प्रकृतिवदिति किम् ? आह–अष्टमे प्रकृतिनियमं करिष्यति । इयमस्य प्रकृतिरिति । तदुच्यते–विध्यन्तो वा प्रकृतिरिव प्रवर्तेत । यो यस्य कर्मणः प्रकृतिरिति, यस्याग्नेयः प्रकृतिः तस्याग्नेयादेव । यस्याग्नीषोमीयस्तस्याग्नीषोमीयादिति । एवं सर्वत्र ।

## दुप्टीका

बुद्धावुपस्थापयति । तद्वाक्यमवबोधितं वाक्यर्थमवबोधयति । स च वाक्यार्थः फलकरणेतिकर्तव्यतायुक्तः ।

## वार्तिकाभरणम्

किमायतमित्यत आह—सचेति । स च बोधितो वाक्यार्थोऽङ्गैरुपकृत्य यागेन फलं कुर्यादिति फलकरणेतिकर्तव्यतायुक्त एव भवतीत्यर्थः । एतावता वा प्रकृते किमायतमित्यत आह—तत्रेति । तथासतीह सौर्यादिवाक्येषु फलस्य कारणस्य च श्रुतत्वेन फलांशे करणांशे चापेक्षाभावात् दर्शपूर्णमासवाक्यस्थफलकरणे सौर्यादिवाक्यस्थभावनया न सम्बध्येते । सोर्यादिवाक्यसमीपे इतिकर्तव्यताम्नानाभावेनेतिकर्तव्यतांशे आकाङ्क्षासद्भावात् दर्शपूर्णमासादिवाक्यसमीपसमाम्नाता येतिकर्तव्यता सापेक्षिता सती सौर्यादिवाक्यस्थभावनया सम्बध्यते । एवं चान्यत इतिकर्तव्यतालाभात् सौर्यादिवाक्यं परिपूर्णं भवतीत्यर्थः । केन प्रकारेणेतिकर्तव्यता सम्बध्यत इत्यपेक्षायामुक्तमेव

## भाष्यसन्दर्भयोजिनी

पुनश्शङ्कते-नन्विति । 'सौर्यं चरुम्' इत्यत्र विध्यन्तः कल्प्यते, तत्र च नास्ति इति यत् तन्मयूरनृत्यमिवास्तीत्युपहसति तदेतदिति । विध्यादिर्वर्तते विध्यन्तो नास्ति इति कथनं मयूरनृत्यसदृशं प्रतिभातीत्यर्थः । दर्शपूर्णमासयोर्विध्यन्तः प्रत्यक्षः, इह चानुमानिक इति परिहरति-नैष दोष इति । प्रत्यक्षेणानुमानिकं बाध्यतामित्यत आह-न चेति । विरोधे सत्येव बाध्यबाधकभावः, असति विरोधे न कोऽपि कमपि बाधत इत्याह-स्यादेवं यदीति । विरोधाभावे विध्यन्तस्तत्र प्रत्यक्षः अत्र चानुमानिक इत्याह-तत्रापीति । विषयमिमं सूत्रारूढं दर्शयति-तदेतदुक्तमिति । सूत्रे प्रकृतिवदिति शब्दस्यार्थं पृच्छति-प्रकृतिवदिति किमिति । एतावत्पर्यन्तं विध्यादिः विध्यन्त इत्येव शब्दः प्रयुक्तः, इदानीं नूतनश्शब्दोऽयमस्यार्थः क इति प्रश्नार्थः । एकदेवताकत्वम्, ओषधिप्रभवद्रव्यकत्वम् निर्वपतिचोदनाचोदितत्वमित्यादिकमादावष्टमे कस्य का प्रकृतिरिति नियमः करिष्यत इत्याह-आहेति । सूत्रकारोऽप्येवमेव वदतीति दर्शयति-विध्यतो वा प्रकृतिरिव प्रवर्तेत इति । अग्नेययागप्रकृतिकयागे आग्नेयविध्यन्तः, अग्नीषोमीयप्रकृतिकयागेऽग्नीषोमीयविध्यन्त इत्येवं व्यवस्थया वैदिकविध्यन्तः प्रवर्तेत इत्यत्र । एवं सर्वत्र पाशुकेषु अग्नीषोमीयपशुविध्यन्तः, सौमिकेषु कर्मसु ज्योतिष्टोमिकविध्यन्त इति विशेषातिदेशनियमो ज्ञेयः ।

## भाष्यम्

अथ कस्मान्न लौकिको विध्यन्तः कल्प्यते ? उच्यते-लौकिकस्य विधेरभावाद् विध्यन्त एव नास्ति, कुतस्तत्कल्पनेति । आह—लौकिकीतिकर्तव्यता प्राप्यताम् किं विध्यन्तकल्पनयेति ? उच्यते-वैदिकी ह्यत्रेतिकर्तव्यता न लौकिकी । कस्मात् ? तथा हि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति ॥ १० ॥

## टुप्टीका

तत्र फलकरणे अनाकाङ्क्षितत्वान्न सम्बध्येते । इतिकर्तव्यता त्वपेक्षितत्वात्सम्बध्यते, उपमितिलक्षितप्रमाणेन । सादृश्यञ्च वैदिकेनैव भवति न लौकिकेनेति ॥ १० ॥

## वार्तिकाभरणम्

प्रकारं सङ्क्षिप्य दर्शयति—**उपमितेति** । उपमितप्रापणेन उपमितेन वाक्यान्तरेण लक्षिता येतिकर्तव्यता तत्प्रापणेन भवतीत्यर्थः ।

ननूपमानेन वैदिकमेव वाक्यं सदृशमित्ययुक्तम्, लौकिकमप्यनुमितवेदमूलत्वात् वैदिकमेव कथं लौकिकं न सदृशमित्यत आह—**सदृशमिति** । सत्यम् लौकिकमपि वेदमूलत्वात् वैदिकम् । तथापि लौकिकस्य तु वैदिकत्वं परप्रत्ययादनुमीयमानत्वात् विलम्बितप्रतीतिकम् । ततश्च लौकिकं न सौर्यादिवाक्यसदृशम् । दर्शपूर्णमासादिवाक्यन्तु प्रत्यक्षवेदत्वाच्छीघ्रमुपमानेन बुद्धावुपतिष्ठते । तस्मात्सौर्यादिवाक्यस्य वैदिकमेव सदृशं न लौकिकमित्यर्थः । ननु लौकिकस्यापि यथाकथञ्चित् वैदिकत्वादुपमानेन लौकिकमपि सदृशमस्त्विति चेन्न; प्रत्यक्षवेदस्य दर्शपूर्णमासादिवाक्यस्यैव सुसदृशत्वेन लौकिकस्य पूर्णसादृश्याभावात् । ननु लौकिकमूलभूतवेदोऽपि केषाञ्चित् प्रत्यक्ष एव नित्यानुमेयवेदमूलनिराकरणादिति चेन्न; केषाञ्चित्प्रत्यक्षत्वेऽप्यन्येषामनुमेयतया विलम्बितप्रतीतिकत्वेन सादृश्याभावात् । किञ्च वैतानिककर्माधिकारेण हि वेदत्रयं प्रवर्तते । तन्मध्ये प्रसङ्गादन्यान्युच्यन्ते । तत्र यान्यधिकृत्य वेदः प्रवर्तते तेषामनेनैवावान्तरसामान्येन वितानसम्बन्धित्वेन च सुसादृश्यमस्ति । न तु लौकिकस्य वितानरूपयज्ञसम्बन्धाभावात् । अपि च शिष्टाचाराल्लौकिकेऽग्नौ कर्तव्या लौकिकीतिकर्तव्यता । सौर्यादिप्रधानयागस्तु यदाहवनीये जुहोतीत्यादिवचनादाहवचीयादिषु कर्तव्य इति प्रधानवैदेश्यमङ्गानामापद्येत । तस्मात् वैदिक्येवेतिकर्तव्यता सौर्यादिवतिदिश्यत इति ।

अथ यदुक्तं वैदिकदर्शपूर्णमासादिषु प्रकरणादिभिर्निबद्धत्वान्नान्यत्र नेतुं शक्यत इति तन्न; समानविधानत्वे ह्ययं दोषः । अतिदेशेन त्वन्यत्र गमने निबद्धत्वं (न निरोधकम्) । न हि क्वचिदनिबद्धा इतिकर्तव्यतान्य-

## भाष्यसन्दर्भयोजिनी

विध्यन्तस्य कृते कल्पनमेवाश्रीयते तर्हि लौकिकेतिकर्तव्यतैव कल्प्यतामिति शङ्कते-**अथेति** । नास्ति तादृशो लौकिको विधिः, येन विध्यन्तः प्राप्येत इति समाधत्ते-**उच्यते इति** । विधिर्मास्तु लौकिकः किन्तु स्थालीपाकादिकर्मस्वनुष्ठीयमानेष्वितिकर्तव्यता त्वस्त्येव । सैव प्राप्यतामिति पृच्छति-**आहेति** । 'प्रयाजे प्रयाजे' इत्यादिलिङ्गानामुपपत्तिर्न स्याद्यदि लौकिकीतिकर्तव्यता प्राप्येत, सादृश्यमपि न घटेत इत्युत्तरयति-**उच्यते इति** । वैदिक्या इतिकर्तव्यताया आश्रयणे लिङ्गदर्शनं समर्थितं भवतीति वैदिक्येवेतिकर्तव्यता सौर्यादावेष्टव्येति ॥ १० ॥

## वार्तिकाभरणम्

त्रातिदेष्टुं शक्यते। अनिबद्धाया अन्याय्यत्वाभावेनातिदेशसम्भवात्। तस्मात् वैदिक्यैवेतिकर्तव्यता सौर्यादिष्वतिदिश्यते। इतिकर्तव्यताशब्देन च यागगतो व्यापारः प्रकरणाख्यः कल्प्यते। स च पदार्थैः यथायथं दृष्टादृष्टोपकाररूपसम्पादनात्मा सौर्यादिषु दर्शपूर्णमासादिभ्यः सौर्यादिवाक्यशेषतया कल्पितेन प्रकृतिवच्छब्देन प्राप्यते। अतश्च तद्विशेषणभूताः पदार्थावान्तरोपकाराः पदार्थाश्च तद्बलेनैव क्रमेण प्राप्यन्ते। तेषां पृथगतिदेशः।

ननु सूत्रकारेण विध्यन्तस्यैवातिदेशव्यवस्थापनात् भाष्यकारेण च विध्यन्तशब्दस्य विधेरन्तो विध्यन्तः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिर्विध्यादिः प्रधानविधिवर्जं पौरोडाशिकमङ्गविधायकं ब्राह्मणं तादृक्षं च सौमिकं विध्यन्तः। 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादिः विध्यादिः न तत्र विध्यन्तोऽस्ति। यत्र विध्यन्तो नास्ति तत्र दर्शपूर्णमासादिसम्बन्धी यो विध्यन्तः स आकाङ्क्षावशात् अध्याहारेण वा व्यवहितकल्पनया वा प्रवर्तते। तत्राध्याहारात् व्यवहितकल्पना ज्यायसी। अध्याहारे ह्यश्रुतशब्दः कल्प्यः। इतरत्र तु श्रुतेन सम्बन्धः। तस्मात् व्यवहितोऽपि दर्शपूर्णमाससम्बन्धी विध्यन्तः सौर्यादिवाक्यस्य पूरकः। यथा 'वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कानि'ति व्याख्यातत्वात्। सूत्रभाष्यस्वारस्यमहिम्ना शास्त्रस्यैवातिदेश इति प्रतीतेरितिकर्तव्यताशब्दस्योपकार एवार्थः। तस्यैवातिदेश इति कथमुच्यत इति चेदुच्यते-विध्यन्त इति सूत्रार्थपरम्। प्रधानविधिवर्ज्यं पौरोडाशिकमित्यादिभाष्यं दर्शपूर्णमासादिप्रधानविधिवाक्यशेषभूतस्यापि समिदादिशास्त्रस्यार्थात् सौर्यादिवाक्यस्य वाक्यशेषस्थानीयत्वाभिप्रायकम्। न तु शास्त्रातिदेशपरम्। तथाहि—'समिधो यजति' 'व्रीहीनवहन्ति' इत्याद्यङ्गविधायकशास्त्रस्य प्रकृतावयमर्थः-समिदुपेतोऽवघातवितुषीकृतव्रीहिसम्पादितपुरोडाशसाधनकश्च दर्शादिः कार्य इति विकृतिभूतोऽपि सौर्यादिस्तद्वत्कर्तव्य इत्युक्ते समिदुपेतोऽवघातवितुषीकृतव्रीहिसाधनकश्च सौर्यादिः कर्तव्य इत्युक्तं भवति। ततश्च समिदादिशास्त्रं सौर्यादिशास्त्रस्य वाक्यशेषः सम्पद्यत इत्यनेनाभिप्रायेण भाष्कारेण पौरोडाशिकं ब्राह्मणं सौर्यादीनां वाक्यशेष इत्युक्तम्। अस्तु वा शास्त्रस्यातिदेशः; तथापि तस्य 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इतिवत् उपकारप्रधानतयैवातिदेशेन स्वरूपेणातिदेशाभावात् नास्त्यूहबाधयोर्बाधः। अत्यल्पमिदमुच्यते कण्ठरवेण भाष्यकारेणैव यदि तत् ब्राह्मणस्यान्तः कल्प्यते तत्रापरिपूर्णं तद्भवति, तदेतन्मयूरनृत्यमापद्यते; तद्यथा मयूरस्य नृत्यतोऽन्यदपाव्रियते; अन्यत्संव्रियते। एवमिहापीदं संव्रियते; तदपाक्रियत इति शास्त्रस्य स्वरूपेणातिदेशप्राप्तावनुपपत्तिमाशङ्क्य, नैष दोषः प्रत्यक्षः तत्र तस्य भावः, इह पुनरानुमानिकः। न चानुमानेन प्रत्यक्षं बाध्यत इति परिहृत्य इह तर्हि न प्राप्नोति प्रत्यक्षविरोधः स्यादिति पुनराशङ्क्य स्यादेतदेवम्, यदि विरोधः स्यात्, न त्वस्ति विरोधः, तत्रापि भविष्यतीति पुनः परिहृतम्। भाष्यस्य चायर्थः—यदि तद्ब्राह्मणं दर्शपूर्णमासाद्यङ्गविधायकब्राह्मणम्, अस्य सौर्यादिरन्तः अन्ततया वाक्यशेषतया कल्प्यते, तत्र तथासति 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि प्रधानविधायकवाक्यमपरिपूर्णं भवति। सकृदुच्चरितस्याङ्गविधायकब्राह्मणस्यानेकसम्बन्धानुपपत्तेः; यथा-मयूरस्य नृत्यतोऽन्यदङ्गमपाव्रियते वियुज्यतेऽङ्गान्तरेण तदा अन्यदङ्गं संव्रियते, संयुज्यते, एवमिहापोदमङ्गविधायकब्राह्मणं सौर्यादिवाक्येन यदा संव्रियते तदा तद्दर्शपूर्णमासदिप्रधानविधिवाक्येन अपाव्रियते। एवमेतन्मयूरनृत्यमिवापद्यत इत्यर्थः। परिहरति—नैष दोष इति। स्यादेतदेवम् यद्यङ्गविधायकब्राह्मणं प्रकृतौ विकृतौ च स्वरूपेण पदार्थान्विदध्यात्तदा सकृदुच्चरितानेकसम्बन्धानुपपत्तिलक्षणो दोषः स्यात्। न त्वेवमस्ति। किन्तु तत्र दर्शपूर्णमासादिषु तस्याङ्गविधायकब्राह्मणस्य भावः—सद्भावः प्रत्यक्षः। इह पुनः सौर्यादिषु प्रकृतिसम्बद्धस्य ब्राह्मणस्योपकारमुखेनातिदेशादानुमानिकसद्भावः। न चानुमानेन प्रत्यक्षस्य बाधः, अनुमानापेक्षया ज्येष्ठप्रमाणत्वेन प्रत्यक्षस्य प्रबलत्वादित्यंशः क्लृप्तः। इह तर्हीति। नन्वेवं तर्हि प्रत्यक्षविरोधात्

### भाष्यम्

## लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ७.४.११ ॥

यदि लिङ्गाद्वैदिकोऽभ्युपायो भवति, तेन तर्हि अलिङ्गे लौकिकं स्यात् । यत्र कर्मणि किञ्चिल्लिङ्गं नास्ति तत्र लौकिकं स्याद्विधानम् । यथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुः' इति ॥ ११ ॥

## लिङ्गस्य पूर्ववत्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपाकेन ॥ ७.४.१२ ॥

अत्रोच्यते-स्यादेवं यदि लिङ्गहेतुको वैदिक उपायः स्यात् । न त्वसौ लिङ्गहेतुकः । किं हेतुकस्तर्हि ? विध्यन्तहेतुकः । विध्यन्तोऽपि न्यायपूर्वः । स च न्यायस्तुल्यस्सर्वेषां कर्मणां

### वार्तिकाभरणम्

अनुमानं न प्रवर्तत इत्यर्थः । परिहरति—स्यादेतदिति । स्यादेतदेवम् यदि स्वरूपेणैवाङ्गविधायकब्राह्मणं प्रकृतिवदेव विकृतावपि सम्बध्येत इत्थं सौर्यादीन् कुर्यादितीदं सकृदुच्चरितस्यानेकसम्बन्धानुपपत्तेर्विरोधः स्यात् । विरोधे च प्रत्यक्षेणानुमानं बाध्येत । न त्वेवमस्ति । किन्तु प्रथमो × × × × ते प्रकृतेरेव सम्बद्धं ब्राह्मणं तत्रैव स्वार्थं विधाय निवृत्तविधानव्यापारं भवति । इत्थं दर्शादिना कुर्यात् । पश्चात्तु विकृतिचोदनायां साकाङ्क्षायां प्रकृतिवच्छब्देन वाक्यशेषभूतेनोपकारमुखेन प्राकृते पदार्थजाते प्रापिते तत्प्रतिपादकस्यापि ब्राह्मणस्य तन्मुखेन तच्छेषता भवति । प्रकृतिसम्बद्धेन ब्राह्मणेन प्रत्यक्षेण विरुध्यत इत्यर्थ इति । अथ चेद्विध्यन्तः पूरकः लौकिकविध्यन्तेन किमपराद्धम् । उच्यते— लोके विधिरेव नास्ति कुतो भवेद्विध्यन्तः । अस्तु वा लोके विध्यन्तः सादृश्याभावात् स न प्रवर्तते । तस्मात् वैदिक्येव सौर्यादिषु अतिदिश्ते । अत्राचार्यैः—

'**लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात्**' '**लिङ्गस्य पूर्ववत्वात् चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन**,' इति शङ्कापरिहाराभ्यां सूत्रद्वयं स्पष्टत्वादुपेक्षितम् । तद्द्विसूत्रीं यथाभाष्यं व्याख्यास्यामः— **लिङ्गहेतुत्वादलिङ्गे लौकिके स्यात्** ।

अथ यदि लिङ्गेनैव वैदिकी नियम्यते, तथा सति सौर्यादिषु सलिङ्गकेषु वैदिकीतिकर्तव्यता स्यात् । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः' इत्यादिषु लिङ्गशून्येषु लौकिक्येव स्यान्न तु वैदिकीति ।

### भाष्यसन्दर्भयोजिनी

वैदिकेतिकर्तव्यताया लिङ्गवशेन नियमनं चेदङ्गीक्रियते तर्हि यत्र लिङ्गं किमपि नास्ति तत्रालिङ्गे-कर्मणि लौकिकं भवत्विति शङ्कते-यदीति । सौर्ये 'प्रयाजे प्रयाजे' इत्यादिलिङ्गमुपलभ्यते 'ऐन्द्राग्नमेकादशकपाल-मित्यत्र तन्नोपलभ्यत इत्यत्र लौकिकंविधानं स्यादित्यर्थः ॥ ११ ॥

समाधत्ते-अत्रोच्यत इति । लिङ्गमेव हेतूकृत्येतिकर्तव्यतानियमनं यदि कुर्मस्तर्हि स्यादेवम् । न वयं तद्धेतुकं विधानं ब्रूम इत्यर्थः । विध्यन्तहेतुकत्वेन प्रकृतेर्विकृतौ विध्यन्तः प्रवर्तत इत्यङ्गीकारे न कश्चन दोषः ।

## भाष्यम्

वैकृतानां लिङ्गवतामलिङ्गवताञ्च। कुतः ? चोदनाशब्दसामान्यात्। कर्मचोदनायाः शब्दस्समानः। सर्वत्र विध्यादिरस्ति न विध्यन्तः। तुल्यश्चापेक्षयाऽन्यत्र श्रुतेन विध्यन्तेन सम्बन्धः। तदेतन्न्यायपूर्वकं लिङ्गमेकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति। यथा स्थाल्यां तुल्यपाकानां पुलाकानामेकमुपमृद्यान्येषामपि सिद्धतां जानाति। तुल्यो हेतुरस्य चान्येषाञ्च सिद्धत्वमस्य। तस्मात्सर्वत्र वैदिकीतिकर्तव्यता।

अथ यदुक्तं दृष्टप्रवृत्तिर्लौकिकीतिकर्तव्यतेति, अत्र ब्रूमः—सामान्यतो दृष्टमेतदपदिश्यते। सामान्यतो दृष्टश्च यदव्यभिचारि तत्प्रमाणम्। सव्यभिचारश्चैतत्। दृष्टा हि गणयागादयोऽनेवमितिकर्तव्यताः। तस्माद् दृष्टप्रवृत्तित्वादित्यहेतुः।

## वार्तिकाभरणम्

**लिङ्गस्य पूर्ववत्वाद्वा चोदनाशब्दसामान्यात् एकेनापि निरूप्येत-यथा स्थालीपुलाकेन।**

स्यादेतदेवम् यदि लिङ्गहेतुका वैदिकीतिकर्तव्यता स्यात्; न त्वेवमस्ति। विध्यन्तहेतुका। विध्यन्तश्च न्यायपूर्वकः। स च न्यायश्चोदनाशब्दसामान्यात् यत्र विध्यादिरस्ति विध्यन्तो नास्ति तत्र सर्वत्रापि तुल्यः। एवं च विध्यन्तव्यतिरिक्तासु चोदनासु न्यायेन विध्यन्ते प्रवृत्ते क्वचिच्छ्रूयमाणमपि लिङ्गं तुल्यन्यायानां सर्वेषां धर्मवत्तां गमयति। यथा स्थाल्यां तुल्यपाकानां पुलाकानां मध्ये एकं पुलाकमुपमृद्य पुरुषोऽन्येषां पुलाकानां सिद्धतां जानाति तद्वदिहापि। तस्मात्सर्वत्र वैदिक्येवेतिकर्तव्यता।

## भाष्यसन्दर्भयोजिनी

**विध्यन्तोऽपि न्यायपूर्वः** न्यायमूलक इत्यर्थः। न्यायस्तु सर्वासां विकृतीनां समानः। विकृतिषु काश्चन लिङ्गवत्यः काश्चन तद्रहिताः। न्यायस्तु तुल्यः प्रवर्तते। न च न्यायो लिङ्गमवेक्ष्य गच्छति। तदिदमाह- **लिङ्गवतामलिङ्गवतामिति**। लिङ्गवतामलिङ्गवताञ्च तुल्यत्वे हेतुः-**चोदनाशब्दसामान्यादिति**। विकृतिविधायकवाक्येषु सर्वत्र विध्यादिरस्ति, विध्यन्तश्च नास्तीति सामान्यमित्यर्थः। अपरमपि सामान्यम्-यद् विध्यन्तापेक्षायामन्यस्मादागतेन **विध्यन्तेन सम्बन्धः**। भावनासामान्यमंशत्रयमाकाङ्क्षति। तत्र कथम्भावाकाङ्क्षा स्वसन्निधावाम्नातेन विध्यन्तेन शाम्यति। यत्र विध्यन्तस्याम्नानं नास्ति तत्र तदाकाङ्क्षापूरणायान्यस्मादागतैर्धर्मैः पूरणीयो भवति। इदञ्च लिङ्गवतामलिङ्गवताञ्च तुल्यो न्यायः। एतादृशन्यायपूर्वकं लिङ्गमेकत्र विद्यमानमपि सर्वेषां विध्यन्तापेक्षिणां धर्मवत्तां गमयतीत्याह-**तदेतदिति**। अत्रैव स्थालीपुलाकन्यायं दर्शयति-**यथेति**। उपसंहरति-**तस्मादिति**।

लौकिक्या इतिकर्तव्यताया आश्रयणे दृष्टप्रवृत्तिर्हेतुरुक्तः, तदनूद्य निरस्यति-**सामान्यत इति**। सामान्यतो दृष्टाद्धेतोरनुमानं प्रसरत्येव, किन्तु तदव्यभिचरितेन हेतुना भाव्यम्। यदि हेतोर्व्यभिचारस्तर्हि सः साध्यसाधनक्षमो न भवेत्। दृष्टप्रवृत्तियों हेतुस्सो व्यभिचरित इति दर्शयति **दृष्टा हीति**। यत्र यत्र यागेनापूर्वं साध्यते तत्र तत्र लौकिकधर्माणां प्रवृत्तिर्दृष्टेति भवतिव्याप्तेः स्वरूपम्। स्थालीपाकादिषु तथानुभूयते। किन्तु गणयागेनापूर्वं साध्यते लौकिक्या इतिकर्तव्यतायाः प्रवृत्तिर्न दृश्यते इति व्यभिचार इत्यर्थः।

## भाष्यम्

यत्तु वैदिक्या भागित्वात्तत्पूर्वकाणि लिङ्गानि भविष्यन्तीति, अत्र ब्रूमः—भागित्वस्यापूर्वेतिकर्तव्यतात्वं किल हेतुः। तद्भावश्च तस्याः शब्दपूर्वः। शब्देन च दर्शपूर्णमासयोरसाविति ज्ञायते न सर्वत्रेति। तस्मान्न भागित्वम्। अतो विध्यन्तेनैवेतिकर्तव्यता प्राप्यते नान्यथा। अथ कस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव नानुमन्यन्ते किमेभिः पूरितैः? न्यूनान्यनर्थकानि भवन्तीति। भवन्तु को दोषः? शिष्टैरेषां सम्परिग्रहो न युज्यते प्रमादाद् भविष्यतीति। नास्त्यक्षरे मात्रायां वा प्रमादः। कुत एतावति ग्रन्थे भविष्यति? कथम्? 'तुल्यञ्च साम्प्रदायिकम्' (जै. सू. १. २. ८.) इत्युक्तम्। व्यामोहोऽपि युगसहस्राणि बहूनि नानुवर्तेत। युज्यते चैषामपेक्षया पूरणम्। तस्मादूनानि नानुमन्यन्ते। अतो वैदिकीतिकर्तव्यतेति सिद्धम्॥१२॥

इति सौर्यादौ वैदिकेतिकर्तव्यताया अतिदेशाधिकरणम्॥ १२॥

## वार्तिकाभरणम्

ननूपमानेन लौकिकेतिकर्तव्यताप्राप्त्यभावेऽपि अनुमानेन लौकिकेतिकर्तव्यता प्राप्यतां लौकिक्या दृष्टप्रवृत्तित्वात् इति चेन्न; गणयागादीनामितिकर्तव्यताशून्यत्वेन व्यभिचारात्। ननु लौकिक्या अपि भागित्वस्योक्तत्वात् भागित्वादिति न्यायात् लौकिकी वा कुतो न प्राप्यत इति चेत्-स्यादेतदेवम् यदि भागित्वादिति न्यायेनेतिकर्तव्यता प्राप्येत; न त्वेवमस्ति। किन्तु विध्यन्तहेतुकैवेतिकर्तव्यता। विध्यन्तश्च न लौकिकेऽस्ति।

ननु 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादिवैकृतवाक्यानि यथाश्रुतान्येवावतिष्ठन्तां किन्तत्र विध्यन्तपूरणेन। न च पूरणाभावे तेषामानर्थक्यं स्यादिति वाच्यम्। इष्टापत्तेरिति चेन्न, अपरिपूर्णवाक्येष्वध्याहारेण वा व्यवहितकल्पनया वा परिपूरणस्य शिष्टैराचरितत्वात् द्वारमित्यादिलौकिकवाक्येष्वपि परिपूरणस्य व्युत्पत्तिसिद्धत्वाच्च। न हि शिष्टा अक्षरे मात्रायां वा प्रमादं सहन्ते किं वक्तव्यमेतावति ग्रन्थे! तस्मात्सौर्यादिवाक्येषु वैदिक्येव इतिकर्तव्यता अतिदिश्यत इति सिद्धम्॥

## भाष्यसन्दर्भयोजिनी

भागित्वेन हेतुना वैदिकेतिकर्तव्यताया नियमनं धेनुदृष्टान्तेन पूर्वमुक्तम्। तदनुवदति-**यत्तु** इति। **अत्र ब्रूम** इति। अपूर्वेतिकर्तव्यतात्वं प्रति हेतुः भागित्वम्। तच्चोभयोः लौकिकवैदिकयोस्समानमपि लिङ्गेन वैदिकत्वं नियम्यते। भागित्वञ्चेतिकर्तव्यतायाः शब्दमूलकमास्थेयम्। शब्दश्च दर्शपूर्णमासयोरेव बोधयति, न सर्वत्र। प्रकृतिविकृतिसाधारण्येन भावनाया भवतीतिकर्तव्यताकाङ्क्षा। अतो भागित्वहेतुना वैदिकेतिकर्तव्यताया बोधनमिति न शक्यतेऽभ्युपगन्तुम्। विध्यन्तेनैव तत्साधनीयमित्याह-**अत** इति। वैकृतवाक्यानि साकाङ्क्षाण्येव तिष्ठन्तु, किमित्याकाङ्क्षायाः पूरणप्रयास आश्रीयत इति शङ्कते-**अथेति**। अर्थात्तान्यनर्थकान्येव भवन्त्वित्याशयः। आनर्थक्ये शिष्टपरिग्रहो न युज्यत इत्यत्राह-**प्रमादादिति**। भ्रमप्रमाददोषदूषिताः पुरुषा भवन्ति। अतः प्रामादिकोऽयं सम्परिग्रह इत्यर्थः। शिष्टा वेदानां मात्रायामपि प्रमादं न कुर्वन्ति। एतावति महति ग्रन्थे कथं तेषां प्रमादस्स्यादित्याह-**नास्तीति**। **कथम्** भवानेवं वदति, अस्त्यत्र किमपि प्रमाणम्? इत्यत्राह-**इत्युक्तमिति**। प्रमादो वा भ्रमो वा सहस्रस्य युगानामनुवर्तनं न भवतीत्याह-**व्यामोहोऽपीति**। अतो वैकृतानां येतिकर्तव्यताकाङ्क्षा सा पूरणीयैवेत्याह-**युज्यत** इति। तच्च पूरणं वैदिकविध्यन्तेनेत्युपसंहरति-**अत** इति।

इति सौर्यादौ वैदिकेतिकर्तव्यतातिदेशाधिकरणम्॥ १२॥

भाष्यम्

३

## द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ ७.४.१३ ॥

विषयः

'प्रजाकामा गवामयनमुपेयुः' इति सत्रं विधायाम्नायते—'ज्योतिर्गौरायुः' इति। गवामयने द्वादशाहिकी विध्यन्त इति वक्ष्यति—'गणेषु द्वादशाहस्य' इति। तत्र चोदकेन

टुप्टीका

चोदकनामधेययोर्बलाबलं चिन्त्यते। तत्र चोदको बलवान्नामधेयात्। कुतः? फले विधीयमान

वार्तिकाभरणम्

द्वादशाहिकमहर्गणे तत्प्रकृतित्वात् ऐकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत्। प्रत्यक्षस्यातिदेशिकवचनस्य पदान्तरकल्पनानिरपेक्षत्वेन प्राबल्यस्य सिद्धत्वात्तद्विषये उदाहरणस्य गवेषणीयत्वाच्च तदुपेक्ष्यातिदेशे सिद्धप्रामाण्ययोश्चोदकनामधेययोः प्राप्तावसरत्वादिदानी वलाबलं चिन्त्यत इत्याह—**चोदकेति**। नामधेयानन्तरं चोदकस्य निरूपितत्वेन नामधेयचोदकयोरिति वक्तव्ये अल्पाच्तरमिति पाणिनीयस्मृत्यनुसारेण चोदकनामधेययोरित्युक्तम्।

ननु नामधेयस्य चोदकापेक्षया प्रबलत्वेन अभ्यर्हितत्वाद् 'अभ्यर्हितं पूर्वं निपततीति' कात्यायनीयवार्तिकेन नामधेयचोदकयोरिति निरूपणं किं न स्यादिति चेत्। स्यादेतदेवम्, अभ्यर्हितत्वे प्राबल्यं नियामकं

तन्त्रशिखामणिः

सू० द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत् ॥

एवमतिदेशप्रमाणत्वेन निरूपितयोः नामधेयचोदकयोः प्रसङ्गाद्बलाबलचिन्तेति सङ्गतिः। गवामयने श्रूयते—'ज्योतिर्गौरायुः इति त्र्यहो भवति' इति। सन्ति ज्योतिरादिनामधेया एकाहाः। तत्र चोदकेन द्वादशाहिका धर्मा भवन्ति, 'गणेषु द्वादशाहस्य' इत्यष्टमे द्वादशाहविध्यन्तस्य वक्ष्यमाणत्वात्। नामधेयैश्चैकाहि-

भाष्यसन्दर्भयोजिनी

पूर्वस्मिन्नधिकरणे विकृतिषु वैदिकेतिकर्तव्यतैवानुष्ठेयेति निश्चितम्। सा चेतिकर्तव्यताष्टमेऽध्याये आनुमानिकीति निश्चयो भविष्यति। सम्प्रति अनुमानिकवचनान्नाम्नः प्राबल्यदौर्बल्यनिर्णयाय विचारः प्रवर्तिष्यते।

विषयः

प्रजाफलोद्देशेन गवामयनं यंवत्सरसाध्यं सत्रं विहितम्—'प्रजाकामाः गवामयनमुपेयुः' इति। तत्र ज्योतिः गोः आयुः इति त्रयो यागा अभिप्लवषडहे 'ज्योतिर्गौरायुरिति त्र्यहा भवन्ति' इति एकैकेनान्हा साध्याः विहिताः। इदमेवास्याधिकारणस्य विषयवाक्यम्। गवामयनं कस्य विकृतिरित्यत आह—**गवामयने**

## भाष्यम्

**द्वादशाहिका धर्माः प्राप्यन्ते। एकाहानामपि यथास्वं नामभिः प्रातिस्विकाः। ये तत्र द्वादशाहिका ऐकाहिकैरविरुद्धाः ते यथाप्राप्तं क्रियन्ते।**

## वार्तिकाभरणम्

स्यात्, न त्वेवमस्ति किन्तु विवक्षानुसारेण इच्छाविषयत्वं यदि नामधेयमिच्छाविषयत्वेन विवक्ष्यते किमपराद्धं चोदकेन। प्रत्युत चोदकस्य नामधेयापेक्षया व्यापकत्वेनाभ्यर्हितत्वमेव। तस्माच्चोदकनामधेययोरिति युक्तम्। अत्र चोदकशब्देनातिदेशिकमानुमानिकमुच्यते। नन्वतिदेशे आनुमानिकवचनप्रामाण्यस्याष्टमे प्रतिपादयिष्यमाणत्वेन बलाबलविचारस्य प्रामाण्यसिध्यधीनत्वात् नायं बलाबलविचारस्यावसर इति चेन्न; प्रागानुमानिकवचनप्रामाण्यनिरूपणाभावेऽप्यनागतावेक्षणन्यायेन बलाबलविचारोपपत्तेः। अथवा पूर्वाधिकरणे प्रकृतिवदिति किमाह? अष्टमे प्रकृतिनियमं करिष्यति इयमस्य प्रकृतिरियमस्येति तदेतदुच्यते 'विध्यन्तो वा प्रकृतिवत्प्रवर्तते, तथा यस्य कर्मणः प्रकृतिरिति यस्याग्नेयः तस्याग्नेयादग्नीषोमीययोः यस्य तस्याग्नीषोमीयादित्येवं सर्वत्रेति भाष्यकारेणाष्टमिकन्यायस्य सङ्क्षेपतोऽनुकीर्तनेनानुमानिकवचनातिदेशस्योक्तप्रायतया बलाबलविचारस्य प्राप्तावसरत्वात्।

'प्रजाकामा गवामयनमुपेयुरिति' सत्रं विधायेदमाम्नायते 'ज्योतिर्गौरायुरिति त्र्यहा भवन्तीति'। तत्र गवामयने ज्योतिरादिनामकानां यागानां ज्योतिर्गौरायुरित्यनेनोत्पन्नत्वात् तेषाञ्च गणान्तःपातित्वेन 'गणेषु द्वादशाहस्ये'त्याष्टमिकन्यायेन गवामयनान्तर्गतेषु ज्योतिराद्यहस्सु द्वादशाहिकविध्यन्तः प्राप्नोति। ज्योतिरा-

## तन्त्रशिखामणिः

कास्तत्राविरुद्धा उभये क्रियन्ते। विरुद्धेषु चिन्ता—किं तेषु द्वादशाहिका धर्माः कर्तव्याः? उतैकाहिकाः; इति संशयः। तदर्थञ्च किं चोदकस्य बलीयस्त्वमुत नामधेयस्येति व्युत्पादनानन्तरमेव युक्तस्तथापि अनागतावेक्षणेनापि न्याया व्युत्पाद्यन्त इति प्रसङ्गादिह क्रियत इति ध्येयम्। तत्र यद्यपि प्रत्यक्षत्वेन नामधेयमानुमानिकाच्चोदकाद् बलीयस्तथाप्यत्र चोदक एव बलीयान्। तथाहि—भावना भाव्यं फलमासाद्य कथमिदं भावनीयमिति कथम्भावमाकाङ्क्षति। भाव्यसम्बन्धश्च 'प्रजाकामा गवामयनमुपेयुः' इति प्रयोगवाक्यात्। तत्र च नाम्नां अश्रवणात् न तन्निमित्ता धर्मप्रवृत्तिः किन्त्वहर्गणत्वसामान्यात् चोदकनिमित्त एव। यत्र चोत्पत्तिचोदनासु नामानि श्रूयन्ते तत्र फलसम्बन्धाभावात् नेतिकर्तव्यताकाङ्क्षेति न तत्र नाम्ना धर्मा अतिदिश्यन्ते। ततश्च ये द्वादशाहिकाविरुद्धा धर्माः ते तु नाम्ना अतिदिश्यन्ते। तस्मादिह नामधेयबाधेन चोदकस्यैवानुग्रहः, ननु फलसम्बन्धोत्तरकालं नामधेयमप्यतिदिशतु ततश्चानियम इति चेन्न फलसम्बन्धं प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं पूर्वावगतगणत्वधर्माविरोधेन वर्तेत ततश्च ये द्वादशाहिकाविरुद्धा धर्मास्ते तु नाम्ना अतिदिश्यन्ते। अत एव तन्नामताप्येषामुपपन्ना कतिपयतद्धर्मयोगात्। दृश्यते हि कतिपयतद्धर्म-

## भाष्यसन्दर्भयोजिनी

इति। **वक्ष्यति** अष्टमे गणत्वसामान्याद्'द्वादशाहस्येति'। द्वादशाहविकृतित्वात्ततो गवामयने चोदकाद्धर्माः प्राप्यन्त इत्याह—**तत्रेति**। **एकाहानामपि** विहितानामिति शेषः। **प्रतिस्विकाः** नैजा इत्यर्थः। द्वादशाहिकेषु ऐकाहिकेषु च धर्मेषु येऽविरुद्धाः तेऽनुष्ठीयन्ते इत्याह—**अविरुद्धा इति**।

## भाष्यम्

### संशयः

**विरुद्धेषु संशयः—किं द्वादशाहिको धर्मः कर्तव्यः ? उतैकाहिक इति । किं प्राप्तम् ?**

## वार्तिकाभरणम्

दिनामधेयाच्च ज्योतिराद्येकाहविध्यन्तः प्राप्नोति । तत्र ये द्वादशाहिका ऐकाहिकैरविरुद्धा धर्मास्ते उभयत्रापि क्रियन्ते । विरुद्धेषु तु संशयः किं गवामयनान्तर्गतेषु ज्योतिरादिष्वहस्सु चोदकेन द्वादशाहिकधर्माः कर्तव्याः नामधेयेनैकाहिकधर्माः कर्तव्या इति । तदर्थञ्च किं चोदको बलवानुत नामधेयं बलीय इति । तत्र पूर्वपक्षमाह—तत्रेति । ननु चोदकापेक्षया नामधेयस्य प्रत्यक्षत्वेन शीघ्रप्रवृत्तिकत्वात्प्राबल्यमेव युक्तं कथं दौर्बल्यमिति पृच्छति—कुत इति । न हि नामधेयं प्रत्यक्षश्रुतिमात्रेण धर्मानतिदिशति किन्त्वाकाङ्क्षामनुरुध्य । आकाङ्क्षा च फलसम्बन्धाधीना, ज्योतिर्गौरायुरिति नामधेयवति वाक्ये च फलं न श्रूयते । फले विधीयमानो हीतिकर्तव्यतामाकाङ्क्षति । इतिकर्तव्यताभावे फलजनकस्यापूर्वस्यानुदयात् । प्रजाकामाः गवामयनमुपेयुरिति प्रयोगवाक्येन परं प्रजालक्षणफलायाहर्गणो विधीयते । फले विहितस्याहर्गणस्य चेतिकर्तव्यताकाङ्क्षायां 'गणेषु द्वादशाहस्ये'त्याष्टमिकन्यायेन गणत्वसामान्यात् द्वादशाहिक एव विध्यन्तः गवामयनान्तर्गतेषु ज्योतिरादिषु त्रिष्वहस्सु प्रवर्तते, न तु नामधेयादैकाहिकविध्यन्तः । तस्य फलसम्बन्धाकाङ्क्षाभावेनातिदेशकत्वाभावात् । तस्मात् चोदक एव बलवानित्याह—फल इति । ननु ज्योतिरादिष्वहस्सु चोदकेनैव धर्मप्राप्तौ ज्योतिरादिनामधेयमतिदेशकत्वाभावादनर्थकं स्यादित्याशङ्कायां द्वादशाहिकधर्माविरुद्धा ज्योतिष्टोमधर्मापेक्षयाऽधिकाः स्तोत्रशस्त्रविकारा एकाहरूपज्योतिरादिष्वाम्नाता धर्मास्तान् धर्मान् ज्योतिरादिनामधेयं गवामयनान्तर्गतेषु ज्योतिरादिषु त्रिष्वहस्सु अतिदिशति । यथा एकाहे ज्योतिरादिरूपे ज्योतिरादिनामधेयं चोदकेन ज्योतिष्टोमात्प्राप्तेभ्यो धर्मेभ्यो यदधिकं धर्मजातं स्तोत्रशस्त्रविकाररूपमाम्नायते तदपेक्ष्य ज्योतिरादिनामधेयं सिद्धप्रवृत्तिनिमित्तकं सत् सार्थकमिति

## तन्त्रशिखामणिः

योगेऽपि तन्नामता यथा 'उपशयो यूपो भवती'ति । तस्मान्न विरुद्धधर्मातिदेश इति चोदको बलीयानिति प्राप्ते ब्रूमः—

यद्यपि फलसम्बन्धाधीनेतिकर्त्तव्यताकाङ्क्षा फलवाक्ये प्रस्तूयते तथाप्युत्पन्नानां कर्मणां फलापेक्षायामेव तद्वाक्यप्रवृत्तेरुत्पत्तिवाक्यावगतरूपवन्ति ( लाकामिक्षाणि ? ) कर्माण्यालोच्य प्रयोगवाक्यं फले विधत्ते । तानि

## भाष्यसन्दर्भयोजिनी

### संशयः

ज्योतिः गौः आयुरेतन्नामकास्त्रयस्सोमयागा गवामयनेऽप्याम्नाताः एकाहेषु क्रतुष्वप्युत्पन्नाः । गवामयनञ्च संवत्सरसाध्यं सत्रं सात्रात्मकद्वादशाहविकृतिरिति ततो धर्मा अतिदिश्यन्ते, ऐकाहिकधर्मा अपि ज्योतिरादिष्वतिदिश्यन्ते । तत्र द्वादशाहिकधर्मैर्येऽविरुद्धा धर्मास्तेऽनुष्ठीयन्त एव । किन्तु ये विरुद्धाः स्तोत्रशास्त्रविकारादयस्तेषु संशयः—किं द्वादशाहिका धर्माः कर्तव्याः ? उतैकाहिकाः ? इति संशयमवतारयति—विरुद्धेष्विति ।

## भाष्यम्

### पूर्वपक्षः

तत्र सूत्रेणैवापेक्रमः । द्वादशाहिकमहर्गणे तत्प्रकृतित्वात् । द्वादशाहप्रकृतित्वाद् विध्यन्तेनैव प्राप्यन्ते । नन्वेवं नामधेयं बाध्यते । न बाधिष्यते नामधेयं ज्योतिरादि । अधि-

## वार्तिकाभरणम्

चोदकस्य प्राबल्येऽपि तदविरुद्धधर्मविषये नामधेयमतिदेशकमपि भवतीति वक्तुमधिकागमात्तदाख्यं स्यादेकाहवदिति सूत्रावयवः प्रवृत्तः तद्व्याख्यानपरम् । नन्वेवं नामधेयं बाध्येत, न बाधिष्यते नामधेयं ज्योतिराद्यधिकागमात् भविष्यति ये ज्यौतिष्टोमिकेभ्योऽधिकाः स्तोत्रशस्त्रविकाराः तदागमादेकाहवत् तथा तस्मिन्नेव ज्योतिष्येकाहे ज्योतिश्शब्दोऽधिकागमात् भवति सत्सु ज्यौतिष्टोमिकेषु ज्योतिष्टोमेऽभावादधिकधर्मार्थोऽयं शब्दः । न चाधिकानां द्वादशाहिकैर्विरोधोऽस्ति; तस्मात् द्वादशाहिकं धर्मजातं विरुद्धं कर्तव्यमिति भाष्यं प्रवृत्तम् । तद्भाष्यं तात्पर्यतो व्याचष्टे—अथवेति । ज्योतिराद्येकाहेषु ज्योतिष्टोमाच्चोदकेन प्राप्तेभ्यो धर्मेभ्यो यदधिकं धर्मजातं स्तोत्रशस्त्रविकाररूपमाम्नायते तदपेक्ष्य ज्योतिर्गौरित्येवमादीनि नामधेयपदानि सिद्धप्रवृत्तिनिमित्तकानि दृष्टानि । तद्वदिहापि गवामयनान्तर्गतज्योतिराद्यहर्विधायकेषु वाक्येषु श्रूयमाणं ज्योतिर्गौरित्यादिनामधेयं चोदकेन प्राप्तेभ्यो द्वादशाहिकधर्मेभ्यो यदधिकमविरुद्धं ज्योतिर्गौराद्येकाहेषु प्रातिस्विकतया आम्नातं धर्मजातं यदस्ति तद्गवामयनान्तर्गतेषु ज्योतिरादिष्वहस्सु नामधेयमतिदिशति । नामधेयपदमविरुद्धधर्मातिदेशकत्वेन सार्थकमित्यर्थः । नामधेयमतिदेशकमनुवादकं वेति पूर्वपक्षे उपपादनद्वैविध्यात् तदभिप्रायेण अथशब्दं प्रायुङ्क्त । अस्मिन् पक्षे नामधेयानामविरुद्धधर्मजातमेवार्थः; न तु क्रतुरिति द्रष्टव्यम् । पूर्वव्याख्याने दृष्टान्तदार्ष्टान्तिकयोः वैषम्येणास्वरसात् ऐकाहिकमधिकागमात् तदाख्यं स्यादेकाहवदिति सूत्रोत्तरावयवः । अस्यापरा व्याख्या—ये द्वादशाहे अधिका ऐकाहिकाहेभ्यो धर्माः क्वचिदुच्यन्ते यथा 'अभिप्लवोऽन्वहं भवति सुज्ञानमन्वहं भवती'ति तेषामधिकानामागमात्तदाख्यं स्यादित्येतत् द्वादशाहिकमहः ज्योतिराख्यं आयुराख्यं वा । कथम् ? एकाहवत् यथा तस्मिन्नेवैकाहेऽयं ज्योतिरादिशब्दो ज्यौतिष्टोमिकेभ्योऽधिकेषु वैशेषिकेषु धर्मेषु आगतेषु भवति । एवमिहाप्यधिकागमसामान्या-

## तन्त्रशिखामणिः

चालोच्यमानानि संज्ञाविशिष्टान्येवालोच्यन्ते । ततश्च फलवाक्ये नाम्नामनुसन्धानावश्यंभावात्, तेषामेव प्रत्यक्षत्वात् शीघ्रमतिदेशकत्वम् । तत एवाकाङ्क्षाशान्तेस्तद्विरोधाच्च नानुमानिकम् वचनमेव कल्पनार्हम् दूरेतरां तस्यातिदेशकत्वशङ्का । यदप्युक्तं उत्पत्तिवाक्ये नाम्नः श्रवणेऽप्यनाकाङ्क्षितत्वात् न नाम्नेतिकर्त्तव्यतातिदेश इति, तदप्युत्पत्तिवाक्येष्वपि प्रवर्त्तनात्मकविध्यवरोधात् सामान्यतः समीहितं भाव्यमासाद्य भावनाया

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

तत्र संशये । सूत्रेणैवोपक्रमः पूर्वपक्षस्य । द्वादशाहिकविध्यन्तेनैव एवकारेणैकाहिकविध्यन्तनिवृत्तिः । धर्माः प्राप्यन्ते, तत्र हेतुः द्वादशाहप्रकृतित्वात् तत्प्रकृतिकत्वादित्यर्थः । ज्योतिरादिनामसादृश्येनैकाहिकधर्मप्राप्तौ तद्व्यावृत्तिश्चेन्नामधेयस्य बाधस्स्यादिति शङ्कते नन्विति । ज्योतिरादय एकाहाः

## भाष्यम्

कागमाद्भविष्यति । ये ज्यौतिष्टोमिकेभ्योऽधिकाः स्तोत्रशस्त्रविकाराः तदागमात् । एकाहवत् । यथा तस्मिन्नेव ज्योतिष्येकाहे ज्योतिःशब्दोऽधिकागमाद्भवति । सत्सु ज्यौतिष्टोमिकेषु ज्योतिष्टोमेऽभावात्, अधिकधर्मार्थोऽयं शब्दः । न चाधिकानां द्वादशाहिकैर्विरोधोऽस्ति । तस्माद् द्वादशाहिकं धर्मजातं विरुद्धं कर्तव्यमिति ।

## टुप्टीका

इतिकर्तव्यतामाकाङ्क्षति । गणश्च फले विधीयते । अतो गणत्वसामान्याद् द्वादशाहिको विध्यन्तः । अथवा

## वार्तिकाभरणम्

द्गौणो भविष्यति । यथा वा षाडहिकानां पृष्ठानां भावादेकाहो विश्वजित् षडह इत्युक्तं तमेकाहं षडह इत्याचक्षते इति गौणश्चेन्न प्रापकः । तस्मात् नास्ति नामधेयाद्धर्माणां प्राप्तिरिति भाष्यकारेण प्रकारान्तरेण व्याख्यातः; तद्भाष्यं सङ्क्षेपतो व्याचष्टे—अथवेति । तत्र मुख्येषु ज्योतिर्गौरादिष्वहस्सु एकाहरूपेषु ज्योतिष्टोमाच्चोदकेन प्राप्तेभ्यो धर्मेभ्यो ये अधिकाः स्तोत्रशस्त्रविकाररूपा धर्मास्तादृशाधिकधर्मागममपेक्ष्य ज्योतिरादिनामधेयं सिद्धप्रवृत्तिनिमित्तकं दृष्टम् । एवमिहापि गवामयने द्वादशाहाच्चोदकेन प्राप्तेभ्यो द्वादशाहिकधर्मेभ्यो ये प्रातिस्विकरूपेण विहिताः अधिकधर्माः अभिप्लवोऽन्वहं भवति; सुज्ञानमन्वहं भवतीत्येवमादयः तादृशाधिकधर्मागमपूर्णसादृश्येन तान् धर्मान् अपेक्ष्य ज्योतिरादिनामधेयं सिद्धप्रवृत्तिनिमित्तकं भविष्यति । अस्मिन् पक्षे नामधेयं

## तन्त्रशिखामणिः

इतिकर्त्तव्यतापेक्षासत्त्वात् । तदुक्तमस्मिन्नेवाधिकरणे तन्त्ररत्ने 'तत्र ह्युत्पद्यमानमेव कर्म किं केन कथमित्याकाङ्क्षात्रयसम्बद्धमुत्पद्यत इति । तस्मात् तत्र सन्निहितैर्नामभिरेव सा प्राप्नोतीति नाम्ना चोदकबाधः । उत्पत्तिवाक्ये सामान्यतः समीहितलाभेऽपि नेतिकर्तव्यताकाङ्क्षा, न हि भवति यत्किञ्चित्समीहितं कथं कर्त्तव्यमित्याकाङ्क्षा । समीहितविशेषज्ञान एव तु सा भवतीति फलवाक्य एवाकाङ्क्षा युक्तेति प्राहुः ।

नन्वेवं यद् द्वादशोपसदो भवन्तीति द्वादशोपसत्त्वलिङ्गमनुपपन्नं स्यात् । नामधेयेनैकाहिकधर्मस्य त्र्युपसत्वस्यैव प्राप्तेः । चोदकप्राबल्ये हि गणत्वसाम्यात् द्वादशाहिकधर्मप्राप्तौ तदुपपत्तिरिति चेत् उच्यते—गवामयने हि भूयसामह्नां द्वादशाहिकविध्यन्तः कतिपयानामेव तु ज्योतिरादीनामैकाहिको विध्यन्तः । ततश्च

## भाष्यसन्दर्भयोजिनी

ज्योतिष्टोमविकृतयः । ज्यौतिष्टोमिका ये धर्मा अत्रैकाहेष्वतिदिष्टाः तदपेक्षयाधिकानां धर्माणामत्र विहित्वात्तान् धर्मानादाय नामधेयोपपत्तिर्भविष्यतीति समाधत्ते—ये ज्यौतीति । एकाहवदिति । ज्योतिराद्येकाहेषु ज्योतिष्टोमिकाङ्गेभ्योऽधिकान्यङ्गानि यथानुष्ठीयन्ते तथेत्यर्थः । ज्योतिष्टोमेऽभावात् ऐकाहिकविशेषधर्माणामित्यर्थः । अयं शब्दः ज्योतिश्शब्दः । ज्योतिषि ये वैशेषिका धर्मास्तेषां ग्रहणे द्वादशाहिकधर्मैस्सह विरोधो नास्तीत्याह—नचेति । अतोऽधिकानामनुष्ठानं कर्तव्यमित्युपसंहरति—तस्मादिति ।

## भाष्यम्

अधिकागमात्तदाख्यं स्यात् एकाहवत् इत्यस्या अपरा व्याख्या। ये द्वादशाहेऽधिका ऐकाहिकेभ्यः केचिद्धर्मा उच्यन्ते—'अभिप्लवोऽन्वहं भवति गौरिवीतमन्वहं भवति' इति। तेषामधिकानामागमात्तदाख्यं स्यात्—एतद् द्वादशाहिकमहर्ज्योतिराख्यमायुराख्यं वा। कथम्? एकाहवत्। यथा तस्मिन्नेवैकाहेऽयं ज्योतिरादिशब्दो ज्योतिष्टोमिकेभ्योऽधिकेषु वैशेषिकेषु

## टुप्टीका

चोदकप्राप्तेभ्यो यदधिकं ज्योतिष्टोमाद्धर्मजातमाम्नायते तदपेक्षया गौरायुरित्याद्याः संज्ञाः प्रकर्तव्याः। इहापि

## वार्तिकाभरणम्

नातिदेशकम्; किन्तु अनुवादमात्रम्। अतो गणसामान्यात् केवलो द्वादशाहिको विहितः न त्वैकाहिकः। एवं च 'द्वाभ्यां लोमावद्यति; द्वाभ्यां मांसमि'ति षाडहिकाननुक्रम्य 'यद्द्वादशोपसदो भवन्ति आत्मानमेव तन्निरवदयते' इति गवामयने यद्द्वादशाहिकं द्वादशोपसत्वरूपं लिङ्गं श्रुतम्; तदुपपद्यते। चोदकेन द्वादशाहिकधर्मप्राप्त्यभावे चोदकैकप्राप्यद्वादशोपसत्वं न प्राप्नोतीति द्वादशाहिकलिङ्गदर्शनमनुपपन्नं स्यात्। तस्मात् लिङ्गबलात् द्वादशाहिक एव विध्यन्त इत्यर्थः। सिद्धान्तसूत्रमाह—

## तन्त्रशिखामणिः

भूयोऽनुग्रहन्यायेन द्वादशाहो नियमेन द्वादशोपसत्त्वस्य प्रवृत्त्या न लिङ्गदर्शनानुपपत्तिः। अत्र केचित् गवामयने हि 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमेतदहर्भवति ज्योतिरेव पुरस्तात् दयते' इति श्रवणात् प्रायणीयं प्रथममहः तत्र च नाम्ना ज्योतिष्टोमविध्यन्तप्राप्तौ त एवोपसदः स्युः ततश्च 'भूयसां स्यात्' इति सूत्रेण मुख्यविरोधे भूयोऽनुग्रहं प्राप्य 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति सूत्रेण भूयोऽनुग्रहबाधेन मुख्यानुग्रहस्यैव द्वादशे भाष्यकृता वक्ष्यमाणत्वात्, गवामयनेऽपि मुख्यप्रायणीयानुरोधेन त्र्युपसत्त्वमेव प्राप्नोति कथं लिङ्गदर्शनोपपत्तिरित्याहुः तदयुक्तम्, भूयसां स्यात् सधर्मत्वमिति न पूर्वपक्षसूत्रं किन्तु यत्र बहूनां अल्पानां च विरोधः तत्र जघन्यानामपि भूयसामेवानुग्रहो न्याय्यः इत्येवं सिद्धान्तसूत्रमेव। मुख्यं वा पूर्वचोदनादिति सूत्रं तु यत्र तुल्यसङ्ख्याकानि त्रिप्रतिषिद्धधर्मकाणि भवन्ति तत्र मुख्यानुग्रहो न्याय्यः इत्यधिकरणान्तरसिद्धान्तसूत्रम् अन्यथा अस्मिन्नेव गवामयने लिङ्गदर्शनस्य कथञ्चिदप्युपपादयितुमशक्यत्वात्। अत एव भाष्यकारोऽस्य ऐकाधिकरण्यमेके मन्यन्त इति परमतत्त्वेनैव ऐकाधिकरण्यपक्षं वक्ष्यति। तस्मात् भूयोऽनुग्रहन्यायात् द्वादशोपसत्त्वप्राप्तेः न लिङ्गदर्शनानुपपत्तिः। यत्तु गवामयने प्रथमस्य प्रायणीयस्याह्नः द्वादशाहप्रकृतिकत्वात् द्वादशोपसद्धर्माः तस्य च मुख्यत्वात् मुख्यानुग्रहस्य च न्याय्यत्वात् उपपन्नं लिङ्गदर्शनमिति भाष्यकृतोक्तम्

## भाष्यसन्दर्भयोजिनी

अस्यैव सौत्रखण्डस्य व्याख्यान्तरमाह—अपरेति। ऐकाहिकेभ्योऽधिका ये द्वादशाहिका धर्मा 'अभिप्लवोऽन्वहं भवति' गौरिवीतमन्वहं भवति' इत्यादयस्तेषामधिकानामागमाज्ज्योतिराख्यमायुराख्यं वेति द्वादशाहिकमहर्व्यपदिश्यत इत्यर्थः। एकाहवदिति दृष्टान्तं सङ्गमयति—यथेति।

## भाष्यम्

धर्मेष्वागतेषु भवति, एवमिहाप्यधिकागमसामान्याद् गौणो भविष्यति । यथा षाडहिकानां पृष्ठानां भावादेकाहो विश्वजित् षडह इत्युक्तम् 'तमेकाहं षडह इत्याचक्षत' इति । एवमिहापि । गौणश्चेन्न प्रापकः । तस्मान्नास्ति नामधेयाद्धर्मप्राप्तिरिति ॥ १३ ॥

## टुप्टीका

नामधेयं श्रूयमाणं शिष्टान् धर्माननतिदिशति । अथवा तत्राधिकधर्मागमात् नामधेयं भविष्यति । अस्मिन् पक्षे नामधेयं नातिदेशकम् ॥ १३ ॥

## वार्तिकाभरणम्

'न वा क्रत्वभिधानात् अधिकानामशब्दत्वम्' । स्यादेतदेवम् यदि ज्योतिर्गौरायुरित्युत्पत्तिवाक्ये आकाङ्क्षा न स्यात्, न त्वेवमस्ति । किन्तु तत्रोत्पद्यमानमेव ज्योतिरादिकर्म किं ? केन ? कथं ? इत्याकाङ्क्षा-त्रितयसम्बद्धमेवोत्पद्यते भावनायाः प्रवर्तनात्वान्यथानुपपत्त्या समीहितभाव्यकत्वावश्यम्भावात् । उत्पत्तिश्च पृथगेव यागानां नाहर्गणस्य । यथापेक्षं च फलसम्बन्ध इति यागनामेव फलसाधनत्वं फलसाधनत्वाच्च तेषामस्तीति-कर्तव्यताकाङ्क्षा न तु गणस्य फलसाधनत्वम्; नापि इतिकर्तव्यताकाङ्क्षा । तस्मात् उत्पत्तिवाक्ये एव फलसम्बन्धेनाकाङ्क्षासद्भावादुत्पत्तिवाक्यगतानि नामधेयान्यतिदेशकानीत्याह— **उत्पद्यमानमिति** । अत्र

## तन्त्रशिखामणिः

तदयुक्तम्, गावामयनिके हि प्रायणीये किं द्वादशाहिकप्रायणीयाङ्गानामातिदेशेन द्वादशोपसत्त्वप्राप्तिः अभिमता किं वा गणान्तःप्रातिनः तस्य चोदकात् द्वादशाहविध्यन्तप्राप्त्या ? नाद्यः । प्रायणीयशब्दस्य यौगिकत्वेनाननतिदेशक-त्वस्योक्तत्वात्, न द्वितीयः चोदकात् बलीयसा ज्योतिष्टोमनाम्ना त्र्युपसत्त्वस्यैव प्राप्तेः । अतः पूर्वोक्त भूयोऽनुग्रहन्यायादेव लिङ्गदर्शनमुपपादनीयमिति दिक् ॥

इति श्रीमदद्वैतविद्याचार्य सर्वतन्त्रस्वतन्त्रसाग्निचित् सर्वतोमुखसाग्निचित्याप्तवाजपेययाजि श्रीगोविन्ददीक्षितवरसूनोः साग्निचित्याप्तवाजपेययाजिनः श्रीवेङ्कटेश्वरदीक्षितस्य नियोगेन श्रीराजचूडामणिदीक्षितकृते तन्त्ररत्नसारे सप्तमाध्यायस्य तुरीयः पादः ।

सप्तमाध्यायस्समाप्तः ।

## भाष्यसन्दर्भयोजिनी

एकाहेऽपि ज्योतिष्टोमिकेष्वधिकेषु धर्मेष्वागतेष्वेव ज्योतिश्शब्दप्रयोगः तथैव गावामयनिकज्योतिश्शब्द इत्याह—**एवमिहापीति** । अधिकागमसामान्यमुभयत्र तुल्यम्, अतो गौणोऽयं शब्द इत्यर्थः । उदाहरणान्तरं दर्शयति—**यथेति** । विश्वजिदेकाहः । सर्वपृष्ठत्वं तत्र विहितम् 'विश्वजित्सर्वपृष्ठोऽतिरात्रः' इति । षडहेऽपि पृष्ठस्तोत्राणि भवन्ति । विश्वजित्षडहनाम्ना व्यवह्रियते—'तमेकाहं षडह इत्याचक्षत' इति । एवं गौण्या ज्योतिश्शब्दश्चेत् स न धर्माणां प्रापक इत्याह—**गौणश्चेदिति** । उपसंहरति तस्मादिति ॥१३॥

### भाष्यम्

## लिङ्गञ्च ॥ ७.४.१४ ॥

लिङ्गाच्चैतज्ज्ञायते—यथा द्वादशाहिकं कर्तव्यमिति। किं लिङ्गं भवति? 'द्वाभ्यां लोमावद्यति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसमित्येवं षड्द्विकाननुक्रम्याह—'यद्द्वादशोपसदो भवन्ति। आत्मानमेतन्निरवदयते' इति द्वादशाहिकं धर्मं द्वादशोपसत्त्वं दर्शयति। तदुपपद्यते यदि द्वादशाहिकं धर्मजातं विरोधि कर्तव्यम्। इतरथा चैकाहिकं त्र्युपसत्त्वं स्यात्। तस्मात्पश्यामो द्वादशाहिकं कर्तव्यमिति।

तथेदमपरं लिङ्गम्—'यस्यातिरिक्तमेकादशिन्यामालभेरन्, अप्रियं भ्रातृव्यमभ्यतिरिच्येत। अथ यद् द्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन्। यद्वेते ब्राह्मणवन्तः पशव आलभ्यन्ते नाप्रियं भ्रातृव्यमतिरिच्येत न कनीय आयुः कुर्वते' (तै. ब्रा. ५.२.५) इति एकादशिन्यां विहारं द्वादशाहिकं धर्मं दर्शयति। कथम्? विहारे सति अतिरेकः पशूनामापद्यते। अतिरेकभयाच्च द्वयोर्द्वयोस्समासः। एकाहधर्मप्राप्तौ विहारो न स्यात्। तत्रैतद्दर्शनं न युज्यते। तस्माद् द्वादशाहिकं कार्यम् ॥ १४ ॥

### भाष्यसन्दर्भयोजिनी

अत्रैव पूर्वपक्षी लिङ्गं प्रमाणमुपस्थापयति—लिङ्गादिति। द्वादशाहे 'द्वादश दीक्षाः द्वादशोपसदः द्वादश सुत्याः' विहिताः। आहत्य द्वात्रिंशद्दिनसाध्यः क्रतुर्द्वादशाहः। ज्योतिरादयश्च ज्योतिष्टोमविकाराः त्र्युपसदः, ज्योतिष्टोमस्य त्र्युपसत्कत्वात्। 'द्वाभ्यां लोमावद्यति' इत्यादिना षड्द्विकानभिधाय द्वादशोपसद्रूपेण कीर्तनात् द्वादशोपसत्त्वं दर्शयतीति द्वादशाहिकं धर्मजातं कर्तव्यमिति उपसंहरति—तस्मादिति।

पूर्वपक्षी स्वमतपोषणायापरं प्रमाणमुपस्थापयति—यस्यातिरिक्तमिति। अयमत्र विषयसङ्ग्रहः-संवत्सरसाध्ये गवामयने पूर्वं पक्षः उत्तरं पक्ष इति विभागः। तत्र पूर्वस्मिन् पक्षसि अशीत्युत्तरशतं दिनानि, एवमुत्तरस्मिन् तावन्ति दिनानि, मध्ये विषुवानित्येकं दिनमित्याहत्यैकषष्ट्युत्तरत्रिशतं दिनानि। अस्ति पश्वेकादशिनी यूपैकादशिनीति प्रकारद्वयं विकल्पेन विहितम्। पश्वेकादशिन्या अनुष्ठानं द्वादशाहेऽप्यस्ति गवामयनेऽपि। तत्र गवामयने 'आग्नेयं प्रायणीय आलभन्ते' इत्यादिवाक्यैर्विहितानां पशूनामेकैकस्मिन् दिन एकैकमनुष्ठाय पश्वेकादशिन्या आवृत्तिर्विहिता। आवृत्तौ क्रियमाणायां द्विपञ्चाशदधिकशतत्रयसङ्ख्याकेषु दिनेषु द्वात्रिंशदेकादशिन्यः सम्पद्यन्ते। तदूर्ध्वमेकादशिनी नानुष्ठातुं शक्यते, विषुवदह्ना सह नवानामेवाह्नामवशिष्टत्वात्। यदि द्वयोर्द्वयोः पश्वोरेकैकस्मिन् दिने समस्यानुष्ठानं भवेत्तर्हि दिनानामवशेषः। तथा सति दोषः कीर्तितः। अतश्च येषां यजमानानामसमाप्ते संवत्सरसत्रे सति तत्समाप्तेः प्रागेव पश्वेकादशिनी समाप्यते ते यजमानाः संवत्सरपूर्तिपर्यन्तं पश्वभावादप्रतिष्ठां गच्छन्ति। दिनातिरेके 'भ्रातृव्यमभ्यतिरिच्येत' भ्रातृव्यस्य शत्रोरभिवृद्धिः। यदि च द्वयोर्द्वयोः पश्वोस्समस्यानुष्ठानम् तर्हि आयुषः क्षीणता अतः ब्राह्मणवन्तः—'वैष्णवं वामनमालभन्ते' इत्यादि ब्राह्मणेन विहिताः पशवोऽनुष्ठेयाः। तेन नाप्रियप्राप्तिः न च शत्रोरभिवृद्धिः न चाप्यायुषः क्षीणतेति। तदिदं दर्शयति—विहारे सतीति। विहारः अनुष्ठानम्। एकाहधर्मप्राप्तौ एकादशिन्या अनुष्ठानं न स्यात्। तदेतद्दर्शनमनुपपन्नं भवेत्। उपसंहरति—तस्मादिति।

## भाष्यम्

## न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ ७.४.१५ ॥

न वा द्वादशाहिकमधिकं कार्यम्। किं तर्हि ? ऐकाहिकम्। किं कारणम् ? चोदकेन द्वादशाहिकं प्राप्नोति नामधेयेनैकाहिकम्। नामधेयञ्च चोदकाद्बलीयः। कुतः ? प्रत्यक्षत्वात्। प्रत्यक्षञ्च नामधेयम् चोदकश्चानुमानिकः। ननु विध्यन्तोऽपि प्रत्यक्षः, सत्यं प्रकृतौ प्रत्यक्षो विध्यन्तो विकृतौ त्वानुमानिकः। तस्मादैकाहिकं कार्यम्। नन्वधिकार्थं नामधेयमित्युक्तम्। अत्रोच्यते—अधिकानामशब्दत्वम्। अधिकानां शब्दो नास्ति। इमे ज्योतिरादयश्शब्दाः कर्मनामधेयानीत्युक्तम् 'अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वादिति। (जै. सू. १.४.२)

## टुप्टीका

उत्पद्यमानमेव कर्माकाङ्क्षात्रितयसम्बद्धमुच्यते। तथास्मिन् वाक्ये नामधेयं श्रूयमाणं लक्षणया शक्नोतीतिकर्तव्यतामवगमयितुमात्मीयाम्। चोदकस्तूपमितिलक्षितप्रापणेनावगमयति तत्र न किञ्चित्प्रत्यक्षम्।

## वार्तिकाभरणम्

'प्रजाकामा गवामयनमुपेयु'रिति प्रयोगवाक्यमुत्पत्तिचोदनागतरूपाणि कर्माण्यालोच्य फले विनियुङ्क्ते। तानि चालोच्यमानानि नामधेयविशिष्टान्येवालोच्यन्ते इत्यस्मिन् प्रयोगवाक्येऽपि ज्योतिरादीनां फलसम्बन्ध इति द्रष्टव्यम्।

नन्वेतावता नामधेयस्य प्राबल्ये किमायातमित्यत आह—तत्रेति। तथा चास्मिन् उत्पत्तिवाक्ये श्रूयमाणं ज्योतिरादिनामधेयं लक्षणयात्मीयामितिकर्तव्यतामवगमयितुं शक्नोतीत्यर्थः। एतावता वा नामधेयस्य प्राबल्ये किमायातमित्यत आह—चोदकस्त्विति। चोदकस्तूपमितलक्षणप्रमाणेन इतिकर्तव्यतामवगमयति। तत्र न किञ्चित्प्रत्यक्षमस्ति। किन्तूपमानार्थापत्तिभ्यां कल्प्यश्चोदकः; नामधेयन्तु श्रूयमाणत्वात् प्रत्यक्षम्। तस्माच्चोदकनामधेययोरुभयोः फलसम्बन्धेनेतिकर्तव्यतापेक्षासद्भावेऽपि नामधेयस्य प्रत्यक्षत्वेन शीघ्रप्रवृत्तिकत्वात् प्राबल्यमित्यर्थः। अथवा चोदकप्राप्तेभ्य इत्यादिना यदविरुद्धधर्मातिदेशकत्वं नामधेयस्योक्तं तद्दूषयति—

## भाष्यसन्दर्भयोजिनी

अविरुद्धा द्वादशाहिकधर्माः कर्तव्या इति यदुक्तं तन्निरस्यति न वेति। ऐकाहिकमेव धर्मजातं कर्तव्यम्। तत्र च कारणम्—द्वादशाहिकधर्माः चोदकेन प्राप्यन्ते, ऐकाहिकधर्मास्तु प्रत्यक्षेण नामधेयेन। चोदकनामधेययोर्नामधेयं बलीयः। बलीयस्त्वे हेतुः—प्रत्यक्षमिति। चोदकस्त्वानुमामिकः। अनुमानात्प्रत्यक्षं बलीय इत्यर्थः। चोदकविध्यन्तस्यापि प्रत्यक्षत्वमित्यत आह—सत्यं प्रकृताविति। प्रकृतिसन्निधौ पाठः विध्यन्तस्य। तत्र प्रत्यक्षत्वेऽपि ज्योतिराद्येकाहे तस्यानुमानिकत्वमेवेत्याह—विकृताविति। यदि नामधेयं धर्माणां प्रापकमाश्रीयते तर्हि तस्याधिकत्वमुक्तमिति शङ्कां निवर्तयति—अत्रोच्यत इति। अशब्दत्वम् ज्योतिरादिपदावाच्यत्वं धर्माणामियर्थः। शब्दो नास्ति ज्योतिरादिशब्दो नस्तीत्यर्थः। ज्योतिरादिशब्दानाञ्च नामधेयत्वं प्रथमचतुर्थे 'अपि वा नामधेयं' इत्यत्र निर्णीतमित्याह—इत्युक्तमिति।

## भाष्यम्

यत्तु अधिकागमात्तदाख्यं स्यादिति ( जै. सू. ७.४.१३ ) तत्र ब्रूमः—वचनादधिकागमो न नामधेयेन। यत्तु तेष्वसत्सु शब्दस्याभावादिति; नैते कदाचिदायुरादिषु न सन्ति। कथम्? तेषामभावे शब्दस्याभावो दृष्टः। यत्तु ज्योतिष्टोमे नास्ति ज्योतिरादिशब्द इति, कर्मान्तरत्वात्। ज्योतिष्टोमे आयुरादिशब्दो नास्ति, न धर्माभावात्। तस्मादैकाहिकं विरुद्धं धर्मजातं कर्तव्यमिति।

'अधिकागमात्तदाख्यं स्यादेकाहवदि'त्येतस्य द्वितीयव्याख्यापरिहारः। गौणस्सन्ननुवादमात्रमनर्थकं स्यात्। तस्मात्पूर्वोक्तेन न्यायेन नामधेयं धर्माणां प्रापकमिति ॥ १५ ॥

## टुप्टीका

यागसामानाधिकरण्याच्च यागनामधेयमिदम्, न धर्माणाम्। यदप्यधिकसामान्यादिति, तन्न किञ्चित्। क्रतुलक्षणा दोषः॥ १५ ॥

## वार्तिकाभरणम्

यागेति। नामधेयस्याविरुद्धधर्मातिदेशकत्वे अविरुद्धधर्माणामेव वाचकं नामधेयं स्यात्। न चैतत्सम्भवति-धर्मसामानाधिकरण्याभावात् यागसामानाधिकरण्याच्च यागनामधेयमिति नाविरुद्धधर्मातिदेशकत्वमधिकधर्माधिगमश्च। विशेषवचनेन नामातिदेशकेनेत्यर्थः। यद्यप्यधिकागमसामान्या × × × धर्मप्रवृत्तिनिमित्तकं नामधेयं न क्वचिदतिदेशकमित्युक्तं तद्दूषयितुमनुवदति—यदपीति तन्नेति। नामधेयस्यातिदेशकत्वाभावेवानुवादकत्वादनुवादकमात्रमनर्थकमिति तदकिञ्चित्करमित्यर्थः। ननु नामधेयस्याधिकधर्माभिधायित्वे लक्षणया यागसामानाधिकरण्यमुपपद्यत इत्यत आह—क्रतुलक्षणेति। यदा चाधिकधर्माभिधायित्वं नामधेयस्य तदा क्रतौ लक्षणा स्यात्। यदा क्रत्वभिधेयत्वं तदा धर्मलक्षणा। धर्मलक्षणापेक्षया क्रतुलक्षणायादुष्टत्वान्नामधेयस्य क्रत्वभिधायित्वं युक्तमित्यर्थः। अत्र भाष्यकारेण चोदकेन द्वादशोपसत्त्वधर्मप्राप्त्यभावेऽपि कार्यापत्त्या द्वादशाहिकद्वादशोपसत्त्वादिधर्मप्राप्तिरस्तीति चोदकाभावेऽपि लिङ्गमुपपन्नमिति न लिङ्गबलाच्चोदकस्य प्राबल्यमित्याशङ्क्य कार्यापत्त्या द्वादशाहिकधर्मप्राप्तिर्नास्ति। किन्तु मुख्यानुग्रहन्यायेन द्वादशोपसत्त्वादिधर्मप्राप्तिरित्युक्तम्। तत्र मुख्यानुग्रहन्यायपरं भाष्यमाक्षेप्तुं तत्सूत्रं पठति 'प्रवृत्त्या नियतस्य लिङ्गदर्शनम्'।

## भाष्यसन्दर्भयोजिनी

अधिकानां धर्माणामगमेनैव ज्योतिरिति शङ्कामनूद्य दूषयति—तत्रेति। अधिकानां धर्माणां वचनेनागमः, न नामधेयेन तदागम इत्यर्थः। तेषु धर्मेषु असत्सु शब्दस्य ज्योतिश्शब्दस्याभावो दृष्टः; आयुरादिषु च ते सन्ति ज्योतिःशब्दश्च दृष्टः। एवमन्वयव्यतिरेकाभ्यां धर्मेषु सत्सु स शब्दः, तेष्वसत्सु न स शब्द इति धर्मसदसद्भावप्रयुक्तश्शब्दप्रयोग इति ऐकाहिकविरुद्धधर्मजातस्यानुष्ठानमित्युपसंहरति—तस्मादिति।

अधिगमात् इत्यस्य व्याख्यान्तरं यत्कृतं तस्य परिहारः कथ्यत इति शेषः। 'अभिप्लवोऽन्वहम्' इत्याद्यधिकधर्मागमेन ज्योतिरादयश्शब्दा लाक्षणिका गौणा वा केवलमनुवादकास्सन्तोऽनर्थका इत्यर्थः। अतो ज्योतिरादिशब्दस्य नामत्वमङ्गीकृत्य धर्माणां नामातिदेश एवेत्युपसंहरति—तस्मादिति ॥१५॥

भाष्यम्

## लिङ्गं सङ्घातधर्मस्स्यात्तदर्थापत्तेर्द्रव्यवत् ॥७.४.१६॥

अथ यल्लिङ्गमुपदिष्टं द्वादशोपसत्त्वदर्शनम्, तस्य कः परिहारः? उच्यते—लिङ्गं सङ्घातधर्मस्स्यात्। लिङ्गमेतत्सङ्घातधर्मस्स्यात्। द्वादशाहोऽहस्सङ्घातः। स फलाय चोद्यते—'द्वादशाहमृद्धिकामा उपेयुः' इति। गवामयनमप्यहःसङ्घातान्तरम्। तस्मिन्नेव कार्ये फलसिद्धौ विधीयते। तच्च तत्कार्यापत्त्या तद्धर्मान् गृह्णाति, न चोदकेन, द्रव्यवत्। यथा द्रव्ये व्रीहौ श्रुताः धर्माः ते तत्कार्यापन्नेषु नीवारेषु प्रतिनिधिभूतेषु प्राप्यन्ते न चोदकेन, तद्वत् ॥ १६ ॥

## न वाऽर्थधर्मत्वात्सङ्घातस्य गुणत्वात् ॥ ७.४.१७ ॥

नैतद्युक्तम्; कुतः? अर्थधर्मत्वात्। अपूर्वधर्मत्वादित्यर्थः। अपूर्वधर्मो द्वादशोपसत्त्वम् न सङ्घातधर्मः। कस्मात्? सङ्घातस्य गुणत्वात्। आह—अन्यत्र प्रधानानि। द्वादशाहेनेति द्वादशाहत्वं तेषां गुणः, विशेषणमित्यर्थः। विशेष्य एव कार्यं प्रतीयते, न विशेषणे। यथा

### भाष्यसन्दर्भयोजिनी

द्वादशाहिकद्वादशोपसत्कलिङ्गोपदेशेन द्वादशाहिकधर्माणामेवातिदेश इति यत्साधितं तदनूद्य तस्योत्तरमाह—**लिङ्गं सङ्घातधर्मं** इति। द्वादशानामन्हां सङ्घातो-गणः द्वादशाहः। तस्य च 'द्वादशाहमृद्धिकामा उपेयुः' इति फलोद्देशेन विधिः। द्वादशाहः तत्फलं सम्पादयितुं धर्मानाकाङ्क्षति। अन्हां सङ्घातात्मकं द्वादशाहमुद्दिश्य विधीयमाना धर्माः सङ्घातधर्मा भवन्ति। ते च सङ्घातात्मना विद्यमाने गवामयनेऽतिदिश्यन्ते। यत्कार्योद्देशेन द्वादशाहे धर्मविधिः तत्कार्योद्देशेनैव गवामयनेऽपि विधिरित्याह—**तस्मिन्नेवेति**। द्वादशाहोऽपूर्वसम्पादनद्वारा फलं सम्पादयति। तत्राङ्गान्यपेक्षते सः। तथैव गवामयनमपि तत्सहायद्वारा फलं सम्पादयितुं प्रवर्तत इति स्थानापत्त्यैव धर्मान् गृह्णाति इत्याह—**तच्च तत्कार्यापत्त्येति**। तच्च गवामयनम्। **तत्कार्यापत्त्या** अपूर्वरूपकार्यापत्त्या। **न चोदकेन** नानुमानिकातिदेशेनेत्यर्थः। अत्र दृष्टान्तः—**द्रव्यवत्**। व्रीहिधर्माः प्रोक्षणावहननपेषणादयः। ते चापूर्वसाधनत्वावच्छिन्नोद्देशेन विहिताः, न व्रीहित्वावच्छिन्नोद्देशेन। एवं स्वीकरस्य फलम् यदा व्रीह्यलाभे तत्प्रतिनिधितया गृह्यमाणेषु नीवारेष्वपि अपूर्वसाधनत्वावच्छिन्नेषु धर्माणां तत्कार्यापत्त्या प्राप्तिः। नात्रातिदेशस्यावश्यकता भवति। यत्र च क्रतौ विकृतिभूते द्रव्यं विहितं तत्र धर्माणां चोदकेन प्राप्तिः। प्रकृते तु कार्यापत्त्या प्राप्तिरित्यर्थः ॥१६॥

सङ्घातधर्मत्वं निरस्यति—**नैतद्युक्तमिति**। धर्माणामपूर्वप्रयुक्तत्वादपूर्वधर्मत्वमिति हेतोरर्थं विवृणोति—**अपूर्वेति**। विधीयमानं द्वादशोपसत्त्वं न सङ्घातधर्मः, तथासति 'नह्यन्योपसर्जनमन्येनान्वेति' इति न्यायविरोधस्स्यादित्याह—**गुणत्वादिति**। सङ्घातो हि द्वादशानामह्नां गुणः। तस्य गुणान्तरेण द्वादशोपसत्त्वेन कथं सम्बन्धस्स्यादिति भावः। ऋद्धिफलाय द्वादशाहो विधीयते। न सङ्घातः। विशेष्यता द्वादशाहे, विशेषणता च सङ्घाते। अतो विशेष्ये द्वादशाहे द्वादशोपसत्त्वं यथा तथा धर्मा अपि तत्रैव कर्तव्याः, न विशेषणे सङ्घाते इत्याह—**विशेष्य एवेति**। अत्रैव दृष्टान्तः राजपुरुष इति। लौकिकोदाहरणान्तरं—**भिद्रमिति**। एवञ्च विधिवाक्ये

भाष्यम्

राजपुरुष आनीयतामित्युक्ते पुरुष आनीयते न राजा। यथा मिष्टं भुङ्क्ते देवदत्त इत्युक्ते न शाकं सूपो वा प्रतीयते। यदेव प्रधानं तत्प्रतीयते। किमतः? अतोऽहानि फलवन्ति, न सङ्घातः। फलवतश्च धर्माः। तस्मान्न द्वादशोपसत्त्वं सङ्घातधर्मः। एवञ्चेन्न गवामयने कार्यापत्तितो धर्माः प्राप्यन्ते। अतोऽपरिहारोऽयम्॥ १७॥

## अर्थापत्तेर्द्रव्येषु धर्मलाभस्स्यात्॥ ७.४. १८॥

यच्चोक्तम्-द्रव्यवदिति। युक्तं द्रव्येषु। तत्र हि व्रीहिकार्यापन्ना नीवाराः कार्यापत्तितस्तद्धर्माँल्लभन्ते। इह पुनर्द्वादशोपसत्त्वं नैव सङ्घातधर्म इत्यपदिष्टो हेतुः। तस्माददृष्टान्तो द्रव्यवदिति॥ १८॥

कथं तर्हीदं लिङ्गदर्शनम्? अत्रोच्यते

## प्रवृत्त्या नियतस्य लिङ्गदर्शनम्॥ ७.४.१९॥

गवामयने द्वादशाहिकं प्रथममहः प्रायणीयोऽतिरात्रः'। तस्य धर्मो द्वादशोपसत्त्वम्।

टुप्टीका

'गवामयने द्वादशाहिकं प्रथममहरि'त्येवमादिः 'मुख्यं वा पूर्वचोदनाल्लोकवदि'त्येवमन्तोऽयुक्तो

वार्त्तिकाभरणम्

गवामयने द्वादशाहिकं प्रथममहः प्रायणीयोऽतिरात्रः, तद्धर्मो द्वादशोपसत्वम् तदुपादाने मुख्यस्यानुग्रहः, षडुपसत्वोपादाने जघन्यानां ज्योतिरादीनां मुख्यस्य प्राप्तकालमतिक्रमितुं किञ्चित्कारणं नास्ति। अतस्तदनुग्रहार्थं द्वादशोपसत्वं भवति। तस्मान्मुख्यप्रवृत्या नियतस्यैतद्दर्शनम्; न चोदकप्रवृत्या; यस्माच्चोदको नामधेयाद्दुर्बलः। वक्ष्यति च—विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्; मुख्यं वा पूर्वचोदनाल्लोकवदिति तद्भाष्य-

भाष्यसन्दर्भयोजिनी

प्रधानस्यैव प्रतीतौ सत्यां फलवत एव प्राधान्यं सिध्यतीत्याह—अहानि फलवन्तीति। ये फलजननाय प्रवृत्ताः त एवेतिकर्तव्यतामाकङ्क्षन्तीति त एव धर्मवन्तः, सङ्घातस्य फलोद्देशेनाविहितत्वान्न सङ्घातो धर्मवानित्युपसंहरति तस्मान्नेति। सङ्घातधर्मत्वाभावेनाह्नोधर्मत्वे सिद्धे गवामयने ज्योतिराद्यन्हां तद्धर्मवत्वम्, तेन चैकाहिक धर्माभावः, द्वादशाहिका एव धर्मा इति प्रदर्शितलिङ्गस्य परिहारो न जात इति फलितमाह—एवञ्चेदिति।

'लिङ्गं सङ्घातधर्मस्स्यात्' इत्यत्र 'द्रव्यवत्' इति दृष्टान्तं विचारयति—यच्चोक्तमिति। व्रीह्यादिद्रव्येषु ये संस्कारा विहितास्ते तत्स्यानापन्नेषु द्रव्यान्तरेषु सङ्गच्छन्ते, प्रकृते तु दार्ष्टान्तिके न तद्युज्यत इत्याह—इह पुनरिति। द्वादशोपसत्वस्य सङ्घातधर्मत्वस्य पूर्वसूत्रेण निराकृतत्वाद् द्रव्यदृष्टान्तोऽसङ्गत इत्यर्थः॥१८॥

द्वादशाहिकधर्मातिदेशसाधकं यल्लिङ्गमुपदर्शितं तस्योपपत्तये उपक्रमते-गवामयन इति। गवामयने प्रथमं दिनं प्रायणीयम्। तच्च द्वाशकाहिकम् द्वादशाहे यत्प्रथमं दिनं तदेवात्रापि। द्वादशाहिक

## भाष्यम्

**तदुपादाने मुख्यस्यानुग्रहः । षडुपसत्त्वोपादाने जघन्यानां ज्योतिरादीनां मुख्यस्य प्राप्तकालमनुग्रहमतिक्रमितुं किञ्चित्कारणं नास्ति । अतस्तदनुग्रहार्थं द्वादशोपसत्त्वं भवति । तस्मान्मुख्यया प्रवृत्त्या नियतस्यैतद्दर्शनं न चोदकप्राप्त्या । यस्माच्चोदको नामधेयाद्दुर्बलः । वक्ष्यति च 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्' ( जै. सू. १२.२.२२ ) 'मुख्य वा पूर्वचोदनाल्लोकवत्' ( जै. सू. १२.२.२३ ) इति ॥ १९ ॥**

## टुप्टीका

**ग्रन्थः । प्रायणीयशब्दो यौगिकत्वान्नातिदेशक इत्युक्तम् । तस्मात्कुतोऽत्र द्वादशोपसत्त्वप्राप्तिः । अतः प्रायणी-**

## वार्तिकाभरणम्

माद्यं प्रतीकग्रहणपूर्वकमनुवदति - **गवामयन इति** । भाष्यस्य चायमर्थः—द्वादशाहे प्रथममहः प्रायणीयोऽतिरात्रः तस्य प्रायणीयातिरात्रस्य यो द्वादशोपसत्वरूपो धर्मस्तद्गवामयनसम्बन्धिनि प्रथमाहे प्रायणीये पुनरुच्चार्यमाणं प्रायणीयशब्दमतिदिशति । द्वादशोपसत्वोपादाने च मुख्यस्य गवामयनसम्बन्धिनः प्रायणीयस्यानुग्रहो भवति । ज्योतिरादीनां षडुपसत्वरूपो यो धर्मस्तं गवामयनान्तर्गतेषु ज्योतिरादिष्वहस्सु पुनरुच्चार्यमाणो ज्योतिरादिशब्दोऽनुदिशति । षडुपसत्वोपादाने च जघन्यानां ज्योतिरादीनामनुग्रहः स्यात् । तत्रोभयत्रापि नामधेयेन धर्मद्वयस्य प्राप्त्यविशेषेऽपि मुख्यातिक्रमे कारणाभावात् मुख्यानुग्रहार्थं द्वादशोपसत्वरूपधर्मो भवति । तथा च मुख्यप्रसक्तिमनुरुध्य प्रायणीयरूपं नाम द्वादशोपसत्वरूपं धर्ममतिदिशति, न तु चोदकस्तस्य ज्योतिरादिनामधेयापेक्षया दुर्बलत्वात् । तस्माद्विना चोदकेन लिङ्गसद्भावान्न लिङ्गबलात् चोदकस्य प्राबल्यम् । वक्ष्यति च भगवान् **जैमिनिः** द्वादशाध्याये—"विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्" इति सूत्रेण यत्र बहूनामल्पानां च विरोधः तत्र जघन्यानामपि भूयसामेव अनुग्रहो युक्तः । न तु मुख्यनामप्यल्पानामिति पूर्वः पक्षः । 'मुख्यं वा पूर्वचोदना लोकवत्' इत्यनेन यत्र तुल्यसङ्ख्यानि विप्रतिषिद्धकर्माणि भवन्ति तत्र मुख्यानामेवानुग्रहो युक्त इति सिद्धान्तश्चेति । यत्प्रायणीयशब्दस्यातिदेशकत्वमुक्तं तद्दूषयति—**प्रायणीयेति** 'अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्या'दिति तृतीयपादाधिकरणे प्रायणीयशब्दो यौगिकत्वान्नातिदेशक इति भाष्यकारेणोक्तत्वात् कथमिदानीं तेनैव भाष्यकारेण प्रायणीयशब्दस्यातिदेशकत्वमुच्यते ? तथा च पूर्वोत्तरान्वयविरोधाच्च यत्प्रायणीयशब्दस्यातिदेश-

## भाष्यसन्दर्भयोजिनी

प्रायणीये द्वादशोपसत्त्वमस्त्येव । तस्यैवात्रापि गावामयनिकप्रायणीये यद्युपादानं भवेत्तर्हि प्रथमपतितस्य मुख्यस्यानुग्रहः, ज्योतिरादयस्त्वनन्तरपतिता जघन्याः, तदीयोपसत्त्वोपादाने मुख्यानुग्रहोऽतिक्रमितस्स्यात् । तन्न युक्तम्, असञ्जातविरोधित्वन्यायेन मुख्यानुग्रहस्यैव युक्तत्वादित्याह **षडुपसत्त्वोपादाने** इति । अतो मुख्यानुग्रहप्रदर्शनपरमिदं लिङ्गमिति दर्शयति—**तस्मान्मुख्ययेति** । एवञ्च प्रायणीये यन्नियतं द्वादशोपसत्त्वं तत्प्रदर्शनपरमिदं लिङ्गं न त्वतिदेश प्रदर्शनपरमिति सिध्यति; यतश्च चोदको नामधेयात् दुर्बल इत्यर्थः । तदत्र द्वादशाध्यायसिद्धं भूयोऽनुग्रहन्यायं मुख्यानुग्रहन्यायञ्च दर्शयति—**वक्ष्यति चेति** ।

### भाष्यम्

अथ यद् द्वितीयं लिङ्गदर्शनमुक्तम्-एकादशिन्यां विहारदर्शनम् तत्रोच्यते—

**विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ ७.४.२० ॥**

अनारभ्यैकादशिन्यां विहारश्शिष्टः । ते यदि प्रभवः पशवः स्युः । तथा तानेवानूचीनान-हरहरालभेरन्, आग्नेयमेव प्रथमेऽह्न्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये,

### टुप्टीका

यातिरात्रे तयोरुभयोरपि ज्यौतिष्टोमिको विध्यन्त इति । 'भूयसां स्यात्सधर्मत्वम्' इति नेदं पूर्वपक्षसूत्रम् । किं तर्हि ? यत्र बहूनामल्पानाञ्च धर्मविरोधस्तत्र भूयोऽनुग्रहः । यत्र तुल्यसङ्ख्यानि तत्र 'मुख्यं वा पूर्वचोदना-

### वार्तिकाभरणम्

कत्वमुक्तं तदनुपपन्नम्-प्रायणीयशब्दस्यातिदेशकत्वाभावात् द्वादशाहिकद्वादशोपसत्त्वरूपधर्मो न प्राप्यते; धर्मप्राप्त्य-भावाच्च लिङ्गमनुपपन्नम् ।

ननु प्रायणीयरूपनामधेयेन द्वादशोपसत्ताप्राप्त्यभावेऽपि गणान्तःपातिनो गावामयनिकस्य प्रायणीयस्या-ह्नश्चोदकेन द्वादशाहाद्द्वादशोपसत्ता प्राप्यते इति चेदुच्यते—'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति ज्योतिरेव पुरस्ताद्धत्ते' इति गावामायनिके प्रायणीयेऽह्नि पुनरुच्चार्यमाणो ज्योतिष्टोमशब्दः प्रात्यक्षिकेन चोदकापेक्षया प्रबलत्वात् ज्यौतिष्टौमिकधर्मानेवातिदिशति न चोदकाद् द्वादशाहिकधर्मान् । तस्मात् कुतोऽत्र द्वादशोपसत्ताप्राप्तिः । अतः प्रायणीयातिरात्रो गावामायनिकस्य प्रायणीयस्य विकृतिः-यतः प्रायणीयातिरात्रात् द्वादशोपसत्ता प्राप्येत । किन्तु द्वादशाहे गवामयनगतयोः प्रायणीयातिरात्रप्रायणीयवैश्वानरज्योतिष्टोमयोः ज्योतिर्विध्यन्तः, ज्यौतिष्टोमिक-विध्यन्तः; न तु मिथः प्रकृतिविकारभावः । तथा च द्वादशोपसत्ताप्राप्त्यभावान्मुख्यानुग्रहन्यायेन भाष्योक्तं लिङ्गसमर्थनमनुपपन्नमित्यर्थः । अतः प्रायणीयोऽतिरात्र इत्यत्र गावामायनिकस्य प्रायणीयो न प्रकृतिरित्यध्या-हर्तव्यम् । ज्योतिश्शब्दो ज्यौतिष्टोमिकपरः । यदपि भूयो विरोधे मुख्यस्यानुग्रह इत्युक्तम् तद्दूषयति—भूयसामिति विप्रतिसिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमितीदं न पूर्वपक्षसूत्रम्—किं तर्हि यत्र बहूनामल्पानां च विरोधस्तत्र जघन्यानामपि भूयसामेवानुग्रहो न्याय्य इति सिद्धान्तसूत्रम् । मुख्यं वा पूर्वचोदना लोकवदित्येतत्तु यत्र तुल्यानि विप्रतिषिद्धकर्माणि भवन्ति तत्र मुख्यानुग्रहो न्याय्य इति सिद्धान्तसूत्रम् न तु पूर्वाधिकरण एव सिद्धान्तसूत्रम् । विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमिति सूत्रेण एकस्मिन् अधिकरणे भूयोऽनुग्रह-न्याये व्युत्पादिते मुख्यं वा पूर्वचोदना लोकवदिति सूत्रेणोपरितनाधिकरणे यत्र समसङ्ख्याकविप्रतिषिद्धकर्माणि तत्र मुख्यानुग्रह एव न्याय्यः; न तु भूयोऽनुग्रहन्याय इति द्वादशे प्रतिपादयिष्यते इत्यधिकरणभेदः स्फुट एव । तस्मात् भाष्यकारेण सूत्रद्वयमप्येकस्मिन्नेवाधिकरणे यत्पूर्वपक्षसिद्धान्तार्थतया योजितम्-तदनुपपन्नमित्यर्थः ।

### भाष्यसन्दर्भयोजिनी

एकादशिन्यां द्वितीयं लिङ्गदर्शनं यदुक्तं तदुपपत्तिं निरूपयति—तत्रोच्यते इति । अनारभ्येति । पश्वेकादशिनी अनारभ्याधीता । अनारभ्याधीतानाञ्च प्रकृतिगामित्वनियमात् सर्वसोमयागप्रकृतिभूतज्योतिष्टोमं

## भाष्यम्

वारुणमन्ततः। अथ पुनर्ज्योतिरादीनां पर्यावर्तेषु आग्नेयमेव प्रथमेऽहन्यालभेरन् सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये, वारुणमन्तत इति। तदनारभ्यवादानां प्रकृत्यर्थत्वाज्ज्योतिष्टोमं प्रविष्टम्। तत्राह्नां बहुत्वस्याभावादसम्भवादपरां प्रकृतिं द्वादशाहमागतम्। तत्रापि पुनर्ज्योति-

## टुप्टीका

ल्लोकवत्' इति। न हि न्यूनसङ्ख्यं मुख्यत्वेन कारणेन भूयांसि समर्थं बाधितुम्। तस्मादन्यथा वर्ण्यते-भूयसामत्र

## वार्तिकाभरणम्

विप्रतिपिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमिति सूत्रेण भाष्यकारः स्वयमेव द्वादशे भूयोऽनुग्रहन्यायं सिद्धान्तयति स्म। तथा च पूर्वोत्तरविरोध इति सूचयितुं तद्भाष्यमेव आह—न्यूनसङ्ख्यमिति। भाष्यस्य चायमर्थः—न्यूनसंख्यं-विप्रतिपिद्धं कर्मजातं मुख्यत्वेन कारणेन भूयांसि बाधितुं न समर्थमिति। ननु सूत्रद्वयमप्येकाधिकरणतया केचिन्मन्यन्ते। तन्मतानुसारेण अत्रैकाधिकरण्यमुक्तमिति चेन्न। स्वोक्तार्थे परमतसम्मत्युपन्यासस्यायुक्तत्वात्। यथाश्रुतभाष्यं दूपयित्वा भाष्यमन्यथा योजयति—तस्मादिति। अत्र गवामयने भूयसामह्नां द्वादशाहिको विध्यन्तश्चोदकेन प्राप्नोति। स च द्वादशाहिको द्वादशोपसदाख्यः क्रियमाणो भूयसामह्नां साद्गुण्यं करोति। येऽपि त्र्युपसत्का यागा ज्योतिरादयस्तेऽपि न विगुणा भवन्ति-द्वादशसु तिसृणां अन्तर्भावात्। × × × × न्यायेन मुख्यानामेवैकाहा × × × × न्तः स च त्र्युपसदाख्यं × × × × नामेवैकाहानां ज्योतिरादीनां × × × × करोति। न सर्वेपाम्। तत्र भूयसामनुग्रहो युक्त इत्यधिकप्रवृत्या नियतस्य द्वादशोपसत्वस्य लिङ्गदर्शनमपि सिद्धम्। अवश्यं चैवं व्याख्यातव्यम्। मुख्यानुग्रहे हि मुख्यस्य नामातिदेशेन ज्योतिष्टोमिकधर्मप्राप्तेर्द्वादशोपसत्वदर्शनं नावकल्पेत। तस्माच्चोदकापेक्षया नामधेयस्यैव प्रत्यक्षत्वेन प्रबलत्वादेकाहेषु द्वादशाहिकधर्मैर्विरोधे ऐकाहिक एव विध्यन्तः प्रवर्तत इत्यर्थः।

ननु चोदकापेक्षया नामधेयस्यैव प्रबलत्वात् गवामयनान्तर्गतज्योतिरादिषु विरोधे नामप्रापिता एव धर्माः कर्तव्या इति व्यवस्थापितम्। इदानीमेकाहधर्मत्र्युपसत्वविरुद्धा चोदकप्रापिता द्वादशाहिकी द्वादशोपसत्ता भूयोऽनुग्रहन्यायेन सर्वाहस्साधारण्येन कर्तव्येत्युच्यते। तथा च सिद्धान्ते चोदकस्यैव प्राबल्यमायातमिति पूर्वपक्षसिद्धान्तयोर्भेदो न स्यादिति चेत्-स्यादेतदेवम्। यदि सर्वाङ्गसाधरण्येनायं विचारस्स्यात्; न त्वेवमस्ति; किन्तु सौत्येष्वहस्सु ये धर्मा द्वादशाहिका ऐकाहिकाश्च परस्परविरुद्धास्तद्विषयोऽयं विचारः द्वादशोपसत्ता त्र्युपसत्ता च सौत्येष्वहस्सु न × × × × प्रागेवेति न काप्यनुपपत्तिः। ननु सौत्येऽहनि कर्तव्यपरस्परविरुद्धधर्मविषयोऽयं

## भाष्यसन्दर्भयोजिनी

प्रविष्टा, तत्र सोमयागस्यैकदिनसाध्यत्वेन पश्वेकादशिनी निवेशमलभमाना द्वादशाहं प्रविष्टा। तत्र सत्यपि दिन बाहुल्ये निवेशं न लभते, यतो हि तत्र ज्योतिः गौः आयुः आयुः गौः ज्योतिरिति ज्योतिरादयः आनुलोम्येन प्रातिलोम्येन चानुष्ठीयन्ते। अतस्तत्रापि निवेशमलभमाना गवामयनं प्रविष्टा। गवामयनस्य संवत्सरसाध्यत्वेन बहूनां दिनानां सत्त्वात् एकैकस्मिन् दिन एकैकः पशुरनुष्ठीयते। एतत्प्रदर्शनपरमिदं वाक्यम्।

भाष्यम्

रादीनां पर्यावर्तेष्वित्येतन्न युज्यत इति तृतीयां प्रकृतिं गवामयनमापन्नम्। एवमागतस्यैतद्द-र्शनमिति ॥ २० ॥

इति गावामयनिकज्योतिरादिष्वैकाहिकधर्मातिदेशाधिकरणम् ॥ ३ ॥

इति शबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्य चतुर्थः पादः ॥ ४ ॥

सप्तमाध्यायस्समाप्तः ॥

टुप्टीका

द्वादशाहिको विध्यन्तः प्राप्नोति। अल्पानामैकाहिकः तत्र भूयसां स्यादनुग्रह इत्यधिकप्रवृत्त्या नियतस्य लिङ्गदर्शनं सिद्धम् ॥ १९ ॥ २० ॥

इति श्री भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां सप्तमस्य चतुर्थः पादः ॥

सप्तमोऽध्यायस्समाप्तः

वार्त्तिकाभरणम्

विचारः न त्वितरधर्मविषय इति न त्वस्ति राज्ञामाज्ञा। किन्तु यत्र परस्परविरुद्धधर्मविषये प्रमाणद्वयस्य समवायः तत्र बलाबलविचारः। स च विचारस्सुत्याकालकर्तव्येषु असुत्याकालकर्तव्येषु चोभयत्रापि तुल्यः। तथा च कथं व्यवस्थितविषय एवायं विचार इत्युच्यत इति चेत्-सत्यम्। उभयत्रापि बलाबलविचारस्सम्भवति। तथापि चोदकप्राप्ताया द्वादशोपसत्ताया नामधेयप्राप्तायाः षडुपसत्तायाश्च विरोधे चोदकापेक्षया नामधेयस्य शीघ्रप्रवृत्तिकत्वेन प्राबल्येऽपि भूयोऽनुग्रहन्यायसनाथेन चोदकेन द्वादशोपसत्ता प्राप्यते। न केवलेन चोदकेनेति चोदकस्य न प्राबल्यम्। किञ्च—ज्योतिष्टोमनामधेयबलेन मुख्यानुग्रहन्यायानुसरणे तिसृषु षट्सु वा द्वादशानामन्तर्भावाभावात् द्वादशोपसत्का विगुणा भवन्ति। भूयोऽनुग्रहन्यायानुसरणे तु द्वादशसु तिसृणां षण्णां वान्तर्भावात् ॥

इति सप्तमोऽध्यायः

भाष्यसन्दर्भयोजिनी

अतो द्वादशाहेन पञ्चैकादिशन्या न कोऽपि सम्बन्ध इति कथमिदं पूर्वपक्षिणाभिमतं साधयितुं शक्यमित्याह— एवमागतस्येति। एवञ्च लिङ्गदर्शनमिदमप्रयोजकमिति सिद्धम् ॥ २० ॥

इति गावामयनिकज्योतिरादिष्वैकाहिकधर्मातिदेशाधिकरणम् ॥ ३ ॥

इति म. म. चिन्नस्वामिशास्त्रिचरणानामन्तेवासिना
पट्टाभिरामशास्त्रिणा प्रणीतायां
भाष्यसन्दर्भयोजिन्यां सप्तमस्य चतुर्थः पादः
सप्तमोऽध्यायस्समाप्तः ॥

# अष्टमोऽध्यायः

## प्रथमः पादः

### भाष्यम्

१

## अथ विशेषलक्षणम् ।। ८.१.१. ।।

### प्रतिज्ञा

एवं तावत्सप्तमाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम् । अविहितधर्मकेष्वैन्द्राग्नादिषु

### टुप्टीका

किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेश इति । एकस्मिन् कर्मणि ये धर्मास्समाम्नायन्ते ते सर्व-

### वार्तिकाभरणम्

अष्टमाध्यायस्य प्रथमः पादः

सू० अथ विशेषलक्षणम् ।। १ ।।

इह खलु भगवानाचार्यः सप्तमेनाष्टमस्य सङ्गतेः स्पष्टत्वात्तामनभिधायात्र भाष्यकारेण 'एवं तावत्सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम् । अविहितधर्मकेषु ऐन्द्राग्नादिषु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्त इति' वृत्तं सङ्कीर्त्य तत्र चिन्ता भवति—किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः ? उतैकस्मादिति ? संशयोपन्यासः कृतः । तमाक्षेप्तुं तद्भाष्यग्रन्थं प्रतीकतोऽनुवदति—**किमेकस्मिन्निति** ।

### तन्त्रशिखामणिः

१

सू० अथ विशेषलक्षणम् ।।

विध्यन्ताधिकरणे सौर्यादिषु वैदिकीतिकर्तव्यतातिदिश्यत इति सामान्यातिदेशश्चिन्तितः । इदानीं विशेषातिदेशश्चिन्त्यत इति सङ्गतिः । ननु विशेषातिदेश एवाहत्य चिन्त्यताम् किं सामान्यातिदेशचिन्तयेति

### भाष्यसन्दर्भयोजिनी

#### प्रतिज्ञा

सप्तमाध्यायेनाष्टमस्य सङ्गतिं प्रदर्शयितुं तत्र विचारितं विषयं स्मारयति—**एवन्तावदिति** । सप्तमा-

## वार्तिकाभरणम्

अथ विशेषातिदेश एव सप्तमार्थः, भूयसा तत्र तस्य निरूपणात्। अस्मिन्नध्यायेऽपि विशेषातिदेश एव निरूप्यते। तथा च लक्षणभेदपुरस्कारेण सप्तमाष्टमयोः सङ्गत्यभ्युपगमोऽनुपपन्न इति चेत्—स्यादेतदेवम्, यदि सप्तमे सामान्यातिदेशोपजीव्यको विशेषातिदेशो निरूप्यते न त्वेवम्; किन्तु सामान्यातिदेशनिरपेक्षो विशेषरूपो वाचनिकातिदेशो नामातिदेशश्च बहुधा निरूपितौ। इह चान्यादृश एव विशेषातिदेशो विचार्यत इति लक्षणभेदात्तयोः सङ्गत्यभ्युपगमः सङ्गच्छते। ननु सप्तम एव 'स्वरसामैककपालमिक्षञ्च लिङ्ग-दर्शनात्' ( जै. सू. ७.३.२६ ) इति तृतीयपादाधिकरणे सामान्यातिदेशसापेक्षविशेषातिदेशस्य विचारितत्वात्कथं सामान्यातिदेशनिरपेक्ष एवातिदेशः सप्तमार्थ इत्युक्तमिति चेन्न; सप्तम एवोक्तविरोधस्य परिहृतत्वात्। ननु लक्षणभेदनिबन्धना सङ्गतिरभ्युपगम्यतां नाम, तथापि न सप्तमोऽष्टमस्योपजीव्यो भवति, विशेषं प्रति विशेषस्योपजीव्यत्वाभावात्। तथा च हेतुहेतुमद्भावलक्षणसङ्गत्यसम्भवात्कया सङ्गत्या सप्तमानन्तर्यमष्टमस्येति चेत्, उच्यते—विशेषातिदेशस्य सप्तमप्रतिपाद्यत्वेऽपि हेतुहेतुमद्भावलक्षणसङ्गतिरुपपद्यते। विशेषातिदेशवत्सा-मान्यातिदेशस्यापि सप्तमप्रतिपाद्यत्वादुभयमप्यध्यायार्थः। तस्माद्धेतुहेतुमद्भावलक्षणसङ्गतिसम्भवेन तया-[ष्टम]स्य-सप्तमानन्तर्यं सम्भवति। ननु सामान्यातिदेशनिरपेक्षातिदेशस्याध्यायार्थत्वे 'सप्तमेन तावत्सामान्यतोऽ-तिदेशलक्षणमुक्तमि'ति वृत्तकथनपरभाष्यमनुपपन्नमिति चेन्न; सामान्यातिदेशस्यापि सप्तमप्रतिपाद्यत्वात्तदभिप्रायेण वृत्तकीर्तनपरभाष्यानुपपत्त्यभावात्। अस्ति चाध्यायैकदेशप्रतिपाद्यस्याध्यायार्थत्वेन तान्त्रिकव्यवहारः। यथाचाचार्यैः चतुर्थाद्ये टुप्टीकामीमांसावार्तिके तृतीयेनावधृते शेषत्वे कः क्रत्वर्थः कः पुरुषार्थः ?[1] इति विशेषश्चिन्त्यते। तथा पूर्वमवधृते सप्तमेन सामान्येनातिदेशेऽष्टमेन विशेषातिदेशश्चिन्त्यते। एवं लक्षणभेद इत्यध्यायैकदेशप्रतिपाद्यस्य क्रतुपुरुषैदमर्थ्यस्याध्यायार्थत्वमङ्गीकृत्य तृतीयचतुर्थयोर्भेदाभावशङ्कायामभेदः साधितः। इदञ्च वार्तिकमेवं व्याख्यातम् पार्थसारथ्युपाध्यायैः—पूर्वाध्याये[2] विशेषपर्यायमैदमर्थ्यमेव चिंतितम्। इहापि क्रतुपुरुषैदमर्थ्यमेव चिन्त्यत इति कथं लक्षणभेदोऽत आह—तृतीयेनावधृते शेषत्वे क्रत्वर्थः पुरुषार्थ इति चिन्त्यत इति सम्बन्धः। एतदेव विवृणोति विशेषश्चिन्त्यते—पूर्वमवधृते सामान्ये, यथा सप्तमेन सामान्येनातिदेशे सिद्धेऽष्टमेन विशेषेणाति-देशश्चिन्त्यते। एवमिहापि सामान्यविशेषविषयत्वेन लक्षणभेद इति।

नन्वा(त्वा ?) चार्यैरेकदेश्यंगीकृते प्रथमव्याख्याने अस्वरसात् अथवा-अर्थे समवैषम्यमिति प्रयोजका प्रयोजकत्वं यत्तदसाधारणं चिन्त्यते, भाष्यकारश्चेदमेव अभिप्रेत्याह—'अतिक्रान्तस्तृतीयविषय इति। पञ्चमे चासाधरण्येनैवं व्यपदेक्ष्यते—प्रयोजकाप्रयोजकत्वलक्षणं वृत्तमितीति प्रयुक्तिरेवाध्यायार्थ इत्युक्तम्। अतएव पार्थसारथ्युपाध्यायैः—

प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते।
शेषिणैव हि शेषस्य प्रयुक्तिरिति हेतुता॥

इति चतुर्थाद्ये शास्त्रदीपिकायां प्रयुक्तेरेवाध्यायार्थत्वमङ्गीकृत्य तत्पुरस्कारेण तृतीयेन चतुर्थस्य हेतुहेतुमद्भावलक्षणसङ्गतिरुक्ता। तथा च क्रतुपुरुषैदमर्थ्यस्याध्यायार्थत्वेन व्यवहारः संगच्छत इति चेत्—स्यादेतदेवम्, यदि पूर्वकृतव्याख्याने अस्वरसात् अथवेति पक्षान्तरं तैरुद्भावितम् न त्वेववं किन्तु व्याख्या-नान्तराभिप्रायेण। अतएवाचार्यैः—पञ्चमाद्ये टुप्टीकामीमांसावार्तिके प्रयोजकाप्रयोजकलक्षणं वृत्तमिति।

१. Omits इति Tanjavur MSS
२. अपि adds T. MSS.

## वार्तिकाभरणम्

तदयुक्तम्। क्रत्वर्थपुरुषार्थजिज्ञासा प्रतिज्ञाता। सैवोपसंहर्तव्या। उच्यते प्रयोजकाप्रयोजकत्वमपि प्रतिज्ञातम्, द्वयोरेकस्मिन्नप्युपसंह्रियमाणे इतरल्लक्ष्यत एवेति प्रथमव्याख्याने भाष्ये उपसंहारविरोधमाशङ्क्य तद्विरोधं परिहृत्य च अथवा प्रयोजकाप्रयोजकेत्येवोपसंहर्तव्यमित्यादिना द्वितीयव्याख्यानानुसारेण उपसंहारः समर्थितः। तस्मान्नापरितोषमूला द्वितीयव्याख्याप्रवृत्तिः, अस्तु वा आकाशकुशावलम्बायितेन 'अथवा' शब्देन, क्रतुपुरुषैदमर्थ्यमेव चतुर्थाध्यायार्थं इत्यत्र कथमप्याचार्याणामस्वरसाभावालापः, तथापि यथापूर्वमवधृते सप्तमेन सामान्येनातिदेशोऽष्टमेन विशेषातिदेशश्चिन्त्यत इति सप्तमैकदेशप्रतिपाद्यस्य सामान्यातिदेशस्य सप्तमाध्यायप्रतिपाद्यत्वेनाचार्यव्यवहारस्य कथमपलापः सङ्गच्छते, तस्मात् एकदेशप्रतिपाद्यस्याप्यध्यायार्थत्वेन व्यवहारः सङ्गच्छते। अस्तु वाऽपरितोषमूला द्वितीयव्याख्याप्रवृत्तिः, तथापि नानिष्टं प्रसज्यते। एकदेशिनामपि तान्त्रिकत्वात्। ननु पार्थसारथ्युपाध्यायैः न क्वचित्साक्षात्प्रयुक्तिरेव विचार्यते। क्वचित्क्रियमाणोऽपि क्रत्वर्थपुरुषार्थत्वादिविचारः प्रयुक्तिविचारफलक इति परम्परया प्रयुक्तिरेव विचार्यत इत्युक्तत्वात्कथं क्रतुपुरुषैदमर्थ्यविचारस्यापि चतुर्थाध्यायप्रतिपाद्यत्वेन व्यवहार इति चेदुच्यते, भाष्यकारेण 'अर्थे समवैषम्यम् अतो द्रव्यकर्मणाम्' इति सूत्रव्याख्याने अतिक्रान्तस्तृतीयविषय इत्युक्त्वा तदनन्तरं प्रयोजकाप्रयोजकविचारणात्तत्प्रभृत्याचतुर्थाध्यायं तत्र तत्र क्रियमाणः क्रत्वर्थपुरुषार्थत्वादिविचारः फलतः प्रयुक्तिविचारपर इति वक्तुं न्याय्यम्। न तु ततः प्रागपि कृतः क्रत्वर्थपुरुषार्थत्वादिविचारः। तस्मात्क्रतुपुरुषैदमर्थ्यस्यापि चतुर्थाध्यायप्रतिपाद्यत्वेन व्यवहारः सङ्गच्छते। अत्यल्पमिदमुच्यते। क्रतुपुरुषैदमर्थ्यमेव कृत्स्नाध्यायार्थः, न तु प्रयुक्तिः। प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानत्वादिरूपविचारस्यापि क्रत्वर्थपुरुषार्थविचारपरत्वात्। तस्मात् (न स्यात्?) क्रतुपुरुषैदमर्थ्यमेव कृत्स्नाध्यायप्रतिपाद्यमिति वक्तुं न्याय्यम्। एवञ्च तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम्। इहेदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते। कः पुनः क्रत्वर्थः को वा पुरुषार्थः? इति। यापि प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानचिन्ता सापि क्रत्वर्थपुरुषार्थजिज्ञासैव। कथम्? अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः, फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः, प्रयोजकः कश्चित्पुरुषार्थः, अप्रयोजकः क्रत्वर्थः, तस्मात्क्रत्वर्थपुरुषार्थयोः जिज्ञेसेति सूत्रमिति। क्रतुपुरुषैदमर्थ्यस्य कृत्स्नाध्यायप्रतिपाद्यत्वपरं भाष्यमुपपन्नं भवति।

ननु आमिक्षा प्रयोजिका उत वाजिनमपीत्यत्र आमिक्षाया दध्यानयनप्रयोजकत्वेऽपि पुरुषार्थत्वाभावात्तस्य विचारस्य क्रतुपुरुषैदमर्थ्यविचारफलकत्वाभावात्कथं क्रतुपुरुषैदमर्थ्यमेव चतुर्थाध्यायार्थ इति चेत् तथा सति क्रत्वर्थपुरुषार्थत्वविचारस्यापि प्रयुक्तिविचारफलकत्वात्प्रयुक्तिरेव कृत्स्नाध्यायार्थ इति वदतो भवतोऽपि गोदोहनं क्रतुपुरुषोभयार्थमुत पुरुषार्थमेवेत्यत्र गोदोहनस्य क्रत्वर्थत्वेऽपि न क्रतुप्रयुक्तिः। फलस्य पुरुषाभिलषितत्वेन फलप्रयुक्तेः शीघ्रतया फलप्रयुक्तेरेव क्रतूपकारसिध्या क्रतोः स्वतः प्रयुक्तत्वादुदासीनत्वात्। एवञ्च पूर्वोत्तरपक्षयोरुभयोरपि फलप्रयुक्तमेव गोदोहनमिति तद्विचारस्य प्रयुक्तिविचारफलकत्वाभावेन प्रयुक्तिरेव कृत्स्नाध्यायार्थ इति वक्तुमशक्यत्वान्नाभिमतं सिध्येत्। अथ यदि प्रायिकाभिप्रायेणोक्तमिति ब्रूषे तर्हि प्रायिकाभिप्रायस्य ममापि तुल्यत्वेनाभिमतसिद्धेर्न कापि क्षतिः। ननु प्रयोजकाप्रयोजकलक्षणं वृत्तमिति वृत्तकथनपरप्रपञ्चमाद्यभाष्यानुसारेण प्रागुक्तरीत्या प्रयुक्तिरेव कृत्स्नाध्यायार्थोऽस्त्विति चेन्न, कृत्स्नाध्यायस्य प्रयुक्तिविचारपरत्वाभ्युपगमे 'अतिक्रान्तस्तृतीय विषय' इति भाष्यासामञ्जस्यं स्यात्। तस्मात्पूर्वोत्तरभाष्यपर्यालोचनया अर्थे समवैषम्यमित्यतः प्राक् क्रत्वर्थपुरुषार्थविचारः। ततः परं प्रयुक्तिविचार इत्युभयमप्यध्यायार्थः।

ननु स्वरसतः क्रतुपुरुषैदमर्थ्यविचारस्य कृत्स्नाध्यायप्रतिपाद्यत्वाभावेन कथं कथञ्चित्तयोः कृत्स्नाध्यायप्रतिपाद्यत्वम्? कल्पनस्य तुल्यत्वात्प्रतिपाद्यभेदाभावलक्षणप्रयोजनसिद्धये तयोरन्यतरयोरेवाध्यायार्थोऽस्त्विति

## वार्तिकाभरणम्

चेत्तन्न, पर्यनुयोगाविशेषेण उभयोरप्यध्यायार्थत्वकल्पनस्य न्याय्यत्वात् ? पूर्वापरभाष्यग्रन्थपर्यालोचनवशात्तयोरेकस्मिन्नप्युपसंह्रियमाणे इतरदप्युपसंहृतं लक्ष्यत एवेति अर्थद्वयोपसंहारसमर्थनार्थं प्रवृत्तवार्तिकपर्यालोचनवशाच्च। किंच प्रयुक्तेरेव कृत्स्नाध्यायप्रतिपाद्यत्वाभ्युपगमे तार्तीयोऽपि क्रत्वर्थपुरुषार्थविचारः फलतः प्रयुक्तिविचारपर इति तृतीयचतुर्थयोर्भेदो न स्यात्। तस्माच्चतुर्थाद्ये 'अर्थे समवैषम्य' मित्यतः प्राक् क्रतुपुरुषैदमर्थ्यमेव विचार्यते। ततः परं प्रयुक्तिः। नन्वेवं तर्हि तृतीयचतुर्थयोरर्थैक्यात् भेदाभावः तवापि समान इति चेदुच्यते। चतुर्थस्य क्रतुपुरुषैदमर्थ्यरूपो विशेषविचारोऽर्थः। तृतीयस्तु ऐदमर्थ्यरूपः सामान्यविचार एवार्थः। तृतीये 'असंयुक्तं प्रकरणात्' इति कर्तव्यतार्थित्वात् 'कर्मण्यपि जैमिनिः फलार्थत्वादि'त्यादिना तत्र कृतः क्रतुपुरुषैदमर्थ्यविचारस्तु चतुर्थव्युत्पाद्य एवानीतः, न तु तत्र व्युत्पादित इत्यर्थभेदः। तथा च चतुर्थस्य क्रतुपुरुषैदमर्थ्यं प्रयुक्तिश्चार्थः। एवञ्च 'अथातः शेषलक्षणम्, शेषः परार्थत्वादि'ति तृतीयाध्यायसूत्रद्वयं प्रतिज्ञालक्षणपरम्। 'अथातः क्रत्वर्थपुरुषार्थयोः जिज्ञासे'ति चतुर्थाद्यसूत्रञ्च प्रतिज्ञापरं नानर्थकं भवति। तस्मादुभयमपि चतुर्थाध्यायार्थ इति अध्यायैकदेशप्रतिपाद्यस्याप्यध्यायार्थत्वेन व्यवहारः सङ्गच्छते। 'अतिक्रान्तस्तृतीयविषय' इति भाष्यन्तु तृतीयेति कृतस्य ऐदमर्थ्यरूपसामान्यविचारस्यैव पर्यवसानमात्रं चतुर्थे क्रियमाणं क्रतुपुरुषैदमर्थ्यविचारणमित्यभिप्रायेण प्रवृत्तमिति न कापि क्षतिः। अथवा फलफलिनोरभेदोपचारेण प्रागुक्तरीत्या प्रयुक्तिरेव चतुर्थाध्यायार्थोऽस्तु। तथापि वृत्तकथनपरभाष्यमुपपद्यते। तथाहि—वाचनिकातिदेशनामातिदेशयोरपि सामान्यातिदेशवदतिदेशान्तरनिरपेक्षत्वसामान्येन सप्तमप्रतिपाद्यस्य सर्वस्यापि सामान्यातिदेशत्वव्यवहारसम्भवात्तदभिप्रायेण सामान्यतोऽतिदेशलक्षणमुक्तमिति वृत्तकीर्तनपरभाष्यानुपपत्त्यभावेन सिद्धं नस्स समीहितम्। नन्वस्तूक्तरीत्या सप्तमप्रतिपाद्यस्य कृत्स्नस्यापि सामान्यातिदेशत्वम्। तथापि वाचनिकातिदेशनामातिदेशयोरष्टमप्रतिपाद्यविशेषातिदेशं प्रत्युपजीव्यत्वाभावात्कृत्स्नेन सप्तमाध्यायेनाष्टमस्य हेतुहेतुमद्भावलक्षणासङ्गतिर्न स्यात्। ततश्च तदानन्तर्यं न सङ्गच्छते। [1]सङ्गतिप्रदर्शनार्थं वृत्तकथनपरभाष्यं [2]चानुपपन्नं स्यात् इति चेदुच्यते—नहि कृत्स्नाध्यायप्रतिपाद्य एव हेतुर्भवति, न त्वेकदेशप्रतिपाद्य इति राज्ञामाज्ञास्ति, सामान्यातिदेशस्य चाध्यायान्ते विचारितत्वात्तेन सङ्गतिः तदानन्तर्यं च सङ्गच्छते। अतएव पार्थसारथ्युपाध्यायैः अष्टमाद्ये तन्त्ररत्ने विध्यन्ताधिकरणे वैदिकेतिकर्तव्यता सौर्यादिषु सादृश्यात्प्रवर्तत इति सामान्येनोक्तम्। इदानीं तद्विशेषश्चिन्त्यत इत्यध्यायैकदेशप्रतिपाद्येन सामान्यातिदेशेनाष्टमस्य हेतुहेतुमद्भावलक्षणसङ्गतिः उक्ता। न तु कृत्स्नाध्यायप्रतिपाद्येन सामान्यतोऽतिदेशलक्षणमुक्तमिति, वृत्तकथनपरभाष्यं तु न सङ्गतिप्रदर्शनार्थम्। किन्तु एकादशाद्यभाष्यतद्बुद्धिसौकर्यार्थमिति न काप्यनुपपत्तिः। अथवा..........अतिदेशेन विकृतिषु धर्मा इति सप्तमेऽतिदेशसत्ता सिद्धा। तत्र त्रिविधोऽप्यतिदेशस्तावदपर्यवसितः कथितः। यतो लैङ्गिकातिदेशोऽस्मिन्नध्याये प्रतिपादयिष्यते। ततः सामान्यतः सामान्याकारेणातिदेशस्वरूपं सर्वमनुक्त्वा अतिदेशलक्षणमुक्तमित्यतिदेशरूपसद्भावः उक्त इत्यभिप्रायेण। एवं तावत्सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तमिति वृत्तकथनपरभाष्यमुपपन्नम्। अतएव भाष्यकारेण सप्तमाध्यायाद्याधिकरणे अध्यायषट्कार्थप्रतिपादनावसरे तत्र सप्तमेन तावत्सन्ति धर्मा इत्युच्यते। अष्टमेन इमे अस्य, इमे अस्येति, इत्थं प्रयोक्तव्या इति नवमेन, दशमैकादशद्वादशैरेतावन्तः प्रयोक्तव्या नातोऽधिका इतीत्युक्तम्। आचार्यैरपि सप्तमेन विकृतीनामतिदेशेन धर्मवत्त्वमिति प्रतिपाद्यते, अष्टमेन विशेषातिदेशः, नवमो विशेषातिदेशप्रसङ्गेनारभ्यते किं मन्त्रो अग्निस्वरूपप्रकाशनार्थमुच्चार्यते ? उत

१. सङ्गति Omits T. MSS.

२. नानुपपन्नं reads T. MSS.

## वार्तिकाभरणम्

अग्निस्वरूपमविवक्षितम्। तस्मादित्थं प्रयोक्तव्यमित्यतिदेशप्रकार एव चिन्त्यते। स दशमव्यापारमनुमन्यमान एवात्मानं लभते। दशमे बाधाभ्युच्चयानुनिष्पादिनी इयत्ताचिन्ता, इयत्ताप्रसङ्गेन चैकादश आरभ्यते। तन्त्रावापेनेदृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादशे अन्यादृशीयत्ता प्रसंगेन भवतीति तद्भाष्यं व्याख्यातम्। वक्ष्यन्ति चाचार्या दशमाद्ये टुप्टीकामीमांसावार्तिके सप्तमेनातिदेशसत्ता व्याख्याता। दशमेनेदानीं किमतिदिश्यत इति व्याख्यायत इति। यद्वा सामान्यतः सामान्याकारेण त्रिविधातिदेशसाधारण्येनातिदेशस्य लक्षणमसाधारणधर्मरूपमुक्तम्। अतएव 'अतिदेशो हि यत्र ये विहिताः धर्मास्तदतीत्य तत्र तेषां देशः यथा देवदत्तस्य भोजनविधिं कृत्वा शालिसूपमाषापूपैः देवदत्तो भोजयितव्य' इति तमेव विधिं यज्ञदत्ते अतिदिशति। देवदत्तवद् यज्ञदत्तो भोजयितव्य इति। श्लोकमप्युदाहरति—

"प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः॥"

इत्यतिदेशलक्षणं सप्तमाद्ये भाष्यकारेणोक्तम्। तत्र त्रिविधातिदेशस्तावदपर्यवसितः कथितः। यतोऽस्मिन्नध्याये लैङ्गिकातिदेशः प्रतिपादयिष्यते। तस्मात्सप्तमोक्तातिदेशलक्षणाभिप्रायेण सामान्यतोऽतिदेशलक्षणमुक्तमिति वृत्तकथनपरभाष्यमुपपन्नम्।

नन्वेवमपि भाष्ये विध्यन्ताधिकरणे दर्शपूर्णमासादिविध्यन्तः सौर्यादिषु प्रवर्तत इत्युक्तत्वादिहैन्द्राग्नादिषु धर्मा अतिदिश्यन्त इति कथमुक्तमिति चेन्न; सौर्यादिशब्दस्य विकृत्युपलक्षणत्वेन दोषाभावात्। ननु भाष्यकारेण विध्यन्ताधिकरणे सौर्यादिष्वश्रुतेतिकर्तव्यताकेषु वैदिकेतिकर्तव्यताप्राप्तेर्व्यवस्थापितत्वात्कथमिदानीं सप्तमेनैन्द्राग्नादिषु दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्न्ते इत्युक्तमिति चेत्सत्यम्। वैदिकीप्राप्तिरेव व्यवस्थापिता, तथापि दर्शपूर्णमासज्योतिष्टोमादौ विध्यन्तोऽस्ति सौर्यादिषु तु विध्यन्तो नास्ति। यत्र विध्यन्तो नास्ति तत्र विध्यन्तवतः कर्मणः विध्यन्त आहर्तव्य इत्युक्तत्वाद्दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्त इत्युक्तं युक्तमिति न दोषः।

नन्वेवं तर्हि [1]अस्मिन्नेवाधिकरणे विकृतिषु दर्शपूर्णमासादिभ्यो धर्मा भवन्तीति क्रियमाणो विचारोऽनर्थकः स्यात्, गतार्थत्वात्। असति चास्मिन्विचारे अस्य धर्मा अस्मिन्भवन्तीत्येवंरूपो विशेषविचारो न सङ्गच्छतेति चेत्-स्यादेतदेवम्, यदि विध्यन्ताधिकरणे दर्शपूर्णमासादिभ्यो विकृतिषु धर्मा भवन्तीति व्यवस्थाप्येत। न त्वेवमस्ति किन्त्वनाघ्रातविध्यन्तायां सौर्यादिचोदनायां कुतो विध्यन्तप्राप्तिरित्यपेक्षायां सञ्जातविध्यन्ताद्[2] दर्शपूर्णमासादिकर्मणः सकाशात्प्राप्तिरिति विध्यन्तस्वरूपविवेचनार्थमुक्तम्। न तु व्युत्पाद्यत्वेनेति गतार्थतेति न दोषः। अथवा अष्टमाद्यप्रतिपाद्य एवार्थो बुद्धिसौकर्यार्थं तत्रोक्त इति न दोषः। नन्वेवं तर्हि दर्शपूर्णमासादिभ्यो धर्मा भवन्तीत्येतस्य सप्तमप्रतिपाद्यत्वाभावे कथं सप्तमस्याष्टमोपजीवित्वमिति चेदुच्यते—सप्तमे[3] वैदिकीतिकर्तव्यता वैदिके कर्मणि [4]प्राप्स्यत इति सिद्धे दर्शपूर्णमासादिभ्यः सौर्यादिषु कियन्तो धर्माः प्राप्यन्त इत्ययमर्थः सेत्स्यति

१. एव Omits T. Mss.

२. विध्यन्तदर्श reads M. Mss.

३. वैदिकेतिकर्त reads M. Mss.

४. प्राप्यते reads T. Mss.

## भाष्यम्

**कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्त इति ।**

## टुप्टीका

**कर्मस्वतिदिश्यन्ते ? उताहो नैकस्मात्सर्वकर्मस्वतिदेशः ? एतस्मिन् ग्रन्थार्थे न्यायो न विरुध्यते । परस्तु ग्रन्थो**

## वार्तिकाभरणम्

नान्यथा । सिद्धे चास्मिन्विचारे आग्नेयात्सौर्ये धर्मा भवन्तीत्येवंरूपो विशेषविचारः सेत्स्यतीति सप्तमेनाष्टमाद्यस्य च हेतुहेतुमद्भावलक्षणसङ्गतिरुपपन्नेति सर्वमनवद्यम् । अनूदितस्य भाष्यस्यार्थमाह—**एकस्मिन्निति ।** किमेकस्मिन्दर्शपूमासाख्ये प्रकृतिभूते कर्मणि ये प्रोक्षणादिधर्माः समाम्नाताः, प्रकृतिभूतेऽग्नीषोमीये ये च पशुनियोजनादिधर्माः, प्रकृतिभूते ज्योतिष्टोमे ये दीक्षणीयादिधर्माः पुनरन्यस्मिन्कस्मिंश्चित्प्रकृत्यन्तरे कर्मणि ये धर्माः तेषां मध्ये दर्शपूर्णमासधर्मा वा अग्नीषोमीयधर्मा वा ज्योतिष्टोमधर्मा वा पुनर्यस्यकस्यचित्प्रकृत्यन्तरस्य धर्मा वा विकृतिभूतेष्विष्टिपशुसोमादिषु सर्वेष्वप्यनियमेन प्राप्यन्ते ? उताहो नैकस्मात्प्रकृतिभूतात्कर्मणः सकाशात् विकृतिभूतेषु सर्वकर्मस्वतिदेशः ? किन्तु किमेकस्मात्प्रकृतिभूताद्दर्शपूर्णमासाख्यकर्मणो विकृतिभूतास्विष्टिषु, प्रकृतिभूतादग्नीषोमीयपशोः, विकृतिभूतेषु पशुयागेषु, प्रकृतिभूताज्ज्योतिष्टोमाद्विकृतिभूतेषु सोमेषु पुनर्यस्मात्कस्माच्चित्प्रकृत्यन्तरात्तद्विकृतिष्वित्येवं धर्माः अतिदिश्यन्त इत्यर्थः । दूषयति—**एतस्मिन्निति ।** यद्यप्येतस्मिन्ग्रन्थार्थे न्यायो न विरुध्यते किमेकस्मात्सर्वकर्मस्वतिदेश उतैकस्मात्कतिषुचिदेवेति पूर्वोत्तरपक्षयोः न्यायसद्भावात् । तथाप्येकेन निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ न किञ्चित्कारणमस्तीति, **परस्तु**

## तन्त्रशिखामणिः

चेदुच्यते - अनुपदिष्टेतिकर्तव्यताकेषु सौर्यादिषु प्रथमन्तावत् किमेतेष्वितिकर्तव्यतान्यतः प्राप्यते न वेति जिज्ञासा जायते । कुतश्चित्प्रमाणात् समन्यतः प्राप्यत इति निश्चिते किं लौकिकाद्वैदिकाद्वेति जिज्ञासा भवति । वैदिकत्वसामान्याद्वैदिकादिति निश्चिते कस्य धर्माः क्व प्रवर्तन्त इति विशेषजिज्ञासोदेति । जिज्ञासानुरोधेन च चिन्ता युक्तेति न प्रथमत एव विशेषातिदेशचिन्ता युक्तेति ध्येयम् ।

तत्र किं एकस्मिन् सौर्यादिकर्मणि दर्शपूर्णमास-ज्योतिष्टोमादिसर्वकर्मधर्मातिदेशः ? उतैककर्मधर्मातिदेशः ? इति संशयः । ननु विध्यन्ताधिकरण एव वैदिकी लौकिकी चोभेऽपीतिकर्तव्यते सह किमिति न प्रवर्तत इत्याशङ्क्य एकयेतिकर्तव्यतया निराकाङ्क्षत्वात् नेतरस्याः प्रवृत्तिरिति 'मिथो विप्रतिषेधाच्च गुणानां

## भाष्यसन्दर्भयोजिनी

ध्यायेनातिदेशस्वरूपप्रदर्शनपुरस्सरं सामान्यातिदेशो निरूपितः—येष्वैन्द्राग्नादिषु धर्मा न विहितास्तेष्वितिकर्तव्यताकाङ्क्षापूरणाय विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्त इति सामान्यत उक्तमित्यर्थः । अथेदानीं विशेषेणातिदेशप्रकारो वक्ष्यतेऽष्टमे इति सप्तमाष्टमयोर्हेतुहेतुमद्भावसङ्गतिस्सूचिता भवति, सामान्यमुपजीव्यैव विशेषस्य प्रवृत्तेः । तदिदमाह—**अविहितेत्यादिना ।** एतेनास्याधिकरणस्य विशेषातिदेशो विषय इत्युक्तं भवति ।

## भाष्यम्

### संशयः

तत्र चिन्ता भवति-किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः ? उतैकस्मात् ? इति ।

## टुप्टीका

न सम्बध्यते इतरेण, यद्येकस्यां विकृतौ सर्वधर्मातिदेश इत्ययं पक्ष आश्रितः स्यात्तदेदमुत्तरं युज्यते-एकेन विध्यन्तेन निराकाङ्क्षीकृते द्वितीयस्य प्राप्तिर्नास्ति अथैकस्मिन् कर्मणि सर्वधर्मातिदेशः ? उताहो नैकस्मादिति । सर्वधर्मातिदेश इत्ययं पक्षो निराकृतः ।

## वार्तिकाभरणम्

सिद्धान्तभाष्यग्रन्थ इति, इतरेण किमेकस्मिन्दर्शपूर्णमासादौ प्रकृतिभूते कर्मणि समान्नाताः धर्मा सर्वकर्मसु विकृतिभूतेष्वतिदिश्यन्ते इत्येवमर्थकेन पूर्वपक्षकोटिप्रतिपादकभाष्यग्रन्थेन सम्बध्यते । एकस्मात्प्रकृतिभूताद्बहुविकृतिषु धर्मप्राप्तावेकस्यैव विध्यन्तस्य धर्मप्रापकत्वेनैकेन निराकाङ्क्षीकृते द्वितीयधर्मप्राप्तौ न किञ्चित्कारणमस्तीति दूषणप्रसक्त्यभावादित्यर्थः । कदा तर्हीदं दूषणं लगतीत्याशङ्कायामाह— **यद्येकस्यामिति** । यद्येकस्यां विकृतावनेकाभ्यः प्रकृतिभ्यो धर्मा अतिदिश्यन्त इत्ययं पक्ष आश्रीयेत, तदा इदमुत्तरं युज्यते[1] । प्रकृतिभूतैककर्मगतेनैकेन विध्यन्तेन निराकाङ्क्षीकृते एकस्मिन्विकृतिभूते कर्मणि प्रकृत्यन्तरगतस्य द्वितीयस्य विध्यन्तरस्य प्रसक्त्यभावात् । प्रवृत्तावेकयैव चेत् कर्म निरपेक्षं द्वितीयस्याः प्रवृत्तिः प्रतिषिद्धा । अतो मिथः प्रवृत्तौ प्रतिषेधाद्यथार्थकल्पना स्यात् एकस्याः प्रवृत्तिरित्यर्थ इति व्याचख्यौ । तत्र शङ्काभाष्यमर्थतोऽनुवदति—

## तन्त्रशिखामणिः

यथार्थकल्पना स्यादि'ति ( जै. सू. ७४.६ ) परिहृतम् । अतस्तन्न्यायादेव न वैदिकसर्वकर्मधर्मातिदेशशङ्कावकाश इति चेत्—सत्यम्; समुच्चयासम्भवेऽपि विशेषाग्रहाद् विकल्पेन सर्वकर्म धर्मातिदेशस्स्यादिति प्राप्ते, उच्यते—

## भाष्यसन्दर्भयोजिनी

### संशयः

**तत्रेति** । विशेषातिदेशे इत्यर्थः । प्रकृतिवद्विकृतिः कर्तव्येत्येतावदवधृतं सप्तमे । 'यत्र समग्राङ्गोपदेशस्तत्र प्रकृतिरिति यत्र न समग्राङ्गोपदेशस्तत्र विकृतिर्रिति च व्यवहारः । समग्राङ्गोपदेशवन्तः त्रयो यागाः—दर्शपूर्णमासौ अग्नीषोमीयः पशुः ज्योतिष्टोमश्चेति । विकृतियागा अपि इष्टयः पशवः सोमाश्चेति त्रिधा विभक्ता अनेके विद्यन्ते । कस्य धर्माः कुत्रातिदिश्यन्त इति विशेषनिर्णयः कर्तव्यः । तत्र संशयं प्रदर्शयति—**किमेकस्मिन् कर्मणि इति** । **एकस्मिन् कर्मणि** विकृतित्वेनाभिमते सौर्यादौ **सर्वकर्मसु धर्मातिदेशः** प्रकृतित्वेनाभिमतादेकस्मात्कर्मण इति संशयान्तर्गतकोटिद्वयस्यार्थः प्रतिभाति । यद्यपि संशयस्य प्रथमकोटौ **सर्वकर्मसु** इति सप्तमी श्रूयते, तथापि 'अविशेषात्सर्वेभ्य इति प्राप्तम्' इति पूर्वपक्षभाष्ये 'सर्वेभ्य' इति पञ्चमीनिर्देशात् 'सर्वकर्मसु' इत्यस्य सर्वकर्मभ्य इत्यर्थ आश्रितः । तथा च सौर्यादिष्विष्टिषु वायव्यादिपशुषु अग्निष्टुदादिसोमेष्वेकैकस्मिन् कर्मणि दर्शपूर्णमासाग्नीषोमीयज्योतिष्टोमेभ्यस्सर्वेभ्यो धर्मातिदेशः, उतैकस्मात् दर्शपूर्णमासादित इति संशयनिष्कर्षस्सम्पद्यते ।

---

१. उच्यते reads T. MSS.

## भाष्यम्

अविशेषात् सर्वेभ्य इति प्राप्तम् । एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ

## टुप्टीका

अथ कस्मादुभे इतिकर्तव्यते न प्रवर्तेते ? 'मिथो वा विप्रतिषेधात्' (जै० सू० ७.४.६) इति सूत्रेण निराकृतोऽयं पक्षः । एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते, प्रमाणाभावात् । तस्मात्सर्वधर्मातिदेश इति

## वार्तिकाभरणम्

अथेति । उभे अपि लौकिकीवैदिक्यौ इतिकर्तव्यते कस्मात् सह न प्रवर्तेते ? प्रवर्तेतां ते उभे अपि इतिकर्तव्यते । तथा च अन्यतरा न बाधिता भवतीत्यर्थः । परिहारसूत्रं पठति मिथो वा विप्रतिषेधात् इति । मिथो वा विप्रतिषेधाच्च, 'गुणानामयथार्थकल्पना स्यात्' इति सूत्रेण । उभे अपीतिकर्तव्यते समुच्चयेन प्रवर्तेतामिति पक्षो निराकृत इत्यर्थः । समुच्चये को दोष इत्याशङ्कायां प्रवृत्तभाष्यग्रन्थमर्थतोऽनुवदति—एकयेति । एकया इतिकर्तव्यतया निराकाङ्क्षीकृते कर्मणि द्वितीया न प्रवर्तते । आकाङ्क्षालक्षणप्रमाणाभावात् । तस्मादस्मिन्पक्ष एवोत्तरग्रन्थो युज्यते, नान्यथेत्यर्थः । अमुमप्यर्थं दूषयति—मास्तु तर्ह्ययमेव भाष्यार्थ इति शङ्कामुत्पादयति—अनेकस्मिन्निति । किमेकस्मिन्विकृतिभूते कर्मण्यनेकेभ्यो दर्शपूर्णमासादिभ्यो धर्मातिदेशः उताहो नेव । किन्तु एकस्मादेव दर्शपूर्णमासादेरेकस्मिन्विकृतिभूते कर्मणि धर्मातिदेश इत्यर्थः । दूषयति—अयं पक्ष इति । अयं पक्षो निराकृत इत्यर्थः । कुत्र निराकृत इत्यपेक्षायामाह—अथेति । भाष्यकारो हि विध्यन्ताधिकरणे । अत्राह अथ कस्मान्नोभे अपीतिकर्तव्यते सह प्रवर्तेते इति । किमेवं भविष्यति ? एवं तुल्यापेक्षा कर्मणामन्यत्र तत्र न बाधिता भवतीत्याशङ्कायां मिथो वा विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यादिति परिहारार्थप्रवृत्तगुणसूत्रमुच्यते । सह प्रदिश्यत इत्यर्थः । नन्वेतावता प्रकृते किं दूषणमायातमित्यत आह—तस्मादिति । इतिकर्तव्यतयोः

## तन्त्रशिखामणिः

नियतैवैका प्रवर्तते । नियमाभावेऽव्यवस्थितश्शास्त्रार्थस्स्यात् । ननु कस्य धर्माः कस्मिन् प्रवर्तन्त इत्यत्राह—

यस्य लिङ्गमर्थसंयोगादभिधानवत् कर्मविशेषात्कर्मविशेषे धर्मा भवन्तीत्युक्तम् । तत्रैव चिन्हमिहोच्यत इति नात्र संशयो न च प्रयोजनम् । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः इत्यत्र सौर्ययागेन ब्रह्मवर्चसं भावयेदित्यवगते कथमित्याकाङ्क्षा जायते । तस्याश्चानुवर्तमानायां सन्निधावितिकर्तव्यतानाम्नानात् सौर्यवाक्यं स्वसदृशं वाक्यं बुद्धौ सन्निधापयति । तत्सदृशश्च तद्धितेन देवतानिर्देशकत्वस्यौषधद्रव्यकत्वस्यैकदेवताकत्वस्य च साम्यादाग्नयेवाक्यमेव । तच्च बुद्धिस्थं स्वार्थमवबोधयति । तदर्थश्चांशत्रययुक्ता भावना । तत्र च फलकरणयोस्स्व-

## भाष्यसन्दर्भयोजिनी

अत्र विशेषेण निर्णायकस्याभावात्सर्वकर्मभ्यो धर्मातिदेश इति पक्षं गृह्णाति—अविशेषादिति । अविहितेतिकर्तव्यताकेषु कर्मसु तदाकाङ्क्षायां जातायां तत्पूरणाय धर्मा अतिदिश्यन्ते । तत्रैकस्मात्कर्मणः प्राप्तैर्धर्मैराकाङ्क्षायां शान्तायां पुनरन्यस्मात्कर्मणो धर्माः कुतः प्राप्नुयुरिति शङ्कामुत्थापयति—एकेन त्विति । समाधत्ते—सत्यमिति । सत्यमेकस्मात्प्राप्तैराङ्क्षा शाम्यति, किन्तु कस्मादिति निर्णयाभावेन सर्वकर्मभ्य एवेति

## भाष्यम्

**किञ्चित्कारणं नास्ति। सत्यम्, तदेव तु न ज्ञायते कस्मिन् कस्येति। तदर्थं विशेषलक्षणं**

## टुप्टीका

**निर्मूलोऽयं पक्षः। ईदृशस्संशयो युक्तः—किमनियमेन कस्यचित्सकाशादितिकर्तव्यता प्रवर्तते ? उतास्ति**

## वार्तिकाभरणम्

प्रसक्तावेकस्याः प्रतिषिद्धत्वात्तुल्यन्यायतयात्रापि एककर्मगतेनैकेन विध्यन्तेन निराकाङ्क्षीकृते कर्मणि कर्मान्तरगतविध्यन्तरप्राप्त्यभावस्य सिद्धत्वेन गतार्थत्वादेकस्मिन्विकृतिभूते कर्मणि सर्वकर्मभ्यः प्रकृतिभूतेभ्यः सर्वधर्मातिदेश इत्ययं पक्षो निर्मूल इत्यर्थः। भाष्योक्तं संशयं दूषयित्वा एतादृशस्संशयो युक्त इत्याह—**ईदृश इति**। संशयशरीरमेव दर्शयति—**किमनियमेनेति**। किमेकस्मिन्दर्शपूर्णमासाख्ये प्रकृतिभूते कर्मणि ये धर्माः समाम्नाताः तथाग्नीषोमीये पशौ प्रकृतिभूते ये धर्माः, तथा प्रकृतिभूते ज्योतिष्टोमादौ ये धर्माः समाम्नाताः तेषां मध्ये यस्मात्कस्माच्चित्सकाशाद्विकृतिभूतेषु इष्टिपशुसोमादिष्वनियमेन धर्मा भवन्ति उत एतस्मात्कर्मणः एतस्मिन् कर्मणि इति नियमेन धर्मा भवन्तीत्यर्थः। अत्र पार्थसारथ्युपाध्यायैः यथा वार्तिकमेव तन्त्ररत्ने संशयः प्रदर्शितः। शास्त्रदीपिकायान्तु किमेकस्मिन्कर्मणि सर्वधर्मातिदेशः उत एकधर्मातिदेश इत्याचार्यैः सशयभाष्यं द्वेधा विकल्प्य यत्पक्षद्वयमपि दूषितं तत्र द्वितीयपक्षानुसारेण संशयः प्रदर्शितः। ननु शास्त्रदीपिकासंशयस्य न भाष्यसंशयानुरोधेनार्थो वर्णनीयः। किन्तु किमनियमेन धर्मा भवन्ति उत नियमेनेति वार्तिकसंशयानुरोधेनवार्थो वर्णनीयः। भाष्यानुसारेण विध्यन्तानां समुच्चयेन प्राप्तिरिति पूर्वपक्षकरणाभावात्। प्रत्युत विकल्पेन विध्यन्तानां प्राप्तिरिति पूर्वपक्षकरणादिति चेन्न; शास्त्रदीपिकासंशयग्रन्थस्य किमनियमेन धर्मा भवन्ति ? उत नियमेनेति ? वार्तिसंशयविवक्षायां विध्यन्ताधिकरणवल्लौकिकवैदिकयोः विध्यन्तसमुच्चयमाशङ्क्य मिथो विप्रतिषेधादित्यनेन सूत्रेण कथंभावापेक्षाया एकेनैव इत्थम्भावेन पूरणान्न द्वयोः सह प्रवृत्तिरित्युक्तम्। तेन गतमेतदिति गतार्थताशङ्कानुपपत्तेः। तस्माच्छास्त्रदीपिकासंशयग्रन्थस्तु अनास्थामूलक इति द्रष्टव्यम्। नन्वेवं[1] तावद्गतार्थतायाः किमायातमित्यत आह—**तत्रेति**। विध्यन्ताधिकरण इतिकर्तव्यतयोः समुच्चयो निराकृतः इह

## तन्त्रशिखामणिः

वाक्योपात्तत्वेन सौर्येऽनपेक्षितत्वादसम्बन्धे कथम्भावांश आकाङ्क्षायोग्यतासिन्निधिभिस्सम्बध्यते। 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायात् आकाङ्क्षितकथम्भावबोधकस्सम्बन्धः क्लृप्तः। प्रकृतिवच्छब्दः सौर्यविधिवाक्यशेषतां प्रतिपद्यते। ततश्च यथाग्न्यन्वाधानप्रयाजादिजन्यदृष्टादृष्टोपकारसम्पादनरूपेण यागगतव्यापारेणाग्नेयेन स्वर्गः कृतस्तथा सौर्येण ब्रह्मवर्चसं भावयेदिति सौर्यवाक्यार्थः पर्यवस्यति। तदेवमुपमानेनोपस्थितादाग्नेयवाक्यादेवोक्तरीत्या सौर्येण कथम्भावस्सम्पद्यते। ननु सौर्यादौ दृश्यमानं निर्वपतीत्यादिलिङ्गं

## भाष्यसन्दर्भयोजिनी

पक्षस्स्थास्यत्येवेत्याह—**तदेव त्विति**। अस्मिन् कर्मण्यस्य धर्मा अतिदिश्यन्त इति यावता निश्चयो न भवति तावता सर्वकर्मभ्य इति पक्षो न निराकृतस्स्यादित्यतः—**तदर्थमित्याह**। विशेषलक्षणे कीर्तिते सति ज्ञायेत—

१. नन्वेतावता reads M. MSS.

## भाष्यम्

**वक्तव्यम्-अस्मिन्नस्येति । तदिदमध्यायादौ प्रतिज्ञायते अथ विशेषलक्षणमिति । अथेदानीं**

## टुप्टीका

**कश्चिन्नियमः ? इति । तत्रानियम इति पूर्वपक्षः । उत्तरस्तु नियमेनैव प्रवर्तते 'अथ विशेषलक्षणम्' इति—एकस्मिन् एकस्मान्नियमेन प्रवर्तत इत्यर्थः । विशेष इत्यसाधारण्यमुच्यते । यदि चानियमेन ततोऽसाधारण्यं न स्यात् असाधारण्याभावाच्च विशेषो न स्यात् ।**

## वार्तिकाभरणम्

चानेकविध्यन्तानां विकल्पेन प्राप्तिरिति पूर्वपक्षः क्रियत इति न गतार्थतेत्यर्थः । सिद्धान्तमाह—**उत्तरस्त्विति** । एकस्मादेवैकस्मिन् नियता धर्मा भवन्ति । अनियमेन धर्म[१]प्राप्तावव्यवस्थितः शास्त्रार्थस्स्यात् । तस्मान्नियता धर्मा इत्यर्थः । 'अथ विशेषलक्षणमि'ति सूत्रं नियमेन धर्मा भवन्ति इति स्वकीयाधिकरणसिद्धान्ते योजयितुं तत्पठति—**अथ विशेषलक्षणमिति इति** । सूत्रस्यार्थमाह—**एकस्मिन्निति** । एकस्मिन्विकृतिभूते कर्मणि एकस्मात्प्रकृतिभूतात्कर्मणः नियता इतिकर्तव्यता प्रवर्तत इत्यर्थः । उक्तमर्थं सूत्रारूढं करोति **विशेष इति** । विशेषशब्दोऽसाधारणवचन इत्यर्थः । ततः किमित्यत आह—**यदि चेति** । यदि चानियमेनेतिकर्तव्यता प्रवर्तते तदास्यासाधारण्यं न स्यात् । असाधारण्याभावाच्च विशेषो न स्यात् । सर्वेषां हि प्राप्तौ सत्यामेकस्येतरेभ्यो न कश्चिद्विशेषस्स्यात् । तस्मात् विशेषशब्देनासाधारण्याभिधानात् नियतैकैवेतिकर्तव्यता प्रवर्तत इत्यर्थः ।

सूत्रं स्वसिद्धान्तानुसारेण योजियित्वा भाष्यकारव्याख्यानानुसारेण सूत्रस्यार्थमाह—**अथवेति**

## तन्त्रशिखामणिः

आग्नेये सिद्धतया दृष्टप्रयाजादिकमनुमानादेव गमयतु । अत एव सोऽपि वैदिकेन विध्यन्तेनानुमानात् बुद्धौ सन्निहितेनैकवाक्यतां यास्यतीति भाष्यकृतोक्तमिति चेन्न; धूमाग्न्योरिव निर्वापप्रयाजयोर्मिथस्सम्बन्धाभावात् 'गुणानाञ्च परार्थत्वादि'ति न्यायात् । न चैवमप्येकार्थसम्बन्धात् रूपरसादिवदनुमापकोऽस्त्विति वाच्यम् । 'आदित्यः पयसि चरुः' इत्यादौ निर्वपत्यश्रवणादनुमानमपि न स्यात् । न च तत्रापि श्रुतादौषधद्रव्यकत्वादनुमानमस्त्विति वाच्यम् । अनुमानाद्धर्मप्राप्तौ सौर्ययागो दीक्षणीयादिधर्मकः अनुपदिष्टेतिकर्तव्यताकत्वात् विश्वजिदादिवत्, दर्वीहोमानामपि पक्षसमत्वात् न तत्र व्यभिचार इत्यनुमानाद्दीक्षणीयादिधर्मकत्वं सौर्यादावपि स्यात् इति सर्व[म]समञ्जसं स्यादिति उपमानादेव धर्मप्राप्तिः । भाष्ये चानु पश्चान्मानमिति उपमानमेवानुमान शब्देनोक्तिः । उपमानस्य चासन्निकृष्टार्थविषयकज्ञानजनकत्वं प्रथमपादे भाष्यकृतैवोक्तम् । 'उपमानमपि सादृश्यविज्ञानं असन्निकृष्टेऽर्थे बुद्धिमुत्पादयती'ति । अनेन वाच्यवाचकभावस्यैवोपमानगम्यत्वमित्येकदेशिमतमपास्तम् । एवमनेकदेवताकेष्वग्नीषोमीयैन्द्राग्नविध्यन्तः चतुरक्षरेष्वग्नीषोमीयविध्यन्तः आज्यद्रव्यकेषूपां

## भाष्यसन्दर्भयोजिनी

अस्मिन् कर्मण्यस्य धर्माः प्राप्नुवन्तीति तदेवं प्रतिज्ञासूत्रमवतारयति—**अथेति** । अथ सामान्यातिदेशनिरूपणा-

१. प्राप्तावपि reads T. MSS.

### भाष्यम्

वृत्तात्सामान्यातिदेशलक्षणादनन्तरं विशेषलक्षणं वक्ष्यामः। तदुच्यमानं यथाकालं बोद्धव्य-मिति ॥ १ ॥

इति प्रतिज्ञाधिकरणम् ॥ १ ॥

तदेतत्सङ्क्षेपेणैवोच्यते—

## यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ ८.१.२ ॥

### टुप्टीका

अथवान्यस्सूत्रार्थः—विशेषाद् विशेषस्य धर्माः प्रवर्तन्ते। कतरस्मात्कतरस्येत्यत आह—यस्य लिङ्गमर्थसंयोगादिति। संशयस्तु नैव कार्योऽस्मिन् पक्षे ॥ १ ॥

तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः। संयोगिनोश्चान्यतरो दृश्यमान

### वार्तिकाभरणम्

अथवान्य एव सूत्रार्थः। न पूर्वोक्त इत्यर्थः। तमेवाह—तत्र कीदृशाद्विशेषात्कीदृशस्य विशेषस्य धर्माः भवन्तीत्यपेक्षायां 'यस्य लिङ्गमर्थसंयोगादभिधानवदि'ति चिह्नप्रतिपादकं सूत्रं प्रवृत्तम्। तत्सूत्रमवतारयति—कतरस्मादिति। संशयस्त्विति। अस्मिन्पक्षे अथवेत्यादिनोक्तपक्षान्तरे—'अथ विशेषलक्षणमि'त्यस्य सूत्रस्य विशेषाद्विशेषस्य धर्मा भवन्तीत्यङ्गीकारेण चिह्नप्रतिपादनमात्राभिप्रायेण विचारान्तरपरत्वभावान्नाधिकरणान्तर-परत्वम्। एवं चास्मिन्पक्षे संशयो नैव कार्य इत्यर्थः।

अत्र भाष्यकारेण 'यस्य लिंगमर्थसंयोगादभिधानवदि'ति [1]सूत्रं यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किंचिच्छब्दगतम् अर्थगतं वा वैकृतयां चोदनायां[2] तद्गुणवाक्ये वा दृश्यते, तत्र विध्यन्तस्स्यात्। कुतः? अर्थसंयोगात्। तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः संयोगिनोश्चान्यतरो दृश्यमानोऽन्यतरम-

### तन्त्रशिखामणिः

शुयाजविध्यन्तः पशावग्नीषोमीये सान्नाय्यविध्यन्त इत्याद्यूह्यम्। एवञ्च विशेषातिदेशः कृत्स्नोऽप्यत्रैव सङ्क्षिप्तः। उत्तरस्तु प्रपञ्चः शिष्यबुद्धिसौकर्यायेत्यवधेयम् ॥ १ ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

नन्तरं विशेषातिदेशलक्षणम्—विशेषातिदेशाध्याय आरभ्यत इति सूत्रार्थं प्रदर्शयति अथेदानीमिति। विशेषे प्रदर्शिते तदनुसारेण यथाकालं कालमनतिक्रम्य तद् बोद्धुं शक्यमित्यर्थः ॥ १ ॥

इति प्रतिज्ञाधिकरणम् ॥ १ ॥

तदेतत् विशेषलक्षणं सङ्क्षेपेणैवानेन सूत्रेणोच्यत इत्यर्थः। यत्तच्छब्दाभ्यां विशेषे व्यवस्थापानार्थं

१. सूत्रस्य वैदिकस्य reads T. MSS.

२. तद्गुणेवार्येवा reads M. MSS,

## भाष्यम्

यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किञ्चित् शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात् । कुतः ? अर्थसंयोगात् । तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः । संयोगिनोश्चान्यतरो दृश्यमान इतरमदृश्यमानमप्यनुमानाद् बुद्धौ सन्निधापयति, अभिधानवत् । यथा-अग्निहोत्रमित्यभिधानं कौण्डपायिनामयने

## टुप्टीका

इतरमदृश्यमानमनुमानाद् बुद्धौ सन्निधापयतीत्ययुक्तोऽयं ग्रन्थः । यथाग्निधूमयोस्सम्बन्धेऽवगते धूमो दृश्यमानोऽग्निमनुमापयति, एवं निर्वापादयो न शक्नुवन्त्यनुमापयितुम् । न चामीषां प्रयाजादीनाञ्च सम्बन्धोऽस्ति ।

## वार्तिकाभरणम्

दृश्यमानमप्यनुमानाद्बुद्धौ सन्निधापयतीति व्याख्यातम् । तद्भाष्यमाक्षेप्तुं तत्सूत्रं पुनरपि पठति यस्य लिंगमर्थसंयोगादभिधानवत् इति । भाष्यमर्थतोऽनुवदति—**तस्येति** । दर्शपूर्णमासयोस्तस्य प्रसिद्धस्यार्थस्य लिङ्गस्य निर्वापादेः तेन प्रसिद्धेन विध्यन्तविशेषेण प्रयाजादिना संयोगः सम्बन्धोऽनुभूतपूर्वः दृष्टचरः निर्वापादेः प्रयाजादेश्च एककर्मगतत्वात्संयोगिनोश्च निर्वापप्रयाजयोर्विकृतिभूते सौर्यचरावन्यतरो दृश्यमानो निर्वापोऽन्यतरमदृश्यमानं प्रयाजमयं सौर्यचरुगतो निर्वापः प्रयाजैकाधिकरणकः निर्वापत्वाद्दर्शपूर्णमासगतनिर्वापवदित्येवंरूपादनुमानाद्बुद्धौ सन्निधापयतीत्यर्थः । तद्दूषयति—**अयुक्तोऽयं ग्रन्थ इत्यादिना** । प्रकृतेऽनुमानदृष्टान्तवैषम्येण दूषयितुं प्रथमदृष्टान्तस्वरूपं दर्शयति—**यथेति** । यथाग्निधूमयोः महानसे व्यापकव्याप्यत्वेन सम्बन्धे सिद्धे पश्चात्सम्बन्धिनोर्द्वयोः[1] तयोर्मध्ये पर्वतदौ दृश्यमानो व्याप्यभूतो धूमः अदृश्यमानं व्यापकभूतमग्निमनुमापयति । एवं निर्वापादयः सौर्ये दृश्यमानाः प्रयाजादीनदृश्यमानाननुमापयितुं न शक्नुवन्तीत्यर्थः । कुत इत्यपेक्षायां वैषम्यमेवोपपादयति—**न निर्वापस्येति** । यदि दर्शपूर्णमासयोः निर्वापस्य प्रयाजादीनाञ्च सम्बन्धोऽस्ति । ततः सम्बन्धेऽवगते निर्वापः प्रयाजादिकमनुमापयतीति वक्तुं शक्यम् । प्रधानेनाग्नेयादियागेन निर्वापस्य प्रयाजादेश्च संबन्धः, न तु परस्परं

## भाष्यसन्दर्भयोजिनी

लिङ्गं सङ्गृह्णाति—**यस्येति** । लिङ्गञ्च द्विविधमुपलभ्यते—शब्दगतमर्थगतञ्चेति । 'निर्वपेत्' 'आलभेत' इत्यादि लिङ्गं शब्दगतम्, एकदेवताकत्वम्, ओषधिप्रभवद्रव्यकत्वम्, पशुप्रभवद्रव्यकत्वञ्चेत्याद्यर्थगतं लिङ्गम् । तदेतदादाय विशेषः प्रत्येतव्य इत्याह—**यस्येति** । लौकिकविध्यन्तव्यावर्तकं **वैदिकस्य** इति पदम् । सादृश्यज्ञापकम्—**शब्दगतमर्थगतञ्चेति** । उभयोरन्यतरसत्त्वेऽपि सादृश्यनिर्णायकः वाकारः । तच्च लिङ्गमुत्पत्तिवाक्य एवेति न निर्बन्ध इति सूचयितुम्—**कर्म-चोदनायां तद्गुणवाक्ये वेति** । एवञ्च 'सौर्यं चरुं निर्वपेत्' इति विकृतिचोदनायां निर्वपतिशब्दः 'चतुरो मुष्टीन् निर्वपति' इत्याग्नेययागगुणवाक्यगतनिर्वपतिशब्दमादाय, एवं सौर्यमिति तद्धितान्तं पदम्, चरुमिति ओषधिप्रभवं द्रव्यञ्चादाय 'आग्नेयमिति' 'अष्टाकपाल' इति चार्थगत लिङ्गञ्चादायाग्नेयविध्यन्तः सौर्ये प्राप्नोतीति विशेषनिर्णयः क्रियत इति भावः । अत्र सौत्रं हेतुं दर्शयति—**अर्थसंयोगादिति** । अर्थशब्दार्थविवरणम्—**लिङ्गस्येति** । अनुभूतपूर्वः आग्नेयादिवाक्येष्वित्यर्थः । **संयोगिनोः**

---

१. द्वयोः omits T. MSS.

## भाष्यम्

श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ सन्निधापयति। किमतोऽत्र ? एतदतो भवति-अपूर्णं यद्वाक्यं तत्पूरणसमर्थेनावयवेन बुद्धौ सन्निहितेनैकवाक्यतां याति। यथा दर्शपूर्णमासाभ्यां यजेतेति विध्यादिः कथमिति विध्यन्तापेक्षः अग्न्यन्वाधानादिविधानकाण्डेन पाठाद् बुद्धौ सन्निहितेनैक-वाक्यतां याति-दर्शपूर्णमासाभ्यामित्थमिति। एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः सोऽपि

## टुप्टीका

प्रधानेनैव सहामीषां सम्बन्धः। परस्परसम्बधे नास्ति तेषां प्रमाणम्। यत्र निर्वापादयो न श्रूयेरन् तत्राग्न्यन्वा-धानादीनामवबोधो न स्यात्। यथा धूमाभावेऽग्न्यवबोधाभावः, एवमिहापि।

## वार्तिकाभरणम्

'गुणानां च परार्थत्वादि'ति न्यायात्। तस्मात्परस्पर[1] सम्बन्धे प्रमाणाभावान्न निर्वापस्य प्रयाजाद्यनुमापकत्व-मित्यर्थः। ननु रूपरसादिवदेकार्थसम्बन्धादनुमापकत्वम् अस्त्वित्यत आह—यत्रेति। एवञ्च सति यत्र 'आदित्यः प्रायणीयः पयसि चरुरि'त्यादौ निर्वापादयो न श्रूयन्ते, तत्राग्न्यन्वाधानप्रयाजादीनामवबोधो न स्यात्। यथा धूमाभावेऽग्न्यवबोधाभावः, एवमिहापि निर्वापलक्षणलिङ्गाभावेनाग्न्यन्वाधानप्रयाजादिसाध्यप्रतीतेरभावात्, सर्वत्रानुमानेन धर्मप्राप्तिरित्येतन्न सङ्गच्छत इत्यर्थः। स्यादेतदेवम्, यदि निर्वाप एव न लिङ्गं स्यात्। नत्वेव-मस्ति। किन्तु कर्मास्माभिः दर्शपूर्णमासाख्यमितिकर्तव्यतायुक्तं दृष्टम्। इदमपि प्रायणीयादिकर्म फलसाधनम्। तस्मादस्यापि इतिकर्तव्यतया भवितव्यम्, कर्मत्वात् इत्यर्थगतकर्मत्वलक्षणलिङ्गेन शब्दगतनिर्वापलक्षणलिङ्गा-

## भाष्यसन्दर्भयोजिनी

सौर्याग्नेययोः अन्यतरः आग्नेययागः निर्वपत्यादिसम्बन्धवान्। **इतरम्** सौर्यम् ( सप्तम्यर्थे द्वितीया ) **अदृश्यमान-मपि** अदृश्यमानेति कर्तव्यताकमपि **बुद्धौ सन्निधापयति** धर्मान् इत्यर्थः। **अभिधानवत्** नामधेयवत्। कुण्डपायि-नामयने श्रूयमाणमग्निहोत्रपदं नैयमिकाग्निहोत्रधर्मानिवेत्यर्थः। **बुद्धौ सन्निधापयति** उपमितिप्रमाणेनेति शेषः। **किमतोऽत्र** तत्र नामसादृश्यात्तथा भवतु दार्ष्टान्तिकेऽत्र किं निष्पन्नमित्यर्थः। तन्निरूपयति—**एतदत** इति। साकाङ्क्षं वाक्यमाकाङ्क्षापूरणाय पदान्तरमपेक्षते। तेन सहैकवाक्यतामवाप्य तन्निराकाङ्क्षं सदर्थाव-बोधनक्षमं भवति, अन्यथा साकाङ्क्षं सदप्रमाणं स्यादिति विशदयति-**अपूर्णमिति**। साकाङ्क्षमित्यर्थः। **अवयवेन** पदान्तरेण। **सन्निहितेन** न तु व्यवहितेनेत्यर्थः। अत्रोदाहरणम्-**दर्शपूर्णमासाभ्यामिति**। किं केन कथमित्याकाङ्क्षात्रये प्रथमद्वितीययोराकाङ्क्षयोः पूरणाय स्वर्गः फलं धात्वर्थो यागश्च वर्तेते। ताभ्यां ते शान्ते। तृतीयकथम्भावाकाङ्क्षा पूरणीया, तदर्थं सन्निधौ पाठेन प्राप्तान् अग्न्यन्वाधानप्रयाजानुयाजादीन् बुद्धावानीय तैस्सहैकवाक्यतामवाप्य दर्शपूर्णमासवाक्यं निराकाङ्क्षं भवति। एकवाक्यतामापन्नस्य तस्याकारं दर्शयति-**दर्शपूर्णमासाभ्यामित्थमिति**। अङ्गैरुपकारमवाप्य तदुपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गं प्राप्नुयादित्यर्थः। प्रकारमिमं विकृतिवाक्येऽतिदिशति-**एवमिति**। **विध्यन्तापेक्षः** अङ्गापेक्षः। **अनुमानाद**

१. परस्पर reads. T. MSS.

## भाष्यम्

वैदिकेन विध्यन्तेनानुमानाद् बुद्धौ सन्निहितेनैकवाक्यतां यास्यति। यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति। तत्र कथमिति विध्यन्तापेक्षायामनेकविध्यन्तसन्निपातेऽसाधारण्येन निर्वपतिशब्देन दार्शपूर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते। तत्राप्या-

## टुप्टीका

अथोच्येत-कर्मास्माभिरितिकर्तव्यतायुक्तं फलसाधनं दृष्टम्, इदमपि कर्म। तस्यापीतिकर्तव्यतया भवितव्यम्। एवं सति दर्विहोमानामपीतिकर्तव्यता। अथोच्येत-यदेकदेवतं सत्फलसाधनं पुरोडाशद्रव्यकं वा तदितिकर्तव्यतया भवितव्यम्। उच्यते—अनुमानादितिकर्तव्यतासद्भाव उक्तः। स चाग्नेयात्प्रवर्तत इति

## वार्तिकाभरणम्

भावेऽपि प्रायणीयादावितिकर्तव्यता सिध्यतीति शङ्कते—अथोच्यत इति। एवं सति दर्विहोमेष्वपीतिकर्तव्यता प्राप्नोति। कर्मत्वरूपलिङ्गस्याविशेषादिति परिहरति—एवं सतीति। ननु कर्मत्वं न लिङ्गम्, येनातिप्रसङ्गः स्यात्। किन्तु यदेकदेवताकं सत् फलसाधनं पुरोडाशद्रव्यकं वाग्नेयादिकर्म तदितिकर्तव्यतायुक्तं दृष्टम्, तद्वदिहापि प्रायणीयादिकर्मेतिकर्तव्यतायुक्तमेव कर्तव्यम्, एकदेवताकत्वात्, पुरोडाशद्रव्यकत्वाच्चेत्यनुमानेनेतिकर्तव्यता प्राप्नोतीति शङ्कते—अथोच्येत इति। अत्र च प्रायणीयादेः पुरोडाशद्रव्यकत्वाभावात् पुरोडाशग्रहणमौषधोपलक्षणार्थम्। सत्यमनुमानात्सामान्याकारेणेतिकर्तव्यतासद्भावात्सिध्यति, तथापि चेतिकर्तव्यतासद्भावे एतस्माद्विशेषाद्वैदिकादेतस्मिन्विशेषे वैदिके धर्मा भवन्तीति विशेषाकारेण न सिध्यतीति परिहरति—उच्यत इति। ननु विध्यन्ताधिकरणे लोके क्रियामात्रस्य फलसाधनत्वेन दृष्टत्वाद्वेदेऽपि क्रियामात्रं फलसाधनं कर्मत्वादित्यनुमानेन तृतीयाश्रुत्यभावेऽपि सौर्यादिकर्मणः फलसाधनत्वमस्त्वित्याशङ्कायां टुप्टीकामीमांसावार्तिके न च सामान्यतो लौकिकं कर्म गुणभूतम् अनेनापि गुणभूतेन भवितव्यमिति सामान्यतो दृष्टानुमानं लौकिकं वेदे न प्रवर्तत इति दूषितत्वात्तत्समानन्यायेनोक्तानुमानस्यापि दूषितप्रायत्वात् कथमनुमानादितिकर्तव्यतासद्भाव उक्त इति वाचोयुक्तिरिति चेत्, सत्यमिदं दूषितप्रायम्, तथापि विध्यन्ताधिकरणे भाष्यकारेण यजेत तथा यागं कुर्यात्, जुहुयात् होमं कुर्यादिति पक्षे यागस्य निर्ज्ञातप्रकारत्वेन धर्माकाङ्क्षाया अभावात् कथमितिकर्तव्यतायाः प्राप्तिरित्याशङ्क्य धर्माकाङ्क्षाभावेऽपि शिष्टाचारबलात्सेतिकर्तव्यताकः कर्तव्य इति सामान्यतो दृष्टानुमानेनेतिकर्तव्यताप्राप्तेः साधितत्वात् तदभिप्रायेणानुमानेन सामान्यरूपेतिकर्तव्यतासद्भाव उक्त इति वाचोयुक्तिरुपपद्यत इति न दोषः। स्यादेतदेवम्, यदि विध्यन्ताधिकरणे शिष्टाचारबलात्सेतिकर्तव्यताकः कर्तव्य इति

## भाष्यसन्दर्भयोजिनी

उपमितिलक्षणप्रमाणसहकृतादित्यर्थः। तेनाङ्गानि बुद्धौ सन्निहितानि कृत्वा एकवाक्यताञ्चावाप्य विकृतिवाक्यं निराकाङ्क्षी भवतीति दर्शयति-यथेति। अनेकविध्यन्तसन्निपाते सदृशानामसदृशानाञ्चानेकेषां सन्निपाते। सदृशानामेव नियमनायासाधारणं लिङ्गं परिगणयति-निर्वपतिशब्देनेति। दर्शपूर्णमासौ विहाय पशौ सोमे च निर्वपतिशब्दयोगो नास्तीति तस्यासाधारण्यम्। दर्शपूर्णमासयोरपि अग्नीषोमीयपुरोडाशोपांशुयाजयोर्निर्वपि

## भाष्यम्

ग्नेयाद्यनेकापूर्वविध्यन्तप्रसङ्गे एकदेवतात्वेन वौषधिना वासाधारणेन लिङ्गेनाग्नेयविध्यन्तो नियम्यते। तदेतदेवं विज्ञायते-सौर्यं चरुं निर्वपेदाग्नेयवत्, 'आग्नावैष्णवमेकादशकपालं निर्वपे'-दग्नीषोमीयवत्। सर्वत्रैवम्। प्रतिपदाख्याने तु गौरवं परिहरद्भिर्वृत्तिकारैः सर्वसामान्यः शब्दः

## टुप्टीका

नैतद्विषयमनुमानम्। अथोच्येत-येनैकदेवत्यस्य फलं साधयतोऽग्न्यन्वाधानादि दृष्टमयमपि चैकदेवत्यः, तस्मादस्य भवितव्यमग्न्यन्वाधानादिभिरिति। तन्न; देवदत्तस्य प्रयोजनं साधयतः ( शुक्ले वाससी ज्ञाते यदन्यस्यापि प्रयोजनं साधयतः ) त एव प्राप्नुतस्त्वदोयेन। किञ्च फलवतोऽङ्गं प्रयाजा दृष्टा अग्निहोत्रस्यापि फलवत्त्वा-

## वार्तिकाभरणम्

भाष्योक्तरीत्या सामान्यतोदृष्टानुमानेनेतिकर्तव्यतासद्भावः साध्येत। नत्वेवमस्ति, किन्तु—यस्मादेकदैवत्यस्य फलं साधयत आग्नेययागस्याग्न्यन्वाधानाद्यङ्गं दृष्टमयमपि चैकदेवत्यः प्रायणीयादिः फलसाधनम्। तस्मादस्यापि भवितव्यम् अग्न्यन्वाधानादिभिरित्येवं विशेषरूपेणानुमानेनाग्नेयात्प्रायणीयादौ धर्मा भवन्तीति विशेषातिदेशः सिध्यतीति शङ्कते—अथोच्येत इति। यस्मादेकदैवत्यः फलसाधनभूत आग्नेययागोऽग्न्यन्वाधान-प्रयाजादीतिकर्तव्यतायुक्तो दृष्टः, अयमपि चैकदेवत्यः फलसाधनभूतः प्रायणीयादिर्दृश्यते। तस्मादसावपि प्रायणीयादिरग्न्यन्वाधानप्रयाजादीतिकर्तव्यतायुक्तः कर्तव्य इत्येतादृशानुमानेनाग्नेयात्प्रायणीयादौ धर्मा भवन्तीति यदि विशेषातिदेशः साध्येत, तदा त्वदुक्तेन न्यायेन प्रयोजनं कुर्वतो देवदत्तस्य सम्बन्धिधृतं शुक्लं यद्वस्त्रद्वयं तद्द्वयमपि तादृशं प्रयोजनं कुर्वतो यज्ञदत्तस्यापि प्राप्नुयात्, पुरुषत्वाविशेषात्। तस्मादेतादृशानुमानेन विशेषाद्विशेषस्य धर्मा न भवन्तीति परिहरति तन्नेति। एकदेवत्यत्वलक्षणलिङ्गेन धर्मप्राप्तौ दूषणमुक्त्वा फलसाधनत्वलक्षणलिङ्गेन धर्मप्राप्तौ दूषणमाह—किञ्चेति। यस्मात्फलसाधनभूत आग्नेययागोऽग्न्यन्वाधानप्रयाजादीतिकर्तव्यतायुक्तो दृष्टः, अयमपि प्रायणीयादिः फलसाधनभूतो दृश्यते। तस्मादसावपि प्रायणीयादिरग्न्यन्वाधानप्रयाजादीतिकर्तव्यतायुक्तः कर्तव्य इत्येतादृशानुमानेनाग्नेयात्प्रायणीयादौ धर्मा भवन्तीति यदि विशेषातिदेशः साध्येत, तदा त्वदुक्तेन न्यायेन फलसाधनभूतस्य अग्निहोत्रस्यापि अग्न्यन्वाधानप्रयाजादीतिकर्तव्यता प्राप्नोति। तस्मादेतादृशानुमानेन विशेषाद्विशेषस्य धर्मा भवन्तीति यदि विशेषातिदेशः साध्येत, तदा त्वदुक्तेन न्यायेन फलसाधनभूतस्य अग्निहोत्रस्यापि अग्न्यन्वाधानप्रयाजादीतिकर्तव्यता प्राप्नोति। तस्मादेतादृशानुमानेन विशेषाद्विशेषस्य धर्मा न भवन्तीत्यर्थः। नन्वग्निहोत्रस्योपदिष्टधर्मकत्वेनाकाङ्क्षाभावात्फलवत्त्वलिङ्गेन धर्मप्राप्त्यसम्भवात्कथमग्निहोत्रस्याप्यग्न्यवाधानादीतिकर्तव्यता प्राप्नोतीत्यतिप्रसङ्ग आपादित इति चेन्न; अग्निहोत्रशब्दस्यानुपदिष्टधर्मकफलसाधनीभूत × × × × ×मादिकर्मोपलक्षणार्थत्वात्। तस्मादनुमाने-

## भाष्यसन्दर्भयोजिनी

सत्यपि तद्व्यावृत्तये-एकदेवतात्वेनेति। विष्णुं प्रजापतिं वा एकदेवताकत्वमादायोपांशुयाजव्यावृत्तये ओषधिनेति। एवञ्च निर्वपतिः एकदेवताकत्वं ओषधिप्रभवद्रव्यकत्वञ्चाग्नेयेन यागेनैव साम्यमस्तीति तदीयविध्यन्त एव नियम्यत इत्याह-आग्नेयविध्यन्त इति। निष्कर्षमाह-तदेतदेवमिति। प्रतिपदव्याख्याने प्रतिपदार्थमतिदेशकल्पने।

## भाष्यम्

परिगृहीतः प्रकृतिवदिति। एवं यत्र सूक्ष्ममपि किञ्चित्सामान्यं शब्दो वार्थो वा हविर्देवतादि तद्गुणा वा रूपादय उपलभ्येरन् तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत् सङ्क्षेपेणैव सर्वमुक्तम्। शिष्यहितार्थमुत्तरः प्रपञ्चः। श्लोकमप्युदाहरन्ति—

## टुप्टीका

त्स्य स्युः। तस्मादनुमानेनेतिकर्तव्यतायां बह्वसमञ्जसम्। अत उपमानेन धर्मप्राप्तिः। यजेतेत्युक्ते किं केन कथमित्याकाङ्क्षात्रयं भवति। तत्र किं केनेति फलकरणाभ्यां निराकाङ्क्षीकृते। कथमिति अव्यावृत्तायामाकाङ्क्षायां सन्निधानेऽनाम्नानादितिकर्तव्यतायास्तुल्यं वाक्यं बुद्धौ सन्निधीयते। तत्सन्निधापितमात्मीयमर्थं सन्निधापयति। अनेन द्वारेणाऽन्यन्वाधानेतिकर्तव्यतानुषज्यते।

## वार्तिकाभरणम्

नेतिकर्तव्यता प्राप्त्यभ्युपगमे भूयानतिप्रसङ्ग आपतेदित्युपसंहरति—**तस्मादिति**। अनुमानेन धर्मप्राप्तेर्दूषितत्वादुपमानेन धर्मप्राप्तिरित्याह—**अत इति**। उपमानेन धर्मप्राप्तिमेवोपपादयति—**यजेतेति** इति। सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र यजेतेत्युक्ते किं केन कथमित्याकाङ्क्षात्रयं सञ्जायत इत्यर्थः। अत्र यद्यपि 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यादौ यजेतेति शब्दो नास्ति, तथापि निर्वपतिपरेणापि लिङ्प्रत्ययेन सौर्यं चरुमिति द्रव्यदेवतासम्बन्धाक्षिप्तयागस्य परिचितत्वात्तदभिप्रायेण यजेतेत्युक्तम्। नन्वेतावतोपमानेन धर्मप्राप्तौ किमायातमित्यत आह—**किमिति**। सौर्यवाक्येऽभिहितेन ब्रह्मवर्चसलक्षणेन फलेन सौर्ययागेन करणेन च फलांशे करणांशे च निराकाङ्क्षीकृते सति कथमित्याकाङ्क्षायामनिवृत्तायां सौर्ययागसन्निधौ चेतिकर्तव्यताम्नानाभावाद्दर्शपूर्णमाससम्बन्धिसाङ्गप्रधानविधायकं वैदिकत्वेन तुल्यं वाक्यमुपमानाद्बुद्धौ सन्निधीयत इत्यर्थः। ततो वा प्रकृते किमायातमित्यत आह—**तदिति**। तत्सन्निधापितं वाक्यमिदमनेनेत्थमित्यंशत्रययुक्तमात्मीयमर्थं बुद्धौ सन्निधापयति। सन्निधापितेष्वपि फलकरणेतिकर्तव्यतारूपेष्वर्थेषु फलकरणाभ्यां सौर्यभावना न सम्बध्यते। स्ववाक्ये ब्रह्मवर्चसलक्षणफलस्य सौर्ययागस्य च श्रुतत्वेन भाव्यांशे करणांशे चापेक्षाभावात्। या त्वनाम्नाताऽन्यन्वाधानादीतिकर्तव्यता साकाङ्क्षासन्निधियोग्यत्वैः ब्रह्मवर्चसफलभाव्यकया सौर्ययागकरणिकया भावनयार्थद्वारेणानुषज्यते। इदमनेन तथा कुर्यादित्युपमानेनेतिकर्तव्यतानुषज्यते, न त्वनुमानेनेत्यर्थः। विध्यन्ताधिकरणे भाष्यकारेणाध्याहारात् व्यवहितकल्पना ज्यायसीत्युक्तत्वात्तदभिप्रायेणानुषज्यत इत्युक्तम्, सम्बध्यत इति वार्थः। उपमानेन धर्मप्राप्तौ नातिप्रसङ्ग इत्याह—**एवं चेदिति**। उपमानेन धर्मप्राप्त्यभ्युपगमे यत्र सादृश्यं तत्रैव धर्माः प्राप्यन्ते। यथा एकदेवताकत्वसादृश्यादौषधद्रव्यत्वसादृश्याच्चाग्नेयस्य विध्यन्तः सौर्ये प्रवर्तते। एवमनेकदेवतेषु-अग्नीषोमीयस्यैन्द्राग्नादिषु विध्यन्तः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यामिक्षादिषु दैक्षपशौ च सान्नाय्यस्य, पश्वन्तरेषु दैक्षस्य, ऐकादशि-

## भाष्यसन्दर्भयोजिनी

**प्रकृतिवत्** इति सामान्यशब्दः-प्रकृतिवद् विकृतिः कर्तव्येति शब्दः परिगृहीतो वृत्तिकारैरित्यर्थः। एवं सर्वसामान्यशब्दप्रयोगे सत्यपि तत्र तत्र सूक्ष्मसूक्ष्मतरसूक्ष्मतमेनापि द्रव्यदेवतातद्गुणादीनन्विष्य विध्यन्तः कल्पनीयो भवतीत्याह-**सूक्ष्ममपीति**। एवमेकेनैवाधिकरणेन सर्वोऽप्यतिदेशव्यापारोऽभिहितः, तथापि विशेषप्रपञ्चनिरूपणाय कारणं दर्शयति-**शिष्यहितार्थमिति**। तदत्रायं प्राचीनः श्लोकः—

## भाष्यम्

विस्तीर्य हि महज्जालमृषिः सङ्क्षिप्य चाब्रवीत् ।
इष्टं हि विदुषां लोके समासव्याससधारणम् ।। इति ।। २ ।।

इति सादृश्यविशेषेण धर्मातिदेशाधिकरणम् ।। २ ।।

## टुप्टीका

एवञ्चेद्यत्र सादृश्यं तत्र धर्माः प्राप्यन्ते। असति सादृश्ये नास्ति धर्मप्राप्तिः। ननु चैवमाकाङ्क्षाया-मुत्पन्नायामितिकर्तव्यता सन्निधाने नास्ति। तस्माद् भ्रान्तिराकाङ्क्षेति। तदासौ भ्रान्तो भवति। न, प्रकृता-वप्याकाङ्क्षासद्भावे इतिकर्तव्यतासम्बन्धः। एवञ्चेत्प्रकृतिविकृत्योर्न कश्चिद्विशेषः ॥ २ ॥

## वार्तिकाभरणम्

नेषु सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अव्यक्तेषु सोमस्याहर्गणेषु सत्रेष्वहीनेषु च द्वादशाहस्य, संवत्सरा-दिषु गवामयनस्येत्यादि तत्तत्सादृश्याद्विशेषातिदेश इति द्रष्टव्यम्। नन्वेवं तर्हि-उक्तन्यायेन सर्वस्यैव विशेषातिदेशस्य सिद्धेरुत्तरग्रन्थो व्यर्थ इति चेदुच्यते—उत्तरग्रन्थस्तु शिष्यहितार्थं इति नानुपपत्तिः। भाष्यकारेण लोके समासव्याससाधारणमिति पूर्वाचार्यश्लोकोऽपि संमतित्वेनोदाहृतः। ननु प्रकृतावेवेतिकर्तव्यताकाङ्क्षा परमार्थिकी, सन्निधावितिकर्तव्यताम्नानात्। विकृतावुत्पन्नाऽपीतिकर्तव्यताकाङ्क्षा न पारमार्थिकी। विकृतिसन्निधाविति-कर्तव्याताम्नानाभावात्। तस्मात्सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादावुत्पन्नापीतिकर्तव्यताकाङ्क्षा भ्रान्त्या सञ्जाता। तस्माद्विशेषातिदेशमूलभूताकाङ्क्षोच्छेदात्कथं लिङ्गाद्विशेषातिदेशसिद्धिरिति शङ्कते—**नन्विति**। सौर्यादावितिकर्तव्यताकाङ्क्षायामुत्पन्नायामपि यतः सौर्ययागसन्निधावितिकर्तव्यता नास्ति इतिकर्तव्यतानाम्नाता भवति, तस्मादुत्पन्नाप्येषाऽऽकाङ्क्षा भ्रान्त्या भवति। भ्रान्तिमूला भवतीत्यक्षरार्थः। सौर्यं चरुं निर्वपेद्ब्रह्मवर्चस-काम इत्यत्र उत्पन्नापीतिकर्तव्यताकाङ्क्षा ने भ्रान्तिमूला भवतीति। परिहरति—**नेति**। ननु प्रकृतिविकृत्योराम्ना-नानाम्नानाभ्यां वैषम्यस्य स्फुटत्वात्कथं प्रकृतिवदेव विकृतावप्युत्पन्नेतिकर्तव्यताकाङ्क्षा न भ्रान्तिमूलेत्युक्त-मित्याशङ्कायां प्रकृतिविकृत्योः वैषम्यं नास्तीत्युपपादयति—**प्रकृतावपीति**। स्यादेतदेवं, यदि प्रकृतौ धर्माम्नान-निबन्धनेतिकर्तव्यताकाङ्क्षा, न त्वेवमस्ति किन्तु भावनास्वभावकृताविकृतावपि भावनायाः सद्भावाकाङ्क्षा तुल्या, सस्यामाकाङ्क्षायामतिदेशेनानीतेतिकर्तव्यता विकृतिभावनया सम्बध्यते। एवञ्चेत् प्रकृतिविकृत्योः न कश्चिद्विशेषः। उभयत्रापि भावनास्वभावकृताकाङ्क्षायाः तुल्यत्वादित्यर्थः। ननु विध्यन्ताधिकरणे 'न हीति-कर्तव्यताशून्यं करणमस्तो'ति न्यायादेव सौर्यादावितिकर्तव्यतासामान्ये प्राप्ते सा चेतिकर्तव्यता न लौकिकी, किन्तु वैदिकी, इयं चोपमानादेव सिध्यतीत्युपमानेन धर्मप्राप्तेर्व्यवस्थापितत्वेनानुमानेन धर्मप्राप्तेर्दूषितप्राय-त्वात्कथमिदानीमनुमानेन धर्मप्राप्तिमाशङ्क्योपमानेन धर्मप्राप्तिरिति व्यवस्थाप्यत इति चेदुच्यते—अनुमानेन

## भाष्यसन्दर्भयोजिनी

अतिदेशव्यापाररूपं महज्जालं प्रसार्य संक्षेपेण विस्तरेण च तत्स्वरूपं प्रादर्शयदृषिः जैमिनिः। अर्थान्तरन्यासेन घटयति-हि यस्मात्कारणात् लोके विद्वांसः पदार्थान् समासेन-समष्ट्या व्यासेन व्यष्ट्या च धारयितुमिच्छन्ति ॥ २ ॥

इति सादृश्यविशेषेण धर्मातिदेशाधिकरणम् ॥ २ ॥

भाष्यम्

३

# प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिस्स्यात् ॥८.१.३॥

**विषयः**

**'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रूयते ।**

## वार्तिकाभरणम्

वैदिकेतिकर्तव्यता सौर्यादौ प्रापयितुं न शक्यते । गणयागादौ व्यभिचारादित्याद्यनुमानविषयदूषणस्य [1]स्फुटत्वात्तदानादृत्य विध्यन्ताधिकरणे उपमानेन धर्मप्राप्तिमात्रं व्यवस्थापितम् । इह चानुमानेन । एतस्माद्विशेषादेतस्मिन्विशेषे धर्मा भवन्तीत्येवं विशेषरूपधर्मप्राप्तिः वक्तुं शक्येतेति प्रसङ्गादित्येतद्द्योतयितुं पुनरनुमानेन धर्मप्राप्तिमाशङ्क्योपमानेन धर्मप्राप्तिर्व्यवस्थाप्यत इति न गतार्थता । ननु वैदिकेतिकर्तव्यता वैदिके सौर्यादौ प्रवर्तत इति सामान्यातिदेशे सिद्धे एतस्माद्वैदिकादाग्नेयादिरूपादेतस्मिन्स वैदिके सौर्यादिरूपे धर्मा भवन्तीति विशेषातिदेशः सिध्यति नान्यथा । यदि चानुमानात्सामान्यातिदेश एव न सिध्येत् कुतस्तरां विशेषातिदेशः सिध्यतीति चेदुच्यते—[2]अनुमानात्सामान्यातिदेशविध्यभावेऽप्युपमानेन सामान्यातिदेशसिद्धेस्तदुपजीवको विशेषातिदेशोऽनुमानात्प्रवर्ततामित्याशङ्क्य तथासत्यतिप्रसङ्गः स्यादित्युक्तम् इति न गतार्थतापि । वस्तुतस्तु वैदिकेऽर्थे व्याप्त्यादिनिश्चायकप्रमाणाभावादनुमानेन धर्मप्राप्तिरस्त्विति [3]आशङ्काया उत्थितिरेव नास्ति, तथाप्यनुमानाभ्युपगमेऽपि भूयानतिप्रसङ्गः स्यादिति द्योतयितुमाशङ्क्य परिहृतमिति ध्येयम् । ननु विध्यन्ताधिकरणे उपमानेन धर्मप्राप्तिव्यवस्थापने अधिकरणादौ नाम्नातिदेशोऽभिहितः । इदानीमानुमानिकेनातिदेश उच्यत इति प्रतिज्ञातमनुपपन्नं स्यादिति चेन्न; अनुमानशब्दस्यानु पश्चान्मानं प्रमाणमित्यर्थकत्वेन, उपमानशब्दस्य ज्येष्ठभूतप्रत्यक्षप्रमाणानन्तरप्रमाणपरत्वादानुमानिकेनोपमानसम्बन्धिना वचनेनातिदेश उच्यत इत्येवमर्थकत्वेन प्रतिज्ञानुपपत्त्यभावात् । वक्ष्यन्ति चाचार्या दशमाद्ये टुप्टीकामीमांसावार्तिके-सौर्य उपमानेनाग्नेयविध्यन्तं गृह्णातीति । तस्मादुपमानेन धर्मप्राप्तिरिति सर्वमनवद्यम् ॥ २ ॥

प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिस्स्यात् ।

'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति श्रूयते । तत्र संशयः किं तत्र दार्शपूर्णमासिको विध्यन्तः प्रवर्तते ?

## तन्त्रशिखामणिः

सू० प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिस्स्यात् ॥

न सदृशादेव कर्मणो धर्मातिदेश इति नियमः, क्वचिदसदृशादपि तत्सम्भवादित्युत्थितेस्सङ्गतिः । सोमे

## भाष्यसन्दर्भयोजिनी

**विषयः**

पूर्वस्मिन्नधिकरणे सर्वमुक्तम्, शिष्यहितार्थमुत्तरः प्रपञ्चः' इति निर्दिशतो भाष्यकारस्यायमाशय उन्नेतुं शक्यते—यद् ऐष्टिकविकृतिष्वाग्नेयवदुपकृत्याग्नीषोमीयवदुपकृत्य दर्शवदुपकृत्य तत्तद्यागैः फलं सम्पादनीयमिति मार्गं प्रदर्शयन्नपि सौमिकविकृतिषु ज्योतिष्टोमवदुपकृत्येति न प्रदर्शितवान् इति हेतोः शिष्यस्य

१. स्पष्टत्वात् reads T. MSS. २. अनुमानेन reads T. MSS. ३. शङ्कोत्थितिरेव reads T. MSS.

## भाष्यम्

### संशयः

तत्र विध्यन्तं प्रति चिन्ता । कुतोऽस्मिन् विध्यन्तस्स्यादिति ?

### पूर्वपक्षः

तदुच्यते-प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिस्स्यात् । दार्शपूर्णमासिको विध्यन्तः सोमे स्यात् । कुतः ? प्रवृत्तत्वात् । दीक्षणीयादोष्टिषु दार्शपूर्णमासिको विध्यन्तः प्रवृत्तः—दीक्षणीयायाम् आतिथ्यायाम् प्रायणीयायाम् पशौ च । तदनन्तरं सोमः । तत्रापि स एव प्रवृत्त्या विज्ञायते । यथा देवदत्तो भोजयितव्यः विष्णुमित्रो भोजयितव्यः माठरः कौण्डिन्यो भारद्वाज इत्युत्तरेष्वपि भोजयितव्य इति प्रवृत्त्यानुबध्यते । तस्मादैष्टिकः सोमे विध्यन्तः ।।३।।

## वार्तिकाभरणम्

उत नेति, तत्र दीक्षणीयादिष्ववभृथपर्यन्तेष्विष्टिषु पशौ च दर्शपूर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्तते । सोमस्यापि तन्मध्यवर्तित्वात् तत्रापि स एव विध्यन्तः प्रवर्तते । एवञ्च तस्यैकशतं प्रयाजानूयाजा इति लिङ्गमुपपत्स्यते । तस्मादैष्टिकविध्यन्तः सोमे प्रवर्तत इति पूर्वपक्षः । सिद्धान्तसूत्रमाह—

## तन्त्रशिखामणिः

किमैष्टिकविध्यन्तः प्राप्नोति न वेति विशये दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु चैष्टिकविध्यन्तस्य प्रवृत्तेस्सोमेऽपि तन्मध्यवर्तिनि तत्प्रवृत्तिस्स्यात् । 'तस्यैकशतं प्रयाजानूयाजाः' इति प्रयाजादिलिङ्गदर्शनाच्च । तथा 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू तस्मात् स्रुचौ सौमिकीमाहुतिं····म तस्मान्न सोममाज्येनाभिघारयति' इति स्रुचोरभिघारणस्य च सोमे प्रतिषेधो दृश्यते । स च प्रसक्तौ सम्भवति । प्रसक्तिश्च दर्शपूर्णमासविकृतित्वे भवति । दर्शपूर्णमासयोर्हि हविराज्येनाभिघार्य स्रुचा हूयते । तस्मादैष्टिकविध्यन्तस्सोमे । न च

## भाष्यसन्दर्भयोजिनी

मनसि सौमिकविकृतयः केन विध्यन्तेनानुष्ठीयन्ताम् इति शङ्का समुदेत्विति । तामिमां शङ्कां दूरीकर्तुं ज्योतिष्टोमवाक्यमुदाहृत्य विचारं प्रवर्तयति—ज्योतिष्टोमे कस्य विध्यन्त इति ?

### संशयः

किमैष्टिकविध्यन्तः ? उतान्यो विध्यन्तोऽत्रास्तीति ।

### पूर्वपक्षः

ज्योतिष्टोमे पञ्चदिनसाध्ये प्रथमदिनप्रभृति चतुर्थदिनपर्यन्तं दीक्षणीयादय इष्टयः इष्टिविकृतिभूतोऽग्नीषोमीयपशुश्चानुष्ठीयन्ते । तामिमां स्थितिं विलोक्य शिष्यस्य शङ्का समुदेति—यदिष्टेर्विध्यन्तस्य सोमे प्रवृत्तिस्स्यादिति । प्रवृत्तत्वात् इति हेतोर्विवरणम्—दीक्षणीयादोष्टिष्विति । दिनचतुष्टयानन्तरं सोमस्य प्रवृत्तिः । तत्रापि सोमेऽपि स एव दार्शपूर्णमिसिक एव । प्रवृत्त्या इष्टीनां प्रवृत्त्या । अत्रैव दृष्टान्तः—यथेति पारिशेष्यान्माठरप्रभृतयो भोजयितव्या इति यथावगम्यते तथैव पारिशेष्यात्सोमेऽप्यैष्टिकविध्यन्तेनानुष्ठेय इति ।। ३ ।।

भाष्यम्

## लिङ्गदर्शनाच्च ॥८.१.४॥

'तस्यैकशतं प्रयाजानूयाजाः' इति चैष्टिका धर्मास्सोमे दृश्यन्ते । तस्माच्चास्मिन् ऐष्टिको विध्यन्तः ।।४।।

सिद्धान्तः

## कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥८.१.५॥

अपूर्वत्वमेव हि सोमे । स न कुतश्चिद्धर्मान् गृह्णाति । कुतः ? कृत्स्नविधानात् ।

टुप्टीका

अत्र सूत्रं भाष्यञ्चोभयमयुक्तम् । न ज्ञायते-कियत्येतिकर्तव्यतया निराकाङ्क्षीकृतो भवतीति । अथोच्यते-यस्य सन्निधाने एको द्वौ बहवो वा पदार्थास्समाम्नायन्ते तावत्या निराकाङ्क्षोभवति । एवं सत्युप-

वार्तिकाभरणम्

कृत्स्नविधानादपूर्वत्वम् इति सिद्धान्तसूत्रं तद्भाष्यञ्चायुक्तमित्याह—अत्रेति । अयुक्तत्वमेवोपपादयति—**न ज्ञायत इति** । इयत्येतिकर्तव्यतया भावना निराकाङ्क्षी भवतीति न ज्ञायते । तथा च ज्योतिष्टोमेतिकर्तव्यतायाः कृत्स्नविधानादपूर्वं ततश्च नातिदेश इति वक्तुं न शक्यते, इतिकर्तव्यतेयत्ताया अज्ञानात् । तस्मात्सूत्रं तद्भाष्यञ्चानुपपन्नमित्यर्थः । स्यादेतदेवम्, यद्यस्मिन्कर्मणीयती इतिकर्तव्यता अस्मिन्कर्मणीयतीति प्रमाणमस्ति, नत्वेवम्, किन्तु यस्य कर्मणः सन्निधाने एको द्वौ बहवो वा पदार्थास्समाम्नायन्ते तत्कर्म एकेन द्वाभ्यां बहुभिर्वा आम्नातपदार्थमात्रेण निराकाङ्क्षं सन्नातिदेशमपेक्षते । एवञ्च सोमेऽपि यावन्तः पदार्थाः समाम्नाताः तावद्भिरेव पदार्थैः सोऽपि निराकाङ्क्षः सन्न दार्शपूर्णमासिकविध्यन्तमपेक्षते । एवञ्च सूत्रं भाष्यं च नानुपपन्नमिति शङ्कते—**अथोच्यत इति** । एवं सति साङ्ग्रहणेष्ट्यादिषु अतिदेशो न स्यात् । उपहोमादीनां तत्सन्निधावाम्नातत्वेन तैरेव नैराकाङ्क्ष्यात् । तस्मात्सन्निध्याम्नातपदार्थमात्रेण न नैराकाङ्क्ष्यम् । ततश्च प्रकृतेऽपि नैराकाङ्क्ष्याभावात्सोमयागोऽप्यतिदेशमपेक्षत इति । परिहरति—**एवं सतीति** । उक्तशङ्कायामेव भाष्याभिमानिनः केचिदेवं परिहारं

तन्त्रशिखामणिः

सोमक्रयादीनां केषाञ्चिदङ्गानां तत्राप्याम्नानात् न सोमस्येतिकर्तव्यताकाङ्क्षेति नातिदेश इति वाच्यम् । तर्हि 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति साङ्ग्रहण्यामामनरूपाङ्गविधानान्नातिदेशस्स्यात् ।

भाष्यसन्दर्भयोजिनी

पूर्वपक्षी सोमे ऐष्टिकविध्यन्तप्रवृत्तौ लिङ्गं प्रमाणमुपस्थापयति—**तस्यैकशतमिति** । ऐष्टिकानां प्रयाजानामारादुपकारकाणामत्र सोमे दर्शनादैष्टिकविध्यन्त एव सोमे प्रवर्तत इत्यर्थः ।। ४ ।।

सिद्धान्तः

अपूर्वत्वमेवेति । 'सोमं क्रीणाति' 'सोमं पावयति' सोममभिषुणोति' इत्यादीनां बहूनां सन्निपत्योप-

## भाष्यम्

'इतिकर्तव्यता विधेर्यजतेः पूर्ववत्त्वम्, (जै. सू. ७.४.१) उक्तम्, विहितेतिकर्तव्यताकश्चायम्। तस्मादपूर्वः ॥५॥

## टुप्टीका

होमादिभिर्निराकाङ्क्षीकृतत्वादतिदेशो न प्राप्नोति। तत्रैवं वर्णयन्ति—यत्रैवमुपहोमाः प्रयाजानुयाजमध्ये श्रुतास्तत्सम्बद्धपदव्यवायेऽपि कथम्भावनियन्त्रिता एव गृह्यन्ते। एवं वर्ण्यमाने यत्रापूर्वमङ्गं प्रकृतेनासम्बद्धं श्रूयते तत्र तेनैव निराकाङ्क्षीभवति। कृत्स्नविधानताकृतत्वादतिदेशो न प्राप्नोति, न चेष्यते।

तस्मादन्यथा वर्ण्यते। कथमित्याकाङ्क्षायां यत्र सन्निधावाम्नानं निराकाङ्क्षीकरणक्षमम् तत्र तेनैव निराकाङ्क्षत्वाद् भवति कृत्स्नविधानता। इह तु सन्निपत्योपकारकाः सर्वं आम्नायमाना निराकाङ्क्षी-

## वार्तिकाभरणम्

वर्णयन्तीत्याह—तत्रैवमिति। परिहारमेवोपपादयति—उपहोमा इति। प्राकृतानां प्रयाजानूयाजानां मध्ये 'आमनमस्यामनमस्यदेवा इति तिस्र आहुतार्जुहोती'त्युपहोमाः समाम्नाताः। तस्मात्प्रयाजसम्बन्धिभिरुपहोमैः व्यवायान्मिश्रितत्वात्तेऽपि प्रयाजादयः साङ्ग्रहण्यां कथंभावाकाङ्क्षायामुपरिपतन्त एव गृह्यन्ते इत्यतिदेशः सिध्यतीत्यर्थः। दूषयति—एवं वर्ण्यमान इति। यत्र विकृतिविशेषे प्राकृतेनाङ्गेनासम्बद्धमपूर्वमङ्गं श्रूयते तत्र तेनैव प्राकृतासम्बद्धेनापूर्वाङ्गेन नैराकाङ्क्ष्यादतिदेशो न स्यादित्यर्थः। सूत्रं भाष्यञ्च समाधातुं तयोः प्रकारान्तरेणार्थमाह—तस्मादिति। यत्र कर्मविशेषे फलांशेन करणांशेन च निराकाङ्क्षे कथं कर्तव्यमितीतिकर्तव्यताकाङ्क्षायां सन्निधावाम्नातं पदार्थजातं निराकाङ्क्षीकरणक्षमं, तत्र कर्मविशेषे तेनैव निराकाङ्क्षीकरणसमर्थेन पदार्थजातेनेतिकर्तव्यताया निराकाङ्क्षत्वात्कुतश्चिदितिकर्तव्यतां नाकाङ्क्षतीति भवति कृत्स्नविधानतेत्यर्थः। तथा च प्रकृते किमायातमित्यत आह—इह त्विति, सोमेत्वाम्नायमानाः सर्वे पदार्थाः निराकाङ्क्षीकरणक्षमाः, सन्निपत्योपकारकत्वात्। एवञ्च सोमसन्निधावाम्नातपदार्थजातस्य सन्निपत्योपकारकत्वेन निराकाङ्क्षीकरण-

## तन्त्रशिखामणिः

यस्त्वत्र प्राकृतानां प्रयाजनुयाजादीनां मध्ये श्रुता उपहोमा यदा कथम्भावाकाङ्क्षया गृह्यन्ते तदा त····? कृत्वात् ? प्रयाजादयोऽपि साङ्ग्रहण्या गृह्यन्त इति परैरुक्तम्, तन्न; यत्र विकृतावपूर्वमङ्गं प्राकृताङ्गसन्दष्टमेव

## भाष्यसन्दर्भयोजिनी

कारकाणामङ्गानामत्र विधानात्सोमो न पूर्ववान् किन्त्वपूर्व एवेत्यर्थः। स नेति। नेदं भाष्यं प्रकृतेर्लक्षणावबोधकम्—विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति, किन्तु सकलाङ्गपौष्कल्यं यत्र तत्र प्रकृतिशब्दव्यवहार इत्येवंबोधनाय प्रवृत्तमिति बोध्यम्।

तदेवाह—कृत्स्नविधानमिति। इतिकर्तव्यतेति। सप्तमाध्यायचतुर्थचरणसूत्रमिदम्। यत्र सौर्यादौ इतिकर्तव्यताया अविधानम् तत्र यजतेः पूर्ववत्त्वं दर्शपूर्णमासप्रकृतिकत्वमुक्तमित्यर्थः। अयम् ज्योतिष्टोमः। इतिकर्तव्यता अत्र विहिता इत्ययमपूर्वस्सोमयागः ॥ ५ ॥

## टुप्टीका

करणसमर्थाः। उपहोमादिषु सन्निपत्योपकारकारकाभावात्कृत्स्नविधानता नास्ति। तस्मात्तत्राकाङ्क्षा सन्निवर्तते। अथवा सादृश्येन विध्यन्तो नियम्यते। न च सोमस्य दर्शपूर्णमासाभ्यां सादृश्यम्, अव्यक्तचोदनत्वात्। ननूत्पत्तिवाक्ये 'सोमेन यजेत' इत्यव्यक्तचोदनः, प्रयोगवाक्ये तु देवतानां विद्यमानत्वाद् व्यक्तचोदनः।

उच्यते—ग्रहणे देवताश्रयणं न यागे। प्रसङ्गात्तु यागं निर्वर्तयति, न तु तासां यागं प्रति तादर्थ्ये प्रमाणमस्ति। कथम्? क्रत्वर्थेन ग्रहणेन देवतास्संयुक्ताः, ता यागमभिलषन्ति। यागोऽपि देवताभिलाषी।

## वार्तिकाभरणम्

समर्थत्वात् तत्र सम्भवति कृत्स्नविधानता। कृत्स्नविधानादेव नातिदेशेन धर्मापेक्षेत्यर्थः। ननु तर्हि कृत्स्नविधानता कुत्र नास्तीत्यपेक्षायां तदेवोपपादयति—**उपहोमादिष्विति**। साङ्ग्रहण्यादि सन्निध्याम्नातोपहोमादिषु सन्निपत्योपकारकत्वाभावान्निराकाङ्क्षीकरणक्षमत्वं नास्ति, नैराकाङ्क्ष्याभावादेवातिदेशेन धर्माकाङ्क्षास्ति। ततश्च कृत्स्नविधानता नास्ति। कृत्स्नविधानाभावात्तत्र साङ्ग्रहण्यादावतिदेशेन धर्माकाङ्क्षा न निवर्तते। इतिकर्तव्यताकाङ्क्षाशान्तेरभावादित्यर्थः। नैराकाङ्क्ष्यादतिदेशो न सिध्यतीत्युक्त्वा प्रकारान्तरेणातिदेशो न सिध्यतीत्याह—**अथवेति**। सौर्यादौ सत्यामितिकर्तव्यताकाङ्क्षायां सादृश्येन दार्शपौर्णमासिकविध्यन्तो नियम्यते तेन प्रमाणान्तरेण सत्यपि सादृश्ये निराकाङ्क्षे कर्मणि विध्यन्तो न प्रवर्तते। किं वक्तव्यं आकाङ्क्षा सादृश्याभाववति सोमे। तस्मात्तत्र दर्शपूर्णमासाभ्यां सह सादृश्याभावादपि नास्त्यैष्टिकविध्यन्तप्राप्तिरित्यर्थः। कथं सादृश्यं नास्तीत्यपेक्षायां तदेवोपपादयति **न चेति**। 'यदाग्नेयोऽष्टाकपाल' इत्यादिवाक्यविहितस्य दर्शपूर्णमासयागस्य श्रूयमाणद्रव्यदेवताकत्वेन व्यक्तचोदनत्वात् 'सोमेन यजेते'ति वाक्यविहितयागस्याश्रूयमाणदेवताकत्वेनाव्यक्तचोदनत्वादनयोः सादृश्यं नास्तीत्यर्थः। ननु 'सोमेन यजेते' त्युत्पत्तिवाक्येन विहितस्य यागस्य श्रुतद्रव्यकत्वेऽप्यश्रूयमाणदेवताकत्वादव्यक्तचोदनः सोमयागः, तथापि प्रयोगवाक्ये प्रकरणप्राप्तानां इन्द्रवाय्वादिदेवतानां विद्यमानत्वाद् व्यक्तचोदन एव सोमयाग इति शङ्कते **नन्विति**। अतएव सोमो ह्यव्यक्तचोदनः ज्योतिष्टोमेन यजेतेति। ननु सोमेन यजेतेत्येषा व्यक्तचोदना, तथापि देवताभावादव्यक्ततेत्यनुपदमेव भाष्यकारोऽपि वक्ष्यति 'अव्यक्तासु तु सोमस्ये'त्यधिकरणे। स्यादेतदेवम्, यदि प्रकरणपठिते यागविधायके वाक्यान्तरे देवताः श्रूयेरन्। न त्वेवम्। किन्तु 'ऐंद्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाती'त्यादि वाक्येषु ग्रहणविधायकेषु परदेवताः श्रूयन्ते, न यागविधायके। तथा च देवताश्रवणाभावादव्यक्तचोदनः सोमयाग इति परिहरति-उच्यत इति। नन्वेवं तर्हि सोमयागे देवताभावात्सोमयाग एव न सिध्येदित्यत आह—**प्रसङ्गादिति**। ग्रहणार्थत्वेन श्रुता देवताः प्रसङ्गाद्यागं निर्वर्तयन्ति। नहि तावता तासां यागार्थत्वं प्रमाणाभावादित्यर्थः। कथं पुनरन्यार्था देवताः प्रसङ्गाद्यागं निर्वर्तयन्तीति पृच्छति—**कथमिति**। उत्तरमाह—**क्रत्वर्थेनेति**। यत् क्रत्वर्थं ग्रहणं तेन देवताः संयुक्ताः। ताश्च ग्रहणसंयुक्ता देवता यागमभिलषन्ति। यागाभावे ह्येषां देवतात्वानिर्वाहाद्यागोऽप्यभिलषति देवताः। अभिलषितयोश्च देवतायागयोः नष्टाश्वदग्धरथन्यायेनार्थसम्बन्धो भविष्यति। सति देवतासम्बन्धे योगोऽपि सिध्यतीत्यर्थः। यागोऽपीत्यत्राभिलषतीति पदं विपरिणतमनुषज्यते। ननु देवतानां यागार्थत्वस्य वाक्यान्तरेण प्रागसिद्धत्वात्कथं यागस्य देवतासम्बन्ध इत्यत आह—**याग इति**। यागः सोमद्रव्यं गृह्णन् 'ऐन्द्रवायवं गृह्णाती'त्यादिवाक्येषु ऐन्द्रवायवमित्यादितद्धितेन द्रव्यदेवतासम्बन्धस्य सिद्धत्वात् द्रव्याश्रितां देवतां स्वस्य यागत्वसिद्धये गृह्णाति। तथा चान्यार्थं श्रुतदेवतासम्बन्धस्यार्थाद्यागेऽपि सिद्धत्वाद्यागः सिध्यतीत्यर्थः। सादृश्याभावस्थलेऽप्यार्थिकसम्बन्धोऽस्तीत्येतत्

## टुप्टीका

तयोस्सम्बन्धोऽर्थाद् भविष्यति। यागोऽपि द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति। यथा प्रणयनं क्रत्वर्थमात्मनिर्वर्तकं साधनमपेक्षमाणं गोदोहनं पुरुषार्थं गृह्णाति। गोदोहनमपि पुरुषार्थं सदाश्रयमपेक्षमाणं प्रणयनं प्रसक्तं गृह्णाति। यथा तत्सम्बन्ध एवमिहापि। तस्मात्तादर्थ्याद्देवताभावः। एवञ्चेदव्यक्तचोदनः। अत आह सूत्रकारः—'अव्यक्तासु तु सोमस्य' (जै. सू. ८.१.१६) इति। ननूपांशुयाजस्योत्पत्तिवाक्ये देवताभावादव्यक्तता, उच्यते—मन्त्रवर्णात्तत्र देवतायास्तादर्थ्याद् व्यक्तचोदनः। अतस्सादृश्याभावादपूर्वः कृत्स्नविधानादिति। यदाम्नायते धर्मजातं तेन निराकाङ्क्षत्वादर्थप्राप्तं न गृह्णाति ॥५॥

## वार्तिकाभरणम्

दृष्टान्तपूर्वकमुपपादयति—यथेति। यथात्रैतयोर्बुद्धिसन्निहितयोस्तयोर्विषययोरर्थात्सम्बन्धः, एवमिहापि प्रकृतेऽपीत्यर्थः। अयमर्थः-यथा तत्प्रणयनं क्रत्वर्थं साधनमपेक्षमाणं गोदोहनं पुरुषार्थमपि प्रसङ्गाद्गृह्णाति गोदोहनं पुरुषार्थमाश्रयमपेक्षमाणं क्रत्वर्थमपि प्रसङ्गाद्गृह्णाति, एवं प्रकृतेऽपि फलार्थत्वेन श्रुतस्य यागस्य द्रव्यार्थतया श्रुताभिः देवताभिः परस्परं यागत्वदेवतार्थत्वनिर्वाहार्थमाकाङ्क्षायां प्रसङ्गादार्थिकः सम्बन्ध इति। उपसंहरति—तस्मादिति। परस्परसम्बन्धाद्यागसिद्धावपि देवताया यागार्थत्वाभावात् 'सोमेन यजेत' त्युपत्तिवाक्ये देवताभावः। देवताभावाच्चाव्यक्तचोदनः सोमयाग इत्यर्थः। ननु प्रसङ्गाद्यागस्य देवतान्वयसम्भवात्कथमव्यक्तचोदनत्वमित्यत आह—एवञ्चेदिति। नहि देवताया अन्वयमात्रेण यागस्य व्यक्तचोदनत्वम् येन सादृश्यात्सोमेऽप्यैष्टिकविध्यतः प्रवर्तेत, किन्तु स्वार्थदेवतावैधुर्यमेवाव्यक्तत्वम्। तच्च सोमयागेऽस्तीति नैष्टिकविध्यन्त इत्यर्थः। सोमयागे देवतायाः तादर्थ्येन विधानं नास्तीत्यभिप्रायेणैव 'अव्यक्तासु तु सोमस्ये'ति सोमयागस्याव्यक्तचोदनत्वमुक्तवान्भगवाञ्जैमिनिरिति तत्संमतिमाह—अत आहेति। सूत्रकार इति शेषः। ननु 'उपांशुयाजमन्तरा यजती'त्युपांशुयाजोत्पत्तिवाक्ये देवताश्रवणाभावादुपांशुयाजोऽप्यव्यक्तचोदनस्स्यात्। ततश्चाव्यक्तचोदनत्वसामान्यात्तत्प्रकृतिः सोमस्यादिति शङ्कते—नन्विति। उत्पत्तिवाक्ये देवताश्रवणाभावेऽपि 'इदं विष्णुर्विचक्रमे त्रेधा' इत्यादियाज्यापुरोनुवाक्यारूपमन्त्रवर्णेन विष्ण्वादिदेवतानां तादर्थ्येनोपांशुयाजे प्राप्तत्वेन देवतालाभादुपांशुयाजो नाव्यक्तचोदन इत्यर्थः। उक्तमर्थमुपसंहरति—अत इति। उक्तरीत्योपांशुयाजस्याव्यक्तचोदनत्वलक्षणसादृश्याभावादपूर्वत्वं सोमयागस्य, न तु तयोर्मिथः प्रकृतिविकारभाव इत्यर्थः। कृत्स्नविधानादपुर्वत्वमिति सूत्रस्य स्वसिद्धान्तानुसारेणार्थं वक्तुं तत्सूत्रं प्रतीकतः पठति—कृत्स्नविधानादिति। यदिति। सोमसन्निधौ यद्धर्मजातं निराकाङ्क्षीकरणसमर्थं सन्निपत्योपकारक समाम्नायते तेन धर्मजातेन निराकाङ्क्षत्वादर्थप्राप्तमैष्टिकविध्न्तं सोमयागो न गृह्णातीत्यर्थः। प्रयाजादिदर्शनन्तु सोमाङ्गभूतदीक्षणीयाद्यभिप्रायकम्। यद्यप्यग्निहोत्रे दर्शपूर्णमासयोश्च यथा दोहनावघतादीनि दृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थान्याम्नातानि, तथैव ज्योतिष्टोमे च तादृशाङ्गानामाम्नातत्वात् तैश्च ज्योतिष्टोमस्य नैराकाङ्क्ष्यादाकाङ्क्षाधीनातिदेशस्य प्रसक्तिर्नास्ति। आकाङ्क्षाभ्युपगमेऽपि व्यक्तचोदनाभ्यां दर्शपूर्णमासभ्यां सोमस्याव्यक्तचोदनस्य विसदृशत्वेन चोदनालिङ्गसामान्याभावान्नास्त्यतिदेशः। तथा च विध्यन्तोऽस्ति न वेति विचारानवकाशः तथापि तथा चोदनालिङ्गसामान्यस्य कर्मविशेषगतविध्यन्तोपस्थापकतयाऽतिदेशहेतुत्वम् तथा आदौ दीक्षणीया, अनन्तरं प्रायणीया तदनन्तरमातिथ्या, तदनन्तरञ्च पशुः। तत्र सर्वत्रापि दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। तदनन्तरञ्च सोमः। दक्षिणीयादिष्वैष्टिकविध्यन्तस्य प्रवृत्तत्वादैष्टिकविध्यन्तप्रवृत्तेरुपस्थापकतया तस्याः सोमेऽप्यतिदेशहेतुत्वमस्तीत्ये तादृशम्याधिकाशङ्कानिराकरणार्थमिदमधिकरणमिति द्रष्टव्यम् ॥५॥

भाष्यम्

## स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥८.१.६॥

स्रुगभिघारणस्य चाभावानुवादस्सोमे भवति। 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू तस्मात्स्रुचि सोमहविर्नासाद्यते न सोममाज्येनाभिघारयती'ति (तै. सं. ६.२.२.७. मै. सं. ३८.२)। तदुपपद्यते यद्यपूर्वः सोमः। अथ दर्शपूर्णमासप्रकृतिस्स्यात् आज्येनाभिघार्य स्रुग्भ्यां हूयेत। तत्रैतद्दर्शनं नोपपद्यते। तस्मादपूर्वः ॥६॥

## विधिरिति चेत् ॥८.१.७॥

इति चेत्पश्यसि स्रुगभिधारणाभावानुवाददर्शनादपूर्वस्सोम इति, अथ कस्माद्दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिर्न भवतीति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥७॥

तन्त्रशिखामणिः

विहितम्, तत्रातिदेशेन स्यात् कतिपयाङ्गोपदेशेऽपि साङ्ग्रहणीवदाकाङ्क्षाशान्त्यभावात् सोमेऽप्यैष्टिकविध्यन्तस्स्यात्। न च विनिगमनाविरहः, लिङ्गदर्शनस्य विनिगमकस्योक्तत्वादिति प्राप्ते,

ब्रूमः—सोमक्रयाभिषवादीनां सन्निपातिनामङ्गानां कात्स्न्येनोपदेशात् सोमस्य नेतिकर्तव्यताकाङ्क्षेति नातिदेशः। साङ्ग्रहण्यान्तु तदभावादस्ति तदाकाङ्क्षेत्यतिदेशः, सन्निपातिपौष्कल्येऽप्यतिदेशः दर्शपूर्णमासयोरपि सोमाग्निहोत्रधर्मातिदेशस्स्यात्। न च निराकाङ्क्षत्वेऽपि लिङ्गदर्शनाद्धर्मप्रवृत्तिस्स्यादित्युक्तमिति वाच्यम्। 'तस्यैकशतं प्रयाजानुयाजा' इति दर्शनं 'वाजपेयस्य यूपः' इति वत् परम्परासम्बन्धेऽपि षष्ठ्युपपत्तेर्नान्यथासिद्धम्। स्रुगादिप्रतिषेधश्च नित्यानुवादः। 'अंशुरंशुस्ते देव सोमाप्यायतामिति' मन्त्रे विधिशेषत्वेनार्थवादतया विधित्वासम्भवात्। अत एवोत्पत्तिवाक्यानवगतदेवताकत्वरूपाव्यक्तचोदनासामान्यादुक्तलिङ्गोपोद्बलितादुपांशुयाजधर्मा-

भाष्यसन्दर्भयोजिनी

दर्शपूर्णमासयोः वेद्यां हविरासादनम् आसादितस्य हविषोऽभिघारणम्, जुह्वां हविषोऽवदानपुरस्सरं निक्षेपणम् पुनरभिघारणं तदनन्तरं होम इत्येवमनुष्ठानप्रकारः। सोमे 'सोमहविर्नासाद्यते न सोममाज्येनाभिघारयति' इत्यादि वाक्यैः दार्शपूर्णमासिकप्रकारो निषिध्यते। निषेधबलादवगम्यते यद् दार्शपूर्णमासिकविध्यन्त एव सोमस्येत्यत आह—स्रुगभिघारणस्य चेति। अत्र च सोमरसो ग्रहैश्चमसैश्च हूयते। स्रुचोऽत्र प्रसक्तिरेव नास्तीति तदभिघारणं कथं प्रसज्येतेति नित्यानुवादोऽयमित्याह—अभावानुवाद इति।

यदि दर्शपूर्णमासप्रकृतिकस्सोमस्स्यात् तर्हि सोममाज्येनाभिघार्य स्रुग्भ्यां तस्य होमः क्रियेत, तदा निषेधवचनोपपत्तिर्न स्यादित्याह—अथेति। तस्मादपूर्वस्सोमः ॥६॥

पूर्वपक्षिणा कृतामेवाशङ्कां सूत्रारूढतया परिचोदयति—इति चेत्पश्यसीति। स्पष्टोऽर्थः ॥७॥

### भाष्यम्

## न वाक्यशेषत्वात् ॥८.१.८॥

नायं विधिः। कस्मात्? वाक्यशेषत्वात्। अन्योऽत्र विधिराम्नातः। यदाह—'अंशुरंशुस्ते देव सोमाप्यायताम्' (तै. सं. १.२.११.१) इति। तस्य वाक्यशेषोऽयम्। कथं ज्ञायते? तेनाकाङ्क्षितत्वात्। अवधिपूर्वा एतत्सोमं यदभिषुण्वन्ति, यदस्य स्रुचौ बाहू कुर्वन्ति। यच्चाज्यमन्तिकमकार्षुः यदाह—'अंशुरंशुस्ते देव सोमाप्यायतामिति। 'यदेवास्याघ्नन्तं क्षुरमकुर्वंस्तदाप्यायन्तीति।' यद्ययमपि विधिस्स्याद् वाक्यं भिद्येत तस्मान्न विधिः ॥८॥

## शङ्कते चानुपोषणात् ॥८.१.९॥

सोमे शङ्कते—'यदनुपोष्य प्रयायाद् ग्रीवबद्धमेनममुष्मिल्लोके नेनीयेरन्निति।' दार्शपूर्णमासिके विध्यन्ते सति नियतमुपोषणं स्यात्। तदानुपोषणशङ्का न युज्यते। अपूर्वत्वे तु

### तन्त्रशिखामणिः

स्सोमेऽतिदिश्येरन्नित्यपास्तम्। सोमस्य निराकाङ्क्षत्वाल्लिङ्गस्यान्यथासिद्धत्वाच्च। किञ्चाव्यक्तत्वं नाम नोत्पत्तिवाक्यानवगतदेवताकत्वम्, तथासत्याग्निहोत्रस्यापि तथात्वेन विश्वजिदादिषु तद्धर्मातिदेशापत्तेः, किन्तु स्वार्थत्वेनावगतदेवताकत्वराहित्यम्। तच्च नाग्निहोत्रोपांशुयाजयोः, तयोर्मन्त्रवर्णाद्देवतायास्तादर्थ्याविगमात्। न चैवं सोमे स्वार्थदेवताभावे कथं यागनिर्वृत्तिरिति वाच्यम्। 'ऐन्द्रवायवं गृह्णाति' इति क्रत्वर्थत्वेन ग्रहणेन संयुक्ता

### भाष्यसन्दर्भयोजिनी

उत्तरयति—नायं विधिरिति। वाक्यशेषत्वात् अर्थवादत्वात्। नन्वर्थवादत्वसिद्धये विधेरावश्यकतेत्यत आह—अन्योऽत्र विधिरिति। विधिमुपदर्शयति—'अंशुरंशुस्त' इति। अत्रायं सन्दर्भविवेकः—आतिथ्येष्ट्यवसरे सोमो राजा प्राग्वंशे बद्ध्वावस्थाप्यते। बन्धनोपद्रवपरिहारायाप्यायनाद्युपचारः क्रियते। तत्रायं मन्त्रो विनियुक्तः—'अंशुरंशुस्ते' (तै. सं. १.२.११.१) इति। अस्य मन्त्रस्य विनियोजकं ब्राह्मणं (तै. सं. ६.२.२) 'घृतं वै देवा' इत्यस्ति। मन्त्रस्यायमर्थः—हे सोम ते अंशुः सूक्ष्मोऽवयवो बन्धनादिना शुष्यति क्षीयते च स सर्वोऽपि मदन्तोभिः—तप्ताभिरद्भिः आप्यायताम्-वर्धताम् इति। ब्राह्मणभागस्यायमर्थः—कदाचिद्देवा घृतं स्वसामर्थ्येन वज्रं कृत्वा सोममघ्नन्, तेन च सोमो भीतोऽभवत्। अतोऽयं भयादाप्याययितव्य इति स्रुगभिधारणस्य हविरभिधारणस्य च प्रतिषेधः प्रवृत्तः। अतस्तदेकवाक्यतापन्नत्वमस्येति। अतः बाहू स्रुचौ कृत्वा अन्तिके च तानूनाप्त्रं घृतं निक्षिप्य सोममभिषुण्वन्ति इति। अत इदं सर्वमाप्यायनविधिशेषभूतमित्यर्थः। अस्यापि विधित्वे वाक्यभेदस्स्यादित्याह—यद्ययमपीति ॥ ८ ॥

अत्रार्थेऽन्यदपि प्रमाणं दर्शयति—सोम इति। यदनुपोष्येति। दर्शपूर्णमासयोः प्रस्तरप्रहरणानन्तरं वेद्यामास्तीर्णानां बर्हिषामपि प्रहरणं विहितम्। यथैव सोमेऽप्यन्ते वेदिदाहः—(वेद्यामास्तीर्णानामोषधीनां दाहो) विहितः। तस्यायमर्थवादः—यदनुपोष्येति। अदग्ध्वेत्यर्थः। प्रयायात्-गच्छेत् तर्हि ग्रीवे-गले बध्वा एनं यजमानं नेनीयेरन्—नयेयुः। अतो दाहः कर्तव्य इत्यर्थः। यदि दार्शपूर्णमासिकविध्यन्तोऽत्र प्राप्नुयात्तर्हि 'अनुपोष्य'

### भाष्यम्

प्रागुपोषणविधानादुपोष्यानुपोष्य वा प्रयायात् । तत्रानुपोषणशङ्का युज्यते । तस्मादपूर्वः ॥९॥

## दर्शनमैष्टिकानां स्यात् ॥८.१.१०॥

यच्च प्रयाजानूयाजानां दर्शनं लिङ्गत्वेनोपदिष्टं 'तस्यैकशतं प्रयाजानूयाजा' इति, तद्दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानूयाजास्तेषां समुच्चयवचनम् । किं कारणम्? सोमस्यापूर्वत्वात् । तेषाञ्च तावतां तत्राभावात् । अङ्गाङ्गमपि च तस्येति शक्यते वक्तुम्, यथा 'वाजयेयस्य यूपः' इति । तस्मादपूर्वस्सोमः ॥१०॥

इति सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥३॥

### तन्त्रशिखामणिः

देवता यागमभिलषति त्यज्यमानद्रव्योद्देश्यत्वमन्तरेण देवतात्वानिर्वाहात् । यागश्च देवतामभिलषति देवतोद्देश्यकद्रव्यत्यागात्मकस्य यागस्य देवतामन्तरेणानिर्वाहात् । अत उभयकाङ्क्षायां द्रव्यं गृह्णन् यागः तदाश्रितां देवतामपि प्रसङ्गादुपकारकतया गृह्णाति । यथा पशुकामप्रयोगे प्रणयनं गृह्णन् यागः प्रसङ्गात्तदाश्रितं गोदोहनमपि गृह्णाति तद्वत् । अतस्सोमस्य देवताराहित्येऽपि नानुपपत्तिरिति दिक् ॥

वृत्तमधिकरणम् ॥ ३ ॥

### भाष्यसन्दर्भयोजिनी

इति शङ्काया अवसर एव न स्यात्, तत्र बर्हिषामुपोषणस्य नियततया विधानात् । अत्रानुपोषणशङ्का निराधारास्याद्यदि दार्शपूर्णमासिकविध्यन्तातिदेशस्स्यात् । अस्यापूर्वत्वे तु उपोषणमस्ति न वेति शङ्कायां उपोषणविधानं सङ्गतं भवेदित्यर्थः ॥९॥

सोमे प्रयाजानूयाजानां दर्शनबलेनैष्टिकविध्यन्तातिदेशशङ्कानिराकरणायेदं सूत्रम् । सोमे 'तस्यैकशतं प्रयाजानूयाजाः' इति दर्शनमस्ति । तस्येति तच्छब्देन सोमः परामृश्यते । सोमसम्बन्धिनः प्रयाजानूयाजा इत्युक्ते प्रयाजानां सोमाङ्गत्वं प्रतीयते । तेनैष्टिक एव विध्यन्त इत्यत आह—तदिति । सोमाङ्गभूता दीक्षणीयादयः, तदङ्गभूताः प्रयाजादय इत्यर्थः । तत्राभावात् सोमे तावत्संख्याकानां प्रयाजानामभावादित्यर्थः । सोमाङ्गानां तदङ्गानाञ्चेति मिलित्वा तावती सङ्ख्योपपद्यते । अत्र दृष्टान्तः—'वाजपेयस्य यूपः' इति । वाजपेयस्सोमयागः, तत्र सप्तदशारत्नितायास्सम्बन्धो नोपपद्यत इति वाजपेयाङ्गभूतपशुसम्बन्धियूपे सप्तदशारत्निता यथा सम्बध्यते, तथा सोमे प्रयाजानां सम्बन्धाभावेऽपि तदङ्गभूतदीक्षणीयादिषु सम्बध्यत इत्यर्थः ॥१०॥

इति सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

भाष्यम्

४

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥८.१.११॥

विषयः

इष्ट्य उदाहरणम्—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्येवमाद्याः ।

संशयः

तत्र सन्देहः—किं दार्शपुर्णमासिको वा सौमिको वा विध्यन्तः ? उत दार्शपूर्णमासिक एव ? इति ।

वार्तिकाभरणम्

"इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्"

अत्राचार्यैः नवाधिकरणानि त्यक्तानि, तानि वयं वर्णयामः—विकृतीष्टयस्तावदुदाहरणम् । ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्येवमादयः । अत्र भाष्यकारेण 'तत्र संदेहः किं दार्शपौर्णमासिको वा सौमिको वा विध्यन्तः ? उत दार्शपौर्णमासिक ऐवेति ? संशयोपन्यासः कृतः । स चायमनुपपन्नः । 'यस्य लिङ्गमर्थसंयोगादभिधानवदि'त्यधिकरणे यस्य लिङ्गं यत्र वर्तते तस्य विध्यन्तस्तत्र प्रवर्तत इति प्रागेव भाष्य-

तन्त्रशिखामणिः

सू० इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥

एवं सादृश्यादेव धर्मप्राप्तिरिति स्थिते शिष्यहितार्थं तत्प्रपञ्चमारभ्यत इति सङ्गतिः । 'सौर्यं चरुं

भाष्यसन्दर्भयोजिनी

४

विषयः

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' । इन्द्राग्निदेवताकद्वादशकपालसंस्कृतपुरोडाशद्रव्यकयागेन प्रजारूपं फलं भावयेदिति वाक्यस्यार्थः । द्रव्यदेवतासम्बन्धघटितत्वेन निर्वपति शब्दो यागलक्षकः ।

संशयः

अयं यागो विध्यन्तरहितः । प्रजाफलसम्पादनाय तदपेक्षायां कस्माद्विध्यन्तः प्रापयितव्य इति संशयेऽनियमपक्षं गृह्णाति—दार्शपूर्णमासिको वा सौमिको वेति । ननु सौमिकविध्यन्तपक्षस्योत्थितौ किं बीजमिति चेत्—यद् बीजं दर्शपूर्णमासयोरस्ति—विध्यन्तवत्वं तच्च सोमेऽप्यस्तीत्येतावताऽनियमपक्षग्रहणम् । द्वितीयश्च पक्षः—दार्शपूर्णमासिक एवेति ।

## भाष्यम्

### पूर्वपक्षः

किं प्राप्तम् ? अनियमः। दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति सोमेऽपि। इमाश्चेष्टयो विध्यन्तापेक्षाः। एकेन च विध्यन्तेन भवितव्यमित्युक्तम्। न च गृह्यतेऽन्यतरविषये विशेषः। तस्मादनियमः।

### सिद्धान्तः

एवं प्राप्त उच्यते—इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः। हेतुर्नोक्तः प्रज्ञात इति। कः पुनरसौ ? चोदनायां प्रकृतिलिङ्गसंयोगः। किं पुनस्तत्प्रकृतिलिङ्गम् ? तद्धितेन देवतोद्देशः, कपालवत्ता, निर्वपतिशब्दश्च—ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति। इतरत्रापि तथैव। ऐन्द्राग्नो द्वादशकपालः' इति। निर्वपतिरपि 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति। प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्तः—'यस्य लिङ्गमर्थसंयोगात्' (जै. सू. ८.१.२) इति।

## वार्तिकाभरणम्

कारेणोक्तम्। न च ज्योतिष्टोमगतं लिङ्गं विकृतीष्टिषु दृश्यते। तस्मात्सादृश्यापादकलिङ्गाभावेन दार्शपौर्णमासिको वा सौमिको वा विध्यन्त इति पूर्वपक्षकोट्युत्थितेरभावात्। तस्मात् 'यस्य लिंगमर्थसंयोगादभिधानवदि'त्यस्यैवायं प्रपञ्चः। अत एव पार्थसारथ्युपाध्यायैः शास्त्रदीपिकायां यस्य लिङ्गमित्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यमित्युक्तम्। तस्मादस्मिन्कर्मण्यस्य विध्यन्तस्य लिङ्गमस्ति अतोऽत्रासौ प्रवर्तत इति विकृतीष्टिषु

## तन्त्रशिखामणिः

निर्वपेत्' इत्याद्युदाहरणम्। तत्र किं दार्शिकस्सौमिको वा विध्यन्तः ? उत दार्शिक एवेति विशये विशेषाग्रहादनियमे प्राप्ते, उच्यते-तद्धितेन देवतानिर्देशादिचोदनालिङ्गसामान्यादैष्टिक विध्यन्तः। नन्वव्यक्तचोदनाकत्वेन विसदृशात्

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

ऐन्द्राग्नयागो विध्यन्तमपेक्षते। स च दर्शपूर्णमासयोः सोमे चास्ति। एकेन गृहीतेन शान्ताकाङ्क्षायां द्वयोर्ग्रहणं निष्प्रयोजनम्। अतोऽनियमेन अन्यतरग्रहणेन शान्ताकाङ्क्ष इत्यनियमं पूर्वपक्षयति—न चेति।

### सिद्धान्तः

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरिति सिद्धान्तयति—इष्टिष्विति। हेतुर्नोक्तः सूत्रकारेणेति शेषः। हेतोरनुपादाने हेतुः—प्रज्ञात इति। प्रज्ञातत्वं विशदयति—चोदनायामिति। 'ऐन्द्राग्नमेकादशकपालं निर्वपे दित्यादौ प्रकृतेः दर्शपूर्णमासयोः लिङ्गसंयोगः सादृश्यसम्बन्ध इत्यर्थः। तत्रत्यलिङ्गं कीदृशमित्यस्य विवरणम्—तद्धितेन देवतोपदेश इत्यादिः। यद्यपि निर्वपतिशब्दो दार्शपूर्णमासिकोत्पत्तिवाक्येषु अधिकारवाक्ये च न श्रुतः, किन्तु 'अग्नये जुष्टं निर्वपामि' इत्यङ्गविधायकवाक्येषु श्रुत इति बोध्यम्। तदिमानि लिङ्गानि विकृति

भाष्यम्

तस्माद्दार्शपौर्णमासिकस्तासु विध्यन्तः । तच्च दर्शयति—'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति । अलिङ्गस्यापि स्थालीपुलाकवत्सिद्धिः ॥११॥

इतीष्टीनां दर्शपूर्णमासप्रकृतिकत्वाधिकरणम् ॥४॥

५

## पशौ च लिङ्गदर्शनात् ॥८.१.१२॥

विषयसंशयौ

पशावग्नीषोमीये चिन्त्यते । किं दार्शपूर्णमासिको विध्यन्तः ? उत सौमिकः ? इति ।

वार्तिकाभरणम्

तद्धितादिभिः देवतासम्बन्धो निर्वपतिशब्द औषधद्रव्यता कपालवत्तेत्येतैर्लिङ्गैः दार्शपौर्णमासिको विध्यन्तः प्रवर्तते। यद्यपि भाष्यकारेण 'यस्य लिङ्गमर्थसंयोगादित्याधिकरणे शिष्यहितार्थन्तूत्तरः प्रपञ्च इत्युक्तम्, तथाप्यनास्थयैवेदमुक्तमिति द्रष्टव्यम् ॥ ४ ॥

"पशौ च लिङ्गदर्शनात्"

पशावग्नीषोमीयेऽपि दार्शपौर्णमासिको विध्यन्तः। यथा 'ऐन्द्रं दध्यमावास्यायामि'ति इन्द्रयागः श्रुतद्रव्यदेवतत्वेन व्यक्तचोदनः, तथा अग्नीषोमीययागस्यापि 'अग्नीषोमीयं पशुमालभेत', तिश्रुतद्रव्यदेवतत्वेन

तन्त्रशिखामणिः

सोमात् धर्मातिदेशशङ्काया अनुदयात् पूर्वपक्षासम्भवेन कथमधिकरणप्रवृत्तिरिति चेत्सत्यम्, यदि च लिङ्गदर्शनमित्यस्य प्रपञ्चत्वादस्य पूर्वपक्षस्य मन्दत्वेऽप्यदोषत्वात् ॥

वृत्तमधिकरणम् ॥ ४ ॥

सू० पशौ च लिङ्गदर्शनात् ॥

सौर्यादावैष्टिकविध्यन्तातिदेशेऽपि पशौ न तदतिदेश इत्युत्थितेस्सङ्गतिः। 'अग्नीषोमीयं पशुमालभेत' इति श्रुते पशौ किं दार्शिकविध्यन्तो न वेति संशये दर्शवत्पशोरपि वेद्यादिसन्निपत्याङ्गोपदेशेन कृत्स्नविधान-

भाष्यसन्दर्भयोजिनी

विधायके ऐन्द्राग्नवाक्ये श्रुतानीनि दर्शयति—ऐन्द्राग्नमिति। **इतरत्रापि तथैव**। अन्येषु वैकृतविध्यादिष्वने नैव प्रकारेण विध्यन्तातिदेश ऊह्य इत्यर्थः। विध्यादौ निर्वपतिशब्दाभावेऽप्यङ्गविधिवाक्येषु तत्सत्त्वेऽपि तल्लिङ्गत्वमवगन्तव्यमिति दर्शयति—**अग्निहोत्रहवण्येति**। उक्तः 'यस्येत्यादिसूत्रेण। प्रदर्शितेषु प्रकृतिलिङ्गेष्वसत्स्वपि प्रयाजादिदर्शनमात्रेणापि स्थालीपुलाकन्यायेन प्रकृतिनिर्णयः कर्तव्य इत्याह—**अलिङ्गस्यापीति** ॥ ११ ॥

इतीष्टीनां दर्शपूर्णमासप्रकृतिकत्वाधिकरणम् ॥ ४ ॥

५

इष्टीनां दर्शपूर्णमासप्रकृतिकत्वं निरूप्य पशोरपि तत्प्रकृतिकत्वं निरूपयितुं चिन्तां प्रवर्तयति—**पशाविति**। 'अग्नीषोमीयं पशुमालभेत' इति वाक्य इत्यर्थः। सोमयागस्य दर्शपूर्णमासयोश्च विध्यन्तवत्वात्संशयः-

## भाष्यम्

### पूर्वपक्षः

किं प्राप्तम् ? तथैव पूर्वपक्षः ।

### सिद्धान्तः

तत्रोत्तरमभिधीयते । पशौ च लिङ्गदर्शनात् । पशौ च दार्शपूर्णमासिक एव विध्यन्तः । कुतः ? लिङ्गदर्शनात् । 'एकादशप्रयाजान् यजति' 'एकादशानूयाजान्' इति । तथा

## वार्तिकाभरणम्

व्यक्तचोदनतया दर्शपूर्णमाससदृशत्वात् । तस्माद्दार्शपौर्णमासिको विध्यन्तः । एवञ्च 'एकादश प्रयाजान्यजति', 'एकादशानूयाजान्यजति' इति तथा 'स्रौवमाधार्य जुह्वा पशु समनक्ती'ति लिङ्गमुपपत्स्यते । ननु पशौ कृत्स्नविधानान्नास्याकाङ्क्षा । ततश्च कथमतिदेश इति चेत्सत्यम्; कतिपयधर्माम्नानं नहि तावता कृत्स्नविधानं सम्भवति । येनाकाङ्क्षोधीनोऽतिदेशो न स्यात् । यत्र हि निराकाङ्क्षीकरणसमर्थानां सर्वेषामङ्गानामुदेशः, तत्रैव कृत्स्नविधानमिति प्रागेवोक्तत्वात् । अग्नीषोमीये च नास्ति कृत्स्नविधानम् निराकाङ्क्षीकरणसमर्थानामावाहनादीनां सन्निपातिनामनाम्नानात् । तस्मादाकाङ्क्षासद्भावात्तदधीनोऽप्यतिदेशस्सिध्यति । किञ्च क्रयसन्निधौ 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इति अग्नीषोमीययागः समाम्नायते तत्सन्निधौ च धर्मसमाम्नानाभावादस्याकाङ्क्षा । अथ भवतु प्रकरणाद् धर्मलाभाभावः, तथाप्यनुष्ठानसादेश्यलक्षणसन्निधिप्रमाणेनान्यत्रोपदिष्टे-

## तन्त्रशिखामणिः

तयाकाङ्क्षाभावेन नातिदेशः । न चात्रारादुपकारकानुपदेशादस्त्याकाङ्क्षेति वाच्यम् । 'उपाकृत्य पञ्च जुहोति' इत्यादीनां बहुलमारादुपकारकाणामप्युपदेशात् । न च स्रौवमाघार्य जुह्वा पशुमनक्ति' इति स्रौवाधारलिङ्गदर्शनादतिदेशस्स्यादिति वाच्यम् । तस्य विशिष्टविधित्वेनाप्युपपन्नतयाऽन्यथा सिद्धत्वाभावात् । अस्तु विशिष्टविधिकल्पनात्तो वरभाकाङ्क्षाकल्पनेत्येकदेशिभिरुक्तं तन्न:, तथासत्याकाङ्क्षा तावत्प्रथमं कल्प्या ततस्तन्निर्वाहाय दार्शिकविध्यन्तः, तत्सिद्धये पदार्थप्राप्तिः इत्यनेककल्पनापत्तेः । अतो विशिष्टविधित्वकल्पनमेव ज्यायः । तस्मान्न पशौ दार्शिकविध्यन्त प्राप्तिरिति प्राप्ते,

ब्रूमः—पशौ कतिपयसन्निपत्योपदेशेऽपि आवाहनादिदृष्टाङ्गानुपदेशादस्त्याकाङ्क्षा । तस्याञ्च सत्यांलिङ्गदर्शनानुगृहीतात्ताद्धितेन देवतादिनिर्देशादि चोदनालिङ्गसामान्यादैष्टिकविध्यन्तप्राप्तिः । किञ्चासौ

## भाष्यसन्दर्भयोजिनी

किं दार्शपूर्णमासिको विध्यन्तः ? उत सौमिक इति । तथैव पूर्वपक्षः पूर्वाधिकरण इवेत्यर्थः । पूर्वाधिकरणापेक्षयाधिकाशङ्काऽत्र भवति यन्निराकरणायेदमधिकरणम् । इष्टिषु दर्शपूर्णमासयोर्विध्यन्त इति युक्तम्, तद्धितेन देवतानिर्देशादीनां सद्भावात् । पशावालभतिर्वर्तते दर्शपूर्णमासयोरालभतिर्न दृश्यते इति विशेषशङ्कानिरासायेदमधिकरणमिति लिङ्गदर्शनादित्याह । दर्शपूर्णमासयोः पञ्च प्रयाजाः अत्र चैकादश, तत्र त्रयोऽनूजाः अत्र चैकादश

## भाष्यम्

**'स्रौवमाधारमाधार्यं जुह्वा पशुमनक्ति' इति। ननु लिङ्गमपदिष्टम्, कुतः प्राप्तिः? चोदनासामान्यात्। किं सामान्यम्? व्यक्तचोदनात्वम्। का व्यक्तिः, द्रव्यदेवतावत्ता-अग्नीषोमीयं**

## वार्तिकाभरणम्

रपि धर्मैः यागः सम्बध्यत इत्यस्ति नैराकाङ्क्ष्यमिति चेन्मैवम्; अनुष्ठानसादेश्यलक्षणसन्निधिप्रमाणेनान्यत्रोपदिष्टधर्मलाभेऽपि निराकाङ्क्षीकरणसमर्थानां सन्निपातिनामावाहनादीनामाम्नानाभावेन नैराकाङ्क्ष्याभावतादवस्थ्यात्। अस्तु वान्यत्र कृत्स्नविधानम्, तथापि नैराकाङ्क्ष्यं नास्ति, अन्यत्रौपवसथ्येऽहन्यग्नीषोमीययागदिने समाम्नातैर्धर्मैः प्रायणीयदिने क्रयसन्निधावुत्पन्नस्याग्नीषोमीययागस्य न स्वत एव सम्बन्धो भवति, किन्तु 'स एष उपवसथीयेऽहनि द्विदेवत्यः पशुरालभ्यत' इति वचनेन क्रयसन्निधावुत्पन्नस्य यागस्यौपवसथ्येऽहनि प्रयोगविधाने सति तत्रोपदिष्टैर्धर्मैः सम्बन्ध इति वक्तव्यम्। अनुष्ठानविधानञ्च निराकाङ्क्षस्यैव यागस्य सम्भवति, न साकाङ्क्षस्य। ततश्च वचनेनानुष्ठानविधानात्प्रागेव यागे नैराकाङ्क्ष्येण भवितव्यम्। सोऽपि क्रयसन्निधावुत्पन्नः पशुयागः स्वसन्निधौ धर्मानलभमानः चोदनालिङ्गसामान्याद्दार्शपौर्णमासिकविध्यन्तं क्लृप्तोपकारमासाद्यैव नैराकाङ्क्ष्यं भजते। सिद्धे च नैराकाङ्क्ष्ये यागस्यौपवसथ्येऽहन्यनुष्ठानविधानमुपपद्यते। सिद्धे चानुष्ठाने पश्चादनन्यप्रयोजनात्साकाङ्क्षान् धर्मानुपलभ्यानुष्ठानसादेश्यलक्षणसन्निधिप्रमाणेन निराकाङ्क्षस्यापि पशोराकाङ्क्षापरिकल्पनेन सम्बन्धः कल्प्यते। तस्मादैष्टिकविध्यन्तं विनाऽन्यत्रोपदिष्टधर्मसम्बन्धाभावान्न निराकाङ्क्षः पशुः। तस्मादैष्टिक एव

## तन्त्रशिखामणिः

पशुस्सोमक्रयसान्निधावुत्पन्नः। तत्र च न धर्मा उपदिश्यन्ते यैरयं निराकाङ्क्षस्स्यात्। नन्वेवमपि 'स एष औपवसथ्येऽन्हि द्विदैवत्यः पशुरालभ्यत' इत्यौपवसथ्येऽन्हि अस्यानुष्ठानं चोद्यते, पशुधर्मास्चाम्नायन्ते। ततश्च प्रकरणात्तस्य धर्मालाभेऽप्यनुष्ठानसादेश्यलक्षणात्स्थानाद्धर्मलाभेन निराकाङ्क्षमिति चेत्—सत्यम्; निराकाङ्क्षस्यैवानुष्ठानं चोदनीयमिति प्रागेवास्माद्वचनात् क्रयसन्निधावुत्पन्नस्य पशोः स्वसन्निधौ धर्मानाम्नानात् दर्शिकैरेव धर्मैश्चोदनासामान्यप्रापितैराकाङ्क्षा पूरणीया। न चैवं प्रागेव निराकाङ्क्षस्य पशोः स्थानतः पश्चाद्धर्मलाभो न स्यादिति वाच्यम्। पश्चादपि साकाङ्क्षिधर्मानुरोधेनाकाङ्क्षोत्थापनाविरोधात्।

ये त्वेकदेशिनः—अग्नीषोमीयस्याङ्गत्वान्न स्वत आकाङ्क्षेति लिङ्गदर्शनादेव विशिष्टविधित्वकल्पनाद्वारमाकाङ्क्षाकल्पनमित्याकाङ्क्षां कल्पयन्ति, तन्मते लिङ्गदर्शनकल्पितया आकाङ्क्षयैव दार्शिकविध्यन्त-

## भाष्यसन्दर्भयोजिनी

इति प्रयाजदर्शनेनैष्टिकविध्यन्त इति निश्चीयत इत्यर्थः। दर्शपूर्णमासयोः जौहवाज्येनाधारानुष्ठानम्, अत्रापि तादृशमाघारमाघार्य जुह्वा पश्वञ्जनं विहितमितीदमप्यैष्टिकविध्यन्तप्राप्तौ लिङ्गमित्यर्थः। न केवलं लिङ्गे नैवेष्टिकविध्यन्तप्राप्तिरपितु न्यायोऽप्यस्तीति दर्शयति—व्यक्तचोदनात्वात् इति। उत्पत्तिविधावत्र द्रव्यदेवतानिर्देशसत्वादव्यक्तत्वमस्य, सोमे च तथाभावादव्यक्तत्वमिति हेतोस्सौमिकविध्यन्तप्राप्तिर्नास्तीत्यर्थः। अग्नीषो-

भाष्यम्

पशुमिति । इतरत् 'ऐन्द्रं पय' इति । अव्यक्तचोदनस्तु सोमः ।।१२।।

इत्यग्नीषोमीयपशौ दार्शपूर्णमासिकविध्यन्तातिदेशाधिकरणम् ।।५।।

६

## दैक्षस्य चेतरेषु ।।८.१.१३।।

विषयः

इह पशुबन्धा उदाहरणम् । सवनीयो निरूढः पशुः सौम्यादयश्च ।

वार्तिकाभरणम्

विध्यन्तः पशौ प्रवर्तते। यद्यपि सोमस्याव्यक्तचोदनत्वेन विसदृशत्वादग्नीषोमीयेन तद्विध्यन्तप्राप्तिप्रसक्तिशङ्का, तथापि भाष्यकारेण तथैव पूर्वपक्ष इत्यनास्थयोक्तमिति द्रष्टव्यम् ।। ५ ।।

"दैक्षस्य चेतरेषु"

सवनीयनिरूढादिविकृतिपशव उदाहरणम् । तत्र सन्देहः किं तेषु दार्शपौर्णमासिको विध्यन्तः प्रवर्तते, किं वाग्नीषोमीयविध्यन्त इति । तत्र दर्शपूर्णमासयोः व्यक्तचोदनत्वात्सवनीयादेः श्रुतद्रव्यदेवताकत्वेन व्यक्तचोदनत्वात्, तद्विध्यन्त एव सवनीयादिष्वपि । किञ्चाग्नीषोमीयोऽपि दर्शपूर्णमासावुपजीवति, स्वयमनवाप्तकृत्स्नधर्मत्वात् । तस्मान्नाग्नीषोमीयधर्माः । नहि वदान्ये राजन्येऽवतिष्ठमाने भिक्षुको भिक्षुकान्तरं याचितुमर्हति । तस्मान्नाग्नीषोमीयविकाराः । किन्तु दर्शपूर्णमासविकारास्सवनीयादयः । ननु पशुद्रव्यकत्वरूपचोदनालिङ्गसामान्येनासाधारणेनाग्नीषोमीयविध्यन्त एव सवनीयादिषु प्रवर्तत इति वक्तुं न्याय्यमिति चेन्न; कृष्णलचरोः विजातीयद्रव्यकत्वेऽपि निर्वपतिशब्दलक्षणचोदनालिङ्गसामान्येन साधारणेनापि यथा तत्रैष्टिविध्यन्तप्राप्तिः तथा

तन्त्रशिखामणिः

विशेषस्यापि प्राप्तेः भाष्ये चोदनासामान्याभिधानमफलं स्यादित्यास्ताम् ।।

वृत्तमधिकरणम् ।। ५ ।।

सू० दैक्षस्य चेतरेषु ।।

दैक्षपशाविव सवनीयादिपशुष्वपि दार्शिकविध्यन्त इत्युत्थितेस्सङ्गतिः । सवनीयपशुनिरूढपश्वादिषु किमैष्टिकविध्यन्तः ? उताग्नीषोमीयविध्यन्त इति विशये न हि भिक्षुको भिक्षुकं याचते सत्यभिक्षुकेऽन्य-

भाष्यसन्दर्भयोजिनी

मीयशब्दस्य तद्धितान्तत्वात्, एवं ऐन्द्रशब्दस्यापि तथात्वात् व्यक्तचोदनात्वमित्यर्थः । सोमानामव्यक्तचोदनात्वात्सादृश्यं नास्तीति भावः ।। १२ ।।

इत्याग्नीषोमीयपशौ दार्शिकविध्यन्तातिदेशाधिकरणम् ।। ५ ।।

६

विषयः

पशुबन्धः निरूढपशुरित्यर्थः सवनीयः सोमाभिषवदिनेऽनुष्ठेयस्सवनीयः, सौम्यः काम्यः पशुः ।

## भाष्यम्

### संशयः

तेषु किं दार्शपौर्णमासिको विध्यन्तः ? उत दैक्षस्य ? इति । दैक्ष इत्यग्नीषोमीय उच्यते, दीक्षासम्बन्धात् ।

### पूर्वपक्षः

किं प्राप्तम् यथोक्तेन न्यायेन दार्शपौर्णमासिक इति । तथा प्राप्ते उच्यते—

### सिद्धान्तः

दैक्षस्य चेतरेषु पशुषु सवनीयादिष्वग्नीषोमीयस्य विध्यन्तः । आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्याच्च । तच्च दर्शयति-'वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने

## वार्तिकाभरणम्

सवनीयादिष्वपि दर्शपूर्णमासविध्यन्तप्राप्तिसम्भवात् । किञ्चाग्नीषोमीयविध्यन्तप्राप्तौ अग्नीषोमीययागस्य दर्शपूर्णमासापेक्षया विकृतित्वं सवनीयापेक्षया प्रकृतित्वमित्यग्नीषोमीयस्यैव प्रकृतित्वं विकृतित्वमपि स्यादित्येकस्यैव द्वैरूप्यापत्तेः । तस्माद्दर्शपूर्णमासविध्यन्त एव सवनीयादिष्विति प्राप्ते ब्रूमः ।

अग्नीषोमीयविध्यन्त एव सवनीयादिषु प्रवर्तते, निराकाङ्क्षीकरणसमर्थोपाकरणनियोजनावाहनादिसन्निपातिवर्गलाभादैष्टिकविध्यन्ताभ्युपगमे च निराकाङ्क्षीकरणसमर्थोपाकरणनियोजनावाहनादिसन्निपातिनामुपदेशेन वातिदेशेन वा सवनीयादिषु प्राप्त्यभावात् । सम्भवति चासाधारणे चोदनालिङ्गसामान्ये साधारण-

## तन्त्रशिखामणिः

स्मिन् दातरि' इति न्यायेन सवनीयादिष्वैष्टिको विध्यन्तः, न तु तद्विकृतिभूताग्नीषोमीयविध्यन्त इति प्राप्तेऽभिधीयते—'वपया प्रातस्सवने प्रचरन्ति, पुरोडाशेन माध्यन्दिने सवनेऽङ्गैस्तृतीयसवने' इति वपापुरोडाशहृदयाद्यङ्ग-

## भाष्यसन्दर्भयोजिनी

### संशयः

एतेषु दार्शिकविध्यन्तः प्रवर्तते ? उत दैक्षपशोर्विध्यन्तः ? 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति वाक्येन दीक्षासम्बन्धस्य प्रतीयमानत्वात् दैक्ष इत्यभिधीयतेऽग्नीषोमीयः पशुः । तदिदमाह—**दैक्ष इति** ।

### पूर्वपक्षः

**यथोक्तेन न्यायेन** दर्शपूर्णमासयोर्धर्मवत्त्वात्ताभ्यामेव व्यक्तचोदनास्सर्वे धर्मान् गृह्णन्तीति न्यायः । नत्वग्नीषोमीयात् । स हि स्वयं दर्शपूर्णमासतो धर्मान् प्रतीक्षते । नहि याचको याचकान्तरं याचितुं गच्छेत् इति न्यायेन सवनीयादयः पशवः दर्शपूर्णमासविकृतय एवेति ।

### सिद्धान्तः

**सवनीयादिष्वग्नीषोमीयस्य विध्यन्तः**, सादृश्यविशेषेण प्रकृतिविकृतयो निश्चीयन्ते, केवलं धर्मवत्वमात्रेण प्रकृतिविकृतिनिश्चयो न भवति, तथासति धर्मप्राप्तावनिश्चितता स्यात् । अतस्सादृश्यमवलम्ब्यैव विध्यन्तनिश्चयः

भाष्यम्

सवने अङ्गैस्तृतीयसवने' (मै० सं ३. ९. ५.) इति वपापुरोडाशाङ्गप्रचारं दर्शयति। भेदेन च तथा क्वचित्। 'औदुम्बरो यूपो भवति' (तै. सं. २.१.१.६) इति यूपं दर्शयति। तस्मादग्नीषोमीयः पशूनां प्रकृतिः ॥१३॥

इति सवनीयादीनामग्नीषोमीयपशुप्रकृतिकत्वाधिकरणम् ॥६॥

७

## ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ ८.१.१४ ॥

विषयः

ऐकादशिनाः पशव उदाहरणम्। 'कृष्णग्रीवमाग्नेयम्' इत्यारभ्याम्नाताः। अन्येषाञ्च

वार्तिकाभरणम्

चोदनालिङ्गसामान्याभ्युपगमस्यान्याय्यत्वात्। परस्परं प्रकृतिविकृतिभावे परं विरोधः। न ह्येकस्यैवापेक्षाभेदेनैकं प्रति विकृतित्वे पुनरन्यं प्रति प्रकृतित्वे विरोधोऽस्ति। तथाच अग्नीषोमीयस्य कृत्स्नधर्मवत्वात्तद्विध्यन्त एव सवनीयादिषु प्रवर्तते, दर्शपूर्णमासयोः व्यक्तचोदनत्वसादृश्यादग्नीषोमीयस्यापि प्रकृतित्वाच्च तद्विध्यन्त एवास्त्वित्यभ्यधिकाशङ्कानिराकरणार्थमिदमधिकरणम् ॥६॥

ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात्

सन्त्यैकादशिनाः पशवः 'आग्नेयं कृष्णग्रीवामित्यारभ्याम्नाताः। अन्येषां प्रैवाग्नेयेन वापयति मिथुनं

तन्त्रशिखामणिः

प्रचारलिङ्गदर्शनोपोद्वलितात् प्राणिद्रव्यकत्वचोदनासामान्यविशेषात् विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्य दीक्षाकाले उत्पन्नस्याग्नीषोमीयपशोर्विध्यन्तः ॥

वृत्तमधिकरणम् ॥ ६ ॥

सू० ऐकादशिनेषु सौत्यस्य द्वैरशन्यदर्शनात् ॥

सवनीयादाविवैकादशिनेष्वपि दैक्षविध्यन्त इत्युत्थितेस्सङ्गतिः। सन्त्यैकादशिनः पशवः—'आग्नेयं कृष्णग्रीवम्' इत्यारभ्य विहिताः आग्नेयसारस्वतसौम्यादयः। तेषु किं दैक्षस्य विध्यन्तः? उत सवनीयस्य?

भाष्यसन्दर्भयोजिनी

कर्तव्य इत्याह-आलभतिचोदनेति। अग्नीषोमीयवाक्ये तथा सवनीयवाक्ये चालभतिचोदनाचोदितत्वमुपलभ्यते प्राणिद्रव्यकत्वञ्च वर्तते द्वयोः। वपायागः, पशुपुरोडाशयागः, पश्वङ्गयागश्चेति सामान्यमुभयोरधिकमुपलभ्यत इत्याह-वपयेति। भेदसामान्यमप्यस्तीत्याह-भेदेन चेति। द्वयोर्यूपसामान्ये सत्यपि यूपप्रकृतिभूतं काष्ठं भिन्नमित्यर्थः। दैक्षे 'खादिरो यूपो भवति' इति, विकृतौ च 'औदुम्बरो यूपो भवति' इति। उपसंहरति-तस्मादिति।

इति सवनीयादीनामग्नीषोमीयप्रकृतिकत्वाधिकरणम् ॥ ६ ॥

७

ऐकादशिना इति। तैत्तिरीयशाखाया पञ्चमकाण्डे पञ्चमप्रपाठके द्वाविंशतितमेऽनुवाके 'आग्नेयः

## भाष्यम्

'आग्नेयेन वापयति, मिथुनं सरस्वत्या करोति, प्रजनयति सौम्येन' इति।

## संशयः

तेषु सन्देहः—किमग्नीषोमीयविध्यन्तः ? उत सवनीयविध्यन्तः ? इति ।

## पूर्वपक्षः

किं प्राप्तम् ? पूर्वोक्तेन न्यायेनाग्नीषोमीयस्येति प्राप्ते—उच्यते,

## वार्तिकाभरणम्

सरस्वत्या करोति प्रजनयति सौम्येनेति। तेष्वैकादशिनेष्वाग्नेयादिपशुषु सन्देहः। किमग्नीषोमीयविध्यन्तस्तेषु प्रवर्तते ? उत सवनीयविध्यन्तः? इति। तत्र विशिष्य चोदनालिङ्गसामान्याभावादेकादशिनेषु न सवनीयविध्यन्तः। ननु सवनीये त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति वचनविहिता रशना एका, अग्नोषोमीयविकारत्वात्। सवनोयस्य चोदकप्राप्ता रशना अपरा। एवञ्च सवनीये द्वैरशन्यमस्ति। ऐकादशिनेष्वपि 'अग्निष्ठाद्द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययत' इति द्वैरशन्यं दृश्यते। द्वैरशन्यदर्शनादेकादशिनाः पशवः सवनीयविकाराः अग्नोषोमीयविकाराश्चेद्द्वैरशन्यानुवादवचनमनर्थकं स्यादिति चेत्-स्यादेतदेवम्; यद्यग्निष्ठाद्द्वे द्वे इति वचनमनुवादकं स्यात् न त्वेवम्। किन्तु इदमेव विधायकम्। एवञ्च द्वैरशन्यमुपपद्यते। किञ्च न हि भिक्षुको भिक्षुकान्तरं याचते सत्यन्यस्मिन्नभिक्षुक इति न्यायेनाग्नीषोमीय एव प्रकृतिः। न चैवं सति सवनीयस्याप्यनेनैव

## तन्त्रशिखामणिः

इति विशये विशेषलिङ्गाभावात् 'न हि भिक्षुक' इति न्यायेनाग्नीषोमीयविध्यन्त ऐकादशिनेष्विति प्राप्ते, ब्रूमः—ऐकादशिनेषु सवनीयविध्यन्तस्स्यात्, सुत्याकालत्वरूपलिङ्गविशेषाधिक्यात्। ननु सवनीयधर्मातिदेशनिश्चये सुत्याकालत्वरूपनिश्चयः, तन्निश्चये च सति सवनीयधर्मातिदेशनिश्चय इत्यन्योन्याश्रय इति चेत्—न; क्रतुपशुभिरैकादशिनानां विकल्पाभिधानेन सवनीयतुल्यकार्यतयैव तेषां सुत्याकालत्वनिश्चयात् द्वैरशन्यदर्शनाच्च। तथा

## भाष्यसन्दर्भयोजिनी

कृष्णग्रीवः' इत्यारभ्याम्नाताः। यद्यपीदमश्वमेधप्रकरणम्, तथापि ज्योतिष्टोमेऽप्यैकादशिन्या अनुष्ठानं भवति। पश्वेकादशिनीति व्यवह्रियते। माध्यन्दिनशाखायाश्शतपथब्राह्मणे ज्योतिष्टोमप्रकरण एव ३.९.१६. 'आग्नेयं प्रथमं पशुमालाभते' इत्यारभ्याम्नाताः। 'आग्नेयः कृष्णग्रीवः (कृष्णवर्णो ग्रीवायां यस्य स पशुः) सारस्वती मेषी बभ्रुस्सौम्यः, (पिङ्गलवर्णः) पौष्णः श्यामः, शितिपृष्ठो बार्हस्पत्यः-(श्वेतपृष्ठः) शिल्पो वैश्वदेवः (बहुरूपः) ऐन्द्रोऽरुणः, मारुतः कल्माषः (कृष्णविन्दुलाञ्छितः) ऐन्द्राग्नः संहितः, (कृष्णशवलः) अधोरामः सावित्रः, (श्वेतकृष्णो हरः) वारुणः पेत्वः, (गलितरेतस्को मेषः) इति पश्वेकादशिनी। आग्नेयेन पशुना आरभते, सरस्वत्या मेष्या मिथुनं करोति, सौम्येन प्रजनयति' इत्यस्यार्थवादः। एतेषामनुष्ठानं सवनीयदिने भवति, सुत्यादिन इत्यर्थः। अतस्सन्देहः-किमग्नीषोमीयविध्यन्तः प्राप्नोति ? उत सवनीयस्येति ? यथा सवनीयः पशुरग्नीषोमोयविकारस्तेनैव न्यायेन पश्वेकादशिन्यप्यग्नीषोमीयविकार एव, सवनोयस्यैकादशिनानाञ्च विधिवाक्यगतस्य विशेषसादृश्यस्याभावादित्यर्थः।

## भाष्यम्

### सिद्धान्तः

ऐकादशिनेषु सौत्यस्य। सौत्य इति सुत्याकालत्वात्सवनीयमाहुः। तदीयो विध्यन्त ऐकादशिनेषु। कुतः? द्वैरशन्यस्य दर्शनात्। अग्नीषोमीयप्रकृतित्वे एकैकरशन्यं स्यात्। अथ वचनमिदं कस्मान्न भवति? 'अग्निष्ठाद् द्वे द्वे रशने आदायेत्येतदत्र विधीयते। यदि रशनाद्वित्वमपि विधीयते तदा वाक्यं भिद्यते। तस्मात्तदनूद्यते। ननु लिङ्गमपदिष्टम्, कुतः

## वार्तिकाभरणम्

न्यायेन दर्शपूर्णमासावेव प्रकृतिः स्यात् नाग्नीषोमीय इति वाच्यम्। दर्शपूर्णमासयोः निराकाङ्क्षीकरणसमर्थानामुपाकरणनियोजनावाहनादिसन्निपातिनामाम्नानाभावेन चोदकेनापेक्षितविध्यन्ताप्राप्तेः। तेषां सवनीये सामाम्नातत्वाभावेनोपदेशेनाप्यप्राप्तेः। तस्मादग्नीषोमीय एव प्रकृतिरिति प्राप्ते ब्रूमः—

शब्दगतलिङ्गसामान्याभावेऽप्यर्थगतसौत्यत्वाख्यलिङ्गसामान्यसद्भावात्सौत्यसवनीयविकारा ऐकादशिनाः सौत्यपशवः। एवञ्च द्वैरशन्यदर्शनमुपपन्नं भवति। अथ यदुक्तं द्वैरशन्यवचनं विधायकत्वेनाप्युपपन्नमिति तन्न; अग्निष्ठाद् द्वे द्वे इत्यस्य रशनाद्वित्वस्य च विधाने वाक्यभेदप्रसङ्गात्। नापि भैक्षुकन्यायावतारः, सवनी-

## तन्त्रशिखामणिः

सवनीये हि 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति विहितैका रशना, या तृतीये समानविधाना साधिता द्वितोया च चोदकप्राप्ता। रशनाद्वयञ्चैकादशिनेष्वप्यस्ति 'द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययते' इति दर्शनात्। तस्मात् द्वैरशन्यदर्शनलिङ्गोपोद्बलितात्सुत्याकालीनत्वरूपचोद-

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

सूत्रगतसौत्यस्येत्यस्य विवरणम्—सौत्य इति। सुत्यकालेऽनुष्ठेयत्वात्सवनीयस्येत्यर्थः। एवञ्च दैक्षेण सह पशुप्रभवत्वादिसामान्ये सत्यपि सवनीयस्य सवनीये सुत्याकालानुष्ठेयत्वं विशेषरूपेण वर्तते। तच्चैकादशिनेष्वप्यस्तीति विशेषसादृश्यमैकादशिनानां सवनीयेन सहैव वर्तत इति तदीयविध्यन्त एवैकादशिनेषु प्राप्यत इति भावः। सुत्याकालानुष्ठेयत्वसामान्येन सह सामान्यान्तरमपि प्रदर्शयति—द्वैरशन्यस्येति। सवनीयस्याग्नीषोमपशोर्विकृतित्वात्ततो यूपपरिव्याणायैका रशनातिदिश्यते, अपरा च रशना सवनीये विहिता वर्तते-'त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयस्य द्वैरशन्यमस्ति। तथैवैकादशिनेष्वपि 'अग्निष्ठाद् द्वे द्वे रशने आदाय' इति द्वैरशन्यं विधीयते। तदिदं विशेषसामान्यं दर्शनादित्युक्तम्। एवञ्च द्वैरन्यसुत्याकालानुष्ठेयत्वरूपसादृश्यविशेषेण सवनीयधर्मा एवैकादशिन्यां कर्तव्या इति सिध्यति, अग्नीषोमीयस्यैकरशनावत्वात्।

भाष्यम्

प्राप्तिः ? उच्यते-समाने पशुत्वे सुत्याकालता वैशेषिकं लिङ्गम् । ततः प्राप्तिः ॥१४॥

इत्येकादशिनेषु सवनीयधर्मातिदेशाधिकरणम् ॥७॥

८

## तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥८.१.१५॥

विषयः

इह पशुगणा उदाहरणम् । 'वसन्ते ललामांस्त्रीन् (तै० सं० २.१.४.१) वृषभानालभते । तथा-मैत्रं श्वेतमालभेत (तै० सं० २.१.८.४.) वारुणम् कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामः' तै० सं० २. १. ९. २.) इति ।

वार्तिकाभरणम्

यस्यातिदेशेन कृत्स्नधर्मवत्वात् । इयांस्तु विशेषः । अग्नीषोमीयो ह्युपदेशातिदेशाभ्यां कृत्स्नधर्मवान्सवनीयस्त्वतिदेशेनैवेति ।। ७ ॥

तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात्

सौत्रामण्यादिपशुगणा उदाहरणम् । तेषु संदेहः किं तत्राग्नीषोमीयविध्यन्तः ? उत ऐकादशिनविध्यन्तः ? इति । तत्र सौत्रामण्यादिष्वग्नीषोमीयविध्यन्त एव । ननु गणत्वसामान्यादैकादशिनविध्यन्त एव प्रवर्तत इति चेन्न; प्रत्येकमेव पशूनामितिकर्तव्यताकाङ्क्षित्वेन प्रत्येकं गणत्वाभावात् । तस्मान्मूलप्रकृतितया अग्नीषोमीयविध्यन्त एव सौत्रामण्यादिषु प्रवर्तत इति प्राप्ते ब्रूमः,

तन्त्रशिखामणिः

नालिङ्गविशेषात् सवनीयविकृतय ऐकादशिनाः आग्नीध्रीये सवनीयस्याज्यानि गृह्णातीत्यादिधर्मलाभः प्रयोजनम् ।

वृत्तमधिकरणम् ॥ ७ ॥

सू० तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥

ऐकादशिनेष्विव विशेषलिङ्गाभावात् पशुगणेषु दैक्षविध्यन्त इत्युत्थितेस्सङ्गतिः । पूर्वपक्षश्च दैक्षविध्यन्त इति । सौत्रामण्यादिगतेषु पशुगणेषु गणत्वसामान्याधिक्यात् ऐकादशिनविध्यन्तप्राप्तिः । यद्यपि

भाष्यसन्दर्भयोजिनी

न केवलं लिङ्गदर्शनमात्रं किन्तु न्यायोऽप्यस्तीत्याह—ततः प्राप्तिरिति ॥१४॥

इत्येकादशिनेषु सवनीयधर्मातिदेशाधिकरणम् ॥७॥

८

विषयः

पशुगणाः काम्यपशुकाण्डे विहिताः ।

## भाष्यम्

### संशयः

तत्र विचार्यते—किमग्नीषोमीयस्य विध्यन्तः ? उतैकादशिनानामिति ।

### पूर्वपक्षः

यथोक्तेन न्यायेनाग्नीषोमीयस्य । एवं प्राप्त उच्यते—

### सिद्धान्तः

तत्प्रवृत्तिर्गणेषु स्यात् । तेषामैकादशिनानां प्रवृत्तिः पशुगणेषु स्यात् । कुतः ? प्रतिपशु यूपदर्शनात् । 'यत् त्रिषु यूपेष्वालभते बहिर्धास्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जनयेदेकयूप आलभते' इति यूपत्रित्वं प्रतिषिध्यैकं यूपं सौत्रामण्यां विदधाति । तदुपपद्यते-यद्यैकाद-

## वार्तिकाभरणम्

सत्यं प्रत्येकमेव पशूनामितिकर्तव्यताकाङ्क्षा, तथापि गणान्तर्गतानामेवाकाङ्क्षा । ऐकादशिनेषु सौत्रामण्यादिष्वपीत्यस्ति गणत्वसामान्यम् । ततश्च गणत्वसामान्यादैकादशिनविध्यन्त एव सौत्रामण्यादिषु प्रवर्तते । यद्यग्नीषोमीयविकाराः स्युः सौत्रामण्यादयो गणधर्माणां निराकाङ्क्षीकरणसमर्थानामुपदेशेन वातिदेशेन वा प्राप्त्यभावेन सौत्रामण्यादिपशवः साकाङ्क्षा एव भवेयुः । तस्मात्तेष्वैकादशिनविध्यन्त एव । एवञ्च यूपैकाद-शिनेषु प्रतिपशु यूपभेदात्त्रिपशुकायां सौत्रामण्यामपि 'यत्त्रिषु यूपेष्वालभेत बहिर्धा अस्मा इन्द्रियं वीर्यं दध्यादि'ति

## तन्त्रशिखामणिः

प्रत्येकमेव पशूनां विध्यन्ताकाङ्क्षा, न गणत्वेन । प्रत्येकञ्च न गणत्वसामान्यम्, तत्रापि गणान्तःपातित्व-सामान्याधिक्यं प्रत्येकमस्तीति तादृशलिङ्गाधिक्यादैकादशिनविध्यन्तप्राप्तिः । प्रतिपशु यूपदर्शनाच्च । सौत्रा-मण्यां ह्येवमाम्नायते—'यः त्रिषु यूपेष्वालभते बहिर्धा अस्मा इन्द्रियं वीर्यं दधन् भ्रातृव्यमस्मै जनयेत् यद्येकस्मिन्

## भाष्यसन्दर्भयोजिनी

### संशयः

प्राणिद्रव्यकत्वसामान्येनाग्नीषोमोयविध्यन्तो वा ? उत गणत्वसामान्याधिक्येनैकादशिनविध्यन्तो वेति संशयः ।

### पूर्वपक्षः

यथोक्तेन पूर्वाधिकरणोक्तेन न्यायेन प्राणिद्रव्यकत्वसामान्येन देक्षविकृतित्वमेवेत्यर्थः ।

### सिद्धान्तः

तत्प्रवृत्तिरिति । तच्छन्दार्थं विवृणोति-एकादशिनानामिति । प्राणिद्रव्यकत्वसामान्ये सत्यपि गणत्वसामान्याधिक्येनैकादशिनानां विध्यन्तानामेव प्रवृत्तिरित्याह—पशुगणेष्विति । तत्र हेतुं दर्शयति—यूपदर्शनादिति । यत् त्रिषु यूपेष्विति । सौत्राभण्यां प्रतिपशु विकल्पतया यूपत्रित्वं प्राप्तम्, तदिदं वाक्यं तत्प्रतिषिध्य 'एकयूप अलभेत' इति यूपैकत्वं नियमयति । अग्नोषोमोये पशौ पशुरेकः यूपश्चैकः । एकादशिने

### भाष्यम्

शिनविध्यन्तः। तत्र हि प्रतिपशु यूपः। अग्नीषोमीयप्रकृतित्व एक एव यूपः स्यात्। तत्रैतन्नोपपद्यते। तस्मादैकादशिनानां विध्यन्तः पशुगणेषु ॥१५॥

इति पशुगणेष्वैकादशिनविध्यन्तातिदेशाधिकरणम् ॥८॥

९

## अव्यक्तासु तु सोमस्य ॥८.१.१६॥

### विषयः

इदं श्रूयते—'अभिजिता यजेत' 'विश्वजिता यजेत' इत्येवञ्जातीयका यजतयः।

### वार्तिकाभरणम्

प्रतिपशु यूपभेददर्शनमुपपन्नं भवनि। अग्नीषोमीयविध्यन्तप्राप्तौ तु अग्नीषोमीये यूपस्यैकत्वात्, सौत्रामण्ये यूपत्रयदर्शनमनुपपन्नं स्यात्। तस्मादैकादशिनविध्यन्त एव पशुगणेषु। यद्यपि 'यस्य लिङ्गमर्थसंयोगादित्यस्यैवायं प्रपञ्चः तथापि प्रत्येकं गणत्वाभावादित्यभ्यधिकाशङ्कानिराकरणार्थमिदमधिकरणमिति द्रष्टव्यम् ॥ ८ ॥

अव्यक्तासु तु सोमस्य

'विश्वाजिता यजेत' 'अभिजिता यजेत' इत्येवञ्जातीयका यजतयस्तावदुदाहरणम्। तेषु सन्देहः किं तत्र सौमिको विध्यन्तः? उत दार्शपौर्णमासिको विध्यन्तः? इति। तत्र विशेषाभावादनियमः। ननु दर्शपूर्णमा-

### तन्त्रशिखामणिः

यूप आलभेत एक एवास्मिन् इन्द्रियं वीर्यं दधाति नास्मै भ्रातृव्यं जनयति' इति। तत्र यूपत्रयप्रतिषेध ऐकादशिनविध्यन्तग्राहित्व एव प्रतिपशु यूपप्राप्तवेवावकल्पते नाग्नीषोमीयविध्यन्तप्राप्ताविति पशुगणेषु ऐकादशिनविध्यन्तः ॥

वृत्तकधिकरणम् ॥ ८ ॥

सू० अव्यक्तासु तु सोमस्य ॥

इष्टेर्दीक्षणीयाङ्गद्वारा सोमं प्रत्युपकारकतया स्वाभ्यर्हितत्वात्प्रथमं तद्विकृतिपरम्परां विचार्यानन्तरं सोमविकृतिपरम्पराविचारः प्रस्तूयत इति पेटिकयोः पौर्वापर्यभावः। पशुगणेषु लिङ्गविशेषात्तत्तद्विशेषादतिदेश

### भाष्यसन्दर्भयोजिनी

प्रतिपशु यूपभेदः। अग्नीषोमीयविध्यन्तप्राप्तौ प्रतिपशु यूपभेदो नोपपद्यते। एकादशिनानां विध्यन्तप्राप्तौ तु तदिदमुपपद्यत इत्याह —तस्मादिति ॥ १५ ॥

इति पशुगणेष्वैकादशिनविध्यन्तातिदेशाधिकरणम् ॥ ८ ॥

९

### विषयः

अभिजित् विश्वजिदेकाहौ सोमयागौ। द्वादशाहोऽप्युदाहरणम् 'द्वादशाहेन यजेत' इति।

## भाष्यम्

### संशयः

तेषु विध्यन्तचिन्ता—किमेषु सौमिको विध्यन्तः ? उत दार्शपौर्णमासिकः ? इति ।

### पूर्वपक्षः

अविशेषादनियमे प्राप्ते उच्यते—

## वार्तिकाभरणम्

साख्याग्नेयादियागानां 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्यैर्व्यक्तचोदनत्वादव्यक्तत्वसामान्यात्सौमिकविध्यन्त एव स्यादिति चेन्न; आग्नेयादीनां व्यक्तचोदनत्वेऽपि 'उपांशुयाजमन्तरा यजतीत्युपांशुयागविधायकवाक्ये द्रव्यदेवताभावेनोपांशुयाजस्यापि सोमवदव्यक्तत्वेनाव्यक्तत्वसामान्यादनियम इति प्राप्ते ब्रूमः,

## तन्त्रशिखामणिः

इत्युत्थितेरवान्तरसङ्गतिः । इह विश्वजिदादय एकाहा द्वादशाहश्चोदाहरणम् । किन्तेष्वैष्टिकस्सौमिको विध्यन्तः ? उतैष्टिक एव ? किं वा सौमिक एवेति विशये विशेषलिङ्गाभावात् अनियमः । न च तर्हि दर्वीहोमवद् अश्रुत इव किं न स्यादिति वाच्यम्; दर्वीहोमेष्विव 'विश्वजिता यजेतेत्यादिना विहितेषु यागेषु द्रव्यदेवतयोरलाभेन पूर्ववत्त्वावश्यम्भावात् । अस्मादनियमः । उत्पत्तिवाक्यानवगतद्रव्यदेवताकत्वसामान्याधिक्याद्वा उपांशुयाजविध्यन्त इति प्राप्तेऽभिधीयते, सौमिकविध्यन्तस्याव्यक्तचोदानात्वसामान्यात् । अव्यक्तत्वञ्च नोत्पत्तिवाक्यानवगतदेवताकत्वम्, येनोपांशुवाक्यसाधारण्यं स्यात् । किन्तु स्वार्थतया विनियुक्तदेवताराहित्यम् । उपांशुयाजे च मन्त्रवर्णादेव देवतायास्तादर्थ्यावगमात् नाव्यक्तत्वम् । नन्वेवं सोमेऽपि ऐन्द्रवायवं गृह्णातीति तद्धितेन देवतायाः तादर्थ्यावगमात् नाव्यक्तत्वमिति वाच्यम् । तत्र तद्धितेन ग्रहण एव देवता विधीयते न याग इति यागस्य स्वार्थविहितदेवताकत्वाभावादस्त्यव्यक्तत्वम् । नन्वेवं सोमे स्वार्थदेवताभावे कथं देवतोद्देश्यकद्रव्यत्यागात्मकयागनिर्वृत्तिरिति चेत्, उच्यते 'ऐन्द्रवायव गृह्णातीति' तद्धितेन प्रथमं ग्रहणान्विता एव देवतास्त्यज्यमानहविरुद्देश्यकत्वरूपतात्वनिर्वाहाय यागमभिलषन्त्यः पश्चाद्देवतामभिलषता देवतोद्देश्यकद्रव्यत्यागात्मकेन यागेन स्वार्थं ग्रहणं गृह्णता प्रसङ्गात् गृह्यते । यथा पशुकामप्रयोगे स्वार्थं प्रणयनं गृह्णता प्रसङ्गात् पुरोडाशार्थमपि गोदोहनं गृह्यते तद्वत् । ततश्च देवतात्वमात्रं यागनिर्वृत्तौ तन्त्रम् न तु स्वार्थदेवताकत्वमपीति न यागनिर्वृत्त्यनुपपत्तिः । अयञ्चार्थः तन्त्ररत्ने दशमे स्फुटीकृतः, अधस्तात् इष्टेः प्रवृत्तत्वात् सोम इत्यत्र च । नव्यास्तु

## भाष्यसन्दर्भयोजिनी

### संशयः

एषु किमैष्टिकविध्यन्तः प्रवर्तते ? उत सौमिक विध्यन्तः ? सोमयागेष्वप्येतेषु ऐष्टिकपदार्थास्सन्ति भूयांसः, सोमाङ्गतयेष्टीनां विहितत्वात् । अतस्सन्देहः ।

### पूर्वपक्षः

पूर्वन्यायेन पूर्वपक्षं दर्शयति—**अविशेषादिति** । दार्शपौर्णमासिकसौमिकविध्यन्तप्राप्तौ सादृश्यविशेषाभावादनियम इत्यर्थः ।

### भाष्यम्

#### सिद्धान्तः

**अव्यक्तासु तु सोमस्य। काव्यक्तता ? द्रव्यदेवतस्याभावः। द्रव्यदेवतेन हि यागोऽभिव्यज्यते। एताश्चाद्रव्यदेवताश्चोदनाः—'अभिजिता यजेत' इति। एतास्वव्यक्तासु सौमिको विध्यन्तस्स्यात्। कुतः ? अव्यक्तसामान्यात्। सोमोऽप्यव्यक्तचोदनः—'ज्योतिष्टोमेन यजेत' इति। ननु 'सोमेन यजेत' इत्यत्र व्यक्तचोदना, तथापि देवताया अभावादव्यक्तता। तथा च 'श्येनेन यजेत' इत्यव्यक्तचोदिते दीक्षणीयादीनि सोमाङ्गानि दर्शयति 'दीक्षणीयायां**

### वार्तिकाभरणम्

विश्वजिदादिविकृतिष्वव्यक्तत्वसामान्यात्सौमिकविध्यन्त एव। यदुक्तमुपांशुयाजस्याप्यश्रूयमाणदेवताकत्वेनाव्यक्तत्वसामान्यादुपांशुयाजविध्यन्त एव प्रवर्तत इति, तन्न; उपांशुयाजस्य मन्त्रवर्णेन श्रूयमाणदेवताकत्वेन व्यक्तचोदनत्वात्। नन्वाचार्यैः 'प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिस्स्यादि' त्याधिकरणे मान्त्रवर्णिकीं देवतामा-

### तन्त्रशिखामणिः

सोमे प्रथमं तद्धितेन देवताग्रहणे तादर्थ्येन सम्बद्धय पश्चाद् यागेनापि देवताकाङ्क्षिणा ग्रहणद्वारा तादर्थ्येनैव सम्बध्यते अन्यथा प्रसङ्गादेव यागोपकारकत्वे गोदोहनवद् विकृतिष्वतिदेशाभावप्रसङ्गात्। अव्यक्तत्वञ्च तद्धितादिना न द्वारकस्वार्थदेक्ताराहित्यं न तु स्वार्थदेवताराहित्यमात्रमित्याहुः। तन्न; 'यद्देवत्यः पशुः तद्देवत्यः पशुपुरोडाशः' इति श्रुतायां ? विधानेष्टौ पशुयागदेवतायाः संस्कार्यतया प्रधानतया तादर्थ्येन गुणत्वासम्भवात् प्रधानत्वेन यथा निर्वर्त्तकत्वं तथा अत्रापि ग्रहणार्थाया देवतायाः प्रसङ्गादेव निर्वर्त्तकत्वोपपत्तौ तादर्थ्यस्याप्यकल्पनात्। न चैवं विकृतिष्वतिदेशो न स्यादित्युक्तमिति वाच्यम् तर्हि पशुपुरोडाशयागेऽपि तदतिदेशाभावात् यागनिर्वृत्तिः न स्यात्। यदि च पशुयागदेवतासंस्कारतया पशुपुरोडाशयागेऽतिदिष्टे तत्संकार्या देवता प्रसङ्गात् तत्रोपकरिष्यतीत्युच्यते, तदात्रापि देवताविशिष्टे ग्रहणेऽतिदिष्टे ग्रहणसम्बन्धिन्या देवतायाः प्रसङ्गादुपकारकत्वा-

### भाष्यसन्दर्भयोजिनी

#### सिद्धान्तः

**अव्यक्तास्विति**। अव्यक्ततां विवृणोति-**द्रव्यदेवतस्येति**। द्रव्यञ्च देवता च द्रव्यदेवतम् तस्य **अभावः** विधिवाक्ये निर्देशाभावः। उत्पत्त्यनवगतद्रव्यदेवताकत्वरूपाभाव इति यावत्। अयं याग इति परिज्ञानाय द्रव्यदेवतं साधनं भवति। तदिदमेतेषु विधिवाक्येषु नास्तीत्याह—**एताश्चेति**। एता अव्यक्तचोदनाः, ज्योतिष्टोमोऽप्यव्यक्तचोदनः पुष्कलाङ्गः। अतोऽव्यक्तत्वसादृश्येनाभिजिदादयः ज्यौतिष्टोमिकविध्यन्ता इत्याह—**सौमिक इति**। ननु ज्योतिष्टोमवाक्यमधिकारवाक्यम्। तत्र द्रव्यदेवतस्याभावस्स्वाभाविकः, किन्तु तदुत्पत्तिवाक्ये सोमेन यजेत' इत्यत्र देवताया अभावेऽपि द्रव्यं सोमाख्यं निर्दिष्टमस्तीति कथमव्यक्तत्वमिति शङ्कते—**नन्विति**। समाधत्ते--**तथापीति**। द्रव्यस्य सत्वेऽपि देवताया अभावादव्यक्तता। देवतायै द्रव्यत्यागो यागः परिगण्यते। केवलद्रव्यमात्रस्य यागाभिव्यञ्जकत्वं न भवति। अतएवोक्तम् 'द्रव्यदेवतेन हि यागोऽभिव्यज्यत' इति भावः।

भाष्यम्

द्वादशमानं हिरण्यं दक्षिणा' 'चतुर्विंशतिमानं प्रायणीयायाम्' इति। तस्मात्तासु सौमिको विध्यन्तः ॥१६॥

इत्यव्यक्तयागेषु सौमिकविध्यन्तातिदेशाधिकरणम् ॥९॥

१०

## गणेषु द्वादशाहस्य ॥८.१.१७॥

विषयः

इह अहर्गणा उदाहरणम्। द्विरात्रादयः शतरात्रपर्यन्ताः।

वार्तिकाभरणम्

दायोपांशुयाजोऽपि व्यक्तचोदन इत्येतस्यार्थस्य व्यवस्थापितत्वेन गतार्थत्वादिति चेन्न; अत्रत्यन्यायस्यैव तत्रानीतत्वेन पौनरुक्त्याभावात्। अत एवाव्यक्तत्वनिर्वचनं भाष्यकारेणैवात्र कृतम् ॥ ९ ॥

गणेषु द्वादशाहस्य

इहाहर्गणाः द्विरात्रादयः शतरात्रपर्यन्ता उदाहरणम्। तेषु सन्देहः—किं ज्यौतिष्टोमिको विध्यन्तः?

तन्त्रशिखामणिः

सम्भव इति वैषम्यमिति दिक्। तस्मात् सोमविध्यन्तो विश्वजिदादिष्वतिदिश्यते। नन्वव्यक्तत्वसामान्यवद् उत्पत्त्यनवगतद्रव्यदेवतत्वसामान्यस्यापि सत्त्वादुपांशुयाजविध्यन्तो वा किं न स्यात् इति चेत्—न; विश्वजिति पवमाने रथन्तरमाहवे बृहदित्यादि लिङ्गदर्शनोपोद्बलितादव्यक्तचोदनासामान्यात् सौमिकविध्यन्तस्यैव प्रवृत्ति विश्वजिति लिङ्गोपोद्बलितचोदनासामान्यादव्यक्तदेवताकत्वावच्छेदेन सौमिकविध्यन्तकल्पनात् लिङ्गशून्येषूद्भिदादिष्वपि तत्प्रवृत्तिः। न चाव्यक्तचोदनात्वसामान्यात् पशुपुरोडाशयागेऽपि सौमिकविध्यन्तः किं न स्यादिति वाच्यम्। द्रव्यसामान्यस्य बलीयस्त्वेनौषधद्रव्यके तस्मिन् ऐष्टिकविध्यन्तस्यैव प्रवृत्तेरिति दिक्।

वृत्तमधिकरणम् ॥

(सू) गणेषु द्वादशाहस्य

द्विरात्रादिष्वव्यक्तत्वसामान्यात् सौमिकविध्यन्तप्रवृत्तिरित्युत्थितेः सङ्गतिः। द्विरात्रादय उदाहरणम्।

भाष्यसन्दर्भयोजिनी

अव्यक्तासु ज्यौतिष्टोमिकविध्यन्तत्वे प्रमाणमुपस्थापयति—तथा चेति। ज्योतिष्टोमे दीक्षणीयेष्टिः प्रायणीयेष्टिश्चाङ्गम्। 'श्येनेनाभिचरन् यजेत' इति विहितयागे ज्योतिष्टोमतः प्राप्तां दीक्षणीयेष्टिं प्रायणीयेष्टिञ्चानूद्य दक्षिणाविशेषं विधत्ते इति दर्शयति—दीक्षणीयायामिति। यदि दार्शपौर्णमासिकविध्यन्तस्स्यात् तर्हि सौमिकाङ्गत्वेन दर्शनमुपपन्नं न स्यात्। अतः सौमिक एव विध्यन्त इति निगमयति—तस्मादिति ॥१६॥

अव्यक्तयागेषु ज्यौतिष्टोमिकविध्यन्तातिदेशाधिकरणम ॥९॥

१०

विषयः

पूर्वस्मिन्नधिकरणेऽव्यक्तचोदनाचोदितेषु यागेषु द्वादशाहे च ज्यौतिष्टोमिकविध्यन्तस्साधितः। अहर्गणा द्विरात्रादयोऽप्यव्यक्ता एव। तानुदाहृत्य चिन्त्यते।

## भाष्यम्

### संशयः

तेषु सन्देहः—किं ज्यौतिष्टोमिको विध्यन्तः ? उत द्वादशाहिकः ? इति ।

### पूर्वपक्षः

पूर्वेण न्ययेन सौमिके प्राप्ते उच्यते—

### सिद्धान्तः

गणेषु द्वादशाहिको विध्यन्त इति । कुतः ? चोदनासामान्यात् । 'द्वादशाहेन यजेत'

## वार्तिकाभरणम्

उत द्वादशाहविध्यन्तः ? इति । तत्र पूर्वाधिकरणन्यायेन द्विरात्रादीनामप्यव्यक्तत्वात्तेष्वपि सौमिकविध्यन्त एव । ननु द्विरात्रादीनां गणत्वाद्गणत्वसामान्याद् द्वादशाहविध्यन्त एव प्रवर्तत इति चेत्; तथासति एकादशिन्या अपि गणत्वात्तद्विध्यन्तोऽपि प्रसज्येत । तस्माद्गणत्वं न प्रयोजकम् । तेनाव्यक्तत्वसामान्यात्सौमिकविध्यन्ते प्राप्ते ब्रूमः,

द्वादशाहविध्यन्त एव । अव्यक्तत्वे सति गणत्वं तन्त्रम् । एकादशिन्यां सत्यपि गणत्वेऽव्यक्तत्वाभावान्न-तद्विध्यन्तप्राप्तिः । अत्यल्पमिदमुच्यते । गणशब्देन च अहर्गणो विवक्षितः । अहर्गणत्वञ्च द्वादशाहस्य न त्वेकाद-

## तन्त्रशिखामणिः

तेषु किं सोमिकविध्यन्तः ? उत द्वादशाहविध्यन्तः ? इति विशयः । तत्राव्यक्तत्वसामान्यात् सौमिकविध्यन्तः । न च गणत्वसामान्यात् द्वादशाहिकः किं न स्यादिति वाच्यम् गणत्वसामान्यमात्रेण धर्मप्राप्तौ एकादशिनादपि तत्प्राप्तिप्रसङ्गाद् अहर्गणत्वसामान्यादेव तत्प्राप्तिः वाच्या । ततश्च द्विरात्रादयो रात्रिगणा इति न तेष्वहर्गण-रूपात् द्वादशाहाद्विध्यन्तप्राप्तिः । अतस्तेषु सौमिकविध्यन्त इति प्राप्ते, उच्यते द्विरात्रादिषु गणेषु अव्यक्तत्वे सति गणत्वसामान्याधिक्यात् द्वादशाहविध्यन्तः एकादशिनानाञ्च गणत्वेऽपि नाव्यक्तत्वमिति नातिप्रसङ्गः । किञ्च

## भाष्यसन्दर्भयोजिनी

### संशयः

द्विरात्रादिष्वहर्गणेषु विध्यन्तः किं ज्योतिष्टोमात्प्राप्यते ? उत द्वादशाहात् ? इति सन्देहं दर्शयति—तेषु सन्देह इति ।

### पूर्वपक्षः

पूर्वेणेति । अव्यक्तचोदनाचोदितेषु ज्योतिष्टोमविध्यन्तः प्राप्यत इति साधितम् द्विरात्रादयोऽप्यव्यक्ताः स्वार्थचोदितदेवताराहित्या एव । अतो ज्योतिष्टोमिकविध्यन्त एव प्रवर्तत इत्यर्थः ।

### सिद्धान्तः

अव्यक्तत्वसामान्ये सत्यपि गणत्वसामान्यमधिकमस्तीति दर्शयति—गणेष्विति । अहश्शब्दस्य रात्रि शब्दस्य च न तत्तत्कालवाचित्वम् किन्तूभयोरहोरात्रवचनत्वमाह—अहोरात्रवचन इति । तेन द्वादशानां दिनानां

## भाष्यम्

'द्विरात्रेण यजेत' इति। अहश्शब्दोऽप्यहोरात्रवचनः रात्रिशब्दोऽपि। एतच्छब्दगतं लिङ्गम्। अर्थगतमपि गणत्वम्। अत एव सङ्घातधर्मैर्गणमनुग्रहीतुं समर्थो, नैकाहः। द्वाभ्यां लोमावद्यति द्वाभ्यां मांसम्' इत्येतदारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति। तस्मादहर्गणानां द्वादशाहः प्रकृतिः ॥१७॥

इत्यहर्गणेषु द्वादशाहिकविध्यन्तातिदेशाधिकरणम् ॥१०॥

## वार्तिकाभरणम्

शिन्याः। न चाहरुपहितो द्वादशाहः। रात्र्युपहितो द्विरात्रादिः। तथा च वैसादृश्यात्कथं गणत्वसामान्यात् द्वादशाहविध्यन्तप्राप्तिरिति वाच्यम्। अहश्शब्दस्य रात्रिशब्दस्य चाहोरात्रपरत्वेनोभयोरप्यहोरात्रनिमित्तगुणत्वेन सादृश्यसम्भवात्। तथा चाहीनरात्रवचनचोदनागताहश्शब्दरात्रिशब्दलक्षणशब्दसादृश्यात्सङ्घातत्वलक्षणार्थसादृश्याच्च द्वादशाहविध्यन्त एव। एवं 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्त' इति द्वादशाहधर्मा लभ्यन्ते। द्वादशाहविध्यन्तप्राप्तिरित्यत्र प्रायणीयोदयनीयौ वर्जयित्वा अवशिष्टदशरात्रविध्यन्तप्राप्तिरिति दशमे वक्ष्यते ॥ १० ॥

## तन्त्रशिखामणिः

यद्यपि द्वादशाहेन यजेतेति श्रूयते, तथापि तैत्तरीये 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते'ति श्रवणात् रात्रिगणत्वसामान्यमप्यविशिष्टम्, अपि च नामार्थो न विधेय इति नामधेयपादे प्रतिपादितत्वात् रात्रिशब्दोऽनुवादतया यथाप्राप्ति वर्णयितव्यो द्विरात्रादिषु च सवनत्रयप्राप्तेः अहः परिमितकर्मप्राप्तिरिति रात्रिपदं लक्षणया अहः परिमिताहर्गणत्वमपि भवति विशेषलिङ्गम्। तस्मादहः परशब्दकत्वरूपचोदनासामान्यात् गणत्वरूपार्थसामान्याद् गणनियमलाभाच्च गणेषु द्वादशाहविध्यन्तः। एवञ्च गवामयने 'द्वाभ्यां लोमावद्यन्ति' इत्यारभ्य द्वादशोपसत्त्वदर्शनमुपपन्नम्। प्रयोजनञ्च 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यादि द्वादशाहिकधर्मप्राप्तिः।

वृत्तमधिकरणम् ॥

## भाष्यसन्दर्भयोजिनी

द्विरात्रादिदिनानाञ्च गणरूपत्वं सिध्यति। यथा शब्दगतं लिङ्गं तथार्थगतलिङ्गमपि सिध्यतीत्याह—**अर्थगतमपीति**। द्वादशानामन्हां गणः, द्विरात्रादीनां संवत्सरपर्यन्तानामन्हां गण इति गणत्वेन सादृश्यमधिकमस्तीति सामान्यम्। किञ्च धर्मा अहोरूपेण केचन विधीयन्ते, कतिचन चाहस्सङ्घातगणरूपेण विधीयन्ते। यदि ज्योतिष्टोमिकविध्यन्त एव प्राप्नुयात्तर्हि अहोरूपेण विहिता एव धर्माः स्युः, नाहस्सङ्घातरूपेण विहिता धर्माः प्राप्नुयुः। अहस्सङ्घातधर्मा नान्हा ग्रहीतुं समर्था इत्याह—**नैकाह इति**। के ते सङ्घातधर्माः ? तान् दर्शयति—'द्वाभ्यां लोमावद्यति' इति। इमे च धर्मा द्वादशाहे सन्ति, न ज्योतिष्टोमे। अतो द्वादशाहविकृतित्वमेवाहर्गणानामिति निगमयति—**तस्मादिति**।

इत्यहर्गणेषु द्वादशाहिकविध्यन्तातिदेशाधिकरणम् ॥१०॥

## भाष्यम्

११

# गव्यस्य च तदादिषु ॥८.१.१८॥

### विषयः

इह संवत्सरसत्राण्युदाहरणम्, आदित्यानामयनप्रभृतीनि ।

### संशयः

तेषु चिन्ता—किं द्वादशाहिको विध्यन्तः ? उत गावामयनिकः ? इति ।

## वार्तिकाभरणम्

गव्यस्य च तदादिषु

इह संवत्सरसत्राण्यादित्यानामयनप्रभृतीन्युदाहरणम् । तत्र संशयः किं तेषु द्वादशाहिको विध्यन्तः ? उत गावामयनिकः ? इति । तत्र पूर्वाधिकरणन्यायेन गणत्वसामान्याद्द्वादशाहिको विध्यन्तः प्रवर्तते । नन्वयनत्वाद्गवामयनविध्यन्तोऽस्त्विति चेन्न; तथात्वे दाक्षायणयज्ञविध्यन्तस्यापि प्राप्त्या अतिप्रसङ्गात् । तस्माद् द्वादशाहिको विध्यन्त इति प्राप्ते ब्रूमः,

गवामयनस्यादित्यानाभयनप्रभृतिसत्राणाञ्च संवत्सरसत्रत्वसामान्याद्गावामयनिकविध्यन्त एव ।

## तन्त्रशिखामणिः

( सू० ) गव्यस्य च तदादिषु

द्विरात्रादिष्विवादित्यानामयनादिषु संवत्सरसत्रेष्वपि द्वादशाहविध्यन्त इत्युत्थितेः सङ्गतिः । आदित्यानामयनादिषु संवत्सरसत्रेषु किं द्वादशाहिको विध्यन्तः उत गावामयनिक इति विशये अहर्गणत्वसामान्यात् द्वादशाहिको विध्यन्तः । न चायनशब्दवत् चोदनासामान्यात् अर्थगतसामान्यापेक्षया बलीयसा गवामयनविध्यन्त इति वाच्यम् । दाक्षायणयज्ञादावपि तत्प्रवृत्तिप्रसङ्गादिति प्राप्तेऽभिधीयते, अयनशब्दोऽत्रायनद्वयवत् वत्सरपरः ततश्च वत्सरपरशब्दवच्चोदनासामान्यात् संवत्सरसत्रत्वरूपार्थगतसामान्यात् संवत्सरनियमलिङ्गाच्च गावामनिक-

## भाष्यसन्दर्भयोजिनी

११

### विषयः

पूर्वस्मिन्नधिकरणेऽहर्गणानां गवामयनस्य च द्वादशाहप्रकृतिकत्वं प्रसाधितम् । अस्मिन्नधिकरणे 'उपेयुः' 'आसीरन्' इत्यादिविधिभिश्चोदितान् आदित्यानामयनम् इत्यादिसंवत्सरसाध्यान् क्रतूंनुदाहृत्य किमिमे द्वादशाहप्रकृतिकाः उत गवमायनप्रकृतिका इति विचारयितुमुदाहरति —इह संवत्सरसत्राणीति ।

### संशयः

गणत्वसामान्यस्य द्वादशाहे गवामयने च वर्तमानत्वात्सत्राणि कस्य विकृतय इति सन्देहः ।

## भाष्यम्

### पूर्वपक्षः

पूर्वोक्तेन न्यायेन द्वादशाहिके प्राप्ते, अभिधीयते—

### सिद्धान्तः

गव्यस्य च तदादिषु । गव्यमिति गवामयनं ब्रूमः गोसम्बन्धात्—'गावो वा एतत्सत्रमासत' इति । तस्य विध्यन्तस्तदादिषु स्यात् । कुतः ? संवत्सरसामान्यात् । 'पत्न्य उपगायन्ति'

## वार्तिकाभरणम्

अव्यक्तत्वे सत्ययनत्वं तन्त्रम् । तच्च दाक्षायणयज्ञे न सम्भवतीति न तद्विध्यन्तः । अत्यल्पमिदमुच्यते अत्रत्यायनशब्दस्तावदब्दपर्यायो विवक्षितः । न हि दाक्षायणयज्ञगतोऽयनशब्दः अब्दपर्यायः, येन तद्विध्यन्तः शङ्क्येत । आदित्यानामयनप्रभृतिसत्राणां गवामयनविकारत्वे 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्नित्यादि गावामनिकधर्मो-लभ्यते, नान्यथा । तस्माद्गावामयनिकविध्यन्तः । ननु "गोपयसोर्यत्" इति सूत्रेण विकारावयवयोरेवोत्पन्नो गव्यशब्दः कथं 'गव्यस्य च तदादिविकृतिष्वि'ति सूत्रे गवामयने प्रयुक्तः ? न च 'गावो वा एतत्सत्रमासत' इति सत्रस्य गोकर्तृकत्वेन गोसम्बन्धात्सम्बन्धविशेषे विहितस्यापि यत्प्रत्ययस्य उपचारात्सम्बन्धसामान्ये प्रयोग इति वाच्यम् । 'सर्वत्र गोरजादिप्रसंगे यद्वक्तव्य' इति वार्तिकेन यत्प्रत्ययस्य सम्बन्धसामान्येऽपि मुख्यत्वेन लक्षणाश्र-

## तन्त्रशिखामणिः

विध्यन्तः । एवं च संवत्सरसत्रविशेषे पत्न्य उपागायन्तीत्यनुवाद उपपन्नः । पत्न्युपगानस्य गावामयनिकस्य तत्प्राप्तेः । अन्यथा ऋत्विगुपगानस्यैव द्वादशाहात्प्राप्तेरनुवादासम्भवः । किञ्च विश्वसृजां सहस्रसंवत्सरे ऋत्विज उपगायन्तीति विधिः गावामयनिकधर्मातिदेश एवार्थवान् । गवामयने हि द्वादशाहादृत्विगुपगानं प्राप्तं पत्न्युपगानञ्च तत्रोपदिष्टम् द्वयोश्च दशमे समुच्चयो वक्ष्यते । ततश्च विश्वसृजां सहस्रसंवत्सरेऽपि समुच्चयेऽपि समुच्चय-प्राप्तावृत्विगुपगानस्य पुनर्विधिः पत्न्युपगाननिवृत्त्याऽर्थवान् भवति । द्वादशाहिकधर्मप्राप्तऋत्विगुपगानस्य

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

द्वादशाहविकृतिमेवेति पूर्वपक्षयति—पूर्वोक्तेन न्यायेनेति ।

### सिद्धान्तः

सौत्रगव्यशब्दं विवृणोति—गव्यमितीति । अयनस्यास्य गोसम्बन्धं प्रदर्शयति—गावो वेति । तस्य गव्यस्य गवामयनस्य विध्यन्तः तदादिषु तद्गवामयनमादिर्येषां ते तदादयः तेषु आदित्यानामयनादिष्वित्यर्थः । गणत्वसामान्यमादायैव द्वादशाहप्रकृतिकत्वमेषां स्वीक्रियताम्, किमिति गवामयनप्रकृतिकत्वमुच्यत इत्यतोऽधिकं सामान्यं दर्शयति—संवत्सरेति । संवत्सरसाध्यत्वमधिकं सामान्यं गवामयनेनैषां वर्तत इत्यर्थः । संवत्सरसामान्यप्रयुक्तधर्मान् दर्शयति—पत्न्य इति ।

भाष्यम्

इति च माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति। 'ऋत्विज उपगायन्तीति' च सहस्रसंवत्सरे ॥१८॥

इति सत्रेषु गावामयनिकविध्यन्तातिदेशाधिकरणम् ॥११॥

१२

## निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥ ८.१.१९ ॥

विषयः

निकाय इति सङ्घात औत्तराधर्येणावस्थित उच्यते। स येषान्ते निकायिनः। यथा

वार्तिकाभरणम्

यणेन यत्प्रत्ययविधानस्यान्याय्यत्वात् इदं वार्तिकमभिप्रेत्य भगवता शबरस्वामिना गव्य इति गवामयनं ब्रूमः गोसम्बन्धाद्गावो वा एतत्सत्रमासतेत्युक्तम् ॥ ११ ॥

निकायिनान्तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्

साहस्रा इत्येकसंज्ञया प्रस्तूयमाना यागा निकायिन उच्यन्ते। तथा साद्यस्क्रा इत्येकसंज्ञया प्रक्रम्य पठ्यमाना यागा निकायिन उच्यन्ते। निकायः सङ्घातः येषामस्ति ते निकायिन इत्यर्थः। तत्र प्रथमौ निकायिनौ

तन्त्रशिखामणिः

प्राप्तत्वात्पुनर्विधानानर्थक्यात्। तस्माद् गावामयनिकधर्माः संवत्सरसत्रेषु। प्रयोजनञ्च 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्नित्यादिधर्मप्राप्तिः।

वृत्तमधिकरणम् ॥

सू० निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥

आदित्यानामयनादिष्विव उत्तरेषु निकायिषु चोदनासामान्यात् विशेषादर्शनात् धर्मविशेषलिप्साभावाच्च पूर्वयागाः सौधापरपर्यायसङ्घापरपर्यायनिकायान्तर्वर्तितया निकायिनामधेयकाः इहोदाहरणम्। तत्र

भाष्यसन्दर्भयोजिनी

महाव्रतमिति गवामयनान्तर्गतमहः। तत्र यजमानपत्न्य उपगायन्ति तदत्रायने दर्शयति पत्न्य उपगायन्ती'ति। तेन गावामयनिको विध्यन्त आदित्यानामयनादावतिदिश्यत इति सिद्धम् ॥१८॥

इत्ययनेषु गावामयनिकविध्यन्तातिदेशाधिकरणम् ॥११॥

१२

विषयः

अयनानां संसाध्य गवामयनप्रकृतिकत्वं सम्प्रति निकायिनां प्रकृतिविचारः क्रियते। निकायिशब्दार्थ विवृणोति—सङ्घात इति। निकायस्सङ्घात इत्यर्थः। निकाये क्रतूनां सङ्घ उत्तराधररूपेणावस्थितो भवति।

### भाष्यम्

साहस्राः साद्यस्क्राः । तेषां पूर्वस्य केचिद्धर्मा आम्नाताः, उत्तरे त्वधर्मकाः ।

### संशयः

तत्र चिन्त्यते—किं ज्योतिष्टोमस्य विध्यन्तः ? उत प्रथमस्य निकायिनः ? इति ।

### पूर्वपक्षः

अव्यक्तचोदनत्वाज्ज्योतिष्टोमस्येति प्राप्ते, उच्यते—

### सिद्धान्तः

निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् । कुतः ? निकायित्वसामान्यात् । सहस्राणां

### वार्तिकाभरणम्

धर्मवन्तौ, इतरे द्विविधा अपि निकायिनस्तावदधर्मकाः । तत्र संशयः किं निकायिषु ज्योतिष्टोमस्य विध्यन्तः ? उत प्राथमिकस्य निकायिनो विध्यन्त इति । तत्राव्यक्तत्वसामान्याज्ज्यौतिष्टोमिको विध्यन्तः । ननु साहस्रादिनामधेयेन प्राथमिकस्य विध्यन्तोऽस्तु । उच्चते-साहस्रादिनामधेयस्य सर्वेषु युगपत्प्रयुज्यमानत्वेन सर्वत्र मुख्यतया नातिदेशकत्वम् । न च साहस्रादि नामधेयेन प्राथमिकधर्माणामतिदेशाभावेऽपि निकायित्वान्तरसामान्यात्प्राथमिकविध्यन्तोऽस्त्विति वाच्यम् । तथासति साहस्राणां साद्यस्क्राणामुभयेषामपि निकायित्वात्साहस्रधर्माः साद्यस्क्रेषु साद्यस्क्रधर्माः साहस्रेषु च प्राप्नुवन्तीति साङ्कर्यप्रसङ्गात् । तस्माज्ज्योतिष्टोमविध्यन्त इति प्राप्ते ब्रूमः, निकायित्वसामान्यात्प्राथमिकस्य विध्यन्तः । यत्तावदुक्तं निकायित्वसामान्याद्विध्यन्तप्राप्तौ सङ्कर इति

### तन्त्रशिखामणिः

पूर्वो धर्मवान् उत्तरे त्वधर्मकाः । तेषु किमुत्तरेषु निकायिषु सौमिकविध्यन्तः उत पूर्वनिकायिविध्यन्त इति विशये सामान्याधिक्याभावात् अव्यक्तत्वेन सौमिकविध्यन्तः । न च साहस्रादिना अपूर्वनिकायिधर्मातिदेश इति वाच्यम् । एकस्मिन् मुख्यतया प्रथमं प्रवृत्तं पुनरन्यस्मिन् प्रयुज्यमानं नामधेयं गौणतयातिदेशकं भवति । साहस्रादिनामधेयत्वे युगपत्प्रवर्त्तमानं सर्वेषु मुख्यतया नातिदेशकम् । नापि निकायित्वेन लिङ्गेन पूर्वनिकायिधर्मे प्रवृत्तिरिति शङ्क्यम् । तथा सति साद्यस्क्रनिकायिनोऽपि धर्मातिदेशापत्तेः । तस्मादुत्तरेष्वपि सौमिकविध्यन्त इति प्राप्तेऽभिधीयते, निकायिनां मध्ये एकस्य धर्माः उत्तरेषु प्रवर्त्तेरन्, एकनिकायवर्तित्वसामान्यात् साहस्राद्येकनामधेयवत्त्वसामान्याच्च । न चैवं प्रायणीयाद्येकनामवत्सु अप्यधर्मकेषु सधर्मकात् धर्मातिदेशः स्यादिति वाच्यम् । इष्टत्वात्,

### भाष्यसन्दर्भयोजिनी

पूर्वं विद्यमाना विध्यन्तसहिताः उत्तरञ्च विद्यमानास्तद्रहिताः । एतादृशस्सङ्घ येषामस्ति ते निकायिनः । तेषामभिधानं दर्शयति—साहस्राः साद्यस्क्रा इति । सङ्कल्पप्रकृति अवभृथान्तं कर्मजातं एकस्मिन्नहनि सद्यः यत्र क्रियते तत्र साद्यस्क्रशब्दव्यहारः ।

#### संशयः

किं निकायिनोऽव्यक्ता इति ज्योतिष्टोमविकृतयः ? उत प्रथमनिकायिनो विकृतयः ? इति संशयं दर्शयति—किमिति । ज्योतिष्टोमस्य निकायिनाञ्च सामान्यमव्यक्तचोदनाचोदितत्वमस्त्येवेति ज्योतिष्टोमविकृतित्वमेवेति पूर्वपक्षयति—अव्यक्तेति । पूर्वस्येति । उत्तरेषु निकायिषु विध्यन्तप्रवृत्तिरिति सिद्धान्ते प्रमाणं दर्शयति—निकायित्वसामान्यादिति । अयमत्र विषयविवेकः—साहस्रा इति साद्यस्क्रा इति च प्रस्तुत्य

भाष्यम्

इति च माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति। 'ऋत्विज उपगायन्तीति' च सहस्रसंवत्सरे ॥१८॥

इति सत्रेषु गावामयनिकविध्यन्तातिदेशाधिकरणम् ॥११॥

१२

निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥ ८.१.१९ ॥

विषयः

निकाय इति सङ्घात औत्तराधर्येणावस्थित उच्यते। स येषान्ते निकायिनः। यथा

वार्तिकाभरणम्

यणेन यत्प्रत्ययविधानस्यान्याय्यत्वात् इदं वार्तिकमभिप्रेत्य भगवता शबरस्वामिना गव्य इति गवामयनं ब्रूमः गोसम्बन्धाद्गावो वा एतत्सत्रमासतेत्युक्तम् ॥ ११ ॥

निकायिनान्तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्

साहस्रा इत्येकसंज्ञया प्रस्तूयमाना यागा निकायिन उच्यन्ते। तथा साद्यस्क्रा इत्येकसंज्ञया प्रक्रम्य पठ्यमाना यागा निकायिन उच्यन्ते। निकायः सङ्घातः येषामस्ति ते निकायिन इत्यर्थः। तत्र प्रथमौ निकायिनौ

तन्त्रशिखामणिः

प्राप्तत्वात्पुनर्विधानानर्थक्यात्। तस्माद् गावामयनिकधर्माः संवत्सरसत्रेषु। प्रयोजनञ्च 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षरेन्नित्यादिधर्मप्राप्तिः।

वृत्तमधिकरणम् ॥

सू० निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥

आदित्यानामयनादिष्विव उत्तरेषु निकायिषु चोदनासामान्यात् विशेषादर्शनात् धर्मविशेषलिप्साभावाच्च पूर्वयागाः सौधापरपर्यायसङ्घापरपर्यायनिकायान्तर्वर्तितया निकायिनामधेयकाः इहोदाहरणम्। तत्र

भाष्यसन्दर्भयोजिनी

महाव्रतमिति गवामयनान्तर्गतमहः। तत्र यजमानपत्न्य उपगायन्ति तदत्रायने दर्शयति पत्न्य उपगायन्ती'ति। तेन गावामयनिको विध्यन्त आदित्यानामयनादावतिदिश्यत इति सिद्धम् ॥१८॥

इत्ययनेषु गावामयनिकविध्यन्तातिदेशाधिकरणम् ॥११॥

१२

विषयः

अयनानां संसाध्य गवामयनप्रकृतिकत्वं सम्प्रति निकायिनां प्रकृतिविचारः क्रियते। निकायिशब्दाथ विवृणोति—सङ्घात इति। निकायस्सङ्घात इत्यर्थः। निकाये क्रतूनां सङ्घ उत्तराधररूपेणावस्थितो भवति।

### भाष्यम्

साहस्राः साद्यस्क्राः । तेषां पूर्वस्य केचिद्धर्मा आम्नाताः, उत्तरे त्वधर्मकाः ।

### संशयः

तत्र चिन्त्यते—किं ज्योतिष्टोमस्य विध्यन्तः ? उत प्रथमस्य निकायिनः ? इति ।

### पूर्वपक्षः

अव्यक्तचोदनत्वाज्ज्योतिष्टोमस्येति प्राप्ते, उच्यते—

### सिद्धान्तः

निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् । कुतः ? निकायित्वसामान्यात् । सहस्राणां

### वार्तिकाभरणम्

धर्मवन्तौ, इतरे द्विविधा अपि निकायिनस्तावदधर्मकाः। तत्र संशयः किं निकायिषु ज्योतिष्टोमस्य विध्यन्तः ? उत प्राथमिकस्य निकायिनो विध्यन्त इति । तत्राव्यक्तत्वसामान्याज्ज्यौतिष्टोमिको विध्यन्तः । ननु साहस्रादिनामधेयेन प्राथमिकस्य विध्यन्तोऽस्तु । उच्चते-साहस्रादिनामधेयस्य सर्वेषु युगपत्प्रयुज्यमानत्वेन सर्वत्र मुख्यतया नातिदेशकत्वम् । न च साहस्रादि नामधेयेन प्राथमिकधर्माणामतिदेशाभावेऽपि निकायित्वान्तरसामान्यात्प्राथमिकविध्यन्तोऽस्त्विति वाच्यम् । तथासति साहस्राणां साद्यस्क्राणामुभयेषामपि निकायित्वात्साहस्रधर्माः साद्यस्क्रेषु साद्यस्क्रधर्माः साहस्रेषु च प्राप्नुवन्तीति साङ्कर्यप्रसङ्गात् । तस्माज्ज्योतिष्टोमविध्यन्त इति प्राप्ते ब्रूमः, निकायित्वसामान्यात्प्राथमिकस्य विध्यन्तः । यत्तावदुक्तं निकायित्वसामान्याद्विध्यन्तप्राप्तौ सङ्कर इति

### तन्त्रशिखामणिः

पूर्वो धर्मवान् उत्तरे त्वधर्मकाः । तेषु किमुत्तरेषु निकायिषु सौमिकविध्यन्तः उत पूर्वनिकायिविध्यन्त इति विशये सामान्याधिक्याभावात् अव्यक्तत्वेन सौमिकविध्यन्तः । न च साहस्रादिना अपूर्वनिकायिधर्मातिदेश इति वाच्यम् । एकस्मिन् मुख्यतया प्रथमं प्रवृत्तं पुनरन्यस्मिन् प्रयुज्यमानं नामधेयं गौणतयातिदेशकं भवति । साहस्रादिनामधेयत्वे युगपत्प्रवर्त्तमानं सर्वेषु मुख्यतया नातिदेशकम् । नापि निकायित्वेन लिङ्गेन पूर्वनिकायिधर्मे प्रवृत्तिरिति शङ्क्यम् । तथा सति साद्यस्क्रनिकायिनोऽपि धर्मातिदेशापत्तेः । तस्मादुत्तरेष्वपि सौमिकविध्यन्त इति प्राप्तेऽभिधीयते, निकायिनां मध्ये एकस्य धर्माः उत्तरेषु प्रवर्त्तेरन्, एकनिकायवर्तित्वसामान्यात् साहस्राद्येकनामधेयवत्त्वसामान्याच्च । न चैवं प्रायणीयाद्येकनामवत्सु अप्यधर्मकेषु सधर्मकात् धर्मातिदेशः स्यादिति वाच्यम् । इष्टत्वात्,

### भाष्यसन्दर्भयोजिनी

पूर्वं विद्यमाना विध्यन्तसहिताः उत्तरञ्च विद्यमानास्तद्रहिताः । एतादृशसङ्घ येषामस्ति ते निकायिनः । तेषामभिधानं दर्शयति—साहस्राः साद्यस्क्रा इति । सङ्कल्पप्रकृति अवभृथान्तं कर्मजातं एकस्मिन्नहनि सद्यः यत्र क्रियते तत्र साद्यस्क्रशब्दव्यहारः ।

### संशयः

किं निकायिनोऽव्यक्ता इति ज्योतिष्टोमविकृतयः ? उत प्रथमनिकायिनो विकृतयः ? इति संशयं दर्शयति—किमिति । ज्योतिष्टोमस्य निकायिनाञ्च सामान्यमव्यक्तचोदनाचोदितत्वमस्त्येवेति ज्योतिष्टोमविकृतित्वमेवेति पूर्वपक्षयति—अव्यक्तेति । पूर्वस्येति । उत्तरेषु निकायिषु विध्यन्तप्रवृत्तिरिति सिद्धान्ते प्रमाणं दर्शयति—निकायित्वसामान्यादिति । अयमत्र विषयविवेकः—साहस्रा इति साद्यस्क्रा इति च प्रस्तुत्य

## भाष्यम्

**साहस्रसामान्यात् । साहस्राणां साद्यस्क्रसामान्यात् । एवं सर्वत्र । पूर्वस्मिंश्च साहस्रे सहस्रं दक्षिणामाम्नायोत्तरस्मिन् दर्शयति । 'यावदस्य साहस्रस्योत्तरा गौः समाहिता भवति तावदस्माल्लोकादसौ लोकः' इति । तथा पूर्वस्मिन् साद्यस्क्रे 'साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानाम्' इत्याम्नायोत्तरस्मिन्नपि तमेव दर्शयति । स्त्री गौः सोमक्रयणी । व्यावृत्ता ह्येषां स्पर्धिता' इति । तस्मात्पूर्वस्योत्तरेषु धर्माः ॥ १९ ॥**

**इति निकायिनां पूर्वस्योत्तरेषु विध्यन्तातिदेशाधिकरणम् ॥ १२ ॥**

## वार्तिकाभरणम्

तन्न; न हि निकायित्वमात्रं तन्त्रम्, येन सङ्करस्स्यात् । किन्तु तत्तन्निकायित्वम् । एवञ्च साहस्रनिकायित्वसामान्यात्साहस्राणां चतुर्णां मध्ये प्रथमस्य धर्म इतरेषु त्रिषु । तथा साद्यस्क्रनिकायित्वसामान्यात् साद्यस्क्राणां चतुर्णां मध्ये प्रथमस्य धर्म इतरेषु त्रिष्विति न सङ्करः । ननु साहस्रादिनामधेयस्य लिङ्गत्वाभ्युपगमे अग्निहोत्रादिनाधेयस्यापि चोदनालिङ्गत्वेन तत्सामान्यादेवेतिदेवासिद्धेर्नामातिदेशः क्वापि न स्यादिति चेन्न; अग्निहोत्रशब्दस्य नैयामिकाग्निहोत्रे मुख्यत्वेऽपि मासाग्निहोत्रे गौणतयातिदेशकत्वे सम्भवति तदपेक्षया दुर्बलचोदनालिङ्गसामान्यातिदेशाभ्युपगमस्यान्याय्यत्वात् । तस्मात्प्राथमिकविध्यन्तः । एवञ्च प्राथमिके साहस्रे विहितायाः सहस्रदक्षिणाया उत्तरस्मिन्साहस्रे 'यावदस्य सहस्रस्य उत्तराधरा गौर्गवि समाहिता भवति तावदस्माल्लोकादसौ लोकः' इति दर्शनम् । तथा प्राथमिके साद्यस्क्रे 'साण्डः त्रिवर्षः सोमक्रयणस्पर्धमानानाम्' इत्याम्नातस्योत्तरस्मिन्साद्यस्क्रे स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषा स्पर्धे'ति दर्शनमुपपद्यते । ज्योतिष्टोमविध्यन्तप्राप्ताविदं दर्शनं नोपपद्यते ॥ १२ ॥

## तन्त्रशिखामणिः

नाम्ना तु तत्र नातिदेशः, अग्निहोत्रपदवत् प्रायणीयपदस्य एकत्र नियामकाभावेन मुख्यत्वाभावादित्येव पूर्वमुक्तत्वादित्याहुः । एवं च यावदस्य साहस्रस्य उत्तराधरा गौर्गवि समाहिता भवति तावदस्माल्लोकादसौ लोक इत्युत्तरस्मिन् साहस्रपूर्वसाहस्रमाहितसहस्रसङ्ख्याकगोदक्षिणादर्शनमुपपद्यते, तथा पूर्वस्मात् साद्यस्क्रात् साध्यस्य सोमक्रयणस्य प्राप्तत्वादेवोत्तरस्मिन् स्त्री गौः सोमक्रयणीति स्त्रीत्वविधिरर्थवान् सोमविध्यन्तप्राप्तौ एकहायन्याः प्राप्तेः न स्त्रीत्वविधेः प्रयोजनम्, अतः पूर्वविध्यन्त उत्तरविधिष्विति दिक् ।

वृत्तमधिकरणम् ॥

## भाष्यसन्दर्भयोजिनी

ये क्रतवो विहितास्ते निकायिन इत्युच्यन्ते । एतेषु निकायित्वं सामान्यम् । निकायो नाम सङ्घः स एषामस्तीति व्युत्पत्त्या निकायिनोऽनेके । तत्र पूर्वो निकायो धर्मवान्, उत्तरस्तु तद्रहितः । एतेषामेव साहस्रा इति साद्यस्क्रा इति च संज्ञा । तेन साहस्रनिकायिनः, साद्यक्रनिकायिन इति भेदेन साहस्रसामान्यं साद्यस्क्रसामान्यमिति निकायिषु भेदो जायते । एवं सिद्धे भेदे तत्रत्यविशेषमाह—**पूर्वस्मिश्चेति** । प्रथमे साहस्रे सहस्रदक्षिणां विधायोत्तरस्मिन् तां दर्शयतीति पूर्वोत्तरयोस्सामान्यम् । एवं साद्यस्क्रेऽपीत्याह—**पूर्वस्मिन्निति** ।

इति निकायिनां पूर्वस्योत्तरेषु विध्यन्तातिदेशाधिकरणम् ॥१२॥

भाष्यम्

१३

# कर्मणस्त्वप्रवृत्तित्वात्फल-नियम-कर्तृ-समुदायस्या-नन्वयस्तद्बन्धनत्वात् ॥ ८.१.२० ॥

विषयः

इह फल-नियम-कर्तृ-समुदाया उदाहरणम् । फलं स्वर्गः, नियमो यावज्जीविकोऽभ्यासः,

टुप्टीका

सौर्ये करणस्य प्रत्यक्षत्वात्करणान्तरस्याप्रवृत्तिः, आनुमानिकत्वात् । इतिकर्तव्यताकाङ्क्षायामिति-

वार्तिकाभरणम्

कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्सम्बन्धत्वात्

इह फलनियमकर्तृसमुदाया उदाहरणम्। फलं स्वर्गः। नियमः यावज्जीविकोऽभ्यासः। कर्ता स्वर्गकामः। समुदायः दर्शपूर्णमासौ। तत्र संशयः किं फलनियमकर्तृसमुदायाः सौर्यादिष्वतिदिश्यन्ते ? न वेति ? फलनियमकर्तृसमुदायानामपि प्रकृतिभावनासम्बन्धात्प्रयाजाद्यङ्गवदतिदेश इति पूर्वः पक्षः। ननु भाष्यकारेण 'किं प्राप्तमिष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरिति न्यायेन प्रवृत्तिरिति प्राप्तमि'ति दर्शपूर्णमासाख्यकर्मण एव प्रवृत्तिरिति पूर्वपक्षकरणात्फलनियमकर्तृसमुदायानां प्रवृत्तिरिति पूर्वपक्षकरणाभावात्कथं फलादीनामतिदेश इति पूर्वपक्ष इति चेन्न; 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यादि'ति न्यायेन प्रवृत्तिरित्युक्त्या दर्शपूर्णमाससम्बन्धिनां प्रयाजादि धर्माणामिव दर्शपूर्णमाससम्बन्धिनां फलादीनामप्यतिदेशेन प्रवृत्तिरिति गम्यते। 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यादि'त्याधिकरणे दर्शपूर्णमाससम्बन्धिनां धर्माणामतिदेशेन प्राप्तिरिति व्यवस्थापनात्। तत्र दर्शपूर्णमासाख्य-कर्मणस्त्वप्रवृत्तेः तत्सम्बद्धानां फलादीनां कुतस्तरां प्रवृत्तिरिति सिद्धान्तयितुमादौ कर्मण एवाप्रवृत्तिमाह—

तन्त्रशिखामणिः

(सू०) कर्मणस्त्वप्रवृत्तिः स्यात् फलनियमकर्तृसमुदायस्यानन्वयस्सम्बन्धत्वात्।

अङ्गवत् फलादीनामपि प्रकृतिभावनासम्बन्धात् अतिदेशःस्यात् इत्युत्थितेः सङ्गतिः। फलं स्वर्गः। नियमः यावज्जीविकोऽभ्यासः। कर्ता स्वर्गकामः अधिकारी। समुदायः आग्नेयादीनां षण्णां मिथः साहित्यम्।

भाष्यसन्दर्भयोजिनी

१३

विषयः

पूर्वस्मिन्नधिकरणे निकायिनां पूर्वस्य विध्यन्त उत्तरेषु प्रवर्तत इति संसाधितम्। इदानीमितिकर्तव्य-तातिरिक्तानां प्रकृतिसम्बन्धिनां फलादीनां विकृतौ प्रवृत्तिरस्ति न वेति निर्णेतुं विषयं निर्दिशति—इह फलेति। फलनियमादीनां स्वरूपं प्रदर्शयति—फलं स्वर्गं इत्यादि। 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं

## भाष्यम्

कर्ता-स्वर्गकामः समुदायो दर्शपूर्णमासाविति ।

### संशयः

तत्र चिन्त्यते—किं फलनियमकर्तृसमुदायानां सौर्यादिषु प्रवृत्तिः ? न ? इति । किं प्राप्तम् ?

## टुप्टीका

कर्तव्यतातिदिश्यते । न च फलमितिकर्तव्यता । यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वान्नातिदिश्यते । फलेन व्याप्यमानो यः कर्ता स नातिदिश्यते । तेनांशेनान्यत्र प्रधानत्वान्न क्रत्वर्थः । यः पुनर्यजेतेत्यत्र कर्ता

## वार्तिकाभरणम्

सौर्य इति । सौर्यभावनायां 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इति वाक्याक्षिप्तस्य सौर्ययागस्य करणस्य प्रत्यक्षत्वात्करणान्तरस्य दर्शपूर्णमासाख्यकर्मणस्त्वप्रवृत्तिः । तस्यानुमानिकत्वादित्यर्थः । ननु सौर्ययागस्यापि द्रव्यदेवतासम्बन्धान्यथानुपपत्या कल्प्यत्वेनानुमानिकत्वात् कथं प्रत्यक्षत्वम् ? सौर्ययागे करणान्तरस्यातिदेशेन प्राप्यमाणत्वेनानुमानिकत्वं वक्तव्यम् । तच्च न सम्भवति, तस्यातिदेशेन प्राप्त्यनभ्युपगमात् । कथं वा करणान्तरस्यानुमानिकत्वमिति चेत्, उच्यते—सौर्ययागे करणान्तरस्यातिदेशेन प्राप्तिमभ्युपगम्य आकाङ्क्षां पुरस्कृत्यातिदेशेन करणान्तरस्य प्राप्तेः प्रागेव सौर्यं चरुमिति वाक्योच्चारणमात्रेण द्रव्यदेवतासम्बन्धान्यथानुपपत्तिकल्पितसौर्ययागप्राप्तेः शीघ्रतया तदभिप्रायेण सौर्ययागस्य प्रत्यक्षत्वव्यपदेशः पूर्वोक्तविधया च करणान्तरस्यानुमानिकत्वमिति न दोषः । ननु प्रागुक्तरीत्या करणान्तरस्यातिदेशाभावे कस्य तर्ह्यतिदेश इत्यत आह-इतिकर्तव्यतेति । आकाङ्क्षानिबन्धनो ह्यतिदेशः । आकाङ्क्षा चेतिकर्तव्यताविषयिणी, सौर्ययागे इतिकर्तव्याम्नानाभावात् । तस्मादितिकर्तव्यताया अतिदेशः । न करणस्य, तस्य श्रुतत्वेन तद्विषये आकाङ्क्षाभावादित्यर्थः । ननु

## तन्त्रशिखामणि

तानि किं विकृतिष्वतिदिश्यन्ते न वेति विशये प्रकृतिभावनासम्बन्धाविशेषात् अङ्गवत् फलादीन्यपि अतिदिश्यन्ते इति प्राप्तेऽभिधीयते, अतिदेशस्याकाङ्क्षा एव मूलम् 'न प्रकृतिभावनासम्बन्धः' ततश्च सौर्येण ब्रह्मवर्चसं भावयेदित्युक्ते यथा करणाङ्क्षा श्रुतेन यागेन निवर्त्तत इति न करणस्यातिदेशः । ततश्च फलाकाङ्क्षापि श्रुतेन ब्रह्मवर्चसेन निवर्तत इति न फलस्यातिदेशः । यावज्जीविकोऽभ्यासश्च न कर्मधर्म इत्युक्तं द्वितीये । ततश्च नियमस्य

## भाष्यसन्दर्भयोजिनी

दर्शपूर्णमासाभ्यां यजेत' इत्येवं विहितो यावज्जीविको नियमः । समुदायः आग्नेयादीनां षण्णां दर्शपूर्णमासशब्दवाच्यानां यागानां समुदायः ।

### संशयः

ननु विध्यन्तस्यैवातिदेशो भवति । फलनियमादयो नैव विध्यन्ताः । सर्व एवेमे फलादयः विध्यादावेव वर्तन्ते । एवं सति कथं संशयोत्थितिरिति चेदयमाशयः—प्रकृतिसम्बन्धित्वेनैव विध्यन्तस्यातिदेशः, तादृशसम्बन्धः फलादीनां विध्यन्तत्वाभावेऽप्यस्त्येवेति चिन्तां प्रवर्तयति—किमिति ।

## भाष्यम्

### पूर्वपक्षः

किं प्राप्तमिति। 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः' इत्यनेन न्यायेन प्रवृत्तिरिति प्राप्तम्। तथा प्राप्त उच्यते—

## वार्तिकाभरणम्

माभूत्करणस्यातिदेशः, तथापि फलादीनामतिदेशोऽस्त्वित्यत आह—न चेति। यत्प्रकृतावस्ति तत्सर्वं विकृतौ नातिदिश्यते, किन्त्वपेक्षितमेव। ब्रह्मवर्चसादिफलेन श्रूयमाणेन सौर्यादिभावनाया भाव्यांशस्य निराकाङ्क्षीकृतत्वान्नास्त्यपेक्षा फलांशेऽपेक्षाभावाच्च न प्राकृतस्य फलस्यातिदेशेन विकृतिसम्बन्ध इत्यर्थः। निराकाङ्क्षीकृतत्वादित्यत्र सौर्यादिभावनाया इति, फलस्य न सम्बन्ध इत्यत्रातिदेशेन विकृतिभावनयेति चाध्याहार्यम्। तत्र श्रूयमाणफलेषु सौर्यादियागेषु फलस्य नास्त्यतिदेश इति प्रौढिवादेनोक्तम्। वस्तुतस्तु-अश्रूयमाणफलासु विकृतिष्वपि नास्ति फलस्यातिदेश इत्याह—इति कर्तव्यतेति। इतिकर्तव्यतैवातिदिश्यते नान्यत् तस्या यागाङ्गत्वेन गुणभूतत्वादित्यर्थः। ननु फलमपीतिकतव्यतैव। एवञ्च फलस्यातिदेशोऽस्त्वित्यत आह—न चेति। न हि फलमितिकर्तव्यता, येन गुणत्वादतिदिश्येत। किन्तु प्रधानमेव फलम्। न हि प्रधानं गुणभूतं यागं प्रति नेतुं शक्यते। तस्मान्न फलस्यातिदेश इत्यर्थः। अथोच्येत—न हि प्राकृतं फलं सौर्यादावानीयते। किन्तु तत्फलं प्रति सौर्ययागः साधनतया विधीयते। एवञ्च सौर्ययागस्य प्राकृतफलसम्बन्धोऽस्त्विनिचेन्न; अन्यदीयस्यान्यत्र नयनमतिदेशः, प्राकृतस्य फलस्य सौर्यादावानयनाभावेनातिदेशासिध्या त्वदभिमतसिध्यभावात्। वस्तुतस्तु प्राकृतफलं प्रति सौर्ययागः साधनतया न निवेष्टुभीष्टे। प्राकृतफलस्य दर्शपूर्णमासावरुद्धत्वात्। न च दर्शपूर्णमासयोः सौर्यादीनाञ्च विकल्पेन प्राकृतफले विधानमस्त्विति वाच्यम्। स्ववाक्यस्थाभ्यां दर्शपूर्णमासाभ्यां यत्र क्वाचदवस्थितानां सौर्यादीनां विषमशिष्टत्वेन विकल्पासम्भवात्। किञ्चाश्रुतफलास्वपि विकृतिष्वन्यनिरपेक्षविधिबलादेव 'स स्वर्गः स्यात् सर्वान्प्रत्यवशिष्टत्वादि'ति न्यायेन वैकृतकर्मणां स्वर्गफलत्वावगमात्कथञ्चित् चोदनालिङ्गोपस्थापितद्वारेण नास्त्यतिदेशेन तेषां फलसम्बन्धः। वैकृतविधिना फलवदाक्षेप्तुं न शक्येति कर्तव्यतेति तस्या युक्तातिदेशापेक्षा। तस्मादितिकर्तव्यतैवातिदिश्यते न फलम्।

'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति विहितयावज्जीविको नियमः कर्तृधर्म एवेत्याह—यावज्जीविक इति। किमित्यत आह—स इति। स कर्तृधर्मः नियमः पुरुषार्थत्वान्नातिदिश्यते। स्वरूपेण तावन्निय-

## तन्त्रशिखामणिः

पुरुषार्थत्वादनाकाङ्क्षैवेति नातिदेशः। तथा कर्त्तुः स्वर्गकामपदोपात्तस्याधिकारिणोऽपि कर्मधर्मत्वाभावात् अनाङ्क्षितत्वेन नातिदेशः। यस्त्वाख्यातोपात्तनिर्वर्त्तकतया गुणभूतः कर्त्ता सोऽतिदिश्यत एव। तद्गतैकत्वसङ्ख्या

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

इष्टिष्विति। अष्टमप्रथमचतुर्थाधिरणे विकृतिचोदनासु प्रकृतिलिङ्गस्य तद्धितान्तपदेन देवतोपदेशकालवत्वादेर्दर्शनाद्दार्शपौर्णमासिकधर्माणां प्रवृत्तिरिति सिद्धान्तितत्वात्तन्न्यायेनैष्टिकविध्यन्तप्रवृत्तिरिति प्राप्तमित्यर्थः।

## भाष्यम्

### सिद्धान्तः

फल-नियम-कर्तृ-समुदायस्याप्रवृत्तिः। कुतः ? कर्मणोऽप्रवृत्तित्वात्। तद्बन्धनत्वाच्च फलादीनाम्। कर्म तावन्न प्रवर्तते। किं कारणम् ? विध्यन्तेन धर्माः प्रवर्तन्ते। न च कर्मं

## टुप्टीका

क्रतुं निर्वर्तयतीति क्रत्वर्थः, सोऽतिदेशात्प्राप्नोति। किन्तु यत्र बहवः कर्तारः श्रूयन्ते तत्र तावदानुमानिको नातिदिश्यते। यत्राप्येकसङ्ख्यस्तत्राप्यनुवादोऽतिदेशः। तस्मादर्थलाभात्कर्तुरनतिदेशो गुणभूतस्यापि।

## वार्तिकाभरणम्

मस्यानपेक्षितत्वात्। यदि कर्मधर्मोऽयं यावज्जीविकोऽभ्यासः तदा तस्य क्रत्वङ्गत्वेनेतिकर्तव्यतात्वादनिदेशः स्यात्। न तु यावज्जीविकनियमः क्रत्वर्थः। किन्तु पुरुषार्थ एवेति द्वितीयचतुर्थपादे 'यावजीविकोऽभ्यासः कर्मधर्मप्रकरणादि'ति यावज्जीविकाधिकरण उक्तम्। तस्मात् नियमस्य नातिदेश इत्यर्थः॥

स्वर्गकामपदोपात्तत्वेन कर्तुः प्रधानत्वान्नातिदेश इत्याह—**फलेनेति**। यः फलेन व्याप्यमानः कर्ता स नातिदिश्यते। तेनांशेन फलिरूपेण क्रियानिर्वर्तकांशादन्यत्र तद्रूपस्य प्रधानत्वादक्रत्वर्थत्वाच्चेत्यर्थः। ननु कर्तुः फलिरूपांशेन प्राधान्येऽपि क्रियानिर्वर्तकरूपांशेन क्रत्वर्थतया गुणभूतत्वादस्त्वतिदेशः। तथापि कथं सूत्रकारभाष्यकाराभ्यां सर्वात्मना कर्तुरनतिदेश उक्त इत्याशङ्कायां क्वचिद्विरोधादतिदेशो न प्रवर्तते। क्वचित्तु क्रियानिर्वर्तकांशातः कर्तुः न्यायतः सत्यामप्यतिदेशेन प्राप्तौ प्राप्ताप्राप्तविवेकेन सम्पन्नोऽप्यतिदेशो न कार्यक्षम इत्यभिप्रायेण सूत्रकारभाष्यकाराभ्यामतिदेशाभावः कथित इत्याह—**यः पुनरिति**। यजेतेत्याख्यातोपात्तो यः पुनः कर्ता क्रतुं निर्वर्तयतीति क्रत्वर्थो भवति, सोऽतिदेशात्प्राप्नोति विकृतिषु फलिरूपांशादन्यत्र। किन्तु इयान्विशेषः। यत्र 'ऋद्धिकामाः सत्रमासीरन्नित्यादावासीरन्नि'त्यादिबहुवचनान्तेनाख्यातेन प्रत्यक्षतो बहवः कर्तारः श्रूयन्ते तत्र 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यस्थेन यजतेत्येकवचनान्तेनाख्यातेनोपात्तोऽसावेकः कर्ता नातिदिश्यते, प्रत्यक्षबहुवचनान्ताख्यातविरोधात्। आतिदेशिकेनानुमानिकेन वचनेनैककर्तृलाभात्प्रागेव आसीरन्निति प्रत्यक्षेण बहुवचनान्ताख्यातेन बहुकर्तृत्वलाभाच्च। न हि प्रत्यक्षेऽर्थेऽनुमानं प्रवर्तते। यत्रापि 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यादौ निर्वपेदित्येकवचनान्ताख्यातेनैकः कर्ता वावदुपात्तः तत्रापि प्रत्यक्षवचन

## तन्त्रशिखामणिः

तु ऋद्धिकामाः सत्रमासीरन् इत्यादौ श्रुतबहुत्वसङ्ख्यापि विरोधान्नातिदिश्यते। विश्वजिता यजेतेत्यादौ तु अतिदेशप्राप्ता सङ्ख्या अनूद्यते न विधीयते। अत एव अतिरात्रेण प्रजाकामं याजयेत् इत्यादावतिरात्रेण

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

**फलेति**। सत्यं विकृतीष्टिषु दार्शपौर्णमासिकविध्यन्तप्रवृत्तिरिति, किन्तु फलनियमादीनां विकृतिषु न प्रवृत्तिः। तत्र कारणं **कर्मणोऽप्रवृत्तित्वादिति**। फलादीनि तत्कर्मनिबन्धनानि। सति तस्मिन् कर्मणि तानि फलादीनि भवेयुः नासति। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र यागस्य दर्शपूर्णमासाख्यस्य स्वर्गः

## भाष्यम्

विध्यन्तविहितम् । विध्यादिविहितं तत् । तस्मान्न प्रवर्तते । तस्याप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयः—अप्रवृत्तिरित्यर्थः । कुतः ? तद्बन्धनत्वात् । फलं तावत् 'दर्शपूर्णमासाभ्यां यजेत' इति दर्शपूर्णमाससंयुक्तं श्रुतम् । तद्यत्र दर्शपूर्णमासौ तत्र भवितुमर्हति । न च सौर्यादिषु

## टुप्टीका

समुदायः करणपरिच्छेदेनोपकृतवान् । स इह परिच्छेद्याभावान्नातिदिश्यः । समुदायश्च गृह्णताग्नेयादयः कार्याः । ते च क्रियमाणाः स्वर्गं साधयेयुः । तथा सति यथाश्रुतफलव्याघातः । अथोच्येत—समुदायं गृह्णन्नान्तरीय-

## वार्तिकाभरणम्

प्राप्तस्यैव कर्तुरातिदेशिकमानुमामिकं वचनमनुवादकम् । तस्मादतिदेशेन प्रयोजनाभावाद्गुणभूतस्यापि कर्तुर्नातिदेश इति वाचोयुक्तिः सम्भवतीत्यर्थः । ननु समुदायस्याग्नेयादिपरिच्छेदकत्वेन प्रकृतौ गुणभूतत्वादतिदेशोऽस्त्वित्यत आह-समुदाय इति । प्रकृतौ तावत्समुदायः करणभूनाग्नेयादिपरिच्छेदकत्वेन कृतोपकारो दृष्टः । उपकारमुखेन ह्यतिदेशो दशमाद्यन्यायेन वक्तव्यः । करणपरिच्छेदकत्वलक्षणोपकारकत्वं समुदायस्य सौर्यभावनायां नास्ति, तत्रैकत्वात् करणभूतस्य सौर्ययागस्य । तथा च परिच्छेद्याभावेनार्थलोपात्परिच्छेदकस्यापि समुदायस्य नातिदेश इत्यर्थः । यद्यप्यध्वरकल्पादौ करणबहुत्वात् परिच्छेदलाभोऽस्ति, तथापि तत्र समुदायिनां करणानां सद्भावात्समुदायस्य समुदायिसमनियतत्वात्प्रकृतिवत्प्रत्यक्षसमुदायसद्भावात् । तत एव परिच्छेदसम्भवान्न प्राकृतस्य समुदायस्यातिदेशः । स्यादेतदेवम्, यदि सौर्ययागे करणपरिच्छेदकतयातिदिश्येत समुदायः, नत्वेवम्, किन्तु आग्नेयादि परिच्छेदकोऽपि समुदायगुणभूतत्वादतिदिश्यतामित्यत आह—समुदायश्चेति । यतः प्रकृतिसमुदायश्च गृह्णता पुरुषेणाग्नेयादयः समुदायिनोऽपि कर्तव्याः स्युः । समुदायिग्रहणाभावे समुदायग्रहणासम्भवादित्यर्थः । नन्वस्तु को दोष इत्यत आह—ते चेति । ते चाग्नेयादिसमुदायिनः क्रियमाणाः स्वर्गं साधयेयुरित्यर्थः । सौर्ययागं तिरस्कृत्याग्नेयादियागैरेव स्वर्गसाधने बाधकमाह—तथासतीति । एवञ्च सति 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति वचनप्राप्तस्य ब्रह्मवर्चसफलस्य व्याघातस्स्यात् । तथा च वचनानर्थक्यं श्रुतहान्यश्रुतकल्पना च स्यादित्यर्थः । अथ समुदायं प्रापयन् चोदको नान्तरीयकत्वात्समुदायान्विना कृतानप्याग्नेयादियागान्स्वर्गजनना

## तन्त्रशिखामणिः

प्रजाकामो यजेतेत्येव विधिविपरिणामः न तु प्रजाकामा यजेरन्निति । चोदकप्राप्तसङ्ख्याविरोधापत्तेः । तथा साहित्यरूपसमुदायः यद्यपि गुणभूतः तथापि तस्य प्रकृतौ कारणपरिच्छेदकतयोपकारकत्वात् एकसङ्ख्याके सौर्यादौ अर्थलोपान्नातिदेशः बहुसङ्ख्याकेष्वध्वरकल्पादिषु च श्रुतेन साहित्येन परिच्छेदानपरिच्छेद्याकाङ्क्षेति

## भाष्यसन्दर्भयोजिनी

फलमित्युक्तम्, तस्य कर्मणः प्रवृत्तिमनुरुध्य फलादीनि भवन्ति । तच्च कर्म सौर्येष्टौ नास्ति । कथं तान्यत्र भवेयुः ? तेषां फलादीनां सिध्यर्थं तदेव कर्मात्रानुवर्ततामित्यत्राह—कर्म तावदिति । कर्मणोऽप्रवृत्तौ कारणमाह—विध्यन्तेनेति । विध्यादिना कर्म विहितं न विध्यन्तेन, अतः कर्मणोऽप्रवृत्तिः । तेन च फलादयो न प्रवर्तन्त इत्यर्थः । सौत्रानन्वयशब्दस्यार्थमाह—अप्रवृत्तिरित्यर्थं इति । अप्रवृत्तौ हेतुः—तद् बन्धनत्वादिति । उपदिष्टयागसम्बद्धत्वादित्यर्थः । तदिदमेकैकं निरूपयति—फलमिति । दर्शपूर्णमासाविति यागनामधेयम् । तन्नामकयागेन

## भाष्यम्

तौ स्तः । अतस्स्वर्गस्यापि तत्राभावः । एवं नियमोऽपि कर्मबन्धनः । यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । स दर्शपूमासाभावे कथं स्यात् । तथा कर्ता कर्मबन्धनः—दर्शपूर्णमासाभ्यां स्वर्गकामः' इति । सोऽपि कथं तयोरसतोस्स्यात् । समुदायोऽप्याग्नेयादीनाम् । तानि सौर्यादिषु न सन्तीति तत्समुदायः कथं तत्र भवेत् ? तस्मात्तेषामप्रवृत्तिः ॥२०॥

## टुप्टीका

कतयाग्नेयादीन् करिष्यति न फलसाधनत्वेन । उच्यते समुदाय एषां गुणभूतः । न च गुण आकृष्यमाणो गुणिनमाकर्षति, अतादर्थ्यात् ॥२०॥

## वार्तिकाभरणम्

क्षमान्करिष्यति । ब्रह्मवर्चसकामेन पुरुषेण स्वर्गफलस्याप्रार्थितत्वात् । यथा 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावि'ति सर्वकामार्थोऽपि यागः प्रार्थितमेकमेव फलं जनयति, नान्यत् एवमिहापि । एवञ्चाग्नेयादियागानां नान्तरीयकत्वेन स्वर्गफलजननाक्षमत्वात्, स्वर्गस्याप्रार्थितत्वाच्च न स्वर्गः फलमिति । ब्रह्मवर्चसफलस्य न व्याघात इति शङ्कते—अथोच्यत इति । मा भवतु व्याघातः फलस्य, तथापि समुदायो नातिदिश्यते । आग्नेयादियागान्प्रति समुदायस्य गुणभूतत्वादित्यर्थः । एवन्तर्हि गुणभूतत्वादेव समुदायस्यातिदेशोऽस्त्वित्यत आह—न चेति । न ह्यतिदेशेनाकृष्यमाणो गुणभूतः समुदायः गुणिनमाग्नेयादिकं नाकर्षति, आग्नेयादीनां समुदायं प्रति प्राधान्येन तादर्थ्याभावात् । न च गुणभूतः समुदाय एवातिदिश्यतामिति वाच्यम् । समुदायिनमन्तरेण समुदायस्यातिदेशो न सम्भवतीति प्रागेवोक्तत्वात् । तस्मान्न समुदायस्यातिदेश इति परिहरति—उच्यत इति । उक्तञ्च भाष्यकारेण समुदायोऽप्याग्नेयादीनाम् । तानि च सौर्यादिषु न सन्ति । तत्समुदायः तत्र कथं भवेदिति । तथा समुदायोऽपि न कर्मार्थः । फलार्थोऽसाविति समुदायस्य फलार्थत्वप्रतिपादनपरं भाष्यमास्थामूलकमिति द्रष्टव्यम् ॥ २० ॥

## तन्त्रशिखामणिः

नातिदेशः । न च तर्हि विकृतिषु प्रकृतिपरिच्छेदकतयैवान्वयोऽस्त्विति वाच्यम् । श्रुतया प्रकृत्या वाक्यान्तरश्रुताया विकृतिषु कल्पनासम्भवात् वैषम्यात् । तस्मादश्रुतफलेष्वपि प्रवर्त्तनारूपाद् विधेरेव स स्वर्ग इति न्यायबलात् स्वर्गफलकत्वसिद्धिः नातिदेशादिति सिद्धम् । कथम्भावस्यैवाकाङ्क्षावशाददतिदेश इति ।

वृत्तमधिकरणम् ॥

## भाष्यसन्दर्भयोजिनी

स्वर्गस्सम्पादनीय इत्युक्ते यत्र सौर्यादौ तन्नामको यागो नास्ति तत्र तदीयफलस्य प्रवृत्तिः कथमिव स्यादित्यर्थः । एवं नियमोऽपीति । 'यावज्जीवं दर्शपूर्णमासाभ्याम्' इत्यनेन यावज्जीवानुष्ठाननियमः दर्शपूर्णमासयोरुपदिष्टः । यत्र दर्शपूर्णमासौ भवतः तत्र स नियमः । सौर्ये च दर्शपूर्णमासाविति न व्यवहारः । तदभावे च स नियमः कथमिव प्रवर्तेतेत्यर्थः । कर्तुरपि दर्शपूर्णमासाभ्यामेव सम्बन्धः । तदभावे स कथं सम्बध्नीयात् ? तदिदमाह—सोऽपि कथं तयोरसतोस्स्यादिति । तानि चेति । आग्नेयादीनि सौर्येऽतिदेशेन समागतानि स्वर्गमेव साधयेयुः न ब्रह्मवर्चसम् ; ब्रह्मवर्चसरूपञ्च फलमत्र निर्दिष्टमस्ति । अतस्सौर्ये आग्नेयादीनां समुदायस्य कुतः प्रवृत्तिस्स्यादित्यर्थः । उपसंहरति—तस्मादिति ॥२०॥

### भाष्यम्

## प्रवृत्तौ चापि तादर्थ्यात् ॥ ८.१.२१ ॥

अपि च धर्माणां प्रवृत्तिः कर्मार्था, कर्मण उपकर्तुम्। न च फलादीनि कर्मण उपकुर्वन्ति। फलं तावत्पुरुषार्थस्योपकरोति, न कर्मणः। उक्तं हि—'फलञ्च पुरुषार्थत्वादि' (जै. सू. ३.१.५) ति। नियमोऽपि न कर्मधर्मः कर्तृधर्मोऽसावित्युक्तम्—'कर्तुर्वा श्रुतिसंयोगात्' इति। तथा कर्ता स्वर्गकामो न कर्मार्थः कर्म स्वर्गकामार्थम्। न हि स्वर्गकामः कर्मण उपदिश्यते। स्वर्गकामो यजेतेति। किं तर्हि? कर्म स्वर्गकामस्योपदिश्यते—स्वर्गकामो यजेति, नान्यत्कुर्यादिति। तथा समुदायो न कर्मार्थः। फलार्थोऽसौ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। एवमेतेषां कर्मणोऽनुपकारकत्वात्प्रवृत्तिरनर्थिका स्यात्। तस्मान्न प्रवर्तेरन् ॥ २१ ॥

## अश्रुतित्वाच्च ॥ ८.१.२२ ॥

अत्राह—यदि दर्शपूर्णमाससंयोगात् फलादीनामप्रवृत्तिः, प्रयाजादीनामपि तत्सम्बन्धादप्रवृत्तिः प्राप्ता। तान्यपि हि तत्संयुक्तानीति। उच्यते—यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि।

### भाष्यसन्दर्भयोजिनी

फलादीनां सौर्ये प्रवृत्तिमङ्गीकृत्य विचारयति—अपि चेति। अतिदेशेन प्राप्ता धर्माः फलसाधनमुपकुर्वन्ति। फलसाधनीभूतस्य धात्वर्थस्य फलजननसामर्थ्यातिशयजननार्थं धर्मा अनुष्ठीयन्ते। अर्थात् धर्माः क्रत्वर्था भवन्ति। फलञ्च पुरुषार्थं न क्रत्वर्थम्। क्रत्वर्थ एवोपकारकः न पुरुषार्थ इत्याह—फलं तावदिति। कर्मोपकारकत्वं फलस्य नास्तीत्यत्र न्यायं दर्शयति—फलञ्चेति। क्रत्वर्थ एव कर्मण उपकारकः न पुरुषार्थ इति भावः। यावज्जीवादिनियमः न क्रतूपकारकः। स च कर्तृधर्मः। कर्तृधर्मत्वं तस्य द्वितीयचतुर्थद्वितीयसूत्रे कथितम्-'कर्तुर्वा श्रुतिसंयोगात्' इत्यत्र। अतो नियमोऽपि न कर्मोपकारकारकः। कर्ता स्वर्गकामः, न स कर्मोद्दिश्य विधीयते, येन स कर्मोपकारकस्स्यादित्याह—न हीति। स्वर्गकाममुद्दिश्य कर्मण एव विधानम्। यदि कर्तुरन्योद्देशेन विधानं स्यात् तर्हि तस्य कर्तृत्वमेव न स्यात् 'स्वतन्त्रः कर्ते' त्यनुशासनात्। समुदायस्यापि न कर्मार्थत्वम् समुदायो नामाग्नेयादयः षड्यागाः। ते कथं कर्मार्था भवेयुः, स्वयं कर्मरूपत्वात्, फलोद्देशेन विधीयमानत्वाच्चेत्याह—फलार्थोऽसाविति। एवञ्च फलादीनां कर्मानुपकारकत्वाद् विकृतौ न प्रवृत्तिरित्युपसंहरति—तस्मादिति।

फलादीनामनतिदेशे प्रतिपादिते तत्र किञ्चिदाशङ्क्य परिहर्तुमारभते—अत्राहेति। दर्शपूर्णमाससम्बन्धेनैव फलादीनां सौर्यादावप्रवृत्तिः कथिता। तादृशस्सम्बन्धः प्रयाजादिष्वप्यस्तीति प्रयाजादीनां सौर्ये कथं प्रवृत्तिरुच्यत इति शङ्काया आशयः। परिहरति—उच्यते इति। दर्शपूर्णमासयोः श्रुतानि दर्शपूर्णमाससम्बन्धितया श्रुतानि प्रयाजादीनि। श्रुतानीत्यनन्तरं तथापीति योजनीयम्। यद्यपि तत्सम्बन्धितया श्रुतानि तथापि तानि विध्यन्तेनातिदिष्टानि। विध्यादौ श्रुतानामेव फलादीनामनतिदेशोऽभिहितः, तत्र च क्रत्वर्थत्वा-

भाष्यम्

विध्यन्तेन तु सौर्यादिष्वप्यतिदिष्टानि । फलादीनि तु न विध्यन्तेनातिदिश्यन्ते । तेषां यदि प्रत्यक्षा प्रवर्तिका श्रुतिस्स्यात् ततः प्रवर्तेरन् । न चासावस्ति । तस्मादश्रुतत्वान्न प्रवर्तन्ते ।। २२ ।।

इति फलादीनामनतिदेशाधिकरणम् ।। १३ ।।

१४

## गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात् ॥८.१.२३॥

विषयः

इह गुणकामा उदाहरणम् । 'गोदोहनेन प्रणयेत् पशुकामः' 'उपास्मै गायता नर इति

वार्तिकाभरणम्

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥

इह गुणकामा उदाहरणम् । 'गोदोहनेन पशुकामस्य प्रणयेदि'त्येवमादयः । तत्र संशयः किं दर्शपूर्णमासगतं पशुलक्षणं गुणफलं विकृतिषु प्रवर्तते ? उत नेति ? तदर्थञ्च पशुलक्षणफलसाधनं गोदोहनं प्रवर्तते ? आहोस्विन्न वेति ? तत्र दर्शपूर्णमासाख्यकर्मणो विकृतिषु प्रवृत्तेस्तत्सम्बद्धस्य फलस्य मास्तु प्रवृत्तिः गुणकामस्तु

तन्त्रशिखामणिः

( सू० ) गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात् ।

प्रकृतिष्वाग्नेयादेः अप्रवृत्त्या तत्सम्बन्धिफलाप्रवृत्तावपि गोदोहनादिगुणफलानां पश्वादीनां स्वसाधनगोदोहनादिप्रवृत्त्या प्रवृत्तिः स्यादित्युत्थितेः सङ्गतिः । 'गोदोहनेन पशुकानस्य प्रणयेत् उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्यात्' इत्यादय उदाहरणम् । तत्र किं गुणफलानि पश्वादीनि विकृतौ प्रवर्त्तन्ते न वा । तदर्थं

भाष्यसन्दर्भयोजिनी

भावः कारणमिति चोक्तम् । प्रयाजादयस्तु क्रत्वर्थाः विध्यन्ते च वर्तन्ते इति फलादिभ्यः प्रयाजादीनामस्ति सुमहद् वैलक्षण्यमिति प्रतिपादयति—फलादीनीति । तेषां फलादीनां श्रुतिमूलकतयैव प्रवृत्तिर्वक्तव्या, तादृशी च श्रुतिर्नास्तीत्याह—न चेति । तथा च श्रुतेरभावान्न फलादीनामतिदेशः, विध्यन्तश्रुतेश्च सत्वात्प्रयाजदीनामतिदेशः । अतिदेशं प्रति दर्शपूर्णमाससम्बन्ध एव न कारणम्, किन्तु, क्रत्वर्थत्वमपि कारणम् । तच्च प्रयाजादिष्वेवास्ति न फलादिष्विति भावः ॥२२॥

इति फलादीनामनतिदेशाधिकरणम् ॥१३॥

१४

विषयः

पूर्वस्मिन्नधिकरणे विध्यादिसम्बद्धफलस्यातिदेशाभावे प्रतिपादितेऽपि विध्यन्तगुणवाक्यप्रतिपादित फलस्यातिदेशानतिदेशविचारायोदाहरणं प्रदर्शयति—इह गुणकामा इति । गुणैरङ्गैस्साध्याः कामाः—पश्वादय उदाहरणमित्यर्थः । तत्प्रतिपादकंशास्त्रम्—'गोदोहनेन पशुकामस्य प्रणयेदिति । गावो दुह्यन्ते यस्मिन् पात्रे

## भाष्यम्

**ग्रामकामाय प्रतिपदं कुर्यात्, इत्येवमादयः। तत्र विचार्यते—**

### संशयः

**किं गुणकामानां वैकृतेषु प्रवृत्तिः ? उत न ? इति।**

## वार्तिकाभरणम्

प्रवर्तत एव। स्वाश्रयस्य प्रणयनस्यातिदेशेन प्रवृत्या तदाश्रितं गोदोहोनमपि प्रवर्तते। साधनप्रवृत्तौ तज्जन्यफलप्रवृत्तेरनिवार्यत्वात्। तथाहि दर्शपूर्णमासयोः श्रूयते-'चमसेनापः प्रणयेदि'ति। तत्र 'गोदोहनेन पशुकामस्य प्रणयेदि'ति प्रणयनमाश्रित्य पशुलक्षणफलाय तत्साधनत्वेन गोदोहनं विधीयते। विकृतिषु च यदा गुणस्य गोदोहनस्य फलं न कामयते तदा प्रणयनसाधनत्वेन अतिदिश्यते चमसः। यदा च कामयते तदा गोदोहनमेवातिदिश्यते।

## तन्त्रशिखामणिः

च गुणकामा गोदोहनादयः विकृतिषु प्रवर्त्तन्ते न वेति संशयः। तत्र प्रणयनं तावत् प्रवर्त्तत इति निर्विवादम्। तस्मिन् प्रवर्त्तमाने तदाश्रितं गोदोहनमपि प्रवर्त्तते। फलार्थस्य गोदोहनस्य प्रणयनानङ्गतया कथं तत्प्रवृत्तौ प्रवृत्तिरिति वाच्यम्। प्रवृत्तौ हि साधनं तन्त्रं न तादर्थ्यमपि। तच्च गोदोहनस्य प्रणयनं प्रत्यविशिष्टमिति गोदोहनं प्रवर्त्तत एव। तस्मिंश्च प्रवर्त्तमाने तत्साध्यं फलमपि प्रवर्त्तत इति प्राप्ते अभिधीयते, यद्यपि प्रणयनस्य साधनं गोदोहनं तथापि न क्रत्वङ्गं पुरुषार्थम्। अनङ्गं च नातिदिश्यते। यदेव प्रकृतौ कथम्भावेनान्वितं तस्यैव प्रकृतिवच्छब्देनातिदेशात्। अतो न प्रणयनप्रवृत्त्या गोदोहनप्रवृत्तिः। तदप्रवृत्तौ च न तत्फलप्रवृत्तिः। ननु तर्हि मास्तु गोदोहनस्यातिदेशेन प्रवृत्तिः। पुरुषस्य फलार्थित्वात् प्रणयनरूपाश्रयसद्भावात् फलवशादेव तस्य विकृतिषु प्रकृतिवत् प्रवृत्तिरस्तु तत्प्रवृत्त्या च फलस्यापि प्रवृत्तिरस्तु इति चेन्न; यद्यतिदिष्टं प्रणयनमाश्रित्य गोदोहनं प्रवर्तेत तदातिदिष्टस्याङ्गभूतस्य चमसस्य बाधाद्वैगुण्यं क्रतोस्स्यात्। विगुणक्रत्वङ्गाश्रितात् गोदोहनादेरपि न फलं सिध्येत्। न च विकृतौ गोदोहनप्रवृत्तौ क्रतोर्वैगुण्ये प्रकृतावपि वैगुण्यप्रसङ्गात् तस्याप्रवृत्तिस्स्यात्। यदि च पशुकामप्रयोगातिरिक्तप्रयोग एव प्रवृत्तौ चमसस्याङ्गत्वमिति तत्र तद्बाधेऽपि न वैगुण्यं तदा विकृतावपि तुल्यमिति वाच्यम्। प्रकृतौ हि 'चमसेनापः प्रणयेत्' इति क्रत्वङ्गचमसाङ्गप्रणयनं विधाय तत्सन्निधौ गोदोहनेन पशुकामस्य

## भाष्यसन्दर्भयोजिनी

तद्गोदोहनम्। दर्शपूर्णमासयोरपां प्रणयनं चमसेन क्रियते—'चमसेनापः प्रणयेदि'ति नित्यमिदं प्रणयनम्। अत्र चमसोऽङ्गं तत्साधनकप्रणयनमप्यङ्गं दर्शपूर्णमासयोः। इदमेव काम्यरूपेणापि विहितम्—यदि यजमानः पशुकामनावान् स्यात् तर्हि तस्मिन् प्रणयने गोदोहनेन कृते पशवो लभ्येरन् गोदोहनेन प्रणयेत् पशुकाम इति। एवं ज्योतिष्टोमे स्तोत्रविधानावसरे 'उपास्मै गायता नरः' इति ऋचं प्रतिपदं प्रथमं कृत्वा स्तोत्रं स कुर्याद्यो ग्रामकाम इति विदधाति—'उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्यादिति।

### संशयः

अत्र संशयं प्रदर्शयति—**किमिति**। गुणैस्साध्यानां कामानां विकृतिषु प्रवृत्तिरस्ति न वेति।

## भाष्यम्

### पूर्वपक्षः

ततस्सूत्रेणैवोपक्रमः—गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात् । प्रवृत्तिर्गुणकामानाम् । कुतः ? आश्रितत्वात् । गोदोहनं प्रणयनाश्रितं गोदोहनेन प्रणयेदिति । तच्च प्रणयनं प्रवर्तते । आश्रये च प्रवर्तमाने तदाश्रितमपि प्रवर्तते । यथा पट आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते । यथा च

## वार्तिकाभरणम्

तथा प्रकृतावकामनाकामनाभ्यां चमसगोदहनयोरुपकारकत्वदर्शनात्, यथोपकारं चातिदेशो दशमाद्यन्यायेन वक्तव्यः । तस्माद्गोदोहनस्यातिदेशात्तत्फलमपि विकृतिषु प्रवर्तते । न हि प्रवृत्तावङ्गत्वमेव कारणं येन गोदोहनं

## तन्त्रशिखामणिः

प्रणयेदिति विधीयते । तत्र प्रणयेदित्यनुवादस्य सन्निहितविषयत्वाद्दर्शपूर्णमासापूर्वार्थमेव प्रणयनमाश्रय इति शास्त्रार्थः पर्यवस्यति । ततश्च प्रकृतौ बलीयसा काम्येन नित्यचमसबाधस्य शास्त्रीयत्वेन शास्त्रबाधितस्य चानङ्गत्वेन चमसबाधेऽपि न वैगुण्यम् । विकृतौ तु तादृशाश्रयाभावात् गोदोहनस्य प्रवृत्तिर्न शास्त्राधीना किन्तु पुरुषेच्छाधीनेति पुरुषेच्छया क्रत्वङ्गस्य चमसस्य बाधे क्रतोर्वैगुण्यम् । विगुणक्रत्वाश्रितत्वात् गुणकामात् फलं न स्यादिति विकृतिषु न गुणकामप्रवृत्तिः । एतेन वैगुण्यभिया गोदोहनस्य विकृतावप्रवृत्तावपि 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति वीर्यार्थेन प्रवृत्तावग्नीषोमीयपशौ श्रुतस्य खादिरत्वस्य फलवशाद्विकृतिषु प्रवृत्तिस्स्यात् 'खादिरो यूपो भवति' इति क्रत्वर्थतयापि तस्य विहितत्वेन तत्प्रवृत्त्या वैगुण्याभावात् । ततश्च तत्साध्यं वीर्यादिकमपि तत्र प्रवर्तत इत्यपास्तम् । सन्निधानादग्नीषोमीयपश्वपूर्वार्थं नियोजनस्यैवाश्रयत्वेन विकृतिषु तादृशाश्रयाभावेन खादिरत्वस्य फलवशादपि न प्रवृत्तिः । एतेन गोदोहनादेरतिदेशेन प्रवृत्तिरेवात्र निराकार्या । फलवशात्तु प्रवृत्तिरिष्टैवेत्येकदेशिसमाधानं प्रत्युक्तम् । स्वफलसाधनत्वासम्भवात् । किञ्च खादिरत्वस्य क्रत्वर्थत्वपुरुषार्थत्वभेदेन द्वे रूपे । तत्र क्रत्वर्थत्वरूपेण विकृतौ तस्य कथम्भावाकाङ्क्षावशात् प्रवृत्तावपि पुरुषार्थत्वरूपेणाप्रवृत्तेः कथं गुणानामप्रवृत्तिः पुरुषार्थत्वाकारेण प्रवृत्तावपि न फलप्रवृत्तिः युक्ता । प्रधानप्रवृत्त्यङ्गप्रवृत्त्या प्रधानप्रवृत्त्ययोगात् । इत्याहुः । ननु तृतीये पवमानेष्ट्यधिकरणेऽङ्गस्यैवातिदेश इति स्थितत्वात् पूर्वपक्षासम्भवान्नेदमधिकरणं युक्तमिति

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

गुणकामा अतिदिश्यन्ते । अत्र हेतुः—आश्रितत्वादिति । गुणं गोदोहनमाश्रित्य फलस्य सत्वात् गोदोहने समागते तदाश्रितं फलमप्यागच्छतीति गुणकामा अतिदिश्यन्त इत्यर्थः । **प्रणयनाश्रितम्** प्रणयनमाश्रयः, तदाश्रितं गोदोहनमित्यर्थः । **प्रवर्तते** मौर्यादावतिदेशेनेति शेषः । अतिदेशेन प्रणयने प्रवर्तमाने सुतरां तदाश्रितमपि गोदोहनं प्रवर्तते । उदाहरति—**यथेति** । पट आश्रयश्चित्रस्य । आश्रये पट आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते । ननु इतिकर्तव्यताकाङ्क्षापूरकतया प्रणयनमागच्छतु, गोदोहनं द्रव्यमनङ्गं तत्कथमागच्छेदित्यत आह—**यथा च चमस** इति । चमसस्य द्रव्यत्वेऽपि प्रणयनसाधनत्वेनातिदिश्यत एव तथैव गोदोहनमपि प्रणयनोपकार

भाष्यम्

**चमसः प्रवर्तते, यथा च खादिरं वीर्यकामाय यूपं कुर्यादिति । एवं गोदोहनमपि प्रवर्तते । गोदोहने च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तितुमर्हति । तस्माद् गुणकामानां प्रवृत्तिः ॥२३॥**

सिद्धान्तः

## निर्वृत्तिर्वा कर्मभेदात् ॥८.१.२४॥

**निवृत्तिर्वा गुणकामानामप्रवृत्तिः । कुतः ? कर्मभेदात् । कार्यभेदादित्यर्थः । अन्यत्कार्यं गोदोहनस्य, अन्यच्चमसस्य । चमसः क्रत्वर्थः, गोदोहनन्तु पुरुषार्थः । तदुक्तम्– 'यस्मिन् प्रीतिः**

टुप्टीका

यत्क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता ॥२४॥

वार्तिकाभरणम्

नातिदिश्येत । किन्तु साधनत्वम् । गोदोहनस्य च साधनत्वात् खादिरवत्प्रवृत्तिः । तस्माद्गुणफलस्यापि प्रवृत्तिरिति पूर्वः पक्षः ।

सिद्धान्तसूत्रमाह—

निवृत्तिर्वा कर्मभेदात् ॥

यत् क्रत्वर्थं तदेवातिदिश्यते । गोदोहनञ्च न क्रत्वर्थम् । किन्तु पुरुषार्थम् । गोदोहनस्य पुरुषार्थत्वञ्च 'यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वादि'त्यधिकरणे चतुर्थप्रथमपादे व्यवस्थापितम् । न च गोदोहनस्य क्रत्वर्थत्वाभावे साधनत्वं न स्यादिति वाच्यम् । फलप्रयुक्तं सद्गोदोहनं प्रसङ्गात्साधनं न तादर्थ्येन । तथा च तादर्थ्येन विधानाभावेन क्रत्वर्थत्वाभावेऽपि प्रसङ्गात्साधनत्वात् । एवञ्च गोदोहनं नाङ्गं प्रणयनस्य,

तन्त्रशिखामणिः

चेत् न, अत्रत्यन्यायस्यैव तत्रोपन्यासात् नानुपपत्तिरिति ध्येयम् । अत्र गोदोहनादेरतिदेशोऽस्ति न वेत्येव चिन्ता । फलचिन्ता तु प्रयोजनचिन्तेति नास्य विचारस्याध्यायसङ्गतिरित्याहुः ।

वृत्तमधिकरणम् ॥

भाष्यसन्दर्भयोजिनी

क्त्वेन प्रवर्तत इत्यर्थः । श्रौतमुदाहरणं दर्शयति—**यथा चेति** । प्रकृतो यूपस्य प्रकृतिभूतं काष्ठं खादिरम्— 'खादिरो यूपो भवति' इति विहितम् । तदेव खादिरं फलाय विहितम्—'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति । खादिरे प्रवर्तमाने तत्साध्यं फलमपि प्रवर्तत इत्यर्थः । अतो गुणकामानां प्रवृत्तिरिति पूर्वपक्षः ।

**सिद्धान्तः**

सौत्रनिवृत्तिपदविवरणम्—**अप्रवृत्तिरिति** । हेतुः—**कर्मभेदात्** । कर्मभेदाद् इत्यत्र कर्मपदेन यजति ददातीत्यादि कर्म न ग्राह्यमित्याह—**कार्यभेदात् इति** । एकस्य क्रतूपकारः कार्यम्, अन्यस्य च पुरुषार्थोपकारः ।

## भाष्यम्

पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्' इत्यत्र । अक्रत्वर्थः किमर्थं प्रवर्तेत । क्रतूपकाराय हि तस्य प्रवृत्तिः । एवं प्रतिपदः । तस्मान्न प्रवर्तेरन् गुणकामाः ॥२४॥

## टुप्टीका

गोदोहनादि पुरुषार्थत्वाच्चमसं विकृत्य निविशते। खादिरस्तु क्रत्वर्थत्वान्न कञ्चिद्विकरोति। एवञ्चेत्खादिरः प्रवर्तत एव। तस्मिन् प्रवर्तमाने तथाश्रितः कामोऽपि प्रवर्तत इत्येतदयुक्तम्। यत्क्रत्वर्थं

## वार्तिकाभरणम्

कुतस्तरां क्रतोः। क्रत्वर्थत्वाभावाद् गोदोहनस्येत्थम्भावेन नान्वयः। इत्थम्भावेनान्वयाभावान्नातिदेशः। गुणस्यातिदेशाभावात्तत्फलस्यापि न प्रवृत्तिः। ननु प्रणयनस्य गोदोहनप्रयोजकत्वाभावेन प्रणयनप्रवृत्त्या गोदोहनप्रवृत्त्यभावेऽप्याश्रयभूतस्य प्रणयनस्यातिदेशेन विकृतौ प्राप्तिसम्भवात्पुरुषस्य च फलार्थित्वात्फलकामनावशादेव गोदोहनं चमसं बाधित्वा प्रणयनसाधनत्वेन निविशत इति चेत्तथा सति प्रणयनसाधनत्वेनातिदिष्टस्य चमसस्य शास्त्रं विना पुरुषेच्छामात्रेण न युक्तो गोदोहनवशाद्बाधः। चमसबाधे हि क्रतोर्वैगुण्यं स्यात्। अत्यल्पमिदमुच्यते। दर्शपूर्णमासापूर्वीयव्यापारविशेषात्मकप्रणयनमेवाश्रयो गोदोहनस्य प्रकृतौ, न प्रणयनमात्रम्। नहि तादृशं प्रणयनं विकृतिष्वस्ति। एवञ्चाश्रयाभावात्तदाश्रितं गोदोहनं न प्रवर्तते। न चेद्गोदोहनप्रवृत्तिः कुतस्तरां गुणफलप्रवृत्तिः। तस्माद्गुणकामानां विकृतिषु न प्राप्तिः। खादिरवद्गोदोहनस्यापि प्रवृत्तिरस्त्वित्याशङ्कायां तत्परिहारार्थं सूत्रं पठति— **अपि वा तद्विकारस्त्वात्क्रत्वर्थत्वात्प्रवृत्तिस्स्यात्**। गोदोहनादिकं फलार्थत्वात् 'काम्यं नित्यस्य बाधकमि'ति न्यायेन क्रत्वर्थं चमसमविकृत्याबाधित्वा स्वयं प्रणयनसाधनत्वेन प्रकृतौ निविशते न तु चमसेनापः प्रणयेदि'ति चमसवत्क्रत्वर्थत्वेन। तथा च गोदोहनादेश्चमसवत्क्रत्वर्थत्वेन निवेशाभावाच्चमसवन्न तस्य क्रत्वर्थत्वम्। क्रत्वर्थत्वाभावान्नातिदेशः। गोदोहनादेरतिदेशाभावेन तत्फलस्यापि न प्रवृत्तिः। खादिरस्तु 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायेन पुरुषार्थोऽपि क्रत्वर्थत्वादन्यत्किञ्चित्क्रत्वर्थं न विकरोति न बाधते, क्रत्वर्थस्य क्रत्वर्थान्तरबाधकत्वाभावात्। एवञ्चेत्खादिरो विकृतावतिदेशेन प्रवर्तत इत्यस्ति वैषम्यमित्यर्थः। अत्र भाष्यकारेण तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तत' इत्युक्तम्। तद्भाष्यमाक्षिप्य समाधातुं तदनुवदति-**तस्मिन्निति**। आक्षिपति **एतदयुक्तमित्यादिना**। यत् क्रत्वर्थं तदेवातिदेशेन प्रवर्तते न फलम्, तस्य क्रत्वर्थत्वाभावादित्यर्थः। अथ न केवलं फलस्य प्रवृत्तिरुच्यते, येनोक्तदोषस्स्यात्। किं तर्हि, 'खादिरो यूपो भवती'ति खदिरस्य क्रत्वर्थत्वात् तत्प्रवृत्तौ

## भाष्यसन्दर्भयोजिनी

तदिदमाह—**चमसः क्रत्वर्थः क्रत्वङ्गम्, गोदोहनन्तु पुरुषार्थः** फलार्थः। अत्र लिप्साधिकरणसूत्रं प्रमाणयति—**यस्मिन्निति**। एवञ्च गोदोहनस्य क्रत्वर्थत्वेऽसद्धे तस्यातिदेशः कथं भवेदित्याह—**अक्रत्वर्थ इति**। क्रतुमुपकर्तुं पदार्थानामपेक्षा। ये च पदार्था अक्रत्वर्थास्ते कथं प्रवर्तेरन्नित्यर्थः। अयमेव न्यायः प्रतिपद्विषयेऽपीत्याह—**एवमिति**। उपसंहरति—**तस्मादिति** ॥२४॥

## भाष्यम्

यत्तूपन्यस्तम्—यथा 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यत्र प्रवृत्तिरेवमत्रापीति, तत्र ब्रूमः—

**अपि वातद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ ८.१.२५ ॥**

अपि वैवंविधेषु प्रवृत्तिस्स्यात् । कुतः ? अतद्विकारत्वात् । न खादिरः क्रत्वर्थविकारः । अयमपि क्रत्वर्थ एव । तदुक्तम्—'एकस्य तूभयत्वे संयोगपृथक्त्वम्' ( जै. सू. ४.३.५ )

## दुप्टीका

तदतिदिश्यते । वीर्यकामो यदि खादिरार्थस्ततः खादिरे प्रवर्तमाने तदाश्रितत्वात्प्रवर्तते । स च विपरीतः,

## वार्तिकाभरणम्

तज्जन्यं फलमपि प्रवर्तते । साधनस्य साध्याविनाभूतत्वादित्यत आह—वीर्यकाम इति । स्यादेतदेवम्, यदि वीर्यकामः खादिरार्थस्स्यात् । ततः खादिरस्य पुरुषार्थत्वाभावेन खादिरः प्रवर्तते । खादिरे च प्रवर्तमाने तदाश्रितत्वात्फलस्य प्रवृत्तिः स्यात् । इह तु न तथा । प्रत्युत विपरीतं खादिरस्तदर्थः पुरुषार्थः । 'खादिरं वीर्यकामस्ये'ति खादिरस्य पुरुषार्थत्वात् । पुरुषार्थत्वादेव खादिरो न प्रवर्तते । न चेत्खादिरः प्रवर्तते कुतस्तरां तज्जन्यं फलं प्रवर्तते । तथा च खादिरप्रसक्तौ तज्जन्यफलं प्रवर्तत इत्येवमर्थकं तस्मिन्नित्यादि भाष्यमनुपपन्नमित्याक्षेपार्थः । 'खादिरं वीर्यकामस्ये'ति खादिरः पुरुषार्थः, 'खादिरो यूपो भवती'ति क्रत्वर्थश्च । अत्र च येनांशेन खादिरः क्रत्वर्थः तेनांशेन प्रवृत्तिरिष्यते । न द्वितीयेन पुरुषार्थत्वांशेनेति । समाधत्ते उच्यत इति । अयमर्थः—यदा प्रकृतिभूते पशौ खादिरजन्य वीर्यलक्षणं फलं कामयते तदानीं काम्यः पशुप्रयोगः । यदा गुणफलं न कामयते तदानीं नित्यः पशुप्रयोगः । नित्ये पशुप्रयोगे च खादिरस्य क्रत्वर्थत्वेनाङ्गत्वात् तस्य विकृतावतिदेशोऽस्ति । काम्ये पशुप्रयोगे तु खादिरस्य पुरुषार्थत्वेनोपकारकत्वमात्रं नियोजने नाङ्गत्वम् । न चेन्नियोजनस्याङ्गं खादिरः कुतस्तरां क्रतोः । एवञ्च काम्यप्रयोगे फलार्थस्य खादिरस्य नातिदेशो विकृतौ । नित्यप्रयोगे त्वतिदेश इति प्रयोगभेदेन खादिरस्योभयार्थत्वम् । न त्वेकस्मिन्प्रयोगे एवमेवोभयार्थस्य दध्यादेरपीति । ननु काम्यप्रयोगानुबद्धस्य खादिरस्य विकृतावतिदेशेन प्रवृत्त्यभावेन तज्जन्यफलप्रवृत्तिर्नास्ति । नित्यप्रयोगानुबद्धस्य खादिरस्य विकृतावतिदेशेन प्रवृत्तिसम्भवेऽपि तस्य पुरुषार्थत्वाभावात्फलप्रवृत्तिर्नास्तीति पक्षद्वयेऽपि विकृतिषु फलप्रवृत्त्यभावात् । तस्मिंश्च प्रवतमाने तदाश्रितः कामोऽपि प्रवर्तत इति खादिरप्रवृत्तौ फलप्रवृत्तिरित्युभयप्रवृत्तिपरभाष्यसमर्थनं नोपपद्यत इति चेन्न; तस्मिंश्च प्रवर्तमान इति खादिरप्रवृत्तिपरभाष्यस्यैवाक्षेपसमर्थनविषयत्वात् । अथ तर्हि तस्मिंश्च प्रवर्तमान इत्यंशस्यैवानुवादोऽस्तु । तदाश्रितः कामोऽपि प्रवर्तत इत्यंशस्यानुवादो व्यर्थः । तस्य समाधानविषयत्वाभावादिति चेन्न ; तदाश्रितः कामोऽपि प्रवर्तत इत्यनूद्य तदसमर्थनेन भाष्यमनास्थामूलकमिति सूत्रार्थत्वेनानुवादस्यानुपपत्त्यभावात् ।

## भाष्यसन्दर्भयोजिनी

खादिरवाक्यमुदाहृत्य गुणकामानां प्रवृत्तिरिति यत्साधितं तदनूद्योत्तरं ददाति—तत्र ब्रूम इति । एवंविधेषु संयोगपृथक्त्वरूपेणापदिष्टेषु गुणकामानां प्रवृत्तिस्स्यादित्यर्थः । अत्र कारणम्—अतद्विकारत्वादिति । खादिरस्य क्रत्वर्थविकारत्वाभावादित्यर्थः । 'काम्यं नित्यस्य बाधकम्' इति न्यायेन गोदोहनं नित्यस्य क्रत्वर्थंचमसस्य बाधकं भवितुमर्हति, खादिरस्तु न तथा, स्वयं तस्य क्रत्वर्थत्वात् तस्मिन्नागते विकृतौ तदाश्रितः

## भाष्यम्

**इति । क्रत्वर्थश्चेत्पलाशवत्प्रवर्तेत । तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते । खादिरेण हि स सिध्यति । स च खादिरोऽस्ति, तस्मात्कामं साधयिष्यति ।। २५ ।।**

**इति गुणकामाधिकरणम् ।। १४ ।।**

## टुप्टीका

खादिरस्तदर्थः । खादिरः पुरुषार्थत्वात् न प्रवर्तेत इति चेत्-उच्यते, येन रूपेण क्रत्वर्थस्तेन प्रवृत्तिरिष्यते न द्वितीयेन ।।२५।।

## वार्तिकाभरणम्

अत्र पार्थसारथ्युपाध्यायैः शास्त्रदीपिकायाम् तत्र यत् प्राकृत्यां चोदनायामित्थम्भावरूपेण गृहीतं प्रमाणान्तरेण कथंचित्साधनभावमुपगतं दधि गोदोहनादि तस्य कः प्रसङ्गो विकृतावित्युक्त्वा माभूत्तदतिदेशः । प्रणयनस्य त्वाश्रयभूतस्य विकृतावपि भावात्तदाश्रितं गोदोहनमपि पुरुषकामनावशात्प्रयुङ्क्तामित्याशङ्क्य न वैगुण्यादिति परिहृत्यातिदिष्टस्य ह्यङ्गभूतस्य चमसस्य विना शास्त्रेण न पुरुषेच्छामात्रेण युक्तो बाधः । तद्बाधे हि वैगुण्यं स्यादिति वैगुण्यमुपपाद्यावैगुण्ये तु भवतु कामस्यापि प्रवृत्तिरित्युक्त्वा यथाह भाष्यकारः 'तस्मिंश्च प्रवर्तमाने कामोऽपि प्रवर्तत' इति भाष्यसंमतिः प्रदर्शिता । तत्र यत्प्राकृत्यामित्यादिकः प्रसङ्ग इत्यन्तेनोभयार्थस्यापि दध्नो विकृतौ प्रवृत्तिर्नास्तीति प्रतिपादनात्काम्यप्रयोगे दध्नः पुरुषार्थस्योपकारकत्वमेव होमे नाङ्गत्वम् । अङ्गत्वाभवाच्च विकृतौ तस्य नातिदेशेन प्रवृत्तिरिति तदभिप्राय इति गम्यते । तत्रावैगुण्ये तु भवतु कामस्यापि प्रवृत्तिरिति वाक्यस्य किं काम्यप्रयोगानुबद्धस्य दध्नो विकृतावतिदेशेन प्रवृत्तौ विकृतौ कस्यापि बाधाभावान्न वैगुण्यमित्यभिप्रायः ? किं वा नित्यप्रयोगानुबद्धस्य दध्नो विकृतावतिदेशेन प्रवृत्तौ विकृतौ कस्यापि बाधाभावान्न वैगुण्यमित्यभिप्रायः ? नाद्यः, प्रमाणान्तरेण कथञ्चित्साधनभावमुपगतं दधि गोदोहनादि, तस्य कः प्रसङ्गो विकृताविति काम्यप्रयोगानुबद्धस्य दध्नो विकृतावतिदेशेन प्राप्तिर्नास्तीति प्रागुक्तत्वेन तद्विरोधात् । न तु द्वितीयः नित्यप्रयोगानुबद्धस्य दध्नो विकृतावतिदेशे शास्त्रेण प्रवृत्या वैगुण्याभावेऽपि केवलं क्रत्वर्थस्य तस्य फलजनकत्वाभावेन भवतु कामस्यापि प्रवृत्तिरित्यभिमतसिध्यभवात् । ननु काम्यप्रयोगे पुरुषार्थमपि दधि क्रत्वर्थांशेन विकृतावतिदिश्यते । अतिदिश्यमानञ्च दधि फलञ्च नयतीति चेन्न, तस्य कः प्रसङ्गो विकृतावित्युक्त्या तावदेकस्मिन्प्रयोगे दध्यादेरुभयार्थत्वाप्रतीतेर्विकृतिषु गुणकामप्राप्त्यभ्युपगमे चाग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् इति दशमाष्टमपादाधिकरणेऽग्नेरतिदेशेन विकृतिषु प्राप्तिसद्भावे गुणकामानां प्राप्त्यभावेन गुणकामप्राप्त्यर्थमथाऽग्निमित्यादि वचनमिति व्यवस्थापयिष्यते, तद्विरुध्येत । वचनमन्तरेणापि न्यायादेव गुणफलप्राप्तेः । न चावैगुण्येति वाक्यमभ्युपगमवादेनासम्भाविताभिप्रायेण वेति वाच्यम् । उभयथापि भाष्यसंमतिप्रदर्शनानुपपत्तेः । तस्माद् वैगुण्ये तु भवतु कामस्यापि प्रवृत्तिरिति वाक्यमनास्थामूलकमिति द्रष्टव्यम् ।।१४।।

## भाष्यसन्दर्भयोजिनी

कामोऽप्यागच्छतीति भावः । अत्रैव संयोगपृथक्त्वन्यायं दर्शयति—तदुक्तमिति । **तस्मिश्च खादिरे च । कामोऽपि** वीर्यकामोऽपि । **सः** वीर्यकामः । **खादिरेण स** जन्यते, **खादिरश्चायं** विकृतौ, **अतस्साधयिष्यति** स्वाश्रितं फलमित्यर्थः ।।२५।।

इति गुणकामाधिकरणम् ।।१४।।

## भाष्यम्

१५

# एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ ८.१.२६ ॥

### विषयः

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति श्रूयते। अस्ति प्रकृतावभिमर्शनद्वयम्—

## टुप्टीका

सौर्यं आग्नेयादुपमितलक्षितप्रापणेनेतिकर्तव्यतां गृह्णाति। आग्नेयस्य च पौर्णमास्याममावास्या-

## वार्तिकाभरणम्

**एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात्।** सौर्यं आग्नेयविकार इत्यग्रिमाधिकरणे वक्ष्यते। अस्ति च प्रकृतावभिमर्शनद्वयम्। प्रयोगभेदेन 'चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्रामावास्यामि'ति। तद्द्वयं चोदकेन सौर्ये प्राप्तम्। तत्र संशयः किं यदा सौर्यः पौर्णमास्यां प्रयुज्यते, तदा चतुर्होत्राभिमर्शनम्। यदा च अमावस्यायां प्रयुज्यते तदा पञ्चहोत्रा? उत पर्वद्वयेऽपि चतुर्होत्रा पञ्चहोत्रा वेति कल्प इति? तत्राग्नेयस्य कालभेदेनाम्नातत्वेन भिन्नत्वात्पौर्णमास्यां प्रयुज्यमानस्य सौर्यस्य पौर्णमाससम्बन्ध्याग्नेयः प्रकृतिः। अमावास्यायां प्रयुज्यमानस्य स्वमावास्यासम्बन्ध्याग्नेयः प्रकृतिः पौर्णमास्यां कर्तव्यस्य प्रकृतिभूतस्याग्नेयस्य चतुर्होतृकरणकाभिमर्शनमेवाङ्गम् अमावास्यायां कर्तव्यस्याग्नेयस्य पञ्चहोतृकरणकाभिमर्शनमेवाङ्गं इति कालभेदेन कर्तव्यस्यापि सौर्यस्य स्वस्व-प्रकृतिवद्व्यवस्थया प्रयोगः प्राप्नोति। ततश्च चोदकानुग्रहश्च भवतीति पूर्वं पक्षः। सिद्धान्तसूत्रमाह—

## तन्त्रशिखामणिः

सू० एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥

प्रकृतौ श्रुतानां गोदोहनादीनां विकृतावप्रवृत्तावपि प्रकृतौ श्रुताया अभिमन्त्रणमन्त्रव्यवस्थाया विकृतौ स्यादित्युत्थितेस्सङ्गतिः। दर्शपूर्णमासयोः श्रूयते—'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्याम्' इति। 'पृथिवी होता' इत्यादिश्चतुर्होता। 'अग्निर्होता' इत्यादिः पञ्चहोता। तत्र पौर्णमास्यमावास्याशब्दौ न कालवचनौ, कालस्याप्रकृतत्वात्, किन्तु कर्मवचनौ। न च कर्मवचनत्वे पार्वणहोमवत् विकृतावतिदेशासम्भव इति वाच्यम्। कर्मवचनत्वेऽपि कर्मणोऽभिमर्शनायोग्यतया तत्सम्बन्धिनि हविषि लक्षणया वर्तेते। ततश्च मन्त्रयोस्समुदायद्वय-

## भाष्यसन्दर्भयोजिनी

१५

### विषयः

पूर्वस्मिन्नधिकरणे पुरुषार्थत्वेन श्रुतानां गुणानां कामा विकृतौ न प्रवर्तन्ते किन्तु क्रत्वर्थत्वेन श्रुतानां गुणानां कामाः प्रवर्तन्त इत्युक्तम्। इदानीं विकृतौ समाने कार्ये प्रकृतितः साधनद्वयस्य प्राप्तौ कस्य ग्रहणं कस्य च त्याग इति सौर्ययागः कस्य विकृतिरिति च व्यवस्थापयितुं विषयवाक्यमुदाहरन्ति—सौर्यमिति। अयं सौर्ययाग आग्नेयविकृतिः। प्रकृतौ दर्शपूर्णमासयोः कालद्वयेऽपि स आग्नेयो विहितः—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां

## भाष्यम्

**'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्याम्' इति । तदिह चोदकेन प्राप्यते ।**

## टुप्टीका

**याञ्च विद्यमानत्वादशक्यमवधारयितुम्-किं पौर्णमास्या इतिकर्तव्यता प्रवर्तते ? उतामावास्यायाः । तस्मादगृह्य-**

## वार्तिकाभरणम्

"एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् । **सौर्यं इति** । सौर्यं आग्नेयसकाशादुपमितलक्षित प्रापणेनोपमितेन वाक्यान्तरेणोपमानात्सादृश्यात्कल्पितेन तद्वद्कुर्यादिति वाक्येनोपमानसम्बन्धिना वाक्येनेति यावत् । यदितिकर्तव्यतारूपं लक्षितं तत्प्रापणेन तल्लाभेन तामितिकर्तव्यतां गृह्णाति, उपरितनाधिकरणन्याये-नेत्यर्थः । ततः प्रकृते किमायातमित्यत आह—**आग्नेयस्येति** । किं पौर्णमासीसम्बन्ध्याग्नेयस्य सम्बन्धिनीति-कर्तव्यता सौर्ये प्रवर्तते किं वामावास्यासम्बन्ध्याग्नेयस्य सम्बन्धिनीतिकर्तव्यता प्रवर्तत इति निर्णेतुं न शक्यते । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवती'त्युभयत्रैकरूपस्याग्नेयस्य विधानात् । तथा चैतादृश एवाग्नेयः सौर्यस्य प्रकृतिरिति विशेषनियामकाभावात् । आग्नेययोः इतिकर्तव्यते । तयोर्मध्येऽन्यतरस्या-व्यवस्थया प्राप्तिः न तु व्यवस्थया । एवं चाभिमर्शनयोरपि तदन्तः पातित्वात्तयोरपि विकल्प इत्यर्थः । अथ यदि मन्त्रयोर्व्यवस्थार्थिकी स्यात्तदा प्रागुक्तरीत्या न ह्यार्थिकं चोदकः प्रतिदिशती'ति व्यवस्थया अतिदेशो न स्यात् । न त्वेवम् । किन्तु 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामि'त्यत्र विद्यमानौ पौर्णमास्यमावास्याशब्दौ कालवचनौ । ततश्च तयोः कालवशेन व्यवस्था शास्त्रार्थः । **प्रकृताविति ।**

## तन्त्रशिखामणिः

वृत्तिहविरर्थत्वात् न विकृतिप्रवृत्त्यनुपपत्तिः । पार्वणहोमयोस्तु समुदायसंस्कारत्वात् तस्य च विकृतिष्वप्रवृत्तेर-प्रवृत्तिः । तथा च पौर्णमासीकर्मसम्बन्धीनि हवींषि चतुर्होत्राभिमृशेत् अमावस्याकर्मसम्बन्धीनि पञ्चहोत्राभिमृशेत् इति वाक्यार्थः पर्यवस्यति । आग्नेयस्य तु द्वयान्तःपातित्वान्मन्त्रद्वयं प्राप्नोति । सौर्यश्चाग्नेयविकार इत्युत्तराधि-करणे वक्ष्यते । ततश्च मन्त्रद्वयं सौर्ये चोदकेन प्राप्यते । तत्र संशयः—किं पौर्णमास्यां क्रियमाणे सौर्ये चतुर्होत्राभि-मर्शनम् अमावास्यायां क्रियमाणे तु पञ्चहोत्रेति मन्त्रद्वयं पौर्णमास्यमावास्याकालकयोर्व्यवस्थया प्रयोक्तव्यम् उताव्यवस्थया विकल्पेनेति । तत्र प्रकृतौ कालभेदेन मन्त्रयोर्व्यवस्थादर्शनादिहापि चोदकानुग्रहाय व्यवस्थेति प्राप्तेऽभिधीयते—

## भाष्यसन्दर्भयोजिनी

पौर्णमास्याञ्चाच्युतो भवति' इति । तत्र वेद्यामासादितानां हविषामभिमर्शनं विहितम् । तच्चाभिमर्शनमाग्नेय-पुरोडाशस्य कालद्वयेऽपि क्रियते । तदिदमभिमर्शनद्वयं प्राकृतं दर्शयति—**अस्ति त्विति** । अभिमर्शनसाधनं मन्त्रः कालद्वये क्रियमाणस्याभिमर्शनस्य भिन्नः । तद्दर्शयति—**चतुर्होत्रेति** । 'पृथिवी होता' इत्यादिर्मन्त्रः चतुर्होतृशब्देन, एवम् 'अग्निर्होता' इत्यदिर्मन्त्रः पञ्चहोतृशब्देनाभिधीयेते । 'पौर्णमासीम्' 'अमावास्याम्' इति द्वितीयान्तशब्दौ तत्तत्कालकर्तव्यकर्मवचनौ । एवञ्च तत्तत्कालकर्तव्यकर्मसम्बद्धं हविः तत्तन्मन्त्रेणाभिमृशेदित्यर्थः सम्पन्नः । इदमभिमर्शनद्वयम् तत्साधनमन्त्रद्वयञ्च प्रकृतितो विकृतौ सौर्ये प्राप्तम् । सौर्येष्टिश्चाग्नेयविकृतिः पौर्णमास्या-ममावास्यायां वानुष्ठातुं शक्यते ।

## भाष्यम्

### संशयः

तत्र संशयः—किं सौर्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्राभिमन्त्रष्टव्यः ? यदामावास्यायां तदा पञ्चहोत्रा ? उतोभयत्र विकल्पः-चतुर्होत्रा पञ्चहोत्रा वेति ? किं प्राप्तम् ?

## टुप्टीका

माणविशेषत्वाद्विकल्पः। 'आसन्नानि हवींष्यभिमृशति' इति हविरभिमर्शने मन्त्रस्य करणत्वाद्विकल्पः प्राप्तः

## वार्तिकाभरणम्

व्यवस्थायाः शास्त्रार्थत्वेन विकृतावतिदेशसम्भवान्मन्त्रयोः कथं विकल्प इति चेदुच्यते। न कालवचनौ पौर्णमास्यामावास्याशब्दौ तथात्वे द्वितीयायाः सप्तम्यर्थे लक्षणाप्रसङ्गात्। किन्तु प्रकरणात्कर्मवचनौ। एवञ्च कालशब्देन व्यवस्थायाः शास्त्रार्थत्वाभावान्नातिदेशः। नन्वेवं सति पौर्णमास्यमावास्या शब्दयोः कर्मवचनत्वे कर्मणोऽभिमर्शनासम्भवात् पौर्णमास्यमावास्याशब्दौ लक्षणया समुदायद्वारा हविः पराबिति वक्तव्यम्। एवञ्च तवापि लक्षणा तुल्येति चेन्न; प्रधानभूतप्रत्ययलक्षणापेक्षया प्रकृतिलक्षणाया न्याय्यत्वात्। ननु प्रकृतेः पौर्णमास्यमावस्याशब्दस्य प्रथमोपस्थितत्वेनासञ्जातविरोधित्वात्तस्या लक्षणा न न्याय्या। किंतु प्रत्ययस्य प्राधान्येऽपि सञ्जातविरोधित्वात्तस्यैव लक्षणा युक्तेति चेदुच्यते—प्रत्ययलक्षणाभ्युपगमे अभिमन्त्रष्टव्यस्य हविषः केनचित्पदेनोपस्थापनाभावेनाधिकारेणोपस्थितौ गौरवं स्यात्। प्रकृते लक्षणाभ्युपगमे पौर्णमास्यमावास्या शब्दस्य न कालपरत्वमिति वस्तुकथनमात्रम्। वस्तुतस्तु कालपरत्वेऽपि प्रकृतौ व्यवस्था न शास्त्रार्थः। तथापि न्यायबलात्कर्मवचनावित्युक्तम्। ननु कालपरत्वे 'वार्तघ्नी पौर्णमास्यामनूच्येते' 'वृधन्वती अमावास्याया मि'तिवत् चतुहोत्रा पौर्णमासीं पञ्चहोत्रामावास्यामि'त्यत्रापि मन्त्रयोर्व्यवस्थाविधानमस्त्विति चेन्न; याज्या-

## तन्त्रशिखामणिः

प्रकृतौ हि पौर्णमास्यमावास्यासम्बन्धिनां हविषां मन्त्रद्वारकमेव मन्त्रद्वयमुपदिश्यते न तु कालद्वारेण, कालस्य तत्राप्रकृतत्वात्। ननु कर्मवचनत्वे मुख्ययोः प्रातिपदिकयोर्लक्षणा स्यादतः कालवचने एव प्रातिपदिके। द्वितीययोस्तु जघन्यत्वात् सप्तम्यर्थे लक्षणा न दोषावहा। ततश्च 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामि'त्यत्रेव कालकृतैव व्यवस्था युक्तेति चेन्न; आज्यभागक्रमाम्नातयोः कालद्वयेऽप्यव्यवस्थया प्राप्तौ कालयोर्व्यवस्थामात्रविधायकत्वं तत्र वाक्ययोः युक्तम्। इह तु 'आसन्नानि हवींषि अभिमृशेदि'ति वाक्यप्राप्तमभिमर्शनमनूद्य मन्त्रयोः कालतो व्यवस्थायाश्च विधौ वाक्यभेदप्रसङ्गात्। कालपरत्वेऽपि कालमुपलक्षणीकृत्य पूर्ववाक्यप्राप्तमभिमर्शनमनूद्य मन्त्रमात्रं विधेयम् न कालकृता व्यवस्था शास्त्रार्थः। नन्वेवं पौर्णमास्यामप्याग्नेयस्य

## भाष्यसन्दर्भयोजिनी

### संशयः

तत्र संशयं प्रवर्तयति—**किमिति**। कालद्वयविहिताग्नेयस्य विकृतित्वात्सौर्यस्य पौर्णमास्याममावास्यायां वानुष्ठातुं शक्यत्वात्, यदा पौर्णमास्यां क्रियते तदा चतुर्होतृमन्त्रः, यदा चामावास्यायां तदा पञ्चहोतृमन्त्र इति प्रथमा कोटिस्संशयस्य, द्वितीया चोभयत्र विकल्प इति।

## भाष्यम्

### पूर्वपक्षः

व्यवस्थेति। कुतः ? चोदकानुग्रहात्। प्रकृतौ व्यवस्था कृता, इहापि चोदको व्यवस्थां प्रापयति। एवं प्राप्त उच्यते—

## टुप्टीका

यद्यपि कालकृता व्यवस्था हविरन्तरवशेन प्रकृतौ जाता, तथापि विकृतावशक्या व्यवस्थां कर्तुम्। नैतज्ज्ञायते

## वार्तिकाभरणम्

पुरोनुवाक्यायुगले चतुष्टयस्याज्यभागौ प्रकृत्याम्नानेन तत्र युगले चतुष्टयस्याव्यवस्थाप्राप्तौ तयोर्व्यवस्थापरत्वं सम्भवति। इह तु 'आसन्नानि हवींषि अभिमृशेदि'ति विहिताभिमर्शनानुवादेन मन्त्रयोर्व्यवस्थायाश्च विधाने वाक्यभेदापत्तेः। तस्मात्कालपरत्वेऽपि व्यवस्थाया आर्थिकत्वेन न विकृतौ व्यवस्थातिदिश्यते। ननूभयत्रापि आम्नातस्याग्नेयस्यैकत्वाभ्युपगमे एकस्यैवाग्नेयस्याभिमर्शनद्वयं विहितम् अभिमर्शनस्य चादृष्टार्थत्वादभि-मर्शनद्वयं सौर्ये समुच्चीयते। तथा च कथं विकल्पः ? प्रकृतौ च कालवशेन व्यवस्था दृष्टा न त्वार्थिकत्वेन। तथा च विकृतौ कथं व्यवस्था नातिदिश्यतेत्यत आह—आसन्नानीति। 'आसन्नानि हवींष्यभिमृशती'ति वाक्येन यद्धविरभिमर्शनं विहितं तस्मिन्नभिमर्शने, चतुर्होत्रा पौर्णमासीमभिमृशेत्' 'पञ्चहोत्रामावस्यामिति वाक्याभ्यां मन्त्रयोः करणत्वं विधीयते मन्त्रयोः करणत्वाददृष्टार्थत्वादेकार्थ्याच्च प्रकृतौ प्राप्तोऽपि विकल्पो न प्रभवति।

## तन्त्रशिखामणिः

पञ्चहोत्राभिमर्शनं स्यात् अमावास्यायामपि चतुर्होत्रा मन्त्रयोर्विकल्पितत्वादिति चेत्—सत्यम्; आग्नेयस्य पौर्णमासीकाले पञ्चहोत्राभिमर्शनेऽपि न वैगुण्यम्, उपांशुयाजाग्नीषोमीययोस्तु चतुर्होतृमन्त्रावमृश्ययोश्चतुर्होत्रैवावै-गुण्यमिति तदनुरोधेनाग्नेयस्य पौर्णमास्यां चतुर्होतृनियम एवममावास्यायामप्यैन्द्राग्नाद्यनुरोधेन पञ्चहोतृनियमः न तु कालकृतव्यवस्थायामशास्त्रत्वानुरोधेन। विकृतौ तु व्यवस्थाहेतोः कर्मान्तरस्य प्रकृतिवदभावेन न व्यवस्था, किन्तु कालद्वयेऽपि सौर्ये विकल्पः। यद्यप्याग्नेयकालद्वारेण मन्त्रयोर्व्यवस्था तथापि कतरस्याग्नेयस्य विध्यन्त-स्सौर्ये प्रवर्तत इति विशेषनियमाभावाद्विकल्पः। इदन्त्ववधेयम्—यद्यमावास्यासम्बन्धमाश्रित्य सौर्ये वत्सापा-करणकाल एव व्रतोपायनं तदा पञ्चहोत्राभिमर्शननियमः, यथा 'वेदं' कृत्वानन्तर वेदिनियमो वृधन्वत्येवानुवाक्या-तद्वदिति। ननु प्रकृतावाग्नेयस्यैव हविर्द्वारेण मन्त्रद्वयेनाभिमर्शनद्वयं विहितम् तच्चाभिमर्शनद्वयसदृष्टार्थत्वात्समुच्चय-मयत इति कथं विकल्प इति सिद्धान्त इति चेत्—भ्रान्तोऽसि, न हि प्रकृतावभिमर्शनद्वयं विहितम्, किन्त्वा-

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

प्रकृतौ व्यवस्था मन्त्रयोर्दृश्यते पौर्णमास्यां चतुर्होतेति अमवास्यायां पञ्चहोतेति। यथा प्रकृतावनुष्ठानं तथैव विकृतौ चोदकप्राप्तस्य सम्पादनीयमिति व्यवस्थायामाश्रितायामेव चोदकोऽनुगृह्येतेत्याह—चोदकानुग्रहात् इति। चोदक उपकारपृष्ठभावेन पदार्थान् यथा प्रापयति, तथा तत्रत्यविशेषनियमानपि प्रापयति। व्यवस्थया-नुष्ठानं तत्रत्यो विशेषः। तं विशेषं चोदकः प्रापयेदेवेत्याह—इहापि चोदको व्यवस्थामिति।

## भाष्यम्

### सिद्धान्तः

एकस्मिन् कर्मण्यत्र सौर्ये विकल्पः। कुतः? अविभागो हि चोदनैकत्वात्। एकैषा चोदना-सौर्ये चरुं निर्वपेद् ब्रह्मवर्चसकाम इति। न तत्र विभागो भवति। उभावप्यभिमर्शने प्राप्येते। तयोरेकार्थत्वात्समुच्चयो न सम्भवति। तस्माद् विकल्पः। यत्तु प्रकृतौ व्यवस्थेति,

## टुप्टीका

सौर्ये कतरस्याग्नेयस्य धर्मः प्रवर्तत इति। तस्मादाग्नेयाविशेषाद् विकल्पः॥ २६॥

## वार्तिकाभरणम्

हविरन्तरवशेनार्थात्कालकृतव्यवस्था प्रकृतौ सम्भवात्। तथा विकृतौ व्यवस्था न सम्भवति, कारणाभावात्। नाप्यतिदेशेन, व्यवस्थायाः प्रकृतावर्थिकत्वेन शास्त्रगम्यत्वाभावात्। तस्मात्सौर्ये विकल्प इत्यर्थः। नन्वाग्नेयोऽपि कालभेदेन हविरन्तरयुक्ततया भिन्न एव। ततश्च तत्तद्विकृतिभूते सौर्येऽपि तत्तद्धर्मा व्यवस्थया प्राप्यन्ते। ततश्च मन्त्रयोरपि व्यवस्था स्यादित्यत आह—न ज्ञायते इति। सौर्यस्य हि का प्रकृतिरित्याकाङ्क्षायां एकदेवतत्वेन

## तन्त्रशिखामणिः

सन्नानि हवींष्यभिमृशेदिति वाक्यान्तरविहिते एकस्मिन्नेवाभिमर्शने मन्त्रद्वयं करणतया विधीयत इति दृष्टार्थत्वादेकार्थतया विकल्प उपपद्यते।

तत्र प्रसङ्गादिदं चिन्त्यते—'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति' इति विहिताग्नेययागः किमेक उत भिन्न इति। तत्र केचिदिह कालद्वयस्य न विकल्पः चशब्दविरोधात् नापि समुच्चयः, युगपदुपसंहारायोग्यत्वात्। अतो युगपदनुपसहरणसगुणद्वयश्रवणात्कर्मद्वयमेवेह विधेयम्। तथाच पौर्णमास्यामुत्पन्नस्य चतुर्होताङ्गम् अमावास्यायामुत्पन्नस्य पञ्चहोतेति व्यवस्था कालभेदात् कर्ममन्त्रभेदेन शास्त्रकृतैव, न तु

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

अभिमर्शनमन्त्रयोर्न व्यवस्थया प्राप्तिः, किन्तु विकल्पेन। प्रकृतौ व्यवस्थायाः कारणं भिन्नकाले कर्मणामुपदेशः। सौर्ये चैक एव विधिः—सौर्यं चरुम्' इति। अतो दर्श इति पूर्णमास इति चात्र विभागाभावान्न व्यवस्था भवितुमर्हतीति हेतुमाह—अविभागो हि चोदनैकत्वादिति। आग्नेयद्वयविकृतित्वात्सौर्ये द्वे अभिमर्शनेऽतिदिश्येत इत्याह—उभावपीति। द्वयोरेककार्यकरत्वान्न समुच्चयः, किन्तु विकल्पः। प्रकृतौ व्यवस्थाया विद्यमानत्वाद्विकृतावपि तथेति यदुक्तं तदनूद्य निरस्यति—यत्तु इति। 'पौर्णमासीं अमावास्यामिति

## भाष्यम्

**नासौ कालकृता । किं तर्हि ? समुदायकृता । न च सौर्ये तौ समुदायौ स्तः । यद्येवमभिमर्शनमेव तर्हि न प्राप्नोति तयोस्समुदाययोरभावादिति । अत्रोच्यते––न प्राप्नोति यदि समुदाययोरभिमर्शनमुच्येत । तयोस्त्वनभिम्रष्टव्यत्वात्समुदायिनां तदुच्यते लक्षणया । समुदायिविकारश्च सौर्यः । तस्मात्तत्रापि चोदकः प्रापयति तत् ॥ २६ ॥**

**इति सौर्ये विकल्पेनाग्नेयद्वयधर्मातिदेशाधिकरणम् ॥ १५ ॥**

## वार्तिकाभरणम्

औषधद्रव्यकत्वेन चाग्नेयसामान्यं प्रकृतित्वेनोपतिष्ठते । न तु कालसंयोगवशेन हविर्विशेषविशिष्टमाग्नेयं आग्नेयसामान्यहविष्कं तेनापि सौर्यंचरावाकाङ्क्षाशान्तेः । कतरस्याग्नेयस्य धर्माः सौर्ये प्रवर्तन्त इति न ज्ञायते इत्यर्थः । आग्नेय सामान्यस्यैव प्रकृतित्वाद्विकल्प इत्युपसंहरति—तस्मादिति ।

## तन्त्रशिखामणिः

हविरन्तरावरोधप्रयुक्तत्वादार्थिकी । एवमपि कतरस्य धर्मास्सौर्ये प्रवर्तन्त इति विशेषाग्रहात् विकल्प एव । न कालतो व्यवस्था । नन्वेवं वैश्यस्तोमे 'कण्वरथन्तरं भवति' इति प्रकृतौ वैकल्पिकयोः बृहद्रथन्तरयोः स्थाने विहितस्य कण्वरथन्तरस्य विशेषाग्रहाद्विकल्पेनोभयधर्मग्राहित्वं यथा तथात्रापि । कस्याग्नेयस्य सौर्यो विकार इति विशेषाग्रहाद्विकल्पेनोभयधर्मग्राहित्वसिद्धेः नावमिकाधिकरणेनैव गतार्थत्वादिदनधिकरणं व्यर्थमिति चेत्—सत्यम्; तथापि तस्यैव प्रपञ्चार्थमित्याहुः । अन्ये तु एक एवायमाग्नेययागः, एकस्मिन्नपि कालद्वयसम्बन्धसमुच्चयार्थश्चकारः, तत्र च मन्त्रद्वयस्य कालभेदेन व्यवस्थायां सौर्येऽपि तथैव प्राप्नोतीति न कालकृतव्यवस्था प्रकृतौ शास्त्रीया, किन्त्वार्थिकीति, प्रतिपादनार्थमिदमधिकरणमित्याहुः ।

वृत्तमधिकरणम् ॥

## भाष्यसन्दर्भयोजिनी

द्वितीयन्तशब्दौ कर्मवचनौ, न कालवचनौ । कर्मणोऽभिमर्शनं न भवितुमर्हतीति कर्मसम्बन्धिहविषामभिमर्शनं भवति । कर्माणि चात्र नाना । अतः पौर्णमासशब्दः तत्कालानुष्ठेयकर्मसमुदायवाची । एवममावस्याशब्दोऽपि । एवञ्चेद्विकृतौ तादृशसमुदायाभावेनाभिमर्शनमेव नागच्छेदिति शङ्कते—यद्येवमिति । समाधत्ते—अत्रेति । समुदायाभिमर्शनस्याशक्यत्वात् तदभिमर्शनं समुदायिनि निविशते । समुदायिन एव विकारस्सौर्ययाग इत्याह-समुदायीति । उपसंहरति—तस्मादिति ॥२६॥

इति सौर्ये विकल्पेनाग्नेयद्वयधर्मातिदेशाधिकरणम् ॥१५॥

## भाष्यम्

१६

## लिङ्गसाधारण्याद् विकल्पस्स्यात् ॥ ८.१.२७ ॥

### विषयः

सौर्ये कर्मणि दार्शपौर्णमासिको विध्यन्त इत्युक्तम्, 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरि'ति (जै. सू. ८.१.११)। सन्ति तु तत्र कर्माण्याग्नेयादीनि। तत्र विचारः।

### वार्तिकाभरणम्

लिङ्गसाधारण्याद्विकल्पः स्यात् ॥

अत्राचार्यैस्त्रीण्यधिकरणानि त्यक्तानि। तानि वयं वर्णयामः। 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यादि' त्यधिकरणे सौर्यादिविकृतीष्टिषु दार्शपूर्णमासिको विध्मन्तः प्रवर्तत इति सामान्याकारेणोक्तम्। तत्र चाग्नेयादयः षड्यागाः सन्ति विविधधर्मकाः। सौर्यादिविकृतीष्टयोऽपि बह्व्यः श्रूयन्ते। तत्रास्य विध्यन्तोऽत्र प्रवर्तत इति विशेषस्त्विह चिन्त्यते। ननु 'यस्य लिङ्गमर्थसंयोगादभिधानवदि' त्यधिकरण आग्नेयविध्यतः सौर्ये, आग्नीषोमीय-विध्यन्तस्तावदनेकदेवताकेष्वित्येवं विशेषादतिदेशः कथितः। कथमिदानीं स एवोच्यते, गतार्थत्वादिति चेन्न; तत्र विशेषातिदेशवर्णनस्य चोदनालिङ्गसामान्यप्रदर्शनार्थत्वेन स्वतस्तात्पर्याभावात्। तथा हि सप्तम चतुर्थपादे 'इतिकर्तव्यताविधेः यजतेः पूर्ववत्वमि'ति प्रथमाधिकरणे 'नहीतिकर्तव्यताशून्यं करणमस्ती'ति न्यायेनाश्रुतेतिकर्तव्यताकेषु सौर्यादिष्वितिकर्त्तव्यतया भवितव्यम्। अन्यत्रोपदिष्टयापीतिकर्तव्यतासद्भाव उक्तः। 'स लौकिकः स्यात् अदृष्टप्रवृत्तित्वादि'ति द्वितीयाधिकरणे लौकिकेतिकर्त्तव्यता नाहर्तव्या, किन्तु वैदिक्येव

### तन्त्रशिखामणिः

सू० लिङ्गसाधारण्याद्विकल्पस्स्यात् ॥

स्यादेवं यद्याग्नेयविकारः सौर्यः स्यात्। न त्वेवं प्रमाणाभावात् इत्युत्थितेः सङ्गतिः। सौर्ये दर्शपूर्णमासविध्यन्त इति सामान्यादुक्तम्, तत्र किं यस्यकस्यचिद्विध्यन्त उत आग्नेयस्येति विशये निर्वपतेस्त-द्धितेन देवतानिर्देशस्य च साम्यात् सान्नाय्योपांशुयाजवर्जं यस्य कस्य चित् स्यादिति प्राप्तेऽभिधीयते।

### भाष्यसन्दर्भयोजिनी

१६

### विषयः

पूर्वस्मिन्नधिकरणे विकृतौ सौर्ये हविरभिमर्शनस्य तन्मन्त्रस्य च विकल्प इत्युक्तम्। इदानीं सौर्ययागस्य विकृतित्वं किं निरूपितमिति विशेषविचाराय विषयं दर्शयति—सौर्ये कर्मणीति। दर्शपूर्णमासयोराग्नेयादयष्षड यागास्सन्ति। तेषु कस्य विध्यन्तोऽत्र ग्राह्य इति विशेषरूपेण न ज्ञातम्। 'इष्टिषु दर्शपूर्णमासयोः' इत्येतावन्मात्रेण न निर्णयो भवति, यतस्तत्राग्नेयादयष्षड्यागा वर्तन्त इत्याह—सन्ति त्विति।

## भाष्यम्

### सन्देहः

किं यस्य कस्यचिद् दार्शपौर्णमासिकस्य कर्मणः सौर्ये विध्यन्तः ? उताग्नेयस्य ? इति।

किं प्राप्तम् ?

## वार्तिकाभरणम्

सादृश्यादिति वैदिकेतिकर्तव्यताप्राप्तिः साधिता। तदनन्तरञ्च 'अथ विशेषलक्षणमि'त्यष्टमाद्ये दर्शपूर्णमास-पशुज्योतिष्टोमादीनां प्रकृतिभूतानां विध्यन्ताः क्रमेणेष्टिपशुसोमादिषु विकृतिभूतेषु प्रवर्तन्त इति व्यवस्थया प्राप्तिः साधिता। स च विध्यन्तः केन प्रमाणेन प्रवर्तत इत्यपेक्षायां "यस्य लिङ्गमर्थसंयोगादभिधानवदि'ति द्वितीयाधिकरणे निर्वपत्यादिचोदनालिङ्गसामान्येन तत्तद्विध्यन्तप्राप्तिरित्युक्त्वा चोदनालिङ्गसामान्येन विध्यन्त-प्राप्तिमुदाहरणमुखेन स्पष्टीकर्त्तुं तत्राप्याग्नेयाद्यनेकविध्यन्तप्रसङ्गेनैकदेवतात्वेन औषधद्रव्यकत्वेन वासाधारणेन लिङ्गेनाग्नेयविध्यन्तः सौर्ये प्रवर्तत इति प्रदर्शितम्, न तु तत्र व्युत्पाद्यत्वेनेति न गतार्थता। नन्विष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यादिति चतुर्थाधिकरण एव भाष्यकारेण 'हेतुर्नोक्तः प्रतिज्ञात' इति—प्रश्नपूर्वकं 'कः पुनरसौ चोदनायां प्रकृतिलिङ्गसंयोगः ? किं पुनस्तत्प्रकृतिलिङ्गम् ? तद्धितेन देवतोपदेशः कपालवत्ता निर्वपतिशब्दश्च, ऐन्द्राग्नमेकादशकपालं निर्वपेदिति। इतरत्रापि तथैव ऐन्द्रग्नो द्वादशकपाल इति निर्वपतिरग्निहोत्रहवण्या हवींषि निर्वपतीति प्रकृतिलिङ्गेन विध्यंतविशेष उक्तः। 'यस्य लिङ्गमर्थसंयोगदि'ति चोदनालिङ्गसामान्येनैव विध्यन्तविशेषप्रवृत्तेर्वर्णितत्वात्पुनरायातं गतार्थत्वमिति चेन्न; 'यस्य लिंगमर्थसंयोगाद-भिधानवदि'त्यधिकरणे स्पष्टार्थमुक्तम्, तस्यैव 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यादि'त्यधिकरणे बुद्धिसौकर्यार्थमनुवादात्। यद्वा भाष्यकारेण—'यस्य लिङ्गमर्थसंयोगादभिधानवदि'त्यधिकरणे—एवं यत्र सुसूक्ष्ममपि किञ्चित्सामान्यं शब्दो वा अर्थो वा हविर्देवतादि तद्गुणो वा रूपादय उपलभ्येरन् तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत्संक्षेपेणात्रैव सर्वमुक्तम्। शिष्यहितार्थस्तूत्तरः प्रपञ्च इत्युक्तत्वात्। सामान्यविशेषा-त्मना भेद इति न गतार्थता। ननु 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यादि'त्यधिकरणे इष्टिषु दर्शपूर्णमासः विध्यन्तसाधने ततः प्राक्तने अध्यायाद्ये दर्शपूर्णमासादिविध्यन्त इष्टयादिष्विति कथं व्यवस्थापितमिति चेदुच्यते—'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात्' 'अव्यक्तासु तु सोमस्य' इत्यदिष्वधिकरणेषु दर्शपूर्णमास-ज्योतिष्टोमादि विध्यन्तास्तत्तद्विकृतिषु प्रवर्तन्त इति वक्ष्यमाणतया तत्तदधिकरणेषु व्युत्पादयिष्यमाण एवार्थो

## तन्त्रशिखामणिः

एवमप्येकदेवताकत्वसामान्याधिक्यात् आग्नेयस्यैव विध्यन्तः स्यात्। न च द्विवचनबहुवचनान्तमपि-तद्धितदर्शनात् तद्धिते सङ्ख्याविशेषानवगमेनाग्नेयसौर्ययोरेकदेवताकत्वानवगमात् नाग्नेयविकार इति वाच्यम्। तद्धितादीत्युक्तौ स्वरसतः एकत्वस्यैव प्रतीतेः। किञ्च 'तमन्नुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोष्टाक-

## भाष्यसन्दर्भयोजिनी

### संशयः

षट्सु यागेषु यस्य कस्य चन विध्यन्तः प्राप्यते ? उताग्नेयस्यैवेति विचारः क्रियत इति पूर्वेणान्वयः।

### भाष्यम्

#### पूर्वपक्षः

विकल्पः। कुतः ? लिङ्गसाधारण्यात्। सौर्ये दार्शपौर्णमासिकविध्यन्तप्राप्तौ यल्लिङ्गमुपदिष्टम्—'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति तत्साधारणं सर्वेषां विध्यन्ते सम्भ-

### वार्तिकाभरणम्

बुद्धिसौकर्मार्थं तत्रोक्तमिति न गतार्थता। अथवा आद्याधिकरणे प्रकृतीनां विकृतीनाञ्च बहुत्वात्तासां मध्ये यस्याः कस्याश्चित्प्रकृतेः सकाशात् सर्वविकृतिष्वनियमेन धर्मा भवन्ति उत एकस्याः प्रकृतेः सकाशादेकस्यां विकृतौ नियमेन धर्मा भवन्ति इत्येतावन्मात्रविचाराभ्युपगमेऽप्याचार्योक्तस्य किमनियमेन यस्य कस्य चित् सकाशादिति-कर्त्तव्यता प्रवर्तते ? उतास्ति कश्चिन्नियमः ? इति विचारस्य सिद्धेः स्पष्ट एव गतार्थत्वाभावः। तस्मादिदानीं विशेषश्चिन्त्यत इति सर्वमनवद्यम्। तत्र संशयः—किं सौर्ये दार्शपौर्णमासिकानां षण्णां कर्मणां मध्ये यस्य कस्यचिद् धर्मा अनियमेन प्रवर्तन्ते ? उताग्नेयस्यैवेति ? तत्राग्नेयादिविध्यन्तानां विकल्पः। विध्यन्तप्रापकस्य तद्धितेन देवताभिधानरूपलिङ्गसामान्यस्य निर्वपतिशब्दरूपलिङ्गसामान्यस्य चाग्नेयादिसर्वयागसाधारण्यान्न हि समुच्चयः। एकस्य विध्यन्तेन निराकाङ्क्षीकृते सौर्ये यागान्तरविध्यन्तापेक्षाभावात्। तस्माद्विकल्पः। न चैकदेव-तात्वलक्षणलिङ्गेनाग्नेयविध्यन्त एव सौर्य इति वाच्यम्। आग्नेयमित्यत्र अग्नी देवते अस्य, अग्नयो देवता अस्येति द्विवचनबहुवचनान्तादपि तद्धितोत्पत्तिसम्भवेन आग्नेयस्यैकदेवताकत्वानिर्धारणात्। तस्माद् विकल्प इति प्राप्ते ब्रूमः—

यत्र प्रमाणमस्ति तत्रैव द्विवचनबहुवचनान्तयोः वृत्तिः। यत्र प्रमाणान्तरं नास्ति तत्रैकवचनान्तस्यैव वृत्तिः। प्रातिपदिकार्थानुपपत्तिबलात्। उक्तञ्च तन्त्ररत्ने पार्थसारथ्युपाध्यायैः—'यत्र प्रमाणमस्ति तत्रैव द्विवचनबहुवचनान्तयोर्वृत्तिः। तदभावे तु प्रातिपदिकानुपपत्त्याक्षिप्तमेकत्वमेवावतिष्ठते' इति। न च द्वित्वबहुत्वा-श्रयणेनापि प्रातिपदिकार्थानुपपत्तिः शाम्यतीति वाच्यम्, एकत्वसङ्ख्याश्रयणेन प्रातिपदिकार्थानुपपत्तिशान्तौ सम्भवत्यां द्वित्वाद्याश्रयणे प्रमाणाभावात्। वैयाकरणास्तु-वृत्तावभेदेकत्वसंख्याप्रतीतिः न तु सङ्ख्याविशेषप्रतीति रिति वर्णयन्ति। तदनुपपन्नम्; तथात्वे प्रातिपदिकार्थानुपपत्तिप्रसङ्गात्। अत्र न्यायव्युत्पादनमात्रं कृतम्।

### तन्त्रशिखामणिः

पालोऽमावास्यायां च पौर्णमास्यां चाच्युता भवति अमुमेव स्वेन भागधेयेन समर्धयती'त्याग्नेये अमुमेवादित्यं स्वेन भागधेयेमोपधावतीति सौर्ये च वाक्यशेषयोः एकवचनलिङ्गदर्शनात् 'अग्निर्मूर्धा दिवः ककुत्' इत्याग्नेये 'उदुत्यं जातवेदसं देवं वहन्ति केतव' इति सौर्ये चानुवाक्यायां एकत्वश्रवणाच्च एकवचनान्तादेवात्र तद्धितोत्पत्तिरिति निश्चयात् सौर्य आग्नेयविकारः। एतेन यस्य लिङ्गमित्यत्रैव यद्यदसाधारणलिङ्गवत् तत्तस्य विकृतिरित्युक्ततया

### भाष्यसन्दर्भयोजिनी

#### पूर्वपक्षः

दार्शपौर्णमासिकस्य यस्य कस्यापि यागस्य विध्यन्तो भवितुमर्हतीति पूर्वपक्षयति—विकल्प इति। 'इष्टिषु दर्शपूर्णमासयोः'इत्यत्र दार्शपौर्णमासिकविध्यन्तप्राप्तौ यल्लिङ्गमुपदिष्टं तत्साधारणमिति हेतुमाह—लिङ्गेति। प्रयाजेषु षड्यागनिरूपितमङ्गत्वमस्तीति साधारण्यमित्यर्थः। सर्वेषां विध्यन्तप्राप्तौ समुच्चय-

### भाष्यम्

वति । न च समुच्चयः । तस्माद्विकल्पः ।। २७ ।।

## ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद् विकारो हि ॥ ८.१.२८ ॥

### सिद्धान्तः

आग्नेयस्य विध्यन्तो नियम्येत । कुतः ? ऐकार्थ्यात् । एकदेवतात्वादित्यर्थः । आग्नेय एकदेवत्यः, सौर्योऽपि । तेनैकदेवतत्वेन लिङ्गेनाग्नेयविध्यन्तो नियम्येत, पूर्ववत्त्वात् । पूर्ववानयं सौर्यः । पूर्वत्राभिहितं विध्यन्तमपेक्षते । विकारो हि-विकृतिरेषा । सर्वाश्च विकृतयः पूर्ववत्यः, चोदनावाक्यानामसमाप्तत्वात् । तत्र लिङ्गेन विध्यन्तनियमो भवतीत्युक्तम् । अस्ति चैकदेव तत्वं लिङ्गम् । तेनाग्नेयविध्यन्तः ।। २८ ।।

### वार्तिकाभरणम्

वस्तुतस्तु प्रकृते एकत्वप्रतीतावास्ति वाक्यशेषः प्रमाणम् । 'अमुमेवादित्यं स्वेन भागधेयेनोपधावति स एवैनं ब्रह्मवर्चसं गमयति अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायन्, तमृषयो यज्ञवास्त्वभ्यवायन् तेऽपश्यन् पुरोडाशं कूर्मं भूतं सर्पन्तं तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्यायाञ्चाच्युतो भवति । अमुमेव स्वेन भागधेयेन समर्धयती'ति । अत्र पार्थसारथ्युपाध्यायैः तन्त्ररत्ने तद्धितेन देवताभिधानं निर्वपति शब्दः प्रयाजादिदर्शनञ्च सर्वेषामाग्नेयादीनां साधारणं लिङ्गमिति प्रयाजदर्शनरूपलिङ्गस्यापि धर्मप्राप कत्वमुक्तम् । विध्यन्ताधिकरणे तु प्रयाजदर्शनरूपलिङ्गस्य न धर्मप्रापकत्वम् । किन्तु उपोद्बलकत्वमित्युक्तम् । तथा च विरोध इति चेन्न; अत्र प्रयाजदर्शनस्योपमानविधया निर्वापादिलिङ्गवद्धर्मप्रापकत्वसम्भवेन विरोधाभावात् ॥ १६ ॥

### तन्त्रशिखामणिः

सौर्यस्यैकदेवत्वादिना आग्नेयविकारकत्वसिद्धेः पौनरुक्त्यमित्यपास्तम् । एकदेवत्यत्वाक्षेपेणाधिकाशङ्कया प्रवृत्तेः अपौनरुक्त्यात् । तस्मात् तत्राग्नेयस्यैव विध्यन्तः । एवमेवानेकदेवत्येषु अग्नीषोमीयादिविध्यन्तः ॥

### भाष्यसन्दर्भयोजिनी

स्स्यादित्यत आह—न च समुच्चय इति । प्रयोजनाभावादित्यर्थः । तस्माद्विकल्प इति ॥ २७ ॥

### सिद्धान्तः

सिद्धान्तयति—आग्नेयस्येति । आग्नेययागविध्यन्त एव प्रवर्तते न विकल्पः । अत्र हेतुः—ऐकार्थ्यादिति । एकदेवताकत्वरूपसाधर्म्यैकत्वादित्यर्थः । यथैकदेवताकत्वं तथौषधद्रव्यकत्वमपि साधर्म्यंमाधकं बोध्यम् । अनेन लिङ्गेनाग्नेयविध्यन्तनियमने हेतुमाह—पूर्ववत्त्वादिति । हेतोर्विवरणम्—पूर्ववानयमित्यादिः । यतोऽयं सौर्यः विकारः विकृतिः प्रकृतिसापेक्षः । सापेक्षतायां हेतुः—चोदनेति । 'सौर्यं चरुं निर्वपेत्' इति विधि वाक्ये साध्यस्य करणस्य च सत्वेऽपि इतिकर्तव्यताकाङ्क्षावत्त्वात् अपरिपूर्णं वाक्यमित्याह—असमाप्तत्वात् । इतिकर्तव्यताकाङ्क्षा लिङ्गेन पूर्यते, लिङ्गञ्चैकदेवतत्वम् । अत आग्नेयविध्यन्तो नियम्यते ॥ २८ ॥

भाष्यम्

## अश्रुतत्वान्नेति चेत् ॥ ८.१.२९ ॥

अत्राह—स्यादेतदेवम् यद्येकत्वं श्रूयेत। न तु श्रूयते। कथम्? तद्धितेनायं निर्देशः—सौर्यमिति। तथा आग्नेयमिति। तत्र वचनव्यक्तिर्न ज्ञायते—किं सूर्यो देवताऽस्य उत सूर्यौ च सूर्याश्चेति। तथा-आग्नेयेऽपि ॥ २९ ॥

## स्याल्लिङ्गभावात् ॥ ८.१.३० ॥

स्याद्व्यवस्थितिरेकत्वस्य। कुतः? लिङ्गभावात्। लिङ्गमत्रास्ति। किम्? वाक्यशेष एकत्वं श्रूयते। सौर्ये तावत्—'अमुमेवादित्यं स्वेन भागधेयेनोपधावति, स एवैनं ब्रह्मवर्चसं गमयति' (तै. सं. २.३.२.३) इति। आग्नेयेऽपि—'अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायंस्ते यज्ञवास्त्वभ्यवायंस्ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यंस्तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्व' इति। स तानाह न ध्रिये। तमब्रुवन् अग्नये ध्रियस्वेति। सोऽब्रवीत् ध्रियेऽहम्। यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति। अग्निमेव स्वेन भागधेयेन समर्धयति, ( तै. सं. २.६.३.२. ) इति ॥ ३० ॥

## तथा चान्यार्थदर्शनम् ॥ ८.१.३१ ॥

अनुवाक्यायामेकत्वश्रवणम्—'अग्निर्मूर्धा दिवः' इत्याग्नेये, 'उदुत्यं जातवेदसम्' इति

### भाष्यसन्दर्भयोजिनी

शङ्कते—अत्राहेति। उभयोरेकदेवताकत्वं सौर्यमिति आग्नेयमिति न तद्धितान्तपदाभ्यां निर्णीयते। नायं निर्णयस्समुचितः—तद्धितान्तं पदमेकदेवताकत्वमेव ब्रवीतीति कथं वक्तुं शक्यम्—सूर्यः सूर्यौ सूर्याः देवता अस्येति विग्रहे कृतेऽपि सौर्यमित्येव पदं निष्पद्यते। अतः कथमेकत्वावच्छिन्नदेवताकत्वनिर्णय इति शङ्कितुराशयः। ॥ २९ ॥

शङ्कां निरस्यति—स्यादिति। एकत्वव्यवस्थायां हेतुः—लिङ्गभावात् इति। विधिवाक्यगते सौर्यमिति पदे सूर्यो देवता अस्येति विग्रहद्वारा एकदेवताकत्वं व्यवस्थापयति वाक्यशेषः। तं दर्शयति—अमुमेवेति। 'अमुम्' इति पदं देवतागतमेकत्वमवबोधयति। एवं स एव सूर्य एव एनं यजमानमिति च तच्छब्दो देवतागतमेकत्वं व्यवस्थापयति। तथा 'आग्नेयम्' इति तद्धितान्तपदेऽपि देवतैकत्वबोधने वाक्यशेषं दर्शयति—अङ्गिरसो वेति। अत्र 'अग्नेय' इति पदं देपतागतमेकत्वमवगमयति। 'तमब्रुवन्' इति तच्छब्दोऽप्यत्रार्थेऽनुकूलः। अत एतादृशलिङ्गभावात् एकदेवताकत्वमुभयत्र निर्णीत इति भावः ॥ ३०।

ब्राह्मणवाक्यगतलिङ्गं प्रदर्श्य मन्त्रगतं लिङ्गं प्रमाणमुपस्थापयति—अनुवाक्यायामिति। 'अग्निमूर्धा' इत्यत्राग्निशब्द एकवचनान्तः, एवं 'उदुत्यं जातवेदसम्' इत्यत्राप्येकवचनान्तः। अनेनापि देवताया एकत्वं

भाष्यम्

सौर्ये । ननु पुनरुक्तमेतल्लिङ्गद्वयोपदर्शनमिति । तदुच्यते—नैतत्पुनरुक्तम् । एकमत्र चोदनागतम् एकं मन्त्रगतम् । चोदनागतं प्रापकम् मन्त्रगतं प्राप्तस्य द्योतकमिति ॥ ३१ ॥

इति सौर्यचरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

१७

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ८.१.३२ ॥

विषयः

'ऐन्द्रमेकादशकपालं निर्वपेत्' (तै. सं. २.२.११.१.) इति । तथा—'आग्नेयं पयः' इति ।

वार्तिकाभरणम्

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥

'ऐन्द्रमेकादशकपालं निर्वपेत्' तथा 'आग्नेयं पय' इति च विकृतिभूतमिष्टिद्वयं विहितमस्ति । तत्र संशयः किमैन्द्र पुरोडाशे सान्नाय्यस्य विध्यन्त आग्नेये औषधस्य विध्यन्तः ? उतेन्द्रपुरोडाशे औषधस्य विध्यन्तः ? आग्नेये पयसि सान्नाय्यस्य विध्यन्तः ? इति । तदर्थञ्च किं देवतासामान्यं बलीयः ? उत हविस्सामान्यं बलीयः ? इति । तत्र ऐन्द्रमाग्नेयमित्यत्र प्रथमोपनिपतितेन्द्रशब्दाग्निशब्दप्रातिपदिकार्थत्वेन देवतायाः मुख्यत्वाद्देवतासामान्यमेव बलीय इति प्राप्ते-ब्रूमः—

तन्त्रशिखामणिः

(सू०) विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्

यथैकदेवत्यत्वसामान्यादाग्नेयविकारः सौर्यः तथा देवतैक्यसामान्यात् ऐन्द्रपुरोडाशादिः सान्नाय्यविकार इत्युत्थितेः सङ्गतिः । अथवा द्रव्यदेवतासामान्यात् विशेषातिदेशे विचारिते प्रसङ्गाद्द्रव्यदेवतयोः बलाबलं चिन्त्यत इति सङ्गतिः । इदं श्रूयते 'ऐन्द्रमेकादशकादशकपालं निर्वपेत्' । तथा 'आग्नेयं पय' इति । तत्र किमैन्द्र-पुरोडाशे आग्नेये पयसि च सान्नाय्यविध्यन्तयोः उत अनियमः । ऐन्द्रपुरोडाशे एकदेवतासामान्यात् सान्नाय्यविध्यन्तः किंवा हविस्सामान्यादाग्नेयविध्यन्तः । तथा आग्नेये पयसि देवतासामान्यादाग्नेयविध्यन्तः किंवा हविस्सामान्यात्

भाष्यसन्दर्भयोजिनी

ज्ञायत इत्यर्थः । ननु पूर्वं प्रदर्शितेन प्रमाणेनैव देवताया एकत्वे ज्ञाते पुनरन्यस्य प्रमाणस्य प्रदर्शनं पुनरुक्तमिति शङ्कते—नन्विति । परिहरति—नैतदिति । चोदनागतं विधिवाक्यशेषगतम्, अपरञ्च मन्त्रगतम् । तत्र प्रथमस्य प्रापकत्वम् द्वितीयस्य च स्मारकत्वमिति न दोष इत्यर्थः ॥ ३१ ॥

इति सौर्यचरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

१७

सौर्ये आग्नेयविध्यन्त इत्युक्तम् । इदानीं ततोऽपि सूक्ष्मतरविचाराय विषयवाक्यमुदाहरति—ऐन्द्रमिति । एवम्—'आग्नेयमिति । अत्र सन्देहमुत्थापयति—किमिति । प्रथमवाक्ये इन्द्रो देवता, द्वितीये चाग्निः ।

## भाष्यम्

### संशयः

तत्र सन्देहः—किं देवतासामान्यादैन्द्रपुरोडाशे सान्नायस्य विध्यन्तः, आग्नेये च पयसि औषधस्य ? देवतासामान्यं बलवत्तरम् । अथ हविस्सामान्यादुत्तरत्र सान्नाय्यस्य, पूर्वत्रौषधस्य, हविस्सामान्यं बलीय इति ।

## वार्तिकाभरणम्

देवतासामान्यहविस्सामान्ययोर्विध्यन्तप्रापकत्वविप्रतिपत्तौ हविस्सामान्यस्य अन्तरङ्गतया बलीयस्त्वात्तदेव विध्यन्तप्रापकम् । यद्यपि देवता हविश्च यागस्वरूपं निर्वर्तयतः, तथापि हविरेव यागस्यान्तरङ्गम् । देवतोद्देश्येन हि द्रव्यत्यागो यागः । तत्रोद्दिश्यमाना देवता शब्दद्वारेणोपकरोतीत्यारादुपकारिणी त्यज्यमानं हविः स्वरूपेणोपकरोतीति सन्निपत्योपकारकम् । यच्च सन्निपाति तदेवान्तरङ्गम् । यच्चान्तरङ्गं तदेव सन्निहितम् । यच्च सन्निहितं तदेव बलीयः । नन्वैन्द्रमाग्नेयं पय इत्यत्र देवताहविषी प्रतीयेते । प्रत्युत प्रथमोपनिपतितत्वाद्देवताया एव सन्निहितत्वं युक्तमिति चेदुच्यते—ऐन्द्रमाग्नेयमित्यत्रेन्द्रदेवताकं हविः अग्निदेवताकं हविरिति हविरबच्छेदकत्वेन देवता प्रतीयते, हविस्तु विशेष्यतया । यच्च विशेष्यं तदेव बुद्धिसन्निहितम् । यथा राजपुरुषः पूज्य इत्युक्तेः पुरुषः पूज्योऽवगम्यते, न राजा, तस्य पुरुषं प्रति विशेषणत्वात् । एवमिहाप्याग्नेयं पय इत्युक्ते हविरेव प्रथमं प्रतीयते, न देवतायाः देवबुद्धिः सन्निहितं तदेव लिङ्गमिति हविःसामान्यमेव बलीयः । ननु 'तृप्त

## तन्त्रशिखामणिः

सान्नाय्यविध्यन्त इति संशयः । तदर्थं च किं देवतासामान्यं हविस्सामान्यं च तुल्यबलमुत देवतासामान्यं बलीयः किं वा हविस्सामान्यमिति । तत्र द्रव्यदेवतयोः यागनिर्वर्त्तकत्वेन विशेषाभावादनियमो देवताया जघन्यतद्धितार्थात् द्रव्यात् मुख्यप्रातिपदिकार्थतया ज्यायस्त्वात् 'तृप्त एव एनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति कर्मफलदातृत्वश्रुतेः प्राधान्याच्च तत्सामान्यं बलीय इति ऐन्द्रपुरोडाशे सान्नाय्यस्य आग्नेये पयसि च आग्नेयपुराडाशस्य विध्यन्त इति प्राप्तेऽभिधीयते—

यागो हि देवतोद्देश्यकद्रव्यत्यागात्मकः । त्यागः प्रधानम् । उद्देशस्तु गुणभूत इति प्रधानान्वयि हविरेव बलीयः न गुणभूतोद्देशान्वयिनी देवता । किञ्चैन्द्रमाग्नेयमिति हविःप्रधानेन तद्धितान्तेन शब्देन हविरेव बुद्धिस्थं भवति । यच्च बुद्धिस्थं तदेव लिङ्गमिति हविस्सामान्यमेवात्र विशेषलिङ्गम् । ननु प्रातिपदिकार्थतया देवतैव प्रथमं बुद्धिस्थीभूय स्वसामान्यात् प्रथमं विध्यन्तं नियच्छति इत्युक्तमिति चेत्, सत्यम्, यद्यपि

## भाष्यसन्दर्भयोजिनी

प्रथमे पुरोडाशो द्रव्यम् द्वितीये च पयः । देवतायां गृह्यमाणायां प्रथमः सान्नाय्यविकृतिरिति, द्रव्ये गृह्यमाणे आग्नेयविकृतिरिति, द्वितीयः देवतायां गृह्यमाणायामाग्नेयविकृतिः, द्रव्यग्रहणे च सान्नाय्यविकृतिरिति सन्देहः । देवताघटितसामान्ये बलवति सति प्रथमस्य सान्नाय्यविकृतित्वम् द्वितीयस्य चाग्नेयविकृतित्वम्, द्रव्यघटितसामान्ये बलवति विपरीतः प्रकृतिविकृतिभावः ।

## भाष्यम्

**किं प्राप्तम् । उच्यते—**

## पूर्वपक्षः

**देवतासामान्यं बलीय इति । कुतः ? मुख्यत्वात् । मुख्यनियन्त्रिता देवता । ऐन्द्रमाग्नेयमिति । जघन्यनियन्त्रितं हविः । तयोर्विरोधे मुख्यानुग्रहो न्याय्यः । मुख्यस्याविरुद्धप्रवृत्तित्वात् । जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः । तस्माद्देवतासामान्यं बलीय इति प्राप्ते, ब्रूमः—**

## वार्तिकाभरणम्

एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति प्रकृताविन्द्रस्य फलदातृत्वश्रवणादितिकर्त्तव्यतासहितेन यागेन प्रसन्नः सन्निन्द्रः फलं दास्यतीत्यवगन्तव्यम् । इन्द्रश्च प्रकृतौ सन्नाय्यविध्यन्तसहितेन यागेन फलसिध्यर्थमाराधितो दृष्टः । स च तथैवाराधितः फलं दास्यति नान्यथेत्यैन्द्रपुरोडाशे सन्नाय्यधर्माः कर्तव्या इति देवतासामान्यं बलीय इति चेत्, स्यादेतदेवम् यदि देवतातः फलं स्यात् । नत्वेवम्, किन्तु यागादेव फलम् । तृप्त एवैनमिन्द्रमिति वचनन्त्वर्थवादमात्रम् । देवतायाश्च फलदातृत्वं नास्तीति 'देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वादि'ति नवमप्रथमपादाधिकरणे प्रपञ्चयिष्यामः । ननु इन्द्रो देवता अस्येति पदार्थवेलायां षष्ठीनिर्दिष्टहविरपेक्षया देवताया मुख्यत्वाद् देवतासामान्यमेव बलीय इति चेत्सत्यं पदार्थवेलायां देवतायाः प्राधान्यम् । तदवस्थायां यागस्यानिष्पन्नत्वाद्विध्यन्तापेक्षा नास्ति येन देवतासामान्यं विध्यन्तमतिदिशेत् । ऐन्द्रमाग्नेयमिति वाक्यार्थावस्थायान्तु यागस्य निष्पन्नत्वादस्ति विध्यन्तापेक्षा । न चेदानीं देवतायाः प्राधान्यं प्रतीयते । हविर्विशेषणत्वेन तस्यास्त्व-

## तन्त्रशिखामणिः

पदार्थज्ञानावस्थायां देवता प्रातिपदिकार्थतया प्रथमं बुद्धिस्था तथापि तस्यां दशायां कर्मणोऽनुपस्थितेः नाकाङ्क्षेति न सा, विध्यन्तवाक्यार्थधीवेलायां यदाकाङ्क्षा आविर्भवति तदा विशेषणीभूताया देवताया विशेष्यावच्छेदकत्वेन व्यवहितप्रतीतिकतया न विध्यन्तनियामकता । किन्तु विशेष्यतया प्रधानस्य हविष एवाव्यवहितप्रतीतिकस्य विध्यन्तनियामकता । ननु कर्मणो देवताप्रसादार्थत्वात् देवतैव प्रधानमित्युक्तमिति चेन्न । 'तृप्त एव एनं इन्द्र' इत्यस्यार्थवादत्वेन देवताचैतन्यस्य नवमे निराकरिष्यमाणत्वात् । किञ्चापेक्षितनियमावाप्तेश्च

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

द्रव्यघटितसामान्यापेक्षया देवताघटितस्य प्राबल्यमङ्गीकुर्वन् पूर्वपक्षयति—**देवतासामान्यमिति ।** 'ऐन्द्रमेकादशकपालम्' इत्यत्रैन्द्रपदं प्रथमपठितम् एवमाग्नेयमित्यत्राग्नेयपद प्रथमपठितम् । उभयत्र हविः पदमनन्तरपठितम् । प्रथमपठितं मुख्यं भवति, द्वितीयपठितञ्च जघन्यं भवति । मुख्यग्रहणे पूर्वत्र सान्नाय्यविकारः, उत्तरत्र च पुरोडाशविकारः । जघन्यग्रहणे पूर्वत्र पुरोडाशविकारः, उत्तरत्र च सान्नाय्यविकार इति विरोधे मुख्यानुग्रह एवोचित इत्याह—**तयोर्विरोधे इति ।** **अविरुद्धप्रवृत्तित्वात्** असञ्जातविरोधित्वादित्यर्थः । अतोऽसञ्जातविरोधित्वान्मुख्यस्यानुग्रहे आश्रीयमाणे देवताघटितसादृश्येन प्रबलेन प्रकृतिविकृतिभावस्सिध्यतीत्याह—**तस्मादिति ।**

## भाष्यम्

### सिद्धान्तः

विप्रतिपत्तौ हविषा नियम्येत-विप्रतिपत्तावेतस्यां हविर्देवतयोः हविषा विध्यन्तो नियम्येत। कुतः? कर्मणस्तदुपाख्यत्वात्। कर्म देवतां प्रति द्रव्यस्योत्सर्गः। स च हविष्युपाख्यायते उपलभ्यत इत्यर्थः। हविस्त्यज्यमानं दृश्यते। किमतः? अतो हविः कर्मणः प्रत्यासन्नम्। प्रत्यासत्तिश्च लिङ्गम्। ननु देवतापि यागेन सम्बद्धा। न तया विना यागो भवति। उच्यते—सत्यं सम्बद्धा। आरादुपकारिणी तु सा। नासौ त्यज्यते। तस्माद् बहिरङ्गम्। अतो हविस्सामान्यं बलीयः॥ ३२॥

## वार्तिकाभरणम्

रोहितत्वात्। किञ्च हविःसामान्येन विध्यन्तप्राप्तावभ्युपगम्यमानायां चोदकप्राप्तानां भूयसां धर्माणामनुग्रहो भवति। अन्यथा औषधधर्माणां पयसि पयोधर्माणाञ्चौषधे उपयोगाभावाद्भूयसां धर्माणां बाधः स्यात्। तस्माद्धविःसामान्यं बलीयः॥ १७॥

## तन्त्रशिखामणिः

हविस्सामान्यमेव बलीयः। न ह्यैन्द्रपुरोडाशे पयोधर्मैः दोहनादिभिः आग्नेये पयसि च औषधधर्मैरवघातादिभिः कश्चिदुपकारोऽस्ति। तस्माद्धविस्सामान्यमेव बलीय इति सिद्धम्॥

वृत्तमधिकरणम्॥

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

एवं द्रव्यं देवताञ्चादाय **विप्रतिपत्तौ** जातायां **हविषा** सामान्येन **नियम्येत** विध्यन्तः। अत्र हेतुः—**कर्मणस्तदुपाख्यत्वात्**। हेत्वन्तर्गततच्छब्दो हविःपरः। सौत्रं कर्मपदं विवृणोति—**कर्मेति**। देवतोद्देशेन विहितस्य द्रव्यस्य विहिते देशे **उत्सर्गः** प्रक्षेपः क्रियत इति यत्तत्कर्म। एतादृशे कर्मणि देवताया द्रव्यस्य च सम्बन्धे विद्यमानेऽपि कर्मोपलम्भो द्रव्य एवास्तीति निरूपयति—**स चेति**। उत्सर्ग इत्यर्थः। अग्नौ प्रक्षिप्यमाणं द्रव्यं विलोक्य तत्समकालं यजमानस्त्यजति—अग्नय इदं न ममेति। प्रक्षिप्यमाणं हविर्यदि न पश्येत्तर्हि त्यागस्यावसरो न स्यात्। अतः प्रक्षिप्यमाणस्य दर्शनमावश्यकम्। एवं दर्शनेन किं निष्पद्यत इति पृच्छति—**किमत इति**। इदं निष्पद्यते यत्कर्म निर्वृत्तमिति। कर्मनिर्वृत्तौ प्रत्यासन्नं हविरेव भवति, न देवता **प्रत्यासन्ना** इत्यस्य विवरणम् **प्रत्यासत्तिश्चेति**। लिङ्गं द्योतकमित्यर्थः। उपलम्भकमिति यावत्। यथा यागेन द्रव्यं सम्बद्धं तथा देवतापि सम्बद्धा। यथा च द्रव्येण विना यागो न सम्पद्यते तथैव देवतयापि विना स न सम्पद्यत इति यागेन सह द्रव्यदेवतयोस्सम्बन्धे तुल्ये सति द्रव्यमेव किमिति गृह्यत इति शङ्कते—**नन्विति**। समाधत्ते—**सत्यमिति**। देवतायास्सम्बन्धोऽपि नान्तरीयकः, किन्तु स सम्बन्धो दूरादिति दर्शयति—**आरादुपकारिणीति**। **नासौ त्यज्यते** द्रव्यवद्देवता न प्रत्यक्षेत्यर्थः। अत एवारादुपकारिणीति भावः। अतो हविस्सामान्यं बलीय इत्युपसंहरति—**अत इति**॥ ३२॥

### भाष्यम्

## तेन च कर्मसंयोगात् ॥ ८.१.३३ ॥

तेन च हविषा संयुज्य कर्म चोद्यते—ऐन्द्रम् आग्नेयम् इति हविःप्रधानश्शब्दः। किमतः ? अतो हविरत्र बुद्धौ सन्निहितं तल्लिङ्गं भवति। यथा धूमो बुद्धिविषयतामापन्नोऽग्नेर्लिङ्गं न विद्यमानः ॥ ३३ ॥

ननु देवताप्यत्र श्रूयते-ऐन्द्रमाग्नेयमिति। उच्यते—

## गुणत्वेन देवताश्रुतिः ॥ ८.१.३४ ॥

विशेषणत्वेन देवता श्रूयते हविर्विशेष्यत्वेन। विशेष्यञ्च बुद्धौ सन्निहितं भवति न विशेषणम्। तद्विशेषणञ्च निवर्तते। कथं ज्ञायते ? विशेष्यानुबन्धसंयोगात्। यथा राजपुरुषः पूज्य इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा। एवमिहापि। ऐन्द्रं पय इत्युक्ते हविर्बुद्धौ सन्निधीयते, न देवता। यच्च बुद्धौ सन्निहितं तल्लिङ्गमित्युक्तम्। तस्माद्धविस्सामान्यं बलीयः। अत ऐन्द्रे पुरोडाशे आग्नेयस्य विध्यन्तः। आग्नेये च पयसि सान्नाय्यस्येति।

### भाष्यसन्दर्भयोजिनी

सौत्रतच्छब्दस्यार्थः—हविषेति। इन्द्रो देवता अस्य, अग्निर्देवता अस्य इति विग्रहे अस्यपदं द्रव्यपरम्। सर्वनाम्नां बुद्धिस्थत्वावच्छिन्ने शक्तिः। तेनेमे तद्धितान्ताश्शब्दा हविःप्रधाना इति सिध्यति। तथा चैतेषु तद्धितान्तेषु श्रूयमाणेषु प्रथमं हविर्बुद्धावुपतिष्ठते। यद् बुद्धावुपस्थितं तत्सन्निहितमित्याह—**हविरत्रेति**। बुद्धावुपस्थितमेव लिङ्गं भवति। ज्ञायमानमेव लिङ्गं साध्यसाधकं भवतीत्याह—**धूमो बुद्धिविषयतामापन्न** इति। विद्यमानोऽपि धूमो यदि ज्ञानविषयस्तां नापद्यते तर्हि न स लिङ्गं भवितुमर्हतीत्याह—**न विद्यमान** इति। एवञ्च कर्मस्वरूपावगमाय बुद्धिविषयतामापन्नं द्रव्यमेव लिङ्गं भवितुमर्हतीति हविस्सामान्यमेव बलीय इति सिद्धम् ॥ ३३ ॥

तद्धितान्तेषु पदेषु यथा द्रव्यं सम्बद्धं तथा देवतापि सम्बद्धा, तर्हि को विशेष इति शङ्कते—**नन्विति**। सत्यं द्रव्यवद्देवतापि सम्बद्धा, किन्तु देवता हविषा विशेषणत्वेन सम्बद्धेत्युत्तरमाह—**विशेषणत्वेनेति**। विशेष्यं हविः, विशेषणञ्च देवता। विशेषणमुपसर्जनं विशेष्यञ्च प्रधानम्। अस्तु तावता किं सिध्यतीत्यत आह—**विशेष्यञ्चेति**। विशेष्यस्यान्तरङ्गत्वं कर्मणि, विशेषणस्य बहिरङ्गत्वमिति भावः। **निवर्तते** कृतकृत्यं भवतीत्यर्थः। **विशेष्यानुबन्धसंयोगात्** विशेष्यं कीदृशमित्यवबोधनमात्रमेव विशेषणस्य कार्यम्। विशेषणीभूताया देवताया विशेष्यतावच्छेदकतया प्रकृतविध्यन्तनियमनकार्ये व्यापाराभावादिति भावः। अत्रोदाहरणं दर्शयति—**यथेति**। पूजाया अर्हः पुरुषः पूज्यते, न तु राजा। राजा तु पुरुषस्य परिचायकत्वेन कृतार्थः, न पुनस्तस्य पूजाकर्मणि सम्बन्ध इत्यर्थः। ऐन्द्रं पय इत्यत्रापि विशेष्यं द्रव्यं बुद्धौ सन्निहितम्। तस्मिंश्च सन्निहिते विध्यन्तनियमनकार्ये तद् व्याप्रियते न विशेषणं देवता, अतो हविस्सामान्यमेव प्रबलम् इत्याह—**तस्मादिति**।

### भाष्यम्

'गुणत्वेन देवताश्रुतिः' इत्येतस्य सूत्रस्यापरा व्याख्या-इदं पदोत्तरं सूत्रम्। यदुक्तं हविस्सामान्यं बलीय इति, नैतद्युक्तम्। देवतासामान्यं बलीय इति। कुतः? सर्वोऽयं प्रयासो देवताराधनार्थं एव।

सास्य प्रसन्ना फलं ददाति। एवं श्रूयते—'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इति। यदेन्द्रस्य प्रसादनोपाय इति ज्ञातः, पुनरपीन्द्रे प्रसादयितव्ये स एवास्थेयो भवति। तस्माद्देवतासामान्यं बलीय इति। अत्र ब्रूमः—स्यादेतदेवं यदि देवतातः फलं स्यात्। यागात्तु फलम् 'स्वर्गकामो यजेत' इति श्रूयते। यत्तु 'तृप्त एवैनमिन्द्रः' इति, तत्रेदमुच्यते—गुणत्वेन देवताश्रुतिः। यागे गुणभूता देवता। तस्या दातृत्वं स्तुत्योच्यते। यथा—अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्त इति। न चामात्यः सेनापतिर्वा ग्रामस्य प्रभवति, राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्माद्यथोक्तेनैव न्यायेन हविस्सामान्यमेव बलीय इति ॥३४॥

इति द्रव्यघटितसादृश्यस्य बलीयस्त्वाधिकरणम् ॥१७॥

### भाष्यसन्दर्भयोजिनी

व्याख्यान्तरमस्य सूत्रस्योपस्थापयति—अपरा व्याख्येति। इदं पदोत्तरं सूत्रम् इदं सूत्रं शङ्कापरिहार-रूपेण प्रवृत्तमित्यर्थः। हविस्सामान्यस्य बलीयस्त्वं न युक्तम्, देवतासामान्यस्यैव बलीयस्त्वं न्याय्यम्। यतश्च सङ्कल्पप्रभृति ब्राह्मणतर्पणान्तोऽयं यागानुष्ठानप्रयासो देवतापूजार्थः। अतो देवतायाः प्राधान्यात् तत्सामान्यमेव बलीयः। एवं शङ्काया उत्तरत्वेन सूत्रमिदं प्रवृत्तमिति भावः।

अस्य यजमानस्याराधयितुः। अत्रार्थे वाक्यशेषं प्रमाणयति—तृप्त एवेति। यजमानकर्तृककर्मानुष्ठानेन स्वयमिन्द्रस्तृप्त एव सन् एनं यजमानं प्रजाः पशूंश्चास्मै प्रदाय तर्पयति इति वाक्यशेषार्थः। वाक्यशेषं घटयति—यदेति। इन्द्रप्रसादनं प्रत्युपायः कर्म इति ज्ञाते तत्प्रसादनाय कर्मैवानुष्ठेयम्। तेन कर्मानुष्ठानमुपसर्जनं देवता-प्रसादश्च प्रधानमिति सिध्यति। अतो देवतासामान्यमेव बलीय इत्युपसंहरति—तस्मादिति।

एवं शङ्कायां समाधत्ते—अत्र ब्रूम इति। शङ्केयं तदा समुचिता स्याद्यदा देवतायाः फलप्रदातृत्वे प्रमाणं स्यात्। तर्हि फलप्रदातृत्वं कस्येत्यत आह—यागात्तु इति। 'स्वर्गकामो यजेत' इति श्रुतिः यागात्स्वर्ग इत्यभिधत्ते, न देवतायाः। एवं सति वाक्यशेषस्य का गतिरित्यत आह—गुणत्वेनेति। यागे गुणभूतां देवतां दातृत्वेन वाक्यशेषः स्तौतीत्यर्थः। यागे प्रधानस्यैव स्तुतिः न गुणभूतस्येति न नियमः, गुणभूतस्यापि स्तवन-मुचितमेवेति भावः। अमात्यस्य वा सेनापतेर्वा स्वातन्त्र्येण ग्रामदाने नाधिकारः, अधिकारस्तु राज्ञ एव किन्तु राजप्रयुक्तोऽमात्यो वा सेनापतिर्वा श्रोत्रियाय ग्रामं ददाति। तत्र ग्रामदातृत्वं गुणभूतस्यैव स्तवनम्—अमात्येन ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्त इति। प्रभवति अधिकरोति। इतरस्मिन् अमात्यादौ। अतो द्रव्यघटित-सादृश्यमेव बलीय इत्युपसंहरति—तस्मादिति ॥ ३४ ॥

इति द्रव्यघटितसादृश्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥

### भाष्यम्

१८

## हिरण्यमाज्यधर्म तेजस्त्वात् ॥८.१.३५॥

### विषयः

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' ( मै. सं. २.२.२ ) इति श्रूयते ।

### वार्तिकाभरणम्

हिरण्यमाज्यधर्म तेजस्त्वात् । 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति श्रूयते । तत्र संशयः हिरण्यद्रव्यस्यावेक्षणाज्यधर्माः कर्तव्याः उतावाहनाद्यौषधधर्माः कर्तव्या इति । तत्र हिरण्यमश्वानां (अश्मनां) तेजः आज्यमपि गवां तेजस्सारभूतमिति यावत् । 'तेजो वा आज्यमि'ति वाक्यशेषाद्वा आज्यमपि तेजः । एवञ्च तेजस्त्वसामान्याद्धिरण्यमाज्यधर्म । यद्वा हिरण्यं तेजस्त्वादुज्ज्वलमाज्यमपि स्निग्धत्वादुज्ज्वलम् । एवञ्चोज्वलत्वसामान्यादाज्यधर्म हिरण्यम् । एवञ्चावेक्षणाद्याज्यधर्मा अनुगृह्यन्ते । औषधधर्माश्रयणे तु अवहननादयो हीयेरन् । तस्मादुपांशुयाजधर्म हिरण्यं इति प्राप्ते ब्रूमः—

हिरण्यकृताः कृष्णलाः परस्परविभक्तावयवत्वेनैकीभावाभावाद्विशदाः सौर्यचरुरपि विशदः । विशदत्वसामान्यात् कृष्णलचरावपि सौर्यचराविवौषधधर्माः कर्तव्याः । अवहननादयस्तु द्वारलोपान्निवर्तन्ते इति । यथा सौर्यचरौ पेषणादिधर्माः अर्थलोपान्निवर्तन्ते । औषधविध्यन्ताश्रयणे तु कृष्णलचरौ श्रपणस्यार्थलोपान्निवर्तमानं श्रपणं 'घृते श्रपयती'ति वाक्येन प्रतिप्रसूयत इति विधेर्लाघवम् । आज्यविध्यन्ताश्रयणे तु

### तन्त्रशिखामणिः

(सू०) हिरण्यमाज्यधर्म स्तेजस्त्वात्

पूर्ववदपेक्षितधर्मलाभाय हिरण्यमाज्यधर्मेत्युत्थितेः सङ्गतिः । 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम' इति श्रूयते । कृष्णलं स्वर्णमाषः । तत्र कृष्णलचरौ किमाज्यस्य धर्मोऽतिदिश्यते किं वा औषधस्येति विशये 'तेजो वै घृतं तजो वै हिरण्यम'ति द्वयोस्तेजस्त्वेनानुकीर्त्तनात् उज्जलत्वसामान्याच्च हिरण्यमाज्यधर्म । न च विशदत्वसामान्यात् औषाधधर्मकं वा किं न स्यादिति वाच्यम् । औषधर्मग्रहे हि अवहननफलीकारणदयो

### भाष्यसन्दर्भयोजिनी

१८

### विषयः

पूर्वस्मिन्नधिकरणे द्रव्यघटितसादृश्यस्य बलीयस्त्वमङ्गीकृत्यैन्द्रयागे पुरोडाशविध्यन्तः, आग्नेययागे च सान्नाय्यविध्यन्त इति समर्थितम् । ऐन्द्रपुरोडाशे सान्नाय्यविध्यन्तस्स्यात्तर्हि दोहनादि धर्मबाधः प्रसज्येतेत्यतः पुरोडाशविध्यन्तत्वम् । तेनैव न्यायेन कृष्णलचरौ पुरोडाशविध्यन्तत्वे स्वीक्रियमाणेऽवहननादीनां बाधे सत्यपि तद्विध्यन्तः प्राप्नोति न वेति विचाराय विषयवाक्यं पठति—प्राजापत्यमिति । कृष्णलं सुवर्णखण्डः प्रजापतिदेवताकघृतपक्वकृष्णचरुद्रव्यकयागेनायुः प्राप्नुयादिति विषयवाक्यस्यार्थः ।

## भाष्यम्

**तद्धिरण्यमाज्यधर्मं स्यात्, उपांशुयाजविध्यन्तस्तत्र स्यात् । कुतः ? तेजस्त्वसामान्यात् । हिरण्यमश्मनाम् ( अश्वानां ) तेजः, आज्यमपि गवां सार इत्यर्थः । अथवा हिरण्यमपि तेजस्वित्वादुज्ज्वलम् । आज्यमपि स्निग्धत्वादुज्ज्वलमेव । तस्मात्सामान्यादुपांशुयाजधर्मा शतकृष्णलचरुः ॥३५॥**

## वार्तिकाभरणम्

चोदकेनाप्राप्तं श्रपणं 'घृते श्रपयती'ति वाक्येनापूर्वतया विधीयत इति विधेर्गौरवम् । अथ यदुक्तं तेजस्त्वोज्ज्वलत्वाभ्यामुपांशुयाजसामान्यादाज्यविध्यन्त इति तन्न; अनवस्रावितान्तरूष्मपक्वौदनरूपचरुशब्दमुख्यार्थसम्भवाद्वैशद्यसादृश्येन चरुशब्दः प्रयुज्यते । इदञ्च दशमाद्ये द्वितीयवर्णके शास्त्रदीपिकायामुक्तम् ।

एवञ्च चोदनागतचरुशब्देन साक्षादुपात्तं विशदत्वम्, तेजस्त्वस्निग्धत्वे तु न तथा, चोदनागतशब्दानुपपत्तेः । तथा च तेजस्त्वस्निग्धत्वसामान्ययाः चोदनागतचरुशब्दोद्दलितप्रधानहविर्गतविशदत्वसामान्यापेक्षया दुर्बलत्वेन तयोः धर्मप्रापकत्वासम्भवात् । तस्माद्धिरण्ये औषधधर्माः । अत्र 'तस्मिंश्चाज्ये श्रपणं श्रूयते 'घृते श्रपयती'ति । किमतः ? अत एतद्भवति, औषधस्य विध्यन्तेन श्रपणं प्राप्यते, तत्र केवलमाज्यं विधायिष्यत' इति भाष्ये औषधविध्यन्ताश्रयणे श्रपणस्य चोदकतः प्राप्तत्वादाज्यमात्रविधायकं घृते श्रपयतीति वाक्यमित्यर्थः प्रतीयते । तदनास्थामूलकम् । विकृत्यर्थस्य श्रपणस्यार्थलोपात्, प्राप्त्यभावात् 'प्राजापत्ये घृतमि'त्युत्पत्तिवाक्ये आज्यस्य विहितत्वेन विहितस्य विधानायोगात् । 'आज्यविध्यन्ते तु श्रपणमाज्यञ्च विधीयेयाताम् । तथा च वाक्यं भिद्येते'त्यपि भाष्यमनास्थामूलकम्, आज्यस्योत्पत्तिवाक्य एव विहितत्वेन वाक्यभेदाभावात् ॥ १८ ॥

## तन्त्रशिखामणिः

धर्माः बाध्येरन् । आज्यधर्मग्रहे तु विलापनमात्रबाधेऽप्यवेक्षणोत्पवनादीनां भूयसामनुग्रहः स्यात् । तस्मादाज्यधर्मं हिरण्यमिति प्राप्तेऽभिधीयते—

प्राजापत्यं घृते चरुमिति विधौ चरुशब्दः श्रूयते । ततश्चार्थगतसामान्यतौल्येऽपि प्रथमोपस्थितचोदनागतौषधद्रव्यासाधारणशब्दात् प्रथममौषधविध्यन्ते नियमिते पश्चाद्भाविधर्मप्रामाणिकत्वाददोषः । किञ्च घृते श्रपयतीति श्रपणविधेरौषधधर्मता । तथात्वे हि चोदकप्राप्तस्यार्थलोपात् निवर्त्तमानस्य श्रपणस्य प्रतिप्रसवमात्रमनेन क्रियत इति लाघवम् । आज्यधर्मग्रहे त्वत्यन्तमप्राप्तं श्रपणं विधेयमिति गौरवम् । तस्मादौषधधर्मं हिरण्यम् ॥

वृत्तमधिकरणम् ॥

## भाष्यसन्दर्भयोजिनी

### संशयः

अस्मिन् कृष्णलचरौ किमुपांशुयाजाज्यधर्माः प्रवर्तन्ते ? उतौषधधर्मा इति संशयः । द्रव्यघटितसादृश्यस्योभयत्र सत्वात्संशयः ।

### पूर्वपक्षः

तद्धिरण्यमाज्यधर्मं स्यादिति पूर्वपक्षः । आज्यस्य धर्मा यस्य तदित्याज्यधर्मं अतिच्प्रत्ययान्तश्शब्दः । हिरण्यपदेन शतकृष्णलग्रहणम् । उपांशुयाजाज्यस्य कृष्णलस्य च सादृश्ये हेतुं निर्दिशति—**तेजस्त्वसामान्यादिति** तेजस्त्वे प्रमाणम्—**अश्मनां ( अश्वानां ) तेजः**, तेजो वै घृतमिति । तेजस्त्वेन चोभयत्रोज्ज्वलत्वमप्यस्तीत्याह—**तेजस्वित्वादुज्ज्वलम्** इति । अत उपांशुयाजविध्यन्तः कृष्णलचरौ प्राप्नोतीत्युपसंहरति—**तस्मादिति** ॥३५॥

भाष्यम्

## धर्मानुग्रहाच्च ॥८.१.३६॥

हिरण्ये च बहव आज्यधर्मा अनुगृह्यन्ते-अवेक्षणादयः। औषधधर्मास्तु हीयेरन्-अवहन्त्यादयः। तस्मादप्याज्यधर्मा ॥३६॥

सिद्धान्तः

## औषधं वा विशदत्वात् ॥८.१.३७॥

अथवा-औषधस्य हिरण्ये विध्यन्तः। कुतः ? विशदत्वात् हिरण्यमपि विशदम् औषधमपि विशदम्। कः पुनरनयोः सामान्ययोर्विशेषः ? न खलु कश्चित्, किन्तु विशदत्वस्य कारणद्वयमुपोद्बलकम्—तेजस्वितायास्तद्धर्मानुग्रह एकः ॥३७॥

## चरुशब्दाच्च ॥८.१.३८॥

चरुशब्दश्चात्र भवति—प्राजापत्यं चरुमिति। चरुशब्दश्चौषधस्य वक्ता, तद् बलवदौषधस्य लिङ्गम् ॥३८॥

## तस्मिंश्च श्रपणश्रुतेः ॥८.१.३९॥

तस्मिंश्चाज्ये श्रपणं श्रूयते—'घृते श्रपयति' इति। किमतः ? अत एतद् भवति—औषधविध्यन्तेन श्रपणं प्राप्यते। तत्र केवलमाज्यं विधायिष्यते। आज्यविध्यन्ते तु श्रपणमाज्यश्च

भाष्यसन्दर्भयोजिनी

आज्यधर्मा अनुगृह्यन्ते विलापनमात्रबाधेऽपि अवेक्षणोत्पवनादय आज्यधर्मा भूयांसोऽनुगृह्यन्ते, औषधधर्माः अवहन-पेषण-फलीकरणादयः हीयेरन् बाध्येरन्। अत आज्यधर्माः ॥३६॥

सिद्धान्तः

अथवेति। नायं विकल्पार्थकः, किन्तु आज्यधर्मप्राप्तावस्वरसावद्योतकः। विशदत्वसामान्येनौषधविध्यन्त एव कृष्णलचरावङ्गीकर्तव्यः। अनयोस्सामान्ययोः तेजस्वित्वविशदत्वयोः। सामान्ययोर्विशेषाभावेऽपि विशदत्वस्योपोद्बलकत्वमस्तीत्याह—किन्त्विति। तेजस्वितायास्तद्धर्मानुग्रह एकः, अपरश्चाग्रिमसूत्रे वक्ष्यमाणः ॥३७॥

आयुष्कामेष्टिविधायकवाक्ये चरुशब्दः प्रयुक्तो दृश्यते। स चौषधस्य वाचकः। औषधविध्यन्तप्राप्तौ तद् बलवत्कारणमित्याह—तदिति ॥३८॥

कृष्णलचरौ कृष्णलानां घृते श्रपणं विहितम्। एवं विधानेन किं सिध्यतीति पृच्छति—किमत इति। श्रपणञ्च दर्शपूर्णमासयोरौषधद्रव्यकयागेऽस्ति। तच्चौषधविध्यन्तेन कृष्णलेषु प्राप्तम्। श्रपणस्य विक्लित्तिफलकत्वात् तादृशविक्लित्तेः कृष्णलेष्वभावादर्थलोपाद् बाधे सति प्रतिप्रसवार्थं श्रपणं विधीयत इति लाघवम्।

भाष्यम्

विधीयेयाताम् । तदा वाक्यं भिद्येत ।।

तस्मिंश्च श्रपणश्रुतेः इत्येतस्यापरा व्याख्या । आह—साक्षादेवेहाज्यं श्रूयते । तस्मात्तस्य विध्यन्त इति । तत उत्तरमिदम्-तस्मिंश्च श्रपणश्रुतेः । दार्शपौर्णमासिकं श्रपणं तस्मिंश्चाज्ये श्रूयते । गुणगतं तत्सामान्यम् । हविर्गतन्तु वैशद्यम् चरुशब्दः । तस्मात्ते बलवती ।।३९।।

इति कृष्णलचरावाग्नेयविध्यन्तातिदेशाधिकरणम् ।।१८।।

१९

## मधूदके द्रवसामान्यात्पयोविकारस्स्यात् ।।८.१ ४०।।

चित्रायामिष्टौ श्रूयते—'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं

टुप्टीका

मधूदके द्रवसामान्यात् पयोविकारस्स्यात् ।

तदिति सर्वनाम्नैकवचनान्तेन यत्परामृश्यते तद्देवतासम्बन्धि । न च धानादीनि परामृश्यन्ते । यदि

वार्तिकाभरणम्

मधूदके द्रवसामान्यात्पयोविकारः स्यात् । चित्रायामिष्टौ 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति विहितेषु दध्यादियागद्रव्येषु किमाज्यविध्यन्तः ? उत सान्नाय्य-विध्यन्तः ? इति

तन्त्रशिखामणिः

(सू०) मधूदके द्रव्यसामान्यात् पयोविकारः स्यात् ।

हिरण्य इव मधूदकयोरपि नाज्यधर्मप्राप्तिरित्युत्थितेः सङ्गतिः । चित्रेष्टौ श्रूयते 'दधि मधु घृतमुदकं-

भाष्यसन्दर्भयोजिनी

आज्यधर्मप्राप्तौ सत्यामत्यन्ताप्राप्तश्रपणं विधेयमधिकरणत्वेनाज्यञ्च विधेयमिति गौरवम् । औषधधर्मप्राप्तौ तु केवलमाज्यं विधेयम् श्रपणञ्च प्रतिप्रसवविधया विधेयमिति लाघवम् । तदिदं दर्शयति—तत्र केवलमिति ।

शङ्कापरिहारेण सूत्रमन्यथा व्याख्याति—अपरा व्याख्येति । उपांशुयाजः प्रत्यक्षाज्यद्रव्यकः । अत्रापि श्रपणे घृतमस्त्येव । अत उपांशुयाजविध्यन्त एवास्त्विति शङ्कितुराशयः । एवं शङ्कोत्तरत्वेन सूत्रं नयति—तस्मिन्निति । उपांशुयाज आज्यद्रव्यकः कृष्णलचरौ चाज्यमस्तीति तावता सामान्यं निर्णेतुं न शक्यते । उपांशुयाज आज्यं प्रदेयम्, अत्र च श्रपणे गुणभूतमाज्यम्, गुणगतसामान्याश्रयणापेक्षया हविर्गतसामान्याश्रयणमुचितमित्याह—गुणगतं तत्सामान्यमिति । हविर्गतं सामान्यं स्पष्टयति—वैशद्यं चरुश्चेति । ते सामान्ये । बलवतीति द्विवचनान्तम् ।। ३९ ।।

इति कृष्णलचरावाग्नेयविध्यन्ताधिकरणम् ।। १८ ।।

१९

विषयः

पूर्वस्मिन्नधिकरणे कृष्णलचरावौषधविध्यन्तप्रवृत्तिः नोपांशुयाजविध्यन्त इत्युक्तम् । तथैव मधूदके

### भाष्यम्

भवतो'ति । ( मै. सं. २.३.६. )

### टुप्टीका

च परामृश्येरंस्तानीति बहुवचनं स्यात् । यदि वा तत्तदिति वीप्सानिर्देशः । तस्मान्न धानादीनां परामर्शः । यदि वा एतानि परामृश्य देवतायां सम्बध्येरन् प्राजापत्यानीति बहुवचनमभविष्यत् । अतस्सर्वनाम्नैक वचनान्तेन संसृष्टमिति ( संसृज्य ) परामृश्य देवतासम्बन्धः ।

### वार्तिकाभरणम्

विचिचारयिषुस्तत्र यागप्रसङ्गादेको याग इति भाष्याननुसारिमतमुपपादयितुं प्रथमं बहुयागपक्षं दूषयति—तदितीति । तत्संसृष्टमित्यत्र विद्यमानेन तदिति सर्वनाम्ना यदभिधीयते तदेव देवतासम्बन्धीत्यर्थः । नन्वेतावता प्रकृते किं दूषणमायातमित्यत आह—न चेति । तत्र तच्छब्दस्य धानादीनि सर्वद्रव्याणि नार्थ इत्यर्थः । न चोद्देशक्रमेण दध्यादीनीति वक्तुं न्याय्यमिति वाच्यम् । 'दधिमधुघृतमुदकं धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति शाखान्तरीयपाठे दध्यादिचतुर्णां नपुंसकैकवचनान्ततया साजात्यात्तच्छब्देन परामर्शेऽपि धानातण्डुलशब्दयोः स्त्रीलिंगपुल्लिङ्गतया ग्रहणासम्भवेन सर्वाभिधायित्वाभावादित्यभिप्रायेण धानादीनीति वाचोयुक्तेः । ततः किमायातमित्यत आह—यदीति । तच्छब्देन सर्वपरामर्शे तानीति बहुवचनेन भवितव्यम् । न च बहुवचनं दृश्यते । तस्मान्न सर्वपरामर्शः । सर्वद्रव्यपरामर्शाभावान्न बहवो यागा इत्यर्थः । यदि तानीति बहुवचनं स्यात्ततः परामृश्येरन्निति योजना । नन्वेवं सति तच्छब्दो वीप्सया सर्वपरामर्शकोऽस्त्वित्याशङ्क्य वीप्सयापि सर्वपरामर्शो न सम्भवति, तत्तदिति निर्देशाभावादित्याह—यदिवेति । अत्र ततः परामृश्येरन्निति पदद्वय-मनुषज्यते । ननु तत्तदिति द्विरुक्त्यभावेऽपि तच्छब्दस्य प्रकृतसर्वद्रव्यपरामर्शित्वासामर्थ्येन वीप्सार्थकत्वाऽभ्यु-पगमेन तच्छब्देन सर्वाणि द्रव्याणि परामृश्य देवतया सम्बध्यतामित्याशङ्क्य तदा देवताया अनेकद्रव्यसम्भवात् प्राजापत्यानीति बहुवचनेन भवितव्यम् । न च बहुवचनं दृश्यते । तस्माद् बहुवचनाभावेनानेकयागानुपपत्या

### तन्त्रशिखामणिः

धानास्तण्डुलाः तत्संसृष्टं प्राजापत्यमि'ति । तत्र मधूदकयोः पयसो धर्म उत आज्यस्येति विशये स्वाभाविकद्रवत्व-सामान्याधिक्यात् पयोधर्माः स्युः । न च वर्णसामान्याधिक्यादाज्यस्याग्निसयोगे सत्येव वर्णभेदो द्रवत्ववत् न स्वत इति स्वाभाविकद्रवत्वाधिक्यात् पयसो धर्माः स्युरिति प्राप्ते अभिधीयते-यद्यप्याज्यस्य न स्वाभाविकद्रवत्वं तथापि हविरवस्थायां विलापनात् द्रवत्वं तुल्यम् । वर्णसामान्यन्त्वधिकम् । अतो हविः सामान्याधिक्या-

### भाष्यसन्दर्भयोजिनी

विशेषातिदेशचिन्तार्थं विषयं दर्शयति—चित्रायामिष्टौ इति । मधु माक्षिकम् । धानाः भ्रष्टा यवास्तण्डुला वा । सप्तद्रव्यकं प्रजापतिदेवताकं कर्मैकमिति प्राञ्चः । प्रति द्रव्यं देवतासम्बन्धेन सप्त यागा इति नवीनाः । चित्रेष्टेरिद मुत्पत्तिवाक्यम् । अस्यैवाधिकारवाक्यम्—'चित्रया यजेत पशुकामः ( तै० सं० २. ४. ६- १, ) इति ।

#### संशयः

अत्र मधूदकयोस्संशयः । शिष्टद्रव्येषु न संशयः, स्पष्टप्रकृतिकत्वात् । किं मधूदकयोः सान्नाय्यविध्यन्तः प्रवर्तते ? अथवोपांशुयाजविध्यन्त इति संशयः ।

## भाष्यम्

### पूर्वपक्षः

**तत्र मधूदके पयोविकारः स्यात्। कुतः? द्रवसामान्यात्। द्रवे च मधूदके पयोऽपि द्रवम् ॥४०॥**

## टुप्टीका

**तत्रैवं वर्णयन्ति-सर्वनामनिर्दिष्टस्य प्रतिनिर्देशकम्। द्रव्याणि च निर्दिष्टानि न संसर्गः। बहुवचना-**

## वार्तिकाभरणम्

तच्छब्दोऽपि न सर्वद्रव्यपरामर्शक इत्याह—**यदि चेति**। **परामृश्येत्यत्र** तच्छब्देनेत्यध्याहार्यम्। अत्र बहुवचनं अभविष्यदिति क्रियातिपत्तौ लृङ् प्रयोगात् सम्बद्धयेरन्नित्यत्राऽपि सम्बन्त्स्यतेति लृङ्प्रयोगो युक्तः। बहुयागपक्षे दूषणमुक्त्वा एकयागपक्षे उपपत्तिमाह—**अत इति**। न हि सर्वनाम्ना सर्वद्रव्याणि परामृश्यन्ते, येनैकवचनानुपपत्तिरुच्येत। न त्वेवम्, किन्तु संसृष्टमिति संसृष्टशब्देनैकवचनान्तेनापि संसर्गेणोपाधिनैक्यमिवापन्नानां सर्वद्रव्याणां परामर्शसम्भवात् संसृष्टशब्देनाभिहितं विविधद्रव्यं तच्छब्देन परामृश्य संसृष्टद्रव्यस्य देवतासम्बन्धः क्रियते प्राजापत्यमिति। एवञ्चैकवचनान्तसंसृष्टशब्दनिर्दिष्टद्रव्यप्रतिनिर्देशकत्वात्तच्छब्दस्य नैकवचनानुपपत्तिरित्यर्थः। उक्तविधया संसृष्टद्रव्यस्य देवतासम्बन्धे एको याग इत्युपसंहरति—**एवं चेदिति**।

तत्र भाष्यानुसारिणस्तावद्बहुयागपक्षे उपपत्तिमेवं वर्णयन्तीत्याह—**तत्रेति**। सर्वनाम सर्वत्र सन्निधौ निर्दिष्टस्यार्थस्य वाचकं नान्यस्य स्यादिति द्रव्याणि निर्दिष्टानि। न संसर्गः। तस्य पाश्चात्यत्वेन बुद्धिसन्निहितत्वाभावादित्यर्थः। अत्र संसर्गशब्दः संसर्गवत्सकलद्रव्यपरः। ननु तच्छब्देन सर्वद्रव्यपरामर्श इति वदतो बहुवचनाभावः कथमुपपद्यत इति शङ्कते—**बहुवचनेति**। 'न केवला प्रकृतिः प्रयोक्तव्या' इति न्यायेन विना प्रत्ययेन प्रातिपदिकस्य प्रयोगविरोधात् साधुत्वार्थमेकवचनमिति वचनमविवक्षितं पाशवदिति परिहरति—**प्रातिपदिकेति**। अविवक्षितमित्यत्र एकवचनमिति शेषः। वक्ष्यन्ति चाचार्याः द्वादशाद्ये टुप्टीकामीमांसावार्तिके 'विशिष्यवचनस्य लिङ्गस्य चाविवक्षितत्वम्। अत्रोच्यते—सर्वनामप्रातिपदिकस्य निर्दिष्टप्रतिनिर्देशकत्वे शक्तिः। वचनस्य त्वेकार्थप्रतिपादकत्वम्। तस्मादनयोर्विरोधः। तत्र प्रथमोपनिपातात्लिङ्गसङ्ख्ययोश्च तदर्थत्वात्, यथाश्रुतं

## तन्त्रशिखामणिः

दाज्यस्य धर्माः तथात्वे ह्युत्पवनावेक्षणादय। बहव आज्यधर्माः मधूदकयोः अनुगृह्यन्ते। न तु दोहनादयः पयोधर्माः। तस्मात् मधूदकयोराज्यधर्माः। प्रयोजनं तु पूर्वपक्षे मधूदकयोरपि दधिवत् सान्नाय्यविकारत्वे भूयोऽनुग्रह(न्या)याच्चित्रायागे दार्शिकविध्यन्तः। न तु घृतानुरोधात् पौर्णमासिकविध्यन्तः। सिद्धान्ते तु मधूदकयोराज्यविकारत्वेन भूयोऽनुग्रहन्यायादेव मुख्यमपि दध्यनादृत्य पौर्णमासिकधर्मा इति ध्येयम्। एकदेशिनां तु

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

पयसि मधूदकयोः द्रवसामान्यमनुभूयते। अतः पयोविकृतित्वमेव मधूदकयोरिति पूर्वपक्षमाह—**द्रवसामान्यादिति**।

## टुप्टीका

**भावः कथम्? प्रातिपदिकविरोधादविवक्षितं पाशवत्। अथवा—गुणत्वाद्यत्परामृशति तदीयं लिङ्गं सङ्ख्याञ्च भजते। तस्य चैकैकस्य परामर्शादेकवचनमविरुद्धम्। असत्यामपि वीप्सायां वीप्साकार्ये वर्तते। संसृष्टमित्येकप्रधानत्वादनूद्यते। प्राजापत्यमित्येकदेवताभिप्रायेणैकवचनम्।**

## वार्तिकाभरणम्

प्रातिपदिकं गृह्णीमः। उत्तरकालभावित्वाच्च लिङ्गसङ्ख्ययोरविवक्षैवे'ति। अस्यायायमर्थः—तच्छब्दः सर्वनामत्वान्निर्दिष्टप्रतिनिर्देशकः। एकवचनञ्चैकार्थप्रतिपादकम्। तथा च निर्दिष्टद्रव्याणां बहुत्वाद्वचनस्य चैकत्वात्प्रातिपदिकार्थसङ्ख्ययोर्विरोधे प्रातिपदिकार्थस्य प्रथमोपस्थितत्वेनासञ्जातविरोधित्वात् लिङ्गसङ्ख्याश्रयत्वेन प्राधान्याच्च प्रातिपदिकार्थो विवक्षितः। लिङ्गसङ्ख्ययोस्तु पश्चाद्भावित्वेन सञ्जातविरोधित्वात्प्रातिपदिकार्थानुसारित्वेनाप्राधान्याच्च लिङ्गसङ्ख्यमविवक्षितमिति मा भवतु वचनमविवक्षितम्, तथाऽपि न कापि हानिरित्युपपत्यन्तरमाह—अथवेति। सर्वत्र सर्वनामशब्दो निर्दिष्टप्रतिनिर्देकत्वेनानुवादकतया गुणभूतः। गुणत्वादेव सन्निहितमर्थं परामृशति तस्य लिङ्गं सख्यां च भजति। प्रकृते च तस्य दध्यादेरेकैकस्य प्रत्येकं परामर्शात्तदभिप्रायेणैकवचनमविरुद्धमित्यर्थः। धानातण्डुलशब्दयोः बहुवचनान्ततया विजातीयत्वेऽपि दध्यादीनां चतुर्णामेकवचनान्तत्वेन प्रायिकाभिप्रायः तदित्येकवचनप्रयोगः। एकवचनमविरुद्धमित्युपलक्षणम्। लिङ्गमपीति द्रष्टव्यम्। अथवा व्यक्तिरेव शब्दार्थ इति पक्षे तच्छब्देन सन्निहितदध्यादिवाचकैनैकवचनान्तेन द्रव्यसम्बन्धिनी प्रजापतिदेवता लक्ष्यते। देवतायाश्चैकत्वात् तदभिप्रायमेकवचनमविरुद्धम्। जातिरेव शब्दार्थ इति पक्षे तु तच्छब्देन सन्निहितत्वलक्षणगुणवाचिनैकवचनान्तेन दध्यादिद्रव्यं लक्ष्यते। लक्षितदध्यादिसम्बन्धिनी देवता लक्षितलक्षणया प्रतिपाद्यते। तस्याश्चैकत्वात्तदित्येकवचनमविरुद्धम्। लिङ्गन्तु नपुंसकानां बहुत्वेन प्रधान्यान्नपुंसकानपुंसकसमुदाये लक्षणया प्रवर्तत इति लिङ्गमप्यविरुद्धम्। वक्ष्यन्ति चाचार्याः द्वादशाद्ये टुप्टीकामीमांसावर्तिके—'अथवा एकदेवतत्वाल्लक्षितलक्षणया वोपपन्नमेकवचनं लिङ्गञ्च सर्वत्रैव लक्षणया लिङ्गसङ्ख्यं प्रवर्तते। प्रातिपादिकं जातिं ब्रूते। ननु प्रत्येकं सर्वद्रव्यपरामर्शे तत्तदिति वीप्सया भवितव्यम्। न च वीप्सा दृश्यत इत्यत आह—असत्यामिति असत्यामपि वीप्सायां वीप्सार्थकसर्वनामशब्दः। तथाहि—सर्वनामशब्दो हि निर्दिष्टप्रतिनिर्देशकः। निर्दिष्टानि च बहूनि द्रव्याणि। नावीप्सया सर्वद्रव्याणि परामृष्टुं शक्यन्ते। सर्वनाम्ना यदि वीप्सा नाभ्युपगम्येत तदा सर्वनामशब्दो निर्दिष्टप्रतिनिर्देशका न स्यादिति सर्वनामशब्दस्य निर्दिष्टप्रतिनिर्देशकत्वान्यथानुपपत्या सर्वनामशब्दो

## तन्त्रशिखामणिः

भूयोऽनुग्रहमनादृत्य मुख्यमेवानुग्राह्यमिति वदतां चित्रायागे पक्षद्वयेऽपि दार्शिकविध्यन्त एव। यत्र तु मधूदकयोः प्रत्येकमेव हविष्ट्वं मुख्यत्वं वा तत्र पूर्वपक्षे दार्शिकः। सिद्धान्ते पौर्णमासिको विध्यन्तः प्रयोजनमिति ध्येयम्।

इदमिह प्रसङ्गाच्चिन्त्यते दधिमधुघृतमुदकं धानास्तण्डुलाः तत्संसृष्टं प्राजापत्यमित्यत्र किमेको याग उत बहव इति। एतदर्थं च तत्संसृष्टमित्यत्र तत्पदं संसृष्टनिर्देशकं उत पूर्वनिर्दिष्टदध्यादिनिर्देशकमिति विशयः। तत्र यदि तत्पदेन दध्यादीनि परामृश्य देवतासम्बन्धस्तेषां क्रियेत तदा तानि प्राजापत्यानीति उभयत्र बहुवचनं स्यात्। अत एकवचनान्तेन तदिति सर्वनाम्ना संसृष्टं परामृश्यते तस्य देवतासम्बन्धः क्रियते इति एक एवात्र यागः। ननु सर्वनाम्नां पूर्वप्रकृतपरामर्शकत्वात् तत्पदेन दध्यादीनि परामृश्यन्ते। एकवचनं च अदितिः पाशानित्यत्र बहुवचनवत् प्रातिपदिकार्थविरोधात् अविवक्षितम्। अथवा दध्यादेरेकैकस्य वानेन परामर्शात् एकवचनं विरुध्यते।

## टुप्टीका

इदमपि दर्शनमशोभनम्। सन्निहितस्य प्रातिपदिकार्थस्य वाचकम्। अतो यत्र नपुंसकलिङ्गं विद्यते तदनेन परामृष्टव्यम्। किञ्च धानानां तण्डुलानां न नपुंसकपरामर्शनिर्देशः। अतो न तेन परामर्शः। अयञ्च न्यायोऽन्यत्राप्यभिहितः 'लिङ्गविशेषनिर्देशात्समानेष्वप्राप्ता सारस्वती स्त्रीत्वात् (जै. सू. ९.१.४५) इति।

## वार्तिकाभरणम्

वीप्सार्थको विज्ञायते। यथा—अध्रिगुप्रैषे मातृप्रभृतीनां वक्षः प्रभृतीनाञ्च शब्दानां पशुगणे विनैव वीप्सया एकवचनान्तानामेव बह्वर्थप्रतिपादकत्वं सम्बन्धिभेदेन भवति। एवमिहापि। एवञ्च सर्वनामशब्देन प्रत्येकं परामृष्टानां द्रव्याणां प्रत्येकमेव देवतासम्बन्धाद्बहवो यागाः भवन्तीत्यर्थः। ननु सर्वनामगतमेकवचनमुपपद्यतां नाम। तथापि प्रत्येकं सर्वद्रव्यपरामर्शे ससृष्टशब्दः कथमुपपद्यत इत्यत आह—**एवमिति**। एकप्रदानत्वात् संसृष्टमनूद्यत इति न काप्यनुपपत्तिरित्यर्थः। यत्तूक्तं बहुयागपक्षे प्राजापत्यानीति बहुवचनमभविष्यदिति, तत्राह—**प्राजापत्यमिति**। सर्वेषां द्रव्याणां प्रजापतिरेकैव देवतेत्येकदेवताभिप्रायेणैकवचनमुपपन्नमित्यर्थः। यद्यप्यत्र संसृष्टशब्दस्य प्राजापत्यशब्दस्य च तत्तद्विशेषणत्वादेकवचनमुपपन्नम् तथाप्युपपत्त्यन्तराभिप्रायेणोक्तमिति न दोषः। अत्र न्यायप्रदर्शनार्थमिदं सर्वमुक्तम्। वस्तुतस्तु—'नपुंदकमनपुंसकेनैकवच्चास्यामन्यतरस्यामि'ति सूत्रेण तच्छब्दस्य नपुंसकलिङ्गत्वमेकवचनान्तत्वञ्चोपपन्नमिति द्रष्टव्यम्।

भाष्यानुसारिमतावष्टम्भेन बहुयागपक्षं दूषयति—**इदमपीति**। यदि सन्निधिनिर्दिष्टप्रतिनिर्देशकं सर्वनाम, तथासति सन्निहितत्वात् तण्डुलानामेव तत्सर्वनामपदं परामर्शकं स्यात्। न सर्वद्रव्यपरामर्शकम्। न चैतदिष्टमित्यर्थः। **किञ्चेति**। तदिति सर्वनामपदं नपुंसकलिङ्गदध्यादिप्रातिपदिकार्थवाचकम्। न तु धानानां तण्डुलानाञ्च वाचकम्। तेषां नपुंसकलिङ्गत्वाभावेन विलिङ्गत्वादित्यर्थः। अत्र यद्यपि प्रत्येकपरामर्शेऽप्येकवचनं विरुद्धम्, धानातण्डुलशब्दयोर्बहुवचनान्तत्वात्, तथापि वचनस्याविवक्षितत्वान्न तल्लिङ्गवत् पुरस्कृतमिति द्रष्टव्यम्। अन्यत्र लिङ्गविशेषनिर्देशात् 'समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वादि'ति नवमप्रथमपादाधिकरणेऽग्नीषोमीयसवनीयानुबन्ध्यसाधारण्येन सर्वपशूनां सामानविध्यमभ्युपगम्यातिरात्रे चतुर्णां पशूनां समुच्चयेनानुष्ठानपक्षेऽध्रिगुप्रैषे "प्रास्मा अग्निं भरते" त्यत्रास्मैपदं पुल्लिङ्गं सारस्वतीं मेषीं न प्रतिनिर्देष्टुमीष्टे। मेषीशब्दस्य स्त्रीलिङ्गत्वेन विलिंगत्वात्। किन्तु आग्नेयैन्द्राग्नैन्द्राः तेषां पुल्लिङ्गत्वेन समानलिङ्गत्वादित्ययं न्यायः सूत्रभाष्यकाराभ्यामभिहितः। तथा च समानन्यायत्वादत्रापि नपुंसकलिङ्गेन तच्छब्देन धानानां तण्डुलानाञ्च विलिङ्गत्वात्परा-

## तन्त्रशिखामणिः

न च प्रत्येकं बहूनां परामर्शे तत्तदिति वीप्सापि स्यादिति वाच्यम्। तत्पदस्य वीप्सां विनैव प्रत्येकं पूर्वनिर्दिष्टसर्वपरत्वाविरोधात्। अत एव 'यद्यत् पापं प्रतिजहि जगन्नाथ तन्मे' इत्यत्र न तत्पदवीप्सा। ततश्च तत्पदेन प्रत्येकं परामृष्टानां प्रत्येकदेवतासम्बन्धवत् अत्र बहवो यागाः। संसृष्टपदं च एकदेवत्यानां संसृज्य सह प्रदानात् तदनुवादकमिति चेन्न; सर्वनाम्नां सन्निहितवचनत्वेऽपि न भिन्नलिङ्गकेषु प्रवृत्तिः। अत एव प्रास्मा अग्निं भरत इत्यत्र सन्निहितेष्वपि सर्वेषु क्रतुपशुषु पुंल्लिङ्गः अस्मै पदं मेष्यां न प्रवर्तत इति नवमे सूत्रभाष्ययोर्वक्ष्यते। ततश्च नपुंसकवचनेन तत्पदेन दधिमधुघृतोदकानामेव निर्देशः स्यात्। न धानातण्डुलयोः। न चेष्टापत्तिः। तयोर्देवतासम्बन्धाभावे तत्कीर्तनानर्थक्यापातात्। अतस्तत्पदेन संसृष्टमेव परामृश्य तस्य देवतासम्बन्धः क्रियते। संसृष्टस्य चैकत्वादेकवचनमपि एवं समञ्जसं भवति इत्येकद्रव्यक एकदेवताक एक एवात्र यागो विधीयत इति प्राप्तेऽभिधीयते—

## टुप्टीका

पुंलिङ्गे न मेष्या सम्बध्यते, स्त्रीत्वात्। एवमिहापि। संसृष्टशब्देन नपुंसकलिङ्गेनास्य सम्बन्धः। तस्य चैकत्वादेकदेवतासम्बन्धे एकवचनं न विरुध्यते। अत एको यागः। 'मधूदके द्रवसामान्यात्' इति। विरोधे धर्माणां भूयस्त्वेन धर्मनियमं वक्ष्यति ( पू. मी. १२.२.७. )। तेन सिद्धेनेदमधिकरणमारभ्यते किमाज्याद्धर्मप्राप्तिरुत सान्नाय्यादिति ॥ ४० ॥

इति श्री भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामष्टमाध्यायस्य प्रथमः पादः ॥

## वार्तिकाभरणम्

मर्शो न सम्भवतीत्याह—अयञ्चेति। 'प्रास्मा अग्निं भरत' इत्यत्रास्मैशब्देन मेष्याः परामर्शो नास्ति विलिङ्गत्वात्। पशुनयनस्य तु परामर्शः सम्भवति वचनस्याविवक्षितत्वादिति नवमे प्रपञ्चयिष्यत इति नेह प्रपञ्च्यते। बहुयागपक्षे दूषणमुक्त्वा एकयागपक्षे उपपत्तिमाह—अत इति। नपुंसकलिङ्गेन संस्सृष्टशब्देनास्य तदिति सर्वनाम्नो निर्दिष्टप्रतिनिर्देकत्वरूपस्सम्बन्धः। ननु 'दधिमधुघृतमापो धानास्तण्डुलाः' इत्येतैः शब्दैरेवञ्च सर्वद्रव्यस्य संसृष्टशब्देनैकवचनान्तेन निर्देशात्तत्प्रतिनिर्देशकतच्छब्दस्यैकवचनं युक्तमित्यर्थः। सर्वनामगतमेकवचनमविरुद्धमित्युक्त्वा प्राजापत्यमित्यत्राऽप्येकवचनमविरुद्धमित्याह—तस्येति। द्रव्याणां बहुत्वेऽपि तस्य संसृष्टद्रव्यस्यैकत्वात्। तस्य देवतासम्बन्धे प्राजापत्यमित्येकवचनमविरुद्धमित्यर्थः। तस्मादेको याग इत्युपसंहरति अत इति। द्वादशाद्ये भाष्यकारेण तत्र सूत्रेणापक्रमः 'तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदस्स्याद्विधिप्रक्रमतादर्थ्यात् तादर्थ्यं श्रुतिकालनिर्देशात्' ॥

## तन्त्रशिखामणिः

पूर्वनिर्दिष्टानि दध्यादीन्येव निर्दिश्यन्ते, सर्वनाम्नां निर्दिष्टप्रतिनिर्देशकत्वस्वाभाव्वात् न तु संसर्गः। तस्य पूर्वमनिर्देशात्। न च संसर्गोऽपि संसृष्टपदेनैव निर्दिश्यत इति वाच्यम्। तेन हि संसर्गमात्रं निर्दिष्टम् तच्च न देवतासम्बन्धार्हम्, तत्सम्बन्धार्हस्तु संसर्गविशेषः, स च संसर्गो विशेषाधीनः, न च विशिष्टावगमायैव संसर्गविशेषणतया दध्यादीनि निर्दिश्यन्ते न स्वार्थतया। ततश्च न दध्यादिनिर्देशकं तत्पदमिति वाच्यम्। तथासति दध्यादीनि षष्ठ्यन्तपदेन निर्दिश्येरन्। प्रथमान्तेन च निर्दिश्यन्त इति स्वार्थान्येव दध्यादीनीति तत्पदं तेषां निर्देशकम्। न चैवमेकवचनस्याविवक्षया उपपत्तावपि लिङ्गमनुपपन्नमित्युक्तमिति वाच्यम्। 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इति स्मरणान्नपुंसकानपुंसकाभिप्रायेण तदुपपत्तेः। अतस्तत्पदेन दध्यादीनि प्रत्येकं परामृश्य देवतासम्बन्धः क्रियत इति सप्तदश प्राजापत्यानित्यत्रेव बहवो यागा इति दिक्। तत्ससृष्टमित्येकं पदम्, तथाच तेषां दध्यदीनां संसर्ग एकः एकदेवतासम्बन्धितया विधीयत इत्येक एव याग इत्यप्याहुः ॥

इति श्री राजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणावष्टमाध्यायस्य प्रथमः पादः ॥

## वार्तिकाभरणम्

तन्त्रं साधारणो धर्मग्रामः। यथा दर्शपूर्णमासयोराज्यभागान्तः पूर्वः स्विष्टकृदादिरिडान्त उत्तरः स येषां प्रधानानां तानि तन्त्रीणि प्रधानानि। तेषान्तु समवाय एकदेशकालकर्तृत्वे चोदनातः समानानामेक वाक्यचोदितानामेकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टाविति। चित्रायां यागबहुत्व- मङ्गीकृतम्। तत्राचार्यैर्यागबहुत्वं न सम्भवतीत्याक्षिप्य यागबहुत्वं समर्थितम्, अस्मिन्नधिकरणे तु बहुयागपक्षं दूषयित्वैकयागपक्ष एव समर्थितः। तथा च पूर्वोत्तरविरोध इति चेन्न। बहुयागपक्षदूषणपुरस्सरमेकयागवर्णनस्य मतान्तरोपन्यासत्वेनाप्युपपत्तेः। नन्वाचार्यैः विलिङ्गेन सर्वनाम्ना लिङ्गस्य परामर्शाङ्गीकारात्प्रास्मा अग्नि भरते त्यत्रापि विलिङ्गेन विलिङ्गस्य परामर्शस्स्यादिति नावामिकाधिकरणसिद्धान्तो व्याहन्येतेति चेत् स्यादेत- देवम्, यदि 'दधिमधुघृतमापोधानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमि'तिवत् 'प्रास्मा अग्नि भरते' त्यत्रापि शब्दनि- र्दिष्टानां सर्वनाम्नां परामर्शस्स्यात्। न त्वेवम्, किन्तु अस्मैशब्दस्य सर्वनाम्नो निर्दिष्टप्रतिनिर्देशकत्वसामर्थ्येन प्रकरणाद्यालोचनया आग्नेयैन्द्राग्न्यैन्द्राणां त्रयाणां पशूनां सारस्वत्या मेष्याश्च सन्निहितत्वेन सर्वनाम्नः पशुचतुष्ट यप्रतिनिर्देशकत्वप्रसक्तौ समानलिङ्गपशुत्रयप्रतिनिर्देशेनाऽपि सर्वनाम्नो निर्दिष्टप्रतिनिर्देशकत्वलाभाद्विलिङ्गाया मेष्या अपि सर्वनाम्ना प्रतिनिर्देशे प्रमाणाभावात्। तत्र युक्तो विलिङ्गेन विलिङ्गायाः परामर्शाभावः। इह तु दध्यादीनां सर्वेषामपि शब्दनिर्दिष्टत्वेन तेषु कस्यचित् प्रतिनिर्देशाभावे तदाम्नानमनर्थकं स्यादिति युक्तस्तत्र विलिङ्गेनापि विलिङ्गस्य परामर्श इत्यस्ति वैषम्यमिति न तदधिकरणसिद्धान्तव्याघातः। प्रासङ्गिकं विचारं समाप्य प्रकृताधिकरणस्योपपत्तिं वक्तुं पूर्वोक्तं प्रकृताधिकरणसूत्रं प्रतीकतोऽनुवदति—**मधूदके द्रवसामान्यादिति।** ननु मधूदकयोर्वर्गसामान्याद्युत्पवनादि धर्मानुग्रहाच्चाज्यविध्यन्ते सिद्धे पयोधर्म इति पूर्वपक्षस्योत्थितिरेव नास्ती- त्याशङ्कायां द्वादशाध्यायाधिकरणन्यायेन पूर्वपक्षस्योत्थितिरस्तीत्याह—**विरोध इति।** 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वमि'ति द्वादशद्वितीयपादाधिकरणे भाष्यकारेण पञ्चदशरात्रमुदाहृत्य तत्र भूयोऽनुग्रहन्यायो व्युत्पादितः। आचार्यैः तदुदाहरणमाक्षिप्य 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्'। 'इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः' 'दधिमधुघृतमापोधानास्तत्संसृष्टं प्राजापत्यमि'ति विहिता इष्टीरुदाहृत्याग्नेययागस्य धानाद्रव्यकप्राजापत्ययागस्य चौषधद्रव्यकत्वात्, एकदेवताकत्वाच्च तयोराग्नेयविध्यन्तः प्रवर्तते। आग्नेयस्य च दर्शपूर्णमाससाधारणत्वात् तत्प्रकृतिकं यागद्वयं वर्जयित्वा इतरेषु पञ्चसु यागेषु दधि- द्रव्यकस्य प्राजापत्ययागस्य ऐन्द्रपुरोडाशस्य च उभयोर्मुख्यत्वेनासञ्जातविरोधित्वात् पञ्चस्वपि द्रव्येषु सान्नाय्य- धर्माः कर्तव्या इति पूर्वपक्षं कृत्वा मधूदकयोरुपांशुयाजधर्मकत्वस्याष्टमसिद्धत्वात् घृतस्य स्वयमेवोपांशुयाज- धर्मत्वात्त्रयाणां धर्मा एव पञ्चसु द्रव्येषु कर्त्तव्याः। एवञ्च भूयसामनुग्रहो भवतीति भूयोऽनुग्रहन्यायेन पञ्चानामपि यागानामाज्यधर्मकत्वं सिद्धान्तितम्। चित्रेष्टावपि मधूदकयोरनाम्नातधर्मकत्वात्तयोः सान्नाय्य- धर्मा एव कर्त्तव्याः। एवञ्च दध्नोऽपि सान्नाय्यधर्मकत्वेन भूयसामनुग्रहो भवति। आज्यविध्यन्ताश्रयणे तु घृतस्यैकस्यैव भवति, न तु मधूदकयोः। तयोः स्वतो [द्रव] द्रव्यत्वेन आज्यसादृश्याभावात्। तस्माद्भूयो नुग्रहन्यायस्य सर्वापेक्षया प्रबलत्वात्तन्न्यायेन मधूदकयोः सान्नाय्यविध्यन्तः प्रवर्तते। अयं पूर्वपक्षो द्वदशाध्याया- धिकरणसिद्धभूयाऽनुग्रहन्यायमुपजीव्य प्रवर्तत इति पूर्वपक्षस्योत्थितिस्सम्भवतीत्यर्थः। पूर्वपक्षोत्थितिमुपपाद्या- धिकरणाङ्गसंशयमाह—**किमाज्याविति।** आज्यस्य स्वतो द्रवत्वाभावेऽप्यग्निसंयोगाद् द्रवत्वसम्भवेन मधूदक- योरप्याज्यसदृशत्वादाज्यधर्माः कर्त्तव्याः। एवञ्च मधूदकयोः घृतस्य च आज्यधर्मकत्वात् सिद्धान्ते स्पष्ट एव भूयोऽनुग्रहन्यायः। अधिकं वर्णसाम्यादिकमित्यभिप्रायेण सिद्धान्तो न प्रदर्शित इति द्रष्टव्यम्॥

इत्यष्टमस्य प्रथमः पादः॥

भाष्यम्

## आज्यं वा वर्णसामान्यात् ॥८.१.४१॥

आज्यं वा इमे विकुर्याताम् । उपांशुयाजस्य तयोर्विध्यन्तस्स्यात् । कुतः ? वर्णसामान्यात् । समानवर्णे मधूदके आज्येन ॥ ४१ ॥

## धर्मानुग्रहाच्च ॥८.१.४२॥

आज्यधर्माश्च बहवो मधूदकयोश्शक्याः कर्तुमुत्पवनादयः । न तु पयोधर्मा दोहनादयः ॥ ४२ ॥

## पूर्वस्याविशिष्टत्वात् ॥८.१.४३॥

यत्तु पूर्वं कारणमुक्तं द्रवत्वसामान्यं तदविशिष्टम् । आज्यमप्यग्निसंयोगाद्द्रवीभवति । तस्मादुपांशुयाजविध्यन्तो मधूदकयोरिति ॥ ४३ ॥

इति मधूदकाधिकरणम् ॥ १९ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमाध्यायस्य प्रथमः पादः ॥

भाष्यसन्दर्भयोजिनी

सिद्धान्तः

आज्यमिति । उपांशुयाजाज्यमित्यर्थः । इमे मधूदके । उपांशुयाजविध्यन्तत्वे हेतुः—वर्णसामान्यात आज्यस्य मधूदकयोश्च वर्णसामान्यमस्तीति आज्यधर्मा एवात्र भवेयुः ॥ ४१ ॥

आज्यविध्यन्तेष्वनेके मधूदकयोश्शक्यन्ते कर्तुमित्याज्यविकृतित्वं मधूदकयोरित्याह—आज्यधर्माश्चेति ॥ ४२ ॥

द्रवत्वसामान्येन सान्नाय्यविकृतित्वं यदुक्तं कारणम् तन्निराकरोति—यत्तु पूर्वमिति । द्रवत्वमाज्येऽप्यविशिष्टम् । सांसिद्धिकद्रवत्वे मधूदकयोस्सत्त्वेऽप्याज्ये नैमित्तिकद्रवत्वमस्त्येवेत्याह—आज्यमपीति । उपसंहरति-तस्मादिति ॥ ४३ ॥

इति मधूदकाधिकरणम् ॥

अष्टमस्य प्रथमः पादः ॥

# अष्टमाध्यायस्य द्वितीयः पादः

## १

## वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ ८.२.१ ॥

### विषयः

**चातुर्मास्येषु वाजिनेज्या श्रुता-'वाजिभ्यो वाजिनम्' इति। सौत्रामण्याञ्च सुराग्रहाः-'आश्विनं ग्रहं गृह्णाति, सारस्वतमैन्द्रमि'ति।**

### वार्तिकाभरणम्

द्वितीयः पादः

अत्राचार्यैः द्वितीयपादे पञ्चाधिकरणानि त्यक्तानि तानि वयं वर्णयामः।

**वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥**

चातुर्मास्येषु वैश्वदेवे पर्वणि वाजिनयागः श्रूयते—'वाजिभ्यो वाजिनमिति'। तथा सौत्रामण्यां सुराग्रहाः श्रूयन्ते 'अश्विनं गृह्णाति 'सारस्वतं गृह्णाति' ऐन्द्राग्नमिति। तत्र संशयः—किं वाजिनयागे सुराग्रहेषु च सौमिको विध्यन्तः? उत दार्शपौर्णमासिकः? इति। तत्र वाजिनयागे सौत्रमण्याञ्च सोमशब्दः श्रूयते—

### तन्त्रशिखामणिः

अथ द्वितीयः पादः

सू० वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥

पूर्वस्मिन् पादे प्राधान्येन चोदनावाक्यगतसामान्यनिमित्तकोऽतिदेशश्चिन्तितः। इह तु प्राधान्येन चोदनार्थहविस्सामान्यनिमित्तकोऽतिदेशश्चिन्त्यत इति आनन्तर्यम् पादान्तरत्वञ्चेति द्रष्टव्यम्। चातुर्मास्येषु श्रूयते—'वाजिभ्यो वाजिनम्' इति सौत्रामण्याञ्च 'आश्विनं गृह्णाति सारस्वतमैन्द्रम्' इति सुराग्रहाः श्रुताः।

### भाष्यसन्दर्भयोजिनी

## १

### विषयः

पूर्वस्मिन् पादे स्पष्टलिङ्गातिदेशो निरूपितः। तत्र सौर्ये आग्नेयस्य तद्धितैकदेवताकत्वनिर्वापादिलिङ्गात्, अनेकदैवतेष्वग्नीषोमीयैन्द्राग्नयोः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यादिष्वग्नीषोमीयपशौ च सांनाय्यस्य, पश्वन्तरेषु दैक्षस्य, एकादशिनेषु सवनीयस्य, पशुगणेष्वैकादशिनस्य, अव्यक्तेषु सोमस्य, अहर्गणेषु सत्रेष्वहीनेषु च द्वादशाहस्य, संवत्सरादिषु सत्रेषु गावामयनिकस्य, निकायिषूत्तरेषु पूर्वस्य द्रव्यघटितसादृश्यबलीयस्त्वमवलम्ब्य ऐन्द्रे पुरोडाशे आग्नेये पयसि चौषधसांन्नाय्ययोः, कृष्णलेष्वौषधस्य, मधूदकयोराज्यस्य विध्यन्तः प्रवर्तत इत्युक्तम्। द्वितीयपादेऽस्पष्टलिङ्गातिदेशनिरूपणाय विषयवाक्यं दर्शयति—**चातुर्मास्येष्विति। वाजिनेज्या** वाजिनद्रव्यकयागः। एवं सौत्रामण्यां सुराग्रहाश्चास्याधिकरणस्योदाहरणम्।

## भाष्यम्

### संशयः

**तत्र संशयः-किमुभयोस्सौमिको विध्यन्तः ? उत दार्शपौर्णमासिकः ? इति ।**

## वार्तिकाभरणम्

'सोमो वै वाजिनं सुरा सोमः' इति । तथा चासोमे वाजिने असोमे सुरायाञ्च पुनरुच्चार्यमाणः सोमशब्दो नाम्ना सोमधर्मातिदेशको भवति । यथा कुण्डपयिनामयने 'मासमग्निहोत्रं जुहोती' त्यत्र पुनरुच्चार्यमाणोऽग्निहोत्रशब्दो नैयमिकाग्निहोत्रधर्मातिदेशको भवति । तद्वदिहापि । तस्माद् वाजिनयागे सौत्रामणिसुराग्रहेषु च सौमिको विध्यन्तः । एवञ्चोभयत्र वाजिनस्याग्ने वीहीत्यनु वषट्करोति, सुराया अग्ने वीहीत्यनु वषट् करोती' ति अनुवषट्कारद्वयम्, तथा वाजिने शेषं समधा विभज्य समुपहूय भक्षयतीति समुपहूयभक्षणम्, तथा सौत्रामण्यां 'सीसेन क्लीबाच्छष्पाणि क्रीणाती'ति क्रयणम् 'वत्रलसक्तुभिराश्विनं श्रीणाती'ति श्रयणम्, 'उपयाम गृहीतोऽस्यश्विभ्यां त्वाच्छिद्रेणाश्विभ्यां गृह्णातीति गृहीत्वा सादयती'ति एका पुरोरुगेका याज्येति दर्शनम्, तथा 'त्रिरात्रं सहिता उपवसन्ती'ति सुराद्रव्येण सहत्रिरात्रवासः, तथा 'क्षौमेण वाससोपनद्धानि तोक्मानि शष्पाणि भवन्ती'ति तोक्मानां शष्पाणाञ्च वाससा वेष्टनञ्चोपपन्नानि भवन्ति । अन्यथा अनेकगुणविशिष्टकर्मविधानेन गौरवं स्यात् । तस्मात् सौमिको विध्यन्त इति पूर्वपक्षः ।

## तन्त्रशिखामणिः

तत्र किं वाजिनसुराग्रहयोस्सौमिकविध्यन्तः ? किं वा ऐष्टिकविध्यन्त इति संशये 'सोमो वै वाजिनम्, सुरा वै सोम' इति वाजिनसुरयोः सोमशब्दः प्रवर्तते । परशब्दश्च परत्र सादृश्यात्प्रवर्तते । सोमसादृश्यं तयोर्नान्यत्र सिद्धमस्तीति अग्निहोत्रशब्दवद्धर्मातिदेशक एव सोमशब्दः । 'किञ्च वाजिनस्य 'आग्नेवीहीत्यनुवषट्करोति' सुराया 'अग्ने वोहीति अनुवषट्करोति' इति सोमधर्मस्यानुवषट्कारस्य वाजिनसुरयोर्दर्शनात् । 'शेषं समधा विभज्य समुपहूय भक्षयन्ति' इति सोमधर्मस्य समुपहूय भक्षणस्य वाजिने 'सीसेन क्लीबाच्छष्पाणि क्रीणाति' इत्यादिना सोमधर्मस्य क्रयणादेस्सुरायाञ्च दर्शनात्तयोस्सोमविकारतेति प्राप्तेऽभिधीयते—

विधिवाक्य एव परशब्दः परत्र प्रयुज्यमानोऽनन्यप्रयोजनतया धर्मलक्षणार्थो भवति अग्निहोत्रशब्दवत् । प्रकृते तु 'उपशयो यूपो भवति' इतिवदर्थवादगततया प्रशंसार्थ एव नातिदेशकः । न चैवमुपशयन्यायेन पौनरुक्त्यमिति वाच्यम्, लिङ्गदर्शनबलादर्थवादगतस्याप्यतिदेशकत्वमित्यधिकाशङ्काया एतदधिकरणप्रवृत्तेरपौनरुक्त्यात् । सोमविध्यन्तप्रापकाणि च वाक्यानि विधायकान्येव, अन्यथा 'सीसेन क्लीबात्क्रीणाति' इत्यादौ प्राप्तक्रयणानुवादेन सीसक्लीबात्मकगुणद्वयविधौ वाक्यभेदापत्तेः । तथा सौत्रामण्याञ्च 'नैतेषां

## भाष्यसन्दर्भयोजिनी

### संशयः

**तत्रेति।** वाजिनं पयोविकृतिः । तप्ते पयसि दधन्यानीते तत्पयो द्वेधा परिणमते-घनीभूतं द्रवीभूतञ्चेति । तत्र घनीभूतमामिक्षेति द्रवीभूतञ्च वाजिनमिति कथ्यते । सुरा च व्रीहिभ्यः प्रभवा । उभयोरनयोः 'सोमो वै वाजिनम्' इति 'सुरा सोमः' इति च वाक्यशेषेण सोमत्वेन सङ्कीर्तनमुपलभ्यते । अतस्संशयः किं सौमिको विध्यन्त उभयोः ? उत ऐष्टिक इति । तमिमं दर्शयति—**किमिति ।**

## भाष्यम्

### पूर्वपक्षः

तदुच्यते-वाजिने सौत्रामण्याञ्च ग्रहेषु सोमपूर्वत्वम्। सौमिको विध्यन्तः। कुतः ? ताच्छब्द्यात् सोमशब्दत्वात्। सोमशब्दस्त्वत्र श्रूयते 'सोमो वै वाजिनम् सुरा सोमः' इति। न

## वार्तिकाभरणम्

अत्र भाष्यकारेण विधौ सत्यनेकानि वाक्यानि स्युः। क्रयादींश्च सीसादोंश्च विदधतीति सिद्धान्तिनं प्रत्यनेकवाक्येषु वाक्यभेद (आपा) दितः क्रयादीनां सीसादीनाञ्च विधानेनेति। तदनुपपन्नम्। सोसविशिष्टक्लीब विशिष्टक्रयविधानेन वाक्यभेदाभावात्। प्रत्युत पूर्वपक्षे वाक्यभेदः। प्रासक्रयाद्यनुवादेन सीसादीनां क्लीबादीनां विधानेऽनेकगुणविधानप्रसङ्गात्। तस्मात्तद्भाष्यमनास्थामूलकमिति द्रष्टव्यम्। अत्रोच्यते—दार्शपौर्णमासिक-हविश्चौषधपयोदध्यादि। तत्रौषधविकाराः स्युः सुराग्रहाः पयोविकारो वाजिनम्। अतो हविस्सामान्येनौषध-विध्यन्तः सुरायाम्, सान्नाय्यविध्यन्तो वाजिने। सोमशब्दश्चानुवादगतत्वात्प्रशंसार्थः यथा प्रकृष्टफलः सोमः तथा प्रकृष्टफले सुरावाजिने इति। न तु नाम्ना धर्मातिदेशकः।

यदुक्तं लिङ्गदर्शनवाक्यानि बहूनि श्रूयन्त इति, तन्न; न्यायेन वा वचनेन वा सत्यां धर्मप्राप्तौ तदनुवादकत्वेन लिङ्गदर्शनार्थानीति युक्तं कल्पयितुम्। नहि वचनं वा न्यायो वास्ति, प्राप्तेरभावात्। श्रृङ्गग्राहिकत-यापूर्वार्थविधायकानि। न चैवं सति 'शेषं समधा विभज्य समुपहूय भक्षयन्ति सीसेन क्लीबाच्छष्पाणि क्रोणाति क्षौमेण वाससोपनद्धानि तोक्मानि शष्पाणि भवन्ती' त्यादौ विशिष्टविधानं स्यादिति वाच्यम्, अगत्या विशिष्ट-

## तन्त्रशिखामणिः

पशूनां पुरोडाशा भवन्ति ग्रहपुरोडाशा ह्येते' इति ग्रहाणां पुरोडाशता श्रूयमाणा पुरोडाशधर्मतां तेषां दर्शयति। ननु दशमे ग्रहेषु पुरोडाशशब्दः तत्कार्यलक्षणार्थ इति वक्ष्यते। तत्कथमिह पुरोडाशशब्दस्तद्धर्मलक्षणार्थ इत्युच्यत इति चेत्-पुरोडाशेषु पुरोडाशशब्दस्तत्कार्यापत्त्यापि भवति, तथा तद्धर्मवत्तयापीति क्वचित्कश्चित्प्रकार इति सर्वथाप्यैष्टिकविध्यन्तः। अर्थवादगतश्च सोमशब्दो वाचनिककतिपयधर्मनिबन्धनः, उपशये युपशब्दवत्। तस्माद्वाजिनस्य पशुसम्बन्धित्वसामान्यात्पयोविकारत्वम्, सुरायाञ्च व्रीहिसाध्यत्वादैष्टिकौषधविकारत्वम्। नन्विह वाजिनोदाहरणमयुक्तम्, वाजिनयागस्यानुनिष्पन्नवाजिनसाध्यतया धर्मानाकाङ्क्षितत्वेन धर्मप्रयोजक-त्वाभावादिति चेत्—अनुनिष्पन्नद्रव्यसाध्यतया प्रतिपत्तित्वेन च स्विष्टकृद्वत् वाजिनयागस्य द्रव्याप्रयोजकत्वेऽपि

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

सोमपूर्वत्वमिति। सोमविकारत्वमित्यर्थः। उभयोस्सोमत्वेन सङ्कीर्तनात्सौमिको विध्यन्तः प्रवर्तत इति भावः। ननु वाक्यशेषे सोमवाजिनयोः सुरासोमयोश्च सामानाधिकरण्यं कथं घटते ? परशब्दः परत्र वर्तत इति न्यायस्तु सादृश्यमूलकः। यथा—'यजमानो यूपः आदित्यो यूपः' इति। सोमशब्दो लतावाची,

## भाष्यम्

**तावद्वाजिनं सोमो न सुरा। न च तयोस्सोमेन सादृश्यमस्ति। सादृश्याच्च परशब्दः परत्र प्रवर्तते। तस्मात्सादृश्यमत्र विधीयते। सादृश्यञ्चात्र सोमधर्मकत्वं शक्यं विधातुम्, नान्यत्। स एष नाम्ना धर्मातिदेशो न विध्यन्तेन। यथा-कौण्डपायिनामग्निहोत्रे ॥ १ ॥**

## वार्तिकाभरणम्

विधानस्याप्यङ्गीकार्यत्वा[१]त्। सौमिकविध्यन्ताश्रयणे शष्पेणैव दीक्षणीयामाप्नोति तोक्मैः प्रायणीयामिति दीक्षणीयादिफलप्राप्तिवचनमनुपपन्नं स्यात्। सौमिकविध्यन्तेन दीक्षणीयादिप्राप्तौ तत्फलस्य स्वतः सिद्धत्वात्। पशुपुरोडाशता च ग्रहाणां श्रूयते नैतेषां पशूनां पुरोडाशा भवन्ति। 'ग्रहपुरोडाशा ह्येते पशव' इनि न तावद् ग्रहाः पुरोडाशाः, ग्रहा एवैते। यदि पुरोडाशधर्माकाङ्क्षा तत एतदुपपद्यते। तस्मात्पौरोडाशिकस्तेषु विध्यन्तः वाजिनस्यानुनिष्पन्नत्वेन वाजिनयागस्य धर्माकाङ्क्षाभावादाकाङ्क्षामूलकातिदेशो नास्ति। असत्यतिदेशे वाजिनयागे जुह्वादीनामुपकारकमुखेन प्राप्तिः। पशुपुरोडाशवत्प्रधानभूतामिक्षार्थैरेवाङ्गैः प्रसङ्गादुपकारसिद्धिश्च न स्याताम्। उपकारस्यातिदेशाविनाभूतत्वादिति चेत्सत्यम्, अनुनिष्पन्नप्रतिपत्यर्थं वाजिनद्रव्यको वाजिनयागः। तथाप्यनुनिष्पन्नद्रव्यनाशे वाजिनयागविधेर्द्रव्यप्रयोजकत्वाभावेनाकाङ्क्षाभावादतिदेशाभावेऽपि द्रव्यनाशाभावे वाजिनयागस्य धर्माकाङ्क्षासद्भावेनातिदेशः सम्भवति ॥

## तन्त्रशिखामणिः

सति द्रव्ये धर्माकाङ्क्षाया अविरोधेन प्रधानार्थैरेवाङ्गैः पशुपुरोडाशवत् प्रसङ्गादुपकारसिद्धावपि जुह्वाद्यतिदेशकत्वसम्भवात्। तस्मात्पूर्वपक्षे ग्रहेण वाजिनयागः, सिद्धान्ते जुह्वा, तस्यां व्यापृतायामेतद्धर्माणां पात्रान्तरेणेति प्रयोजनम्।

ये पुनरेकदेशिनः—लिङ्गबलाद्वाङ्गेष्वाकाङ्क्षोत्थापनादतिदेशमाहुः, तन्मते चातुर्मास्याङ्गभूते वाजिनयागे सौत्रामणीपश्वङ्गभूतेषु ग्रहेषु चैष्टिकविध्यन्तप्राप्तिर्न स्यात्, तत्प्राप्तिद्योतकलिङ्गाभावात्, प्रत्युत सौमिकविध्यन्तातिदेशकानुवषट्कारादिलिङ्गबलेन तल्लिङ्गोपपादकसौमिकविध्यन्ताकाङ्क्षाया एव कल्प्यत्वेन सौमिकविध्यन्तप्राप्तिरेव स्यादिति दिक्।

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

सुरावाजिनशब्दौ च विलक्षणद्रव्यवाचिनौ इत्यत आह—**तत्सादृश्यमत्रेति**। ननु सादृश्यविधानमात्रेण नहीमौ सादृशौ भवितुमर्हत इत्यत आह—**सोमधर्मकत्वं शक्यमिति**। येन विध्यन्तेन सोमोऽनुष्ठीयते तेन विध्यन्तेन सुरावाजिनयागावनुष्ठेयाविति पर्यवस्यतीति भावः। तथा च सुरावाजिनयोः सोमसामानाधिकरण्येन सोम इति तयोर्नामेति ज्ञाते मासाग्निहोत्रमिव धर्मातिदेशस्सिध्यतीति पूर्वपक्षिण आशयः ॥ १ ॥

---

१. कर्तव्यत्वात् reads T. MSS

भाष्यम्

## अनुवषट्काराच्च ॥ ८.२.२ ॥

अनुवषट्कारश्च सोमधर्मं दर्शयति-'वाजिनस्याग्ने वीहीत्यनुवषट्करोति सुराया वीहीत्यनुवषट् करोति' इति ॥ २ ॥

## समुपहूय भक्षणाच्च ॥ ८.२.३ ॥

समुपहूय भक्षणञ्च सोमधर्मः तत्र दृश्यते। 'शेषं समं विभज्य समुपहूय भक्षयन्ती'ति ॥ ३ ॥

## क्रयण-श्रयण-पुरोरुगुपयामग्रहणासादनवासोपनहनञ्च तद्वत् ॥ ८.२.४ ॥

क्रयणादींश्च सोमधर्मान् सुरायां दर्शयति-'सोसेन क्लीबात्क्रय्या' ( तै० ब्रा० १.८ ५.३.) 'कुवलसक्तुभिराश्विनं श्रीणाति' ( मै० सं० २.३.९.) इति। 'एका पुरोरुक् एका याज्या' (मै० सं० २.३.९.)। उपयामगृहीतोऽस्यच्छिद्राय त्वाऽच्छिद्रेणाश्विनं ग्रहं गृह्णाति'। ( मै० सं० २.३.८. )। गृहीत्वासादयति। 'त्रिरात्रं संहता वसन्ति'। 'क्षौमे वासस्युपनद्धानि तोक्मानि

भाष्यसन्दर्भयोजिनी

ननु सोमशब्दस्य लतावाचित्वेन सोमवाजिनयोः सुरासोमयोः सादृश्यं विधाय सादृश्यसिद्धये सोमधर्मकत्वञ्च विधाय ततो नामातिदेशकल्पनमित्यतिक्लिष्टकल्पनमित्यत आह—अनुवषट्कारश्चेति। सोमयागे तत्तद्याज्याया वषट्कारान्ते तस्यै तस्यै देवतायै होमे कृतेऽनन्तरमनुवषट्कारहोमोऽपि क्रियते। तथैव वाजिनयागे सुराहोमे चानुवषट्कारहोमदर्शनात्सौमिकविध्यन्तातिदेश इति ॥ २ ॥

प्रमाणान्तरमुपस्थापयति—समुपहूयेति। समुपहूय भक्षणं सोमधर्मः। स चात्र वाजिने दृश्यते। अतस्सौमिकविध्यन्तः ॥ ३ ॥

सौमिकधर्मान् सुरायां दर्शयति—क्रयणादींश्चेति। क्रयणं द्रव्यविनिमयेन सोमलताप्राप्तिः। श्रयणं-मिश्रणम्। पुरोरुक्-पुरोनुवाक्या। उपयामग्रहणम्-उपयामगृहीतोऽसीत्यनेन मन्त्रेण सोमरसग्रहणम्। सादनं-आसादनम्। वासोपनहनं-वाससा बन्धनम्। इमे धर्मास्सोमे सन्ति। ते च सुराग्रहेष्वपि वर्तन्ते। सुराग्रहाश्च सौत्रामण्यां विहिताः। तत्र सीसेन क्लीबेन च सुरासोमक्रयणम्। अयसोऽधिकं हिरण्याच्च न्यूनं सीसं धातुः। न स्त्री न च पुमान् क्लीबः पशुः। माध्यन्दिनशाखायां सीसेनैव क्रयणं न क्लीबेन विहितम्। सक्तवस्त्रयो भवन्ति-क्वलैः बदरैः कर्कन्धुभिश्च सम्पाद्यमानाः। क्वलः बालखर्जूरफलम्, बदरं सूक्ष्मं बदरीफलम्, कर्कन्धुः स्थूलं बदरीफलम् ( तै. सं. १. ८. २१ ) सायणभाष्यानुसारेण। एतानि फलानि पिष्ट्वा सक्तवो निष्पाद्यन्ते, तेषां मिश्रणं भवति। 'क्वलसक्तुभिः' इति स्थाने 'कुवलसक्तुभिः' इत्यपि शाखान्तरे पाठः। त्रिरात्रमिति। तिस्रो रात्रीः संहताः संसृष्टा वसन्तीत्यर्थः। तोक्मानि विरूढा यवा उच्यन्ते। शष्पाणि विरूढा व्रीहय उच्यन्ते। सोमस्य

भाष्यम्

शष्पाणि भवन्ति' इति । विधौ सत्यनेकार्थानि वाक्यानि स्युः । क्रयादीन् सीसकादींश्च विदधति । तस्मादुभयोस्सौमिको विध्यन्तः ॥ ४ ॥

सिद्धान्तः

## हविषा वा नियम्येत तद्विकारत्वात् ॥ ८.२.५ ॥

हविस्सामान्येन वात्र दार्शपौर्णमासिको विध्यन्तो नियम्येत । कुतः ? तद्विकारत्वात् । दार्शपौर्णमासिकस्य हविषो विकारः सुरावाजिने । औषधविकृतिस्सुरा, साान्नाय्यविकृतं वाजिनम् ॥ ५ ॥

## प्रशंसा सोमशब्दः ॥ ८.२.६ ॥

अथ यदुक्तं ताच्छब्द्यादिति, तत्र ब्रूमः-प्रशंसार्थोऽयं सोमशब्दो न विध्यर्थः, विधायकस्याभावात् । 'सोमो वै वाजिनम्' 'सुरा सोमः' इति । प्रकृष्टफलवत्वात्सोमस्य तद्भावेन सुरावाजिनयोः प्रशंसा । यथा-सिंहो देवदत्त इति पुरुषस्य । तस्मान्नायं नाम्ना धर्मातिदेशः ॥ ६ ॥

## वचनानीतराणि ॥ ८.२.७ ॥

इतराणि तु सीसक्रयणादीनि वाचनिकानि, प्राप्तेरभावात् । अगत्या च वाक्यानामनेकार्थता सगुणकर्मविधानेन ॥ ७ ॥

भाष्यसन्दर्भयोजिनी

सुरायाश्च क्रयणश्रयणादिसादृश्यलाभेन उभयोः सुरासोमयोः सौमिकविध्यन्त इत्युपसंहरति—तस्मादिति ॥ ४ ॥

सिद्धान्तमाह—हविस्सामान्येनेति । सोमस्य सुरायाश्च हविष ओषधिप्रभवत्वेन दार्शपौर्णमासिकौषधद्रव्यकयागेनाधिकसादृश्यलाभात् तद्विकृतित्वमेव वाजिनसुरयोरित्यर्थः । तदिदमाह—हविषो विकार इति ॥ ५ ॥

'सोमो वै वाजिनम् सुरा सोम' इति सोमशब्दसामानाधिकरण्यबलेन सौमिकविध्यन्ततिदेशो यस्साधितः, तत्र प्रतिवक्ति—तत्रेति । सोमः प्रकृष्टफलकः । अतः तद्भावेन सोमात्मनानुसन्धानेन प्रशंसा क्रियत इति शेषः ॥ ६ ॥

सीसक्रयणसक्तुश्रयणादिभिर्यत्सोमसाम्यं प्रतिपादितं तत्राह—इतराणि त्विति । वाचनिकानि विशेषविधायकानीत्यर्थः । इमानि वाक्यान्यप्राप्तार्थविधायकानि इति भावः ॥ ७॥

भाष्यम्

## व्यपदेशश्च तद्वत् ॥ ८.२.८ ॥

'शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयाम्, सिंहलोमभिरातिथ्यामि'ति। सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः। प्राप्तानां शष्पादिभिस्तदाप्तिवचनं नोपपद्यते ॥ ८ ॥

## पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ८.२.९ ॥

पशुपुरोडाशता च ग्रहाणां श्रूयते। नैतेषां पशूनां पुरोडाशा विद्यन्ते 'ग्रहपुरोडाशा ह्येते पशवः' इति। तन्न तावदत्र ग्रहाः पुरोडाशाः, ग्रहा एव ते। यदि तु पुरोडाशधर्मकास्तत एतदुपपद्यते। तस्मात्पौरोडाशिकस्तेषु विध्यन्तः ॥ ९ ॥

इति सौत्रामण्यां सुरावाजिनयोरैष्टिकविध्यन्तातिदेशाधिकरणम् ॥ १ ॥

### भाष्यसन्दर्भयोजिनी

सौमिकविध्यन्तातिदेशे स्वीकृतेऽतिदेशेनैव दीक्षणीयादयः प्रत्यक्षेण प्राप्नुयुः। तदा शष्पैरेव दक्षीणीयामाप्नोति' इति दीक्षणीयाप्तिवचनं कथं सङ्गच्छेत, अतिदेशेन तेषां कर्मणामत्र सत्त्वात्। शष्पादिभिः पुनस्तेषामाप्तिवचनं कथमुपपन्नं स्यादित्याह—शष्पैरेवेति ॥ ८ ॥

सुराग्रहाणां पुरोडाशविकरत्वे प्रमाणान्तरमुपस्थापयति—पशुपुरोडाशेति। पशुषु तदङ्गतया पशुपुरोडाशो विहितः—'यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाश' इति। सौत्रामणी द्विविधा—ऐष्टिकी पाशुकी चेति। तत्र पाशुक्यां सौत्रामण्यां पशुपुरोडाशः कर्तव्य एव। किन्तु तत्र पशुपुरोडाशस्थाने ग्रहा एव कीर्तिताः न पुरोडाशाः—'नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते'पशव इति। ग्रहाणां पशुपुरोडशत्वकीर्तनमात्रेण ग्रहाः पुरोडाशा न भवेयुः। एवं कीर्तनस्य फलमाह—यदि त्विति। इमे ग्रहाः पुरोडाशधर्मका यदि भवेयुस्तर्हि एवं कीर्तनमुपपन्नं भवेदित्यर्थः। एवञ्च ग्रहाः पुरोडाशविकारा इति सिद्धं भवति ॥ ९ ॥

इति सौत्रामण्यां सुरावाजिनयोरैष्टिकविध्यन्तातिदेशाधिकरणम् ॥ १ ॥

भाष्यम्

२

## पशुः पुरोडाशविकारस्स्याद् देवतासामान्यात् ॥ ८.२.१० ॥

विषयः

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' ( तै० सं० ६.१.११.६.) इति ।

सन्देहः

तत्र सन्देहः—किं पशुः पुरोडाशविकारः ? उत सान्नाय्यविकारः ? इति । किं प्राप्तम् ?

वार्तिकाभरणम्

पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। 'यो दीक्षितो यदग्नौषोमीयं पशुमालभेत' इति । तत्र सन्देहः— पशुः पुरोडाशविकारः उत सान्नाय्यविकारः। पशुः दार्शिकाग्नीषोमीयपुरोडाशविकारो देवतासामान्यात् । एवञ्च 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षतो'ति पशौ श्रूयमाणं प्रोक्षणमाहवनीयादुल्मुकेन पशुपर्यग्निकरणञ्च पुरोडाशधर्मकत्वे समञ्जसं भवति। न च देवतासामान्यादुपांशुयाजविध्यन्तः किं न स्यादिति

तन्त्रशिखामणिः

सू० पशुः पुरोडाशविकारस्स्याद् देवतासामान्यात् ॥

वाजिने सान्नाय्यविध्यन्तप्राप्तावपि पशौ न तत्प्राप्तिः, उद्भूतस्य कस्यचिदपि सादृश्यस्याभावात् इत्युत्थितेस्सङ्गतिः। सामान्यतः पशावैष्टिकविध्यन्त इत्युक्तम् इह तद्विशेषश्चिन्त्यत इति न गतार्थत्वम्। अग्नीषोमीयशौ किमग्नीषोमीयपुरोडाशविध्यन्तः ? उत सान्नाय्यविध्यन्तः ? इति विशये स्फुटतरस्य हविस्सामान्यस्याभावेन देवतासामान्यादग्नीषोमीयपुरोडाशविध्यन्तः । पशौ यद्यप्युपांशुयाजाज्यस्यापि अग्नीषोम-

भाष्यसन्दर्भयोजिनी

२

विषयः

'पशौ च लिङ्गदर्शनात् ( पू. मी. ८. १. ४. ) इत्यत्राग्नीषोमीयः पशुर्दर्शपूर्णमासविकार इति सामान्यत उक्तम्, इदानीं विशेषतः कस्य विकृतिरिति विचारायोदाहरति—अस्ति इति ।

संशयः

दर्शपूर्णमासयोः षड्यागाः, तेषु कस्यायं विकार इति चिन्ता। किमग्नीषोमीयपुरोडाशविकारः ? उत सान्नाय्यविकारः ? इति ।

## भाष्यम्

### पूर्वपक्षः

पशुः पुरोडाशविकारस्स्यात् । कुतः ? देवतासामान्यात् । अग्नीषोमीयः पशुः, पुरोडाशोऽपि तद्देवत्य एव ॥ १० ॥

## प्रोक्षणाच्च ॥ ८.२.११ ॥

प्रोक्षणं पुरोडाशधर्मः । तं पशौ दर्शयति 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि' इति पशुं प्रोक्षति' इति ॥ ११ ॥

## वार्तिकाभरणम्

वाच्यम्, पशुवत्पुरोडाशस्य घनीभूतत्वेन हविस्सामान्याधिक्यात् । अथ हविस्सामान्यस्य प्रबलत्वात्तेन सन्नाय्यविध्यन्तस्स्यादिति यो ब्रूयात् प्रतिब्रूयादेनम्—न कश्चिदपि लोके दधिपयोभ्यां पशुं सदृशमनुभवतीति । तस्मात्पुरोडाशधर्मा पशुरिति प्राप्ते, अभिधीयते—

हविः सामान्यात्सान्नाय्यविकारः । यद्यपि नास्ति चक्षुर्ग्राह्यं सादृश्यम् [तथापि] पशुः पशोः प्रभवति पयोऽपि पशोः प्रभवति एवञ्च सान्नाय्यपात्रमुखा पशौ दृश्यमाना उपपन्ना भवति । यत्तूक्तं प्रोक्षण-पर्यग्निकरणलिङ्गदर्शनात्पुरोडाशविकारत्वं पशोरिति । तदयुक्तम्; न्यायेन पुरोडाशधर्मप्राप्त्यभावेन लिङ्गस्य दुर्बलत्वात् । तस्मात्प्रबलेन हविस्सामान्येन सान्नाय्यविकारः पशुः ॥

## तन्त्रशिखामणिः

देवताकत्वमविशिष्टम् तथापि तद्धितनिर्दिष्टदेवताकत्वघनत्वरूपसामान्यात् 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशुं प्रोक्षति' इति प्रोक्षणस्य 'उल्मुकेन पशुं पर्यग्निकरोति' इति पर्यग्निकरणस्य च पुरोडाशधर्मस्य दर्शनात्पशौ पुरोडाशविध्यन्त इति प्राप्तेऽभिधीयते—

पशोस्सान्नाय्यस्य च पशुप्रभवत्वात् देवतासामान्यादपि हविस्सामान्यस्य बलीयस्त्वेन सान्नाय्यविकारः पशुः । न च घनत्वेन हविस्सामान्यमविशिष्टम् इति वाच्यम्, सत्यम्; तथापि पशुसान्नाय्ययोरेक प्रभवत्वेन सम्बन्धित्वात्पशुप्रतीतिस्सम्बन्ध्यन्तरं सान्नाय्यमेवोपस्थापयतीति उपस्थितसान्नाय्यविध्यन्त एव प्रवर्तते । 'यदि पशूखा स्रवेदि' ति सान्नाय्यधर्मोखादर्शनाच्चैवम्, प्रोक्षणादिकञ्च वाचनिकमिति न तद्बलात्पुरोडाशविध्यन्तः ॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

यद्यपि 'विप्रतिपत्तौ हविषा नियम्येत' ( पू. मी. ८. १. १७ ) इत्यत्र द्रव्यघटितसादृश्यस्य प्राबल्यं प्रतिपादितम् । तेन देवतासामान्यमादाय पशोः पुरोडाशविकारत्वं नोपपन्नम्, तथापि प्रोक्षणादीनां पौरोडाशिकधर्माणां बहूनां लाभात् देवतासामान्यमवलम्ब्य पूर्वपक्षयति—**पशुः पुरोडाशेति** ॥ १० ॥

पुरोडाशविकृतित्वे हेतुं दर्शयति—**प्रोक्षणमिति** । प्रोक्षणमन्त्रे 'ओषधीभ्यो जुष्टम्' इति निर्देशेनौषधद्रव्यकयागविकृतित्वं गम्यत इति पशुः पुरोडाशविकार इत्यर्थः ॥ ११ ॥

भाष्यम्

## पर्यग्निकरणाच्च ॥ ८.२.१२ ॥

पर्यग्निकरणमपि पुरोडाशधर्मः । तदपि पशौ दृश्यते-'आहवनीयादुल्मुकेन पशुं पर्यग्नि-करोति' इति । तस्मात्पुरोडाशविकारः ॥ १२ ॥

## सान्नाय्यं वा तत्प्रभवत्वात् ॥ ८.२.१३ ॥

सिद्धान्तः

सान्नाय्यं वा पशुर्विकुर्यान्न पुरोडाशम् । कुतः ? तत्प्रभवत्वात् । पशुतः सान्नाय्यं प्रभवति, पशुश्च । तन्मिथः प्रत्यासन्नम् । प्रत्यासत्तिश्च लिङ्गम् । हविस्सामान्यञ्च देवता-सामान्याद्बलीय इत्युक्तम् ॥ १३ ॥

## तस्य च पात्रदर्शनात् ॥ ८.२.१४ ॥

तस्य च सान्नाय्यस्य यत्पात्रमुखा, सा पशौ दृश्यते 'यदि पशुरुखायां पचेदि'ति ॥ १४ ॥

इत्यग्नीषोमीयपशोः सान्नाय्यविकृतित्वाधिकरणम् ॥ २ ॥

भाष्यसन्दर्भयोजिनी

पशोः पौरोडाशिकधर्मवत्वेऽन्यत्प्रमाणमुपस्थापयति—पर्यग्निकरणमिति । ज्वलदङ्गारैर्भ्रामणं पर्यग्निकरणम् । तच्च यथा पशावस्ति तथा पुरोडाशेऽपि । तदिदं साम्यं पशोः पुरोडाशधर्मवत्व इत्यर्थः ॥ १२ ॥

सिद्धान्तः

प्रोक्षणपर्यग्निकरणादिकं यागीयद्रव्यस्य क्रियते । तेन सन्निपत्योपकारकत्वेन साम्यं सिध्यति । किन्तु यागीयद्रव्यगतसाम्यमेव यदि लभ्येत तर्हि तस्य गरीयस्त्वमिति तद्दर्शयति सान्नाय्यमिति । दधिपयसी सान्नाय्यम् । ते हि पशुप्रभवे, पशुरपि पशुप्रभवः । पशुप्रभवत्वमुभयोः प्रबलं साम्यम् इत्याह—तन्मिथ इति । देवतासाम्याच्च द्रव्यसाम्यं प्रवलमिति स्थितमेव । अतस्सान्नाय्यविकृतिरेव पशुः ॥ १३ ॥

दध्न आतञ्चनं पयसः श्रपणमुखायां पात्र्यां भवति । पशोरपि पाक उखायामेव । एवञ्चोखाश्रपण-सरूपं साम्यं लभ्यत इति पशुः सान्नाय्यविकार इत्यर्थः ॥ १४ ॥

इत्याग्नीषोमीयपशोः सान्नाय्यविकृतित्वाधिकरणम् ॥ २ ॥

## भाष्यम्

३

## दध्नस्स्यान्मूर्तिसामान्यात् ॥ ८.२.१५ ॥

सान्नाय्यविकारोऽपि दध्नो विकारस्स्यात् पशुः, न पयसः। कुतः ? मूर्तिसामान्यात्। घनत्वं मूर्तिः ॥ १५ ॥

## पयो वा कालसामान्यात् ॥ ८.२.१६ ॥

पयो वा पशुंविकुर्यात् न दधि। सद्यस्कालः पशुः पयोऽपि सद्यस्कालम्। दधि तु द्व्यहकालम्, पयोऽन्तरितं तद् बहिरङ्गम् ॥ १६ ॥

### वार्तिकाभरणम्

दध्नः स्यान्मूर्तिसामान्यात् ॥

पशुः सान्नाय्यविकार इति स्थिते चिन्त्यते–स किं दधिविकारः ? उत पयोविकारः ? इति। पशुर्दधिविकारः, मूर्तिसामान्यात्। मूर्तिः घनत्वमित्यर्थः। उच्यते—पयोविकारः पशुः कालसामान्यात्। पयः सद्यस्कालम्, पशुरपि सद्यस्कालः। दधि तु द्व्यहकालम्। पयस्तु साक्षात्पशुजन्यत्वादन्तरङ्गम्। दधि तु पयोजन्यत्वाद् बहिरङ्गम्। गतिसामान्याच्च-पशुरपि गच्छति पयोऽपि गच्छति। तस्मात्पयोविकारः ॥

### तन्त्रशिखामणिः

सू० दध्नस्स्यान्मूर्तिसामान्यात् ॥

पशुस्सान्नाय्यस्य विकार इति स्थितौ विशेषचिन्तेति सङ्गतिः। पशुः किं दध्नो विकारः उत पयसः ? इति विशये पशुप्रभवत्वसाम्येन घनत्वसामान्याधिक्यात् दध्नो विकार इति प्राप्तेऽभिधीयते—घनत्ववद् गतिमत्वरूपं हविस्सामान्यमपि पशुप्रभवत्वं सद्यस्कालत्वञ्चाधिकमिति पयोविकारः पशुः ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

३

अग्नीषोमीयः पशुस्सान्नाय्यविकार इत्युक्तम्। सान्नाय्ये दधिपयोयागौ द्वौ। तयोः कस्यायं विकार इति चिन्तायां पूर्वपक्षयति—**सान्नायविकारोऽपीति**। दधि मूर्त्या घनम् पशुरपि घन इति साम्येन दधिविकारः पशुरित्यर्थः ॥ १५ ॥

सिद्धान्तमाह—**पयो वेति**। न दध्नोऽयं विकारः किन्तु पयसः। तत्र हेतुं विवृणाति—**सद्यस्काल इति**। दर्शपूर्णमासस्य द्व्यहकालसाध्यत्वेऽपि दर्शे पयोयागः सद्य एव क्रियते। प्रातर्दोहं विधाय तत्प्रतप्य हूयत इति तस्य सद्यस्कालत्वम्। दधि च न तथा, पूर्वेद्युस्सायं दोहं सम्पाद्य तत्प्रतप्यातञ्च्य परेद्युस्तद्धूयत इति द्व्यहकालत्वं तस्य। अग्नीषोमीयपशोरनुष्ठानं सद्य एव भवति। अतः सद्यः कालसामान्यात् पशुः पयोविकार इत्यर्थः। **पयोऽन्तरितं** पयसा व्यवहितमित्यर्थः ॥ १६ ॥

भाष्यम्

## पश्वानन्तर्यात् ॥ ८.२.१७ ॥

पशोश्च पयोवदानन्तर्यात् तत्प्रत्यासन्नं न दधि ॥ १७ ॥

## द्रवत्वञ्चाविशिष्टम् ॥ ८.२.१८ ॥

द्रवत्वं पशुपयसोः समानम्। पशुरपि द्रवति पयोऽपि। तस्मात्पयोविकारः पशुः ॥ १८ ॥

इत्यग्नीषोमीयपशोः पयोविकारत्वाधिकरणम् ॥ ३ ॥

४

## आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ ८.२.१९ ॥

विषयसंशयपूर्वपक्षाः

'वैश्वदेव्यामिक्षा' उभयोर्दधिपयसोर्विकारस्स्यात् उभयभाव्यत्वात्। उभाभ्यां हि सा

वार्तिकाभरणम्

आमिक्षोभयभाव्यत्वादुभयविकारस्स्यात् ॥

अस्ति वैश्वदेवे पर्वण्यामिक्षा। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'ति। तत्र संशयः— किमामिक्षा दधिपयसोः विकारः ? उत दध्नोऽथवा पयसः ? इति। तत्रामिक्षोभयविकारः। उभयभाव्यत्वादुभाभ्यामुत्पद्यते ह्यामिक्षा न त्वन्यतरेण। न चान्यतरस्य विकार इति निर्धारणं ज्ञायते, यावता मधुरतामम्लताञ्च

तन्त्रशिखामणिः

सू० आमिक्षोभयभाव्यत्वादुभयविकारस्स्यात् ॥

पशोः पयोविकारत्वेऽपि आमिक्षोभयविकारः दधिकारो वा स्याद् न पयोविकारमात्र इत्युत्थितेस्सङ्गतिः। चातुर्मास्येषु श्रूयते—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति। सेयमामिक्षा किं दधिपयो-

भाष्यसन्दर्भयोजिनी

**पशोश्चेति**। पयोवत्पशोः **पश्वानन्तर्यात्** पशुप्रभवत्वादित्यर्थः। तत् पयः **प्रत्यासन्नम्** अन्तरङ्गमित्यर्थः। **न दधि**, पयसा व्यवधानादित्यर्थः ॥ १७ ॥

**द्रवत्वं** गतिमत्त्वमित्यर्थः। गतिमत्वं पयसः पशोश्चाविशिष्टमिति भावः। अतः पशुः पयोविकारः ॥१८॥

इत्यग्नीषोमीयपशोः पयोविकारत्वाधिकरणम् ॥ ३ ॥

४

विषयसंशयपूर्वपक्षाः

पूर्वस्मिन्नधिकरणेऽग्नीषोमीयपशोः पयोविकृतित्वं साधितम्। स एव विचारः स्थलान्तरे क्रियतेऽस्मिन्नधिकरणे चातुर्मास्यान्तर्गतामिक्षायागः कस्य विकृतिरिति। सामान्यत इष्टीनां दर्शपूर्णमासविकृतित्वे सिद्धेऽपि, तत्राप्यामिक्षायागस्य सान्नाय्यविकृतित्वे द्रव्यसामान्यादवगतेऽपि दधिपयसोः कस्य विकृतिरिति विशेषचिन्ता।

## भाष्यम्

**भाव्यते । तत्र न गृह्यते विशेषोऽस्यैव, नेतरस्येति । तस्मादुभयोः ॥ १९ ॥**

## वार्तिकाभरणम्

न विमुञ्चति। सा एकत्वेऽपि यागस्य दधिपयसोर्हविष्ट्वेन हविर्भेदेनाकाङ्क्षासद्भावात्। तस्मादुभयधर्मा सा इत्येकः पूर्वः पक्षः। दधिविकार एवामिक्षा, 'तप्ते पयसि दध्यानयती'ति संस्कारवाक्ये निर्दिष्टं दधि प्रधानम्। पयस्तु सप्तमीनिर्दिष्टं गुणभूतम्। यच्च प्रधानं तदेव सर्वनाम्ना प्रति निर्देशमर्हति 'सा वैश्वदेव्यामिक्षे'ति। तस्माद्दध्नो हविष्ट्वात्तद्विकृतिरामिक्षा घनत्वाच्च। घनं दधि, आमिक्षा च घना। तस्माद्दध्नो विकृतिरिति द्वितीयः पूर्वः पक्षः। अत्रोच्यते—पय एव आमिक्षा न द्रव्यान्तरम्। दधि तु संस्कारार्थत्वान्न प्रधानम्। लोकेऽप्यामिक्षार्थी पय एव घनीभावयितुं दध्युपादत्ते। स एव कदाचित् दध्यपश्यन् काञ्जिकादि द्रव्यमुपादत्ते। यदि दध्यामिक्षां प्रतीयात् तर्हि काञ्जिकादिकमपि प्रतीयात्। तस्मात्पयसो हविष्ट्वात्तद्विकार आमिक्षा, पयसो-हविष्ट्वञ्च। अत्रार्थः **चतुर्थप्रथमपादे दुप्टीकामीमांसावार्तिके** प्रपञ्चितम्-पयोविकारत्वे वैश्वदेवयागस्य चोदिता सद्यस्कालतानुग्रहीष्यते, दधिविकारत्वे तस्य द्व्यहकालत्वाद्वैश्वदेवयागोऽपि द्व्यहकाल आपद्येत। तद्व्यहकालत्वे च सायं दोहे कृते परदिने यागकाले पयो दध्येव स्यात्। तथासति 'जुषन्तां युज्यं पयः' इति पयसो दर्शनं नोपपद्यते। तस्मात्पयोविकार आमिक्षा॥

## तन्त्रशिखामणिः

विकारः, उत दध्नः ? किं वा पयस इति विशये लोके हि दधिपयस्संसृष्टमामिक्षेत्यभिधीयते, तथा दध्ना रसोऽम्लत्वम् पयसो रसश्च माधुर्यम् तस्यां दृश्यते। तस्मादुभयात्मिकामिक्षा। ततश्च विशेषाग्रहाद्दधिपयोविकृतिरामिक्षेति तत्रोभयविध्यन्तः। नन्वेकविध्यन्तप्राप्त्यैव नैराकाङ्क्ष्यात् नोभयविध्यन्तप्राप्तिर्युक्तेत्युक्तमिति चेन्न, हविष उभयात्मकत्वेनैकेन नैराकाङ्क्ष्यासम्भवात् इत्येकः पक्षः। संहतत्वसामान्याद्दधिविकार एवामिक्षा। किञ्च 'तप्ते पयसि दध्यानयती' ति संस्कारवाक्ये सप्तमीनिर्देशात् गुणत्वेन पयः प्रतीयते। दधि तु द्वितीयानिर्देशात् प्रधानतया प्रधानपरामर्शिना च सर्वनाम्ना 'सा वैश्वदेव्यामिक्षा' इत्यत्र तत्पदेन दधि प्रतिनिर्दिश्य देवतया सम्बध्यते। तस्माद्दध्येव तत्र हविः, सैव चामिक्षासामान्याधिक्यात्। अतो हविस्सामान्याधिक्याद्दधिविकार-तामिक्षायाः। एतेन घनत्वरूपहविस्सामान्यादनेकदेवताकत्वसामान्याच्चाग्नीषोमीयादिपुरोडाशविकारो वा किं न स्यादिति परास्तम्। दध्न एवामिक्षात्वेन हविस्सामान्याभावात्। तस्माद्दधिविकार अमिक्षेति प्राप्तेऽभिधीयते—

स्यादेवं यदि दध्नः प्राधान्यं स्यात्। न त्वेवम्। तथाहि-आनयतेर्द्विकर्मत्वाद् द्वितीया निर्दिष्टदधिरूप-कर्मणोऽपि व्याप्यमानत्वात् पय एव तत्र प्रधानम् कर्म सप्तमीनिर्दिष्टं पयोरूप कर्म प्रति नीयते। ततश्चानयन-क्रियाया व्याप्यमानतया तां प्रति प्रधानेन द्वितीयानिर्दिष्टदधिरूपकर्मणापि व्याप्यमानत्वात्पय एव तत्र प्रधानम्। यथा 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र प्रदानक्रियाया व्याप्यमानेन द्वितीयानिर्दिष्टेन दण्डरूपकर्मणापि

## भाष्यसन्दर्भयोजिनी

अत्र संशये चतस्रः कोटयः—किमुभयविकारोऽयम् आहोस्वित् विकल्पः ? उत दधिविकारः, अथवा पयोविकार इति। तत्र प्रथमपक्षे हेतुं निर्दिशति—**उभयभाव्यत्वादिति। उभाभ्यां** दधिपयोभ्यां **सा** आमिक्षा **भाव्यते** निष्पाद्यते। तयोः कस्य विकृतिरिति निश्चेतुं न शक्यत इत्युभयविकृतित्वमिति प्रथमः पक्षः॥ १९॥

भाष्यम्

## एकं वा चोदनैकत्वात् ८.२.२० ॥

एकं वा विकुर्यात्-दधि पयो वा, नोभे, चोदनैकत्वात्। एकैषा चोदना-वैश्वदेव्यामिक्षेति। सैकेन विध्यन्तेन निराकाङ्क्षीक्रियते। तस्मादेकं विकुर्यात् ॥ २० ॥

यत्तु न गृह्यते विशेष इति, तत्रोच्यते—

## दधि सङ्घातसामान्यात् ॥ ८.२.२१ ॥

संहतं दधि, आमिक्षापि संहता। पयो द्रवम्। एष विशेषः। तस्माद् दध्नो विकार इति ॥ २१ ॥

तन्त्रशिखामणिः

व्याप्यमानो मैत्रावरुणः प्रधानं तद्वत्। न चैवं सप्तम्यनुपपत्तिरिति वाच्यम्, प्रधानस्यापि आर्थिकमाधारत्वमप्यस्तीति तदनुवादार्थतया तदुपपत्तेः। न चार्थिकाधारत्वानुवादो निरर्थक इति वाच्यम्, पयसोऽपि द्वितीयानिर्देशेऽन्यतरस्यापि प्राधान्यनिर्णयानुपपत्तेः। सप्तमीनिर्देशे तु पयः प्रति दध्यानेयमिति दध्नोऽपि व्याप्यमानत्वात् पयः प्रधानमित्यवगन्तुं शक्यम्। अतस्तप्ते पयसीति वाक्ये पय एव प्रधानम्। तदेव 'सा वैश्वदेवी' इत्यत्र तत्पदेन परामृश्यते। तत्सामानाधिकरण्याच्चामिक्षा पयः, दधि तु लोकवत् पयसो घनीभावार्थतयैवोपादीयते। ननु तावता दध्येवामिक्षा. विनापि दध्ना काञ्जिकादिना धनीभूतेऽपि पयसि प्रयोगात्। दधिनियमस्तु नियमादृष्टार्थः। तस्मादामिक्षायागे पयोविध्यन्तः। ननु चतुर्थे पय एवामिक्षेति निर्णीतत्वान्नैतदधिकरणप्रवृत्तिसम्भव इति चेत्सत्यम्, तत्र हि 'एकनिष्पत्तेस्सर्वं समं स्यात्' इति सूत्रेणामिक्षावाजिनयोर्द्वयोरपि दध्यानयनसाध्यत्वात् तदुभयं दध्यानयनप्रयोजकमिति प्रापय्य 'संसर्गरसनिष्पत्तेरामिक्षाप्रधानं स्यात्' इति सूत्रेण यदि वाजिनवदर्थान्तरमामिक्षा स्यात्। न त्वेवम्, किन्तु पूर्ववाक्यनिर्दिष्टं तत्पदपरामृष्टं पय एव सामानाधिकरण्यादामिक्षेति तदेव प्रधानतयाऽऽनयनप्रयोजकमिति सिद्धान्तितम्। तत्र यदि पूर्ववाक्ये द्वितीयानिर्दिष्टतया दध्येव प्रधानं तदेव च तच्छब्देन परामर्शादामिक्षा तथापि दध्येवानयनप्रयोजकं न वाजिनमिति सिध्यत्येव सिद्धान्त इति न तत्र पयस एवामिक्षात्वसाधने यतितव्यम्, इहैव तु विशेषातिदेशार्थं तत्र यतितव्यमित्यत्र न्यायसिद्धामेव वस्तुगतिमनुरुध्य तत्र पयस आमिक्षात्वमुक्तमिति दिक्।

वृत्तमधिकरणम्

भाष्यसन्दर्भयोजिनी

उभयविकारत्वे चोदकतो धर्माः पृथक्पृथक् प्राप्नुयुः, 'सा वैश्वदेव्यामिक्षे'ति विधिरेको यागमेकं विदधाति। एकेन वाक्येन विहिते एकस्मिन् यागे विध्यन्तद्वयं न सङ्गतं भवतीति द्वितीयपक्षं गृह्णाति—एकं वेति। एकेन विध्यन्तेनाकाङ्क्षायां शान्तायां द्वितीयविध्यन्तापेक्षा न भवतीति विकल्प इति द्वितीयः पक्षः ॥ २० ॥

द्वितीयपक्षे दध्नः पयसो वा विशेषग्रहणाय हेतोरभावाद्विकल्पस्साधितः। तत्र विशेषं प्रदर्शयन् दध्नो विकारत्वमामिक्षाया इति तृतीयं पक्षं प्रदर्शयति—संहतमिति। संहतत्वं दधनि आमिक्षायाञ्चानुभूयते, पयसि च द्रवत्वम्। अतो दधिविकार आमिक्षायागः ॥ २१ ॥

## भाष्यम्

### सिद्धान्तः

## पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ ८.२.२२ ॥

पयो वाऽऽमिक्षया विक्रियते, न दधि। पयःप्रधानत्वादस्य संसर्गस्य। किं प्राधान्यं पयसः ? भूयस्त्वम्। प्रभूतं तत्र पयः, अल्पं दधि। दध्नश्च तदर्थत्वात्। दधि च तत्र पयो घनीभावयितुमुपादीयते लोकवत्। लोकेऽपि पय एव घनीभावयितुं दध्युपादीयते। कथम् ? दध्यभावेऽन्येनाम्लेनापि काञ्चिकादिना क्रियते। तत्रापि चामिक्षाशब्दो भवति। दधिनियमोऽम्ले ह्यदृष्टार्थः। तस्मात्पय एवाम्लसंयोगेन घनीभूतमामिक्षेत्युच्यते। पयश्चेदामिक्षा, पयस एव विकारो न्याय्यः ॥ २२ ॥

## धर्मानुग्रहाच्च ॥ ८.२.२३ ॥

सद्यस्कालता धर्मः पयोविकारत्वेनानुग्रहीष्यते। वैश्वदेवस्य सद्यस्कालत्वात्। दधिविकारत्वे बाध्येत। वैश्वदेवोऽपि द्व्यहकालः क्रियेत, तथा तस्य धर्मो बाध्येत। सद्योभावञ्च दर्शयति-'जुषन्तां युज्यं पयः' इति। यदि दध्नो विकारस्स्यात्, तथा द्व्यहकालभावे दातव्यं न

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

सिद्धान्तपक्षमाह—**पयो वेति**। दध्नस्संसर्गः पयःप्रधानः। दध्ना संसृष्टं पय एवामिक्षा जायते। यस्य च संसर्गः तदल्पीयः, यत्र च संसर्गः तत्प्रभूतम्। पयसः प्राधान्ये हेतुः—**भूयस्त्वमिति**। प्रभूते दधनि अल्पीयसि पयसि निक्षिप्ते नामिक्षा जायते, किन्तु प्रभूते पयसि किञ्चिद्दधि निक्षिप्तं चेदामिक्षा निष्पद्यते इत्यर्थः। पयसो घनीभावावस्था आमिक्षा कथ्यते। घनीभावश्च दध्ना भवति। दध्नः कार्यं घनीभावसम्पादनम्। तदिदमाह—**तदर्थत्वादिति**। **लोकेऽपीति**। विना पयसा नामिक्षा सम्पाद्यते, दध्ना विना च सा जायते इति लोकेऽनुभूयते। दधिस्थाने किञ्चिदन्यदम्लादिकं पयसि प्रक्षिप्तं सदामिक्षा भवति। तत्र दध्येव पक्षेप्तव्यमिति नियमः क्रियते। नियमस्त्वदृष्टार्थ इत्याह—**दधिनियम** इति। आमिक्षायाः पयोरूपत्वे पयोविकार एव **न्याय्यः** न्यायादनपेतः ॥२२॥

आमिक्षायाः पयोविकारत्वे हेत्वन्तरं धर्मानुग्रहः। तमेव धर्मं दर्शयति—**सद्यस्कालतेति**। दर्शपूर्णमासयोः प्रातर्दोहं कृत्वा यथायथं संस्कृत्य प्रातरेवैन्द्रपयोयागः क्रियते। यद्यपि दर्शपूर्णमासयोः द्व्यहकालानुष्ठेयत्वं तथापि पयोयागः सद्य एव क्रियत इति तस्य सद्यस्कालता। ऐन्द्रदधियागार्थं पूर्वेद्युस्सायं दोहं कृत्वा संस्कृत्यातञ्च्य परेद्युरैन्द्रदधियागः क्रियते। आमिक्षा दध्नो विकारस्स्यात् तर्हि प्रकृतिवद् द्व्यहकालत्वं प्राप्नुयात्। वैश्वदेवस्तु सद्यस्कालः, विकृतित्वात्। सोऽयं धर्मो बाधितस्स्यात् दधिविकारत्व इत्याह—**दधिविकारत्व** इति। ननु विकृतेरपि वैश्वदेवस्य द्व्यहकालानुष्ठेयत्वं स्वीक्रियतामित्यत आह—**वैश्वदेवोऽपीति**। **तथा** तदेत्यर्थः। वैश्वदेवे पर्वणि नामिक्षायाग एक एव प्रधानः, आग्नेयादीनामपि प्राधान्येन विधानात्। तेषामपि द्व्यहकालत्वाश्रयणं न

### भाष्यम्

कथञ्चन पयः स्यात्। तत्रैतद्दर्शनं नोपपद्यते। तस्मात्पयोविकार आमिक्षा। दध्नश्चाधर्मकत्वम् ॥ २३ ॥

इत्यामिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

## सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८.२.२४ ॥

### विषयः

द्वादशाहोऽहर्गणः प्रायणीयोऽतिरात्रः पृष्ठ्यषडहः त्रयश्छन्दोमाः, अविवाक्यमहः उदय-

### वार्तिकाभरणम्

सत्रमहीनश्च द्वादशाहः तस्योभयथा प्रवृत्तिरैककर्म्यात् ।

तत्राभियुक्ता याज्ञिका उपदिशन्ति—सत्रमहीनश्च द्वादशाह इति। तत्राहीनस्य द्वादशाहस्य धर्माः आम्नाताः। 'एको द्वौ बहवोऽहीनेन यजेरन्। यानदीक्षिता याजयेयुरि'ति। तथा—सत्रस्य द्वादशाहस्य धर्मा आम्नाताः। 'गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुरि'ति। 'गणेषु द्वादशाहस्ये'ति प्रथमपादाधिकरणे द्विरात्राद्यहर्गणेषु द्वादशाहविध्यन्त इति समान्येनोक्तम्। द्विविधाश्चाहर्गणाः अहीनाः सत्राणि चेति। विशेषस्त्वि-

### तन्त्रशिखामणिः

सू० सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैकार्थ्यात् ॥

आमिक्षायां विशेषग्रहादुभयधर्मप्राप्त्यभावेऽपि सत्राहीनार्थकेष्वहर्गणेष्वव्यवस्थया सत्राहीनोभयात्मकद्वादशाहविध्यन्तप्राप्तिः स्यात् विशेषग्रहाभावादित्युत्थितेस्सङ्गतिः। द्वादशाहो हि 'द्वादशाहेन प्रजाकामं याजयेत्' इति यजतिचोदनार्थत्वादहीनात्मकः। तस्य च धर्मास्समाम्नाताः—'एको द्वौ बहवो वाऽहीनेन यजेरन्

### भाष्यसन्दर्भयोजिनी

न्याय्यम् इति भावः। आमिक्षाया दधिविकारत्वे मन्त्रवर्णे पयःपदोपादानं विघटितं स्यात्। पयःपदोपादानेन सद्यस्कालत्वं गम्यते! किञ्च पयःपदोपादानेन देवतायै दातव्यमामिक्षाद्रव्यं पय इति प्रतीयते। तदिदं न स्यात् यदि दधिविकारत्वमामिक्षाया भवेदित्याह—तथेति। अत आमिक्षा पयोविकारः ॥ २३ ॥

इत्यामिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

### विषयः

पूर्वस्मिन्नधिकरण आमिक्षाया उभयविकारत्वं निरस्य पयोविकारत्वं साधितम्। द्वादशाहस्याहीनसत्रोभयात्मकत्वात् तद्विकृतिष्वतिदेश उभयात्मकतया भवत्विति शङ्कां निरसितुं द्वादशाहमुदाहरति—द्वादशाह

## भाष्यम्

नीयोऽतिरात्रः' इति । स उभयसंज्ञकः-सत्रमहीनश्च । कथं ज्ञायते ? अभियुक्तानामुपदेशात् । एवं ह्युपदिशन्ति-सत्रमहीनश्च द्वादशाह इति । शब्दार्थाधिगमे चाभियुक्तोपदेशः प्रमाणम् । संज्ञाव्यवस्थया च तस्य धर्मा आम्नाताः । 'एको द्वौ बहवोऽपि वाहीनेन यजेरन् । तानदीक्षिता याजयेयुः । गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः परिव्राट् वानप्रस्थ' इति । तद् दशमेऽध्याये वक्ष्यते-'द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात्' ( जै०

## वार्तिकाभरणम्

दानीं चिन्त्यते किमुभयविधस्याहीनसत्रात्मकस्य द्वादशाहस्य धर्माः द्विरात्राद्येकादशरात्रपर्यन्तेष्वहीनेषु त्रयोदशरात्रादिषु सत्रेषु भवन्ति ? उताहीनद्वादशाहस्य धर्माः द्विरात्राद्यहीनेषु एकादशरात्रपर्यन्तेषु भवन्ति ? सत्रद्वादशाहस्य धर्माः त्रयोदशरात्रादिषु सत्रेष्विति ? तत्रोभयविधद्वादशाहधर्माः सर्वेष्वहीनेषु सत्रेषु विकृतिभूतेषु भवन्ति । यावतोभयविधोऽपि द्वादशाह एकं कर्म । ते चोभयविधा अहीनेषु सत्रेषु विकल्पेन भवन्ति । आग्नेयभिमर्शनमिव सौर्ये । तस्मादव्यवस्थया द्वादशाहद्वयधर्माः सर्वविकृतिषु इति प्राप्ते—

## तन्त्रशिखामणिः

यानदीक्षिता याजयेयुः' इति । तथा 'द्वादशाहमृद्धिकामा उपेयुः' इत्युपैयिचोदनावत्वात्सत्रात्मकश्च द्वादशाहः । तस्य धर्मास्समाम्नाताः 'गृहपतिसप्तदशास्स्वयमृत्विजो ब्राह्मणास्समुपेयुः' इति । अहर्गणाश्च द्विविधाः—तत्र द्विरात्रप्रभृतयः एकादशरात्रपर्यन्ताः यजतिचोदनावत्वादहीनाः त्रयोदशरात्रप्रभृतयस्त्वासनोपेयिचोदनाधर्मवत्वात्सत्रात्मकाः । गणेषु द्वादशाहधर्मप्रवृत्तिरित्युक्तम् । तत्र चिन्त्यते—किं द्विविधस्यापि द्वादशाहस्य धर्मा

## भाष्यसन्दर्भयोजिनी

इति । अहर्गणः द्वादशानामन्हां गणः । द्वादशाहेऽहःक्लृप्तिं दर्शयति—प्रायणीय इति । द्वादशसु दिनेषु सोमयागोऽनुष्ठीयते । तत्र प्रथमदिनेऽतिरात्रसंस्थाकः प्रायणीयनामा यागः । द्वितीयदिनात्सप्तमदिनपर्यन्तं पृष्ठ्यषडहयागाः—एकैकस्मिन् दिन एकैकं पृष्ठस्तोत्रं रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवतसामभिः क्रमेण स्तुत्वा यागा अनुष्ठीयन्ते इत्ययं षडहशब्देन व्यवह्रियते । अष्टम नवम दशम दिनानि छन्दोमशब्देनोच्यन्ते-छन्दांसि मीयन्त इति छन्दोमा भवन्ति । तदनन्तरदिनमविवाक्यशब्देनान्तिमं दिनमुदयनीयातिरात्रशब्देन व्यवह्रियत इति । अयं द्वादशाहः—अहीनात्मकः सत्रात्मकश्च । अहीनत्वपुरस्कारेण सत्रत्वपुरस्कारेण च धर्मा अत्र विहिता इत्ययमुभयात्मा भवति । अत्र द्वादश दीक्षाः, द्वादशोपसदो विहिताः । अर्थादेकैकस्मिन् दीक्षेति द्वादशु दिनेषु द्वादश दीक्षाः, तथैकैकस्मिन्दिन एकैकोपसदिष्टिरिति द्वादशदिनेषु द्वादशोपसदः । आहत्य द्वादशाहः षट्त्रिंशद्दिनसाध्यो भवति । अहीना यजतिचोदनाचोदिता भवन्ति 'यजेरन्' इति, एवं एको द्वौ बहवो वा यजमाना भवेयुः ऋत्विजश्च पृथग्भवेयुः । अयमहीनात्मा द्वादशाहः । तथा 'आसीरन्' 'उपेयुः' इति चोदनाचोदिता यागाः सत्रशब्देन व्यवह्रियन्ते-'सप्तदशावराः चतुर्विंशतिपरमास्सत्रमासीरन्' 'गृहपतिसप्तदशाः स्वयमृत्विजः सत्रमुपेयुः' इति । अत्र ये यजमानाः त एवर्त्विजः । एवमात्मा द्वादशाहः सत्रशब्देनोच्यते ।

## भाष्यम्

सू० १०.६.५९.) 'याजतिचोदनादहीनत्वं स्वामिनाञ्चानवस्थितपरिमाणत्वादिति । स द्विरात्रादिष्वहर्गणेषु प्रवर्तेत इत्युक्तम्-'गणेषु द्वादशाहस्य' ( जै० सू० ८.१.१७. ) इति ।

## सन्देहः

तत्र सन्दिह्यते-किमुभयप्रकारोऽसौ विकृतौ प्रवर्तते ? उत व्यवस्थया ? क्वचिदहीनभूतः क्वचित्सत्रभूत इति । किं प्राप्तम् ?

## पूर्वपक्षः

तस्योभयथा प्रवृत्तिस्स्यात्, ऐककर्म्यात् । उभयविधस्तत्र प्रवर्तेत । कुतः ? ऐककर्म्यात् । एकमिदं कर्मोभयविधमित्युक्तम् । न तस्य प्रवृत्तौ विशेषो गृह्यते-इहैवंविधः इह नेति । तस्मादु-

## वार्तिकाभरणम्

ब्रूमः, स्यादेतदेवं यदि द्वादशाहर्भवतीति वाक्यशेषः कल्प्यते । न त्वेवम्, किन्तु अहीनद्वादशाहश्च यजतिचोदनः 'द्वादशाहेन प्रजाकामं याजयेयु'रिति । सत्रद्वादशाहश्च आसनोपेयिचोदनः 'द्वादशाहमृद्धिकामा आसीरन्' 'द्वादशाहमृद्धिकामा उपेयुरि'ति । यश्च द्विरात्राद्येकादशरात्रपर्यन्तोऽहर्गणो यजतिचोदनः

## तन्त्रशिखामणिः

द्विविधेष्वपि अहर्गणेषु अव्यवस्थया भवन्ति ? किं वा सत्रात्मकेषु सत्रद्वादशाहधर्माः अहीनात्मकेष्वहीनद्वादशाहिक धर्मा इति व्यवस्थया भवन्तीति । तत्राहर्गणेषु कथम्भावाकाङ्क्षायां कल्प्यमानप्रकृतिवच्छब्दः द्वादशाहवदित्येव कल्प्यत इति विशेषाग्रहादुभयविधस्यापि धर्मा उभयत्र भवेयुरिति प्राप्तेऽभिधीयते—

## भाष्यसन्दर्भयोजिनी

एवञ्च द्वादशाहो द्विविधः—अहीनात्मा सत्रात्मा चेति । तत्र द्विरात्राः एकादशरात्रान्ता अहीना इति द्वादशरात्रप्रभृति सहस्रसंवत्सरान्ताः सत्राणीति च व्यवहारोऽभियुक्तानां प्रसिद्धः । तदिदमाह—अभियुक्तानामिति । उभयात्मनो द्वादशाहस्य संज्ञाभेदेनोभयविधा विध्यन्ता विहिताः । सः अहीनात्मनो द्वादशाहस्य विध्यन्त इत्युक्तं अष्टमप्रथमे ।

## सन्देहः

अहीनात्मकस्सत्रात्मकश्चायं द्वादशाहः किं विकृतावुभयात्मकविध्यन्तानतिदिशति ? उताहीनेषु तदात्मकविध्यन्तान् सत्रेषु च तदात्मकान् विध्यन्तानिति व्यवस्थयातिदिशतीति सन्दिह्यत इत्यर्थः ।

## पूर्वपक्षः

अहर्गणेषु द्वादशाहविध्यन्त इत्युक्तम् । द्वादशाहश्चोभयप्रकारः । अत उभयविधो विध्यन्तो विकृतौ प्रवर्तेत इति पूर्वपक्षं सङ्गृह्णाति—उभयविध इति । सौत्रं हेतुं विवृणाति—एकमिदमिति । विशेषग्रहणे प्रमाणाभावादविशेषेणैव प्रवृत्तिरित्याह—न तस्येति । ननु एकस्मिन् प्रकारेऽतिदिष्टे प्रकारान्तरस्याकाङ्क्षा-

### भाष्यम्

भयविधः प्रवर्तते। नन्वेका चेद् विधा प्रवृत्ता द्वितीयया कार्यं नास्ति, ऐककर्म्याद्विकल्पो भविष्यति। यथा-आग्नेयविकारेष्वभिमर्शनस्य ॥ २४ ॥

## अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्प्रकृत्या तुल्यशब्दत्वात् ॥ ८.२.२५ ॥

### सिद्धान्तः

अपिवा-नैतदेवम् सर्वत्रोभयथा प्रवृत्तिरिति। यत्र यजतिः श्रूयते, तत्राहीनभूतस्य प्रवृत्तिः। पारिशेष्याद्यत्रासनोपेयिचोदनाः तत्र सत्रभूतस्य। कस्मात्? प्रकृत्या तुल्यशब्दत्वात्। प्रकृत्या हि विकृतिस्तुल्यशब्दा भवति। तस्माच्चोदनासामान्यात्प्रकृतिनियमः। अहीनभूतश्च

### वार्तिकाभरणम्

'द्विरात्रेण यजेन त्रिरात्रेण यजेते' त्यादिना तस्याहीनद्वादशाहवदिति वाक्यशेषः। यश्चाहर्गणः आसनोपेयिचोदनः त्रयोदशरात्रादिः, 'त्रयोदशरात्रं ऋद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्नि'त्यादिना। तत्र तस्य सत्रद्वादशाहवदिति वाक्यशेषः। एवञ्च सादृश्यविशेषात् व्यवस्थया धर्मा भवन्ति ॥

### तन्त्रशिखामणिः

चोदनालिङ्गवशात् कल्प्यस्य प्रकृतिवच्छब्दस्य विशिष्यैव कल्पनौचित्याद् व्यवस्था भवतु वा, सामान्यतो द्वादशाहवदित्येव तत्कल्पना, तथाप्यहीनत्वं निमित्तीकृत्य प्रकृतौ विहितधर्मा नासत्यहीनत्वे सत्रेषु भवितुमर्हन्ति। एवं सत्रत्वनिमित्तकधर्मा अहीनेष्विति नाव्यवस्था ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

भावात् कुतः प्रसक्तिरिति शङ्कते—नन्विति। नास्ति चेद्विकल्पेन पर्यवसानं भवत्विति विकल्पं स्वीकरोति—**विकल्पो भविष्यतीति**। अत्र हविरभिमर्दनं दृष्टान्तयति—**आग्नेयविकारेष्विति**। आग्नेययागविकृतिभूतेष्वित्यर्थः। दार्शिकपौर्णमासिकहविरभिमर्शनयोः प्राप्तयोर्विकल्पो यथा स्वीकृतस्तथैवोभयविधविध्यन्तयोर्विकल्पोऽस्त्विति भावः ॥ २४ ॥

उभयविधविध्यन्तप्रवृत्तिं निराकृत्य सत्राहीनयोर्व्यवस्थितविध्यन्तवत्वं साधयति—**नैतदेवमिति**। यदुक्तं सर्वत्र विकृतिषूभयथा विध्यन्तप्रवृत्तिरिति तन्नैतदेवमिति सम्बन्धः। या विकृतयो यजतिचोदनया चोदिताः, याश्चोपेयिचोदनया, तासु द्वादशाहधर्माः शब्दतस्साम्यमादाय प्रवर्तेरन्। साम्यञ्च शब्दतोऽर्थतश्च भवति। **यत्र विकृतौ। तत्र अहीनस्य** अहीनात्मकद्वादशाहस्येत्येवं सिद्धे परिशेषन्यायेन 'आसीरन्' 'उपेयुः' इति विधिभिर्विहितेषु विकृतियागेषु **सत्रभूतस्य** सत्रात्मकद्वादशाहविध्यन्तस्य प्रवृत्तिरिति पूर्वेणान्वयः। अत्र च शब्दगतसाम्यमेव हेतुरित्याह—**तुल्यशब्दा इति**। एवञ्च प्रकृतिनियमे **चोदनासामान्यात्**-विधिशब्दसामान्यात् इति हेतुः सिद्धो भवति। एवं द्वादशाहस्य रूपद्वयवत्तो वाक्यं दर्शयति—**अहीनभूतश्चे**ति। अहीनात्मको द्वादशाहा

यजतिचोदनः-'द्वादशाहेन प्रजाकामो यजेत' इति। सत्रभूत आसनोपायिचोदनः 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहमृद्धिकामा उपासीरन्' इति ॥ २५ ॥

## द्विरात्रादीनामेकादशरात्रादहीनत्वं यजतिचोदनात् ॥ ८.२.२६ ॥

अत्राह—के पुनस्तेऽहर्गणा यजतिचोदनाः, येष्वहीनभूतः प्रवर्तते। के वासनोपायिचोदनाः येषु सत्रभूत इति। तदुच्यते-द्विरात्रादीनामेकादशरात्रादहीनत्वम् तत्राहीनभूतः प्रवर्तते। तेषां यजतिशब्देन चोदनात् 'द्विरात्रेण यजेत' इति ॥ २६ ॥

## त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ ८.२.२७ ॥

'त्रयोदशरात्रमृद्धिकामा उपेयुः' 'चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्' इति सुहृद्भूत्वाचष्टे। एवंवा-यस्माद्यजतिचोदनोऽहीनस्तस्माद् द्विरात्रादीनामप्यहीनत्वम्। तेऽपि हि यजतिचोदनाः। यस्मादासनोपायिचोदनं सत्रम्, तस्मात् त्रयोदशरात्रादीनि सत्राणि, तान्यपि तच्चोदनानीति ॥ २७ ॥

## लिङ्गाच्च ॥ ८.२.२८ ॥

'अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत। तमेतं द्विरात्रादयोऽहर्गणा ऊचुस्त्वमस्मान् मा हासीरिति। तदेषामहीनत्वमि'ति द्विरात्रादीनामहीनत्वं दर्शयति ॥ २८ ॥

इति सत्राहीनेषु व्यवस्थितधर्मातिदेशाधिकरणम् ॥ ५ ॥

### भाष्यसन्दर्भयोजिनी

यजतिचोदनाचोदितः, सत्रात्मको द्वादशाहश्च आसनोपायिचोदन इति व्यवस्थायां सिद्धायां विकृतिष्वपि तत्तत्सामान्यमादायातिदेशो व्यवस्थया सिध्यतीति भावः ॥ २५ ॥

एवं प्रकृतिभूतद्वादशाहस्य द्विरूपत्वं प्रदर्श्य विकृतिषु विद्यमानं द्विरूपत्वं दर्शयितुं प्रश्नेनोपक्रमते—अत्राहेति। तदुच्यत इत्युत्तरमाह। स्पष्टोऽर्थः ॥ २६ ॥

अहीनानां विकृतीनां रूपं प्रदर्श्य सत्रात्मनो रूपं दर्शयति—त्रयोदशेति। एवञ्च द्विरात्रप्रभृत्येकादशरात्रपर्यन्ता विकृतयोऽहीनाः, त्रयोदशरात्रप्रभृति सहस्रसंवत्सरपर्यन्ता विकृतयस्सत्रभूता इति ज्ञाते मध्ये विद्यमानस्य द्वादशाहस्य द्विरूपत्वं सिद्धं भवतीति सुहृद्भूत्वा प्रतिपादितम्। सम्प्रति हेतुहेतुमद्भावेन तदेव साधयति—एवं वेति। स्पष्टोऽर्थः ॥ २७ ॥

अहीनशब्दनिर्वचनाय प्रमाणं दर्शयति—अग्निष्टोम इति। अग्निष्टोमरूपी प्रजापतिः प्रथममेकदिनसाध्यान् सोमयागानसृजत। तं द्विरात्रादयोऽहर्गणास्सम्भूय प्रार्थितवन्तो वयं त्वया न हातव्या इत्यतो हेतोस्तेषामहीन इति संज्ञा जातेत्यर्थः। अन्हा न हीयत इत्यहीनः। द्विरात्रप्रभृत्येकादशाहपर्यन्तं ये यागा विहितास्तेऽहन्यहनि कर्तव्या इत्यहीना भवन्तीत्यर्थः ॥ २८ ॥

इति सत्राहीनेषु व्यवस्थितधर्मातिदेशाधिकरणम् ॥ ५ ॥

## भाष्यम्

६

## अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ ८.२.२९ ॥

### विषयसंशयपूर्वपक्षाः

पञ्चदशरात्रं कुण्डपायिनामयनञ्चोभावप्यहीनौ । कस्मात् ? अन्यतरतोऽतिरात्रत्वात् । उभावप्येतावन्यतरतोऽतिरात्रौ, तेनाहीनाविति । पञ्चदशरात्रस्तावत् 'त्रिवृदग्निष्टुदग्निष्टोम स्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः' इति । कुण्डपायिनामयनमपि 'मासमग्निहोत्रं जुहोति'

## टुप्टीका

यत्रातिरात्रोऽन्ते दृश्यते सोऽहीनः । अत्रान्तेऽतिरात्रः । तस्मादहीनत्वम् । एवं चेदहीन-

## वार्तिकाभरणम्

अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥

इह पञ्चदशारात्रः कुण्डपायिनामयनं चोदाहरणम् । तत्र संशयः—किमुभयत्राप्यहीनविध्यन्तः ? उत सत्रविध्यन्तः ? इति । तदर्थञ्च किमुभयोरहीनत्वमुत सत्रत्वमिति । पूर्वपक्षमाह—यत्रेति । यत्रातिरात्रोऽन्ते दृश्यते सोऽहीनः । द्विरात्रादौ तथा दर्शनादित्यर्थः । ततः किमायातमित्यत आह—अत्रेति । पञ्चदशरात्रेऽतिरात्रोऽन्ते दृश्यते । 'त्रिवृदग्निष्टुदग्निष्टोमः' 'त्रिरात्रो दशारात्र उदयनीयोऽतिरात्र' इति कुण्डपायिनामयने चातिरात्रोऽन्ते

## तन्त्रशिखामणिः

सू० अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वात्कुण्डपायिनामयनस्य च तद्भूतत्वदर्शनात् ॥

त्रयोदशरात्रादिषु सत्रद्वादशाहप्रवृत्तिरित्युक्तमयुक्तम् इत्युत्थितेस्सङ्गतिः । पञ्चदशरात्रे कुण्डपायिनामयने च किमहीनात्मकस्य द्वादशाहस्य विध्यन्तः ? उत सत्रात्मकस्येति संशयः । तदर्थञ्च किमेते अहीने उत सत्रे इति । तत्र 'यदन्यतरतोऽतिरात्रस्तेनाहीन, इति पञ्चदशरात्रप्रकरणेऽन्यतरतोऽतिरात्रस्याहीनत्ववचनाद-नयोश्चान्यतरतोऽतिरात्रत्वादहीनद्वादशाहविध्यन्त इति प्राप्तेऽभिधीयते, न ह्येवं वचनमस्ति—योऽन्यतरतोऽ-

## भाष्यसन्दर्भयोजिनी

६

### विषयसंशयपूर्वपक्षाः

पञ्चदशरात्रं कुण्डपायिनामयनञ्च विषयः । किमनयोरहीनत्वमुत सत्रत्वमिति सन्देहः । उभावप्य-हीनाविति पूर्वपक्षः । तत्र हेतुं निर्दिशति—अन्यतरत इति । यद्यप्युभयोः 'आसीरन्' 'उपेयुः' इति तत्तदुत्पत्तिवाक्ये शब्दतस्सत्रलक्षणाक्रान्तत्वेऽपि अन्यतरतोऽतिरात्र इत्यहीनस्वरूपस्यापि विद्यमानत्वादहीनत्वं कुतो न भवेदिति पूर्वपक्षिण आशयः । पञ्चदशरात्रस्याहीनत्वे तत्रत्यामहःक्लृप्तिं प्रमाणयति—त्रिवृदिति । अन्ते चातिरात्रः । एवं कुण्डपायिनामयनेऽप्यन्तेऽतिरात्रः । अतश्चान्यतरतोऽतिरात्रत्वमुभयोस्तुल्यम् । अन्यतरतोऽतिरात्रत्वेऽहीनत्वं

## भाष्यम्

इत्यारभ्य 'यावद्दशरात्रो महाव्रतमुदयनीयोऽतिरात्रः' इति। यश्चान्यतरतोऽतिरात्रः सोऽहीनः। कथं ज्ञायते? तद्भूतेष्वहीनत्वस्य दर्शनात् तद्भूतेषु-अन्यतरतोऽतिरात्रभूतेषु अहीनत्वं श्रूयते-'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति ॥ २९ ॥

## अहीनवचनाच्च ॥ ८.२.३० ॥

अहीन इति चायं पञ्चदशरात्रः प्रत्यक्षमुक्तः-'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति। तस्मादप्यहीन इति ॥ ३० ॥

## टुप्टीका

विध्यन्तोऽत्र ॥ २९ ॥ ३० ॥

## वार्तिकाभरणम्

दृश्यते। 'मासमग्निहोत्रं जुहोती'त्यारभ्य यावद्दशरात्रं महाव्रतमुदयनीयोऽतिरात्रः' 'तत्सामान्यादितरेषु तथात्वमि'ति न्यायात्। तयोरहीनत्वादित्यर्थः। ननु 'सत्रे वै यज्ञे ये काममिच्छन्ति त एवं पञ्चदशरात्रमुपेयुरि'ति-पञ्चदशरात्रे उपेयिचोदनाद् 'भूतिकामा उपेयुरि'ति। कुण्डपायिनामयनेऽपि उपेयिचोदनादनयोः सत्रत्वमेव युक्तमिति चेत् सत्यम् सत्रलिङ्गं समस्ति, तत्तु दुर्बलं येन 'शास्त्रस्था वा तन्निमित्तत्वादि'ति न्यायेनाहीनलिङ्गं प्रबलम्। श्रूयते हि शास्त्रं 'यद्यन्यतरतोऽतिरात्रस्तेनाहीनः' इति। तस्मात् प्रबलाहीनलिङ्गेनानयोरहीनत्वमेव युक्तम्। सिद्धान्तसूत्रमाह—

## तन्त्रशिखामणिः

तिरात्रस्सोऽहीन इति। यत्त्विदं वचनम् 'यदन्यतरतोऽतिरात्रस्तेनाहीन' इति तत् स्वयं सत्रमप्येवं पञ्चदशरात्रोऽन्यतरतोऽतिरात्रत्वादहीनवत् प्रशस्त इति पञ्चदशरात्रस्तुतिपरम्। किञ्चास्मादेव वाक्यात्पञ्चदशरात्रस्य सत्रत्वम्, तस्य स्वत एवाहीनत्वे हि अहीनत्वेन स्तुतिरसमञ्जसा स्यात्। तस्मात्पञ्चशरात्रस्सत्रम्। कुण्डपायिनामयनमपि 'गृहपतिर्गृहपतिस्सुब्रह्मण्यस्सुब्रह्मण्य' इति सत्रलिङ्गगृहपतिदर्शनात्सत्रम्। ततश्चोक्तलिङ्गोपोद्बलिताच्चोदनावाक्यगतत्वेनान्यतरतोतिरात्रत्वरूपाहीनलिङ्गाद् बलीयस उपेयिचोदनावत्वलिङ्गादुभयोस्सत्रत्वम्। अतस्तयोस्सत्रद्वादशाहविघ्दन्तप्रवृत्तिरिति दिक् ॥

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणौ
अष्टमस्य द्वितीयः पादः ॥

## भाष्यसन्दर्भयोजिनी

कस्मादुच्यत इत्यत आह—यश्चेति। योऽन्यतरतोऽतिरात्रो भवति सोऽहीन इत्यर्थः। अन्यतरतोऽतिरात्रत्वमात्रेणाहीनत्वं कथं निश्चीयत इति पृच्छति—कथमिति। यत्र यत्रान्यतरतोऽतिरात्रत्वं तत्र तत्राहीनत्वमित्यत्र वाक्यं प्रमाणयति—यदन्यतरत इति ॥ २९ ॥

प्रत्यक्षं हीदं वचनम्—'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति। अत्र तेनपदेनान्यतरतोऽतिरात्रवत्वस्याहीनत्वे हेतुरुच्यते। निगमयति—तस्मादपीति ॥ ३० ॥

### भाष्यम्

### सिद्धान्तः

## सत्रे वोपायिचोदनात् ॥ ८.२.३१ ॥

सत्रे वैते नाहीनौ। कुतः? उपायिचोदनात्। य एव भूतिकार्यमिच्छन्तस्त एनं पञ्चदशरात्रमुपेयुः। कुण्डपायिनामयनेऽपि 'भूतिकामा उपेयुः' इति। कः पुनरेतयोर्लिङ्गयोर्विशेषः? चोदनागतमेकम् वाक्यान्तरगतमन्यत्। चोदनागतं यत्तदन्तरङ्गं भवति। बहिरङ्गमितरत्। अयञ्चापरो विशेषः-अहीनलिङ्गेन च नित्येनाहीनस्य संस्तुतिर्नोपपद्यते। उपपत्त्यैतदहीनत्वमुच्यते-'यदन्यतरतोऽतिरात्रस्तेनाहीन' इति। सा यदि तावदुपपत्तिस्साधिका, ततोऽन्त-

### टुप्टीका

अध्येतारस्सत्रमिदं स्मरन्ति। न चेदृग्वचनमस्ति-योऽन्यतरतोऽतिरात्रस्सोऽहीन इति। यमध्येतारोऽहीन

### वार्तिकाभरणम्

सत्रे वोपायिचोदनात् ॥

**अध्येतार इति**। सत्रसमाख्याते काण्डे तावदध्येतारः कल्पसूत्रकाराः कर्मद्वयमिदं सत्रं स्मरन्ति। तथा च समाख्याबलात्कर्मद्वयमिदं सत्रमित्यर्थः। अत्र कर्मद्वयमिदमिति पदद्वयमध्याहार्यम्। यद्यन्यतरतोऽतिरात्रः तेनाहीन इति शास्त्रेण गम्यमानमहीनलिङ्गं प्रबलम्। तेनानयोरहीनत्वमिति पूर्वपक्षे भाष्योक्तम् यत्तद्दूषयति—**न चेति** यदिदं शास्त्रं स्यात् तदा तद्गम्यं लिङ्गं प्रबलं स्यात्। न चेदं शास्त्रम् विध्यश्रवणात्। किन्तु पञ्चदशरात्रस्तुतिसमर्पकम् पञ्चदशरात्रस्तावत् सत्रमुपेयिचोदनात्। अन्यतरतोऽतिरात्रत्वादहीनः। तस्मादुभयात्मकत्वात्प्रशस्तोऽयमितरसत्रेभ्य इति, तस्मात्पञ्चदशरात्रः सत्रं नाहीनः। यदि श्रुत्युपोद्बलितलिङ्गोऽपि पञ्चदशरात्रः सत्रं किमुत कुण्डपायिनामयनम्। तस्मादुभे अपि सत्रे इत्यर्थः। तर्हि कीदृशो ऽहीन इत्यत आह—**यमिति**। यं क्रतुमध्येतारः कल्पसूत्रकारा अहीन इति स्मरन्ति स एवाहीनः। अध्येतृस्मरणाभावात् पञ्चदशरात्रः कुण्डपायिनामयनञ्च नाहीना इत्यर्थः। पूर्वमहीनत्वलिङ्गस्य शास्त्रगम्यत्वाभावाद्दौर्बल्यमुक्तम्।

### भाष्यसन्दर्भयोजिनी

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चोत्पत्तिवाक्ये 'उपेयुः' इति शब्दस्य सत्त्वादुपायिचोदनाचोदितत्वं तावत् स्पष्टमिति दर्शयन् सिद्धान्तमाह—**सत्रे वैते इति**। ननु पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चाहीनत्वे 'अन्यतरतोऽतिरात्र' इति लिङ्गं समुपस्थापितम्, सत्रत्वे चोपेयिचोदनाचोदितत्वं प्रदर्श्यते। कोऽनयोर्विशेष इति प्रश्नपूर्वकं समाधत्ते—**कः पुनरेतयोरिति**। चोदनागतत्वेन वाक्यान्तरगतत्वेन चोभयोर्विशेषः। उत्पत्त्युत्पन्नवाक्यगतयोर्मध्ये उत्पत्तिगतस्यान्तरङ्गत्वं तद्भिन्नगतस्य च बहिरङ्गत्वं विशेष इत्यर्थः। नन्वन्तरङ्गत्वेन बहिरङ्गत्वेन च विशेषे सत्यपि तादृशविशेषत्वसाधकप्रमाणे सत्यपि स्तुत्यस्तावकभावो नोपपद्येतेति शङ्कते—**अहीनलिङ्गेनेति**। पञ्चदशरात्रस्याहीनत्वे सत्येव 'यदन्यतरत' इति वाक्येन तत्संस्तुतिरुपपद्येत नान्यथेत्यर्थः। समाधत्ते - **उपपत्त्येति**। 'यदन्यतरत' इति वाक्यं नेदं बोधयति-योऽन्यतरतोऽतिरात्रस्सोऽहीन इति, सर्वत्राहीनेषु अन्यतरतोऽतिरात्रत्वमस्तीति तदुपपादकत्वमात्रमेवास्य वचनस्य। अर्थान्नेदं वचनमहीनत्वसाधकम्। नन्विदं वचनमहीनत्वसाधकं न वा? नाद्य इत्याह—**सा यदीति**। न द्वितीय इत्याह—**अथ नेति**।

### भाष्यम्

रेणापि वचनं सिद्धमहीनत्वम् । अथ न साधिका उच्यमानमपि न सिध्यति । तस्मान्नैतद्वचनम् । किं तर्हि ? अनुवादोऽयं स्तुत्यर्थः । स्तुतिश्च नित्येनाहीनलिङ्गेनान्यतरतोऽतिरात्रत्वेनाहीनस्य नोपपद्यते । यत्कारणम् सर्व एवान्यतरतोऽतिरात्रः । सत्रस्य तूपपद्यते, येन तावदयमन्यतरतोऽतिरात्रस्तेनाहीनः । आत्मना च सत्रम् । अत उभयात्मा विशिष्टोऽयमन्येभ्यस्सत्रेभ्य इति ॥ ३१ ॥

## सत्रलिङ्गञ्च दर्शयति ॥ ८.२.३२ ॥

सत्रलिङ्गञ्च कुण्डपायिनामयने दर्शयति-'गृहपतिर्गृहपतिः सुब्रण्यस्सुब्रह्मण्यः' इति । गृहपतिर्हि सत्र आम्नातः-'गृहपतिसप्तदशास्सत्रमुपेयुः' इति । सत्रे च तेनार्थः क्रत्वर्थान् यजमानान् कर्तुम् । अन्येषां यजमानानां व्यावृत्तत्वात् । तस्मात् सत्रे एवैते इति ॥ ३२ ॥

इति पञ्चदशरात्रकुण्डपायिनामयनयोस्सत्रत्वाधिकरणम् ॥ ६ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्य द्वितीयः पादः ॥

### टुप्टीका

इति । उपायिचोदनेन सत्रलिङ्गेन सत्रत्वम् ॥ ३१ ॥

### वार्तिकाभरणम्

इदानीं शास्त्रगम्यत्वेऽपि तस्य दौर्बल्यमाह—उपायिचोदनेनेति । उपेयुरित्युपेयिचोदनस्य सत्रलिङ्गस्य प्रधानचोदनागतत्वेनान्तरङ्गत्वात् प्राबल्यम् । अहीनलिङ्गस्य तु वाक्यान्तरगतत्वेन बहिरङ्गत्वाद्दौर्बल्यम् । ततश्च प्रबलेन सत्रलिङ्गेनानयोः सत्रत्वमेव युक्तमिति भावः ।

इति श्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु टुप् टीका व्याख्याने वार्तिकाभरणेऽष्टमस्याध्यायस्य द्वितीयः पादः ॥

### भाष्यसन्दर्भयोजिनी

अस्य वचनस्याहीनत्वसाधकत्वाभावेऽनेनोच्यमानमप्यहीनत्वं न सिध्येदित्यर्थः । न सिध्यति विधायकत्वाभावादित्यर्थः । वाक्यस्यास्य का गतिरित्यत आह—अनुवादोऽयमिति । ननु स्तुतिरपि नोपपद्यत इत्युक्तमित्यत आह—सर्व एवेति । सर्वस्यान्यतरतोऽतिरात्रत्वे स्तुतेः का सङ्गतिस्स्यादिति भावः । स्तुतिस्तु सत्रात्मकत्वे तूपपद्यत इत्याह—सत्रस्य त्विति । यस्मात्कारणादयमन्यतरतोऽतिरात्रस्तस्मादहीनः, स्वयञ्च सत्रमिति स्तुतिः । इदमेवास्य वैशिष्ट्यं यत्- अन्ये चाहीना एव, सत्राणि च सत्राण्येव; अयन्तूभयात्मेति स्तुतिरेवेति वैशिष्ट्यमिति भावः ॥ ३१ ॥

कुण्डपायिनामयनस्य सत्रलिङ्गं दर्शयति—गृहपतिरिति । गृहपतिशब्दस्सत्र एव प्रयुज्यते नाहीने । एवञ्च कुण्डपायिनामयनं सत्रमिति सिध्यति । तेनार्थः तेन प्रयोजनमित्यर्थः । सप्तदश यजमानास्सत्रोद्देशेन विधीयन्त इति ते क्रत्वर्था भवन्तीति भावः । एते पञ्चदशरात्रकुण्डपायिनामयने ॥ ३२ ॥

इति पञ्चदशरात्रकुण्डपायिनामयनयोः सत्रत्वाधिकरणम् ॥ ६ ॥

अष्टमस्य द्वितीयः पादः ॥

# अष्टमस्य तृतीयः पादः

## भाष्यम्

१

## हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ ८.३.१ ॥

### विषयः

इह हविर्गण उदाहरणम्—'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्' (मै. सं. २.३.५.) अग्नये पावकाय, अग्नये शुचये' इत्येवमादयः ।

## वार्तिकाभरणम्

अत्राचार्यैः तृतीयपादे एकमधिकरणं त्यक्तम् । तद्वयं वर्णयामः ।

हविर्गणे परमुत्तरस्य देशसामान्यात् ॥

इह हविर्गण उदाहरणम् । अध्वरकल्पायां श्रूयते—'अग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुरि'ति । तत्र संशयः—किं प्रथमे आग्नावैष्णवयागे प्रथमस्याग्नेयस्य विध्यन्तः तृतीये बार्हस्पत्ययागे तृतीयस्याग्नीषोमीयस्य विध्यन्तः ? उत विपरीतमिति । तत्र क्रमसामान्यात्प्रथमे प्रथमविध्यन्तः, तृतीये तृतीयविध्यन्त इति प्राप्ते—

## तन्त्रशिखामणिः

सू० हविर्गणे परमुत्तरस्य देशसामान्यात् ॥

द्वादशाद्यहर्गणप्रसङ्गादिह गणविषयिणी चिन्ता प्रस्तूयत इति पादान्तरता आनन्तर्यञ्च । 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः' इत्यध्वरकल्पायां श्रूयते । प्रकृतौ प्रथम आग्नेयो द्वितीय उपांशुयाजस्तृतीयोऽग्नीषोमीयः । तत्र प्रथमस्याग्नावैष्णवस्याग्नेयविध्यन्तश्चरमस्य

## भाष्यसन्दर्भयोजिनी

१

### विषयः

पूर्वस्मिन् पादेऽस्फुटलिङ्गादतिदेशो निरूपितः । अस्मिंश्च पादे स्फुटलिङ्गात्स विचार्यत इति सङ्गतिं मनसि निधायोदाहरति—इहेति । हविर्गणः हविषां गणः । हविषां गणोऽयं पौर्णमासविकृतिरिति तावत्स्पष्टम् । तत्र पौर्णमास्याम्—आग्नेयः उपांशुयाजः, अग्नीषोमीयपुरोडाशश्चेति प्रधानानां क्रमो नियतः । हविर्गणेऽपि क्रमो नियतः ।

## भाष्यम्

### संशयः

तत्र चिन्त्यते—किं शुचिदेवतस्याग्नीषोमीयविध्यन्तः आग्नावैष्णवस्याप्याग्नेयविध्यन्तः ? उत विपर्ययः? इति । किं प्राप्तम् ?

### पूर्वपक्षः

हविर्गणे परं शुचिदेवतम् उत्तरस्याग्नीषोमीयस्य विकारः । पूर्वमप्याग्नावैष्णवं पूर्वस्याग्नेयस्य विकारः । कुतः ? देशसामान्यात् । क्रमसामान्यादित्यर्थः । इह शुचिदेवतो

## वार्तिकाभरणम्

ब्रूमः, देवतासामान्याद्द्विदेवत्ये आग्नावैष्णवे आग्नीषोमीयविध्यन्तः । एकदेवताके बार्हस्पत्ये आग्नेयविध्यन्तः । देवता हि शाब्दत्वात् प्रबला, क्रमस्त्वशाब्दत्वाद्दुर्बलः । तस्मात्प्रथमे तृतीयाविध्यन्तः तृतीये प्रथमविध्यन्तः ।

अत्र भाष्यकारेण हविर्गणा उदाहरणम् । 'आग्नये पावकायाग्नये शुचयेऽष्टाकपालं निर्वपेत्' 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' 'सरस्वत्यै चरुं बार्हस्पत्यं चरुम्' इत्येवमादयः । तत्र चिन्त्यते किं शुचिदेवतस्थाग्नीषोमीयविध्यन्तः ? आग्नावैष्णवस्याग्नेयविध्यन्तः ? उत विपर्यय इति । किं प्राप्तम् ? हविर्गणे परमुत्तरं शुचिदेवतमुत्तरस्याग्नीषोमीयस्य विकारः । पूर्वमप्याग्नावैष्णवं पूर्वस्याग्नेयस्य । कुतः ? देशसामान्यात् क्रमसामा-

## तन्त्रशिखामणिः

न्यादिबार्हस्पत्यस्याग्नीषोमीयविध्यन्त इति प्राप्तेऽभिधीयते-प्रथमतृतीयभावस्येतरापेक्षप्रतीतिकत्वेन विलम्बिनत्वात् स्थानसामान्यमनादृत्य निरपेक्षतयोत्पत्तिवेलायामेव प्रथमप्रतीतस्य देवतासामान्यस्य बलीयस्त्वात् द्विदेवताकत्वसामान्यात् प्रथमस्थितस्यास्याग्नावैष्णवस्य तृतीयस्थानस्थिताग्नीषोमीयविध्यन्तः । तृतीयस्थानस्थितस्यापि बार्हस्पत्यस्यैकदेवताकत्वसामान्यात् प्रथमस्थानस्थिताग्नेयविध्यन्तः । एतेन गणत्वसामान्यादहर्गणस्य गणविध्यन्त इति परास्तम् । गणत्वस्याशाब्दत्वात् । प्रचयगम्यत्वेन विलम्बितप्रतीतिकत्वाच्च । तदपेक्षया शाब्दस्याविलम्बित-

## भाष्यसन्दर्भयोजिनी

### संशयः

तत्रायं संशयः—किं स्थानसाम्यादन्तिकं हविरन्तिमस्य यागस्य विकृतिः, प्रथमञ्च प्रथमस्य ? अथवा देवतासाम्यस्याधिकयात् प्रथमं हविरन्तिमस्य विकृतिः, अन्तिमञ्च प्रथमस्य विकृतिरिति ।

### पूर्वपक्षः

**परम्** अन्तिमम् । **उत्तरस्य** अन्तिमस्य विकृतिं प्रथमञ्चान्तिमस्येति पूर्वपक्षः । **पूर्वमपि** प्रथमस्थानपठितमपि हविर्गणे । **पूर्वस्य** प्रथमपठितस्य पौर्णमास्याम् । **क्रमसामान्यादिति** सौत्रहेतोर्विवरणम् । **इह** हविर्गणे ।

## भाष्यम्

द्वितीयः, प्रकृतावप्यग्नीषोमीयो द्वितीयः। इतरत्राप्याग्नावैष्णवः प्रथमः, प्रकृतावप्याग्नेयः प्रथमः। देशसामान्येन लिङ्गेन परमुत्तरस्य, पूर्वं पूर्वस्य विकारः ॥ १ ॥

## सिद्धान्तः

### देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ ८.३.२ ॥

न वा देशेन नियमस्स्यात्। किं तर्हि ? देवतया। देवतासामान्यात्। कुतः ? शब्दवती देवता—आग्नावैष्णवं अग्नये शुचये इति। इतरस्य देशस्य अश्रुतित्वात्। देशो न श्रूयते। किं तर्हि ? प्रचयाद् गम्यते। किमतः ? एतदतो भवति-देवताप्रत्ययः कर्मचोदनायामनन्तरत्वान्मुख्यः,

## वार्तिकाभरणम्

त्यर्थः। इह शुचिदेवतो द्वितीयः। प्रकृतावप्यग्नीषोमीयो द्वितीयः। इतरत्राप्याग्नावैष्णवः प्रथमः। प्रकृतावप्याग्नेयः प्रथमः। देशसामान्येन लिङ्गमुत्तरमुत्तरस्य पूर्वं पूर्वस्य विकार, इत्यग्नीषोमीययागस्य द्वितीयभाव उक्तः। यद्यपि तस्य द्वितीयभावः, पठ्यमानशाखासु न दृश्यते, तथापि शाखान्तराभिप्रायेणोक्तमिति ध्येयम्। न चाग्नीषोमदेवताकोपांशुयाजयागस्य द्वितीयत्वात्तदभिप्रायं भाष्यमिति वाच्यम्। 'अग्नये पावकाय अग्नये शुचये अष्टाकपालं निर्वपेदि'ति शुचिदेवताकयागस्य पुराडाशद्रव्यकत्वेन द्रव्यसामान्यस्य च बलीयस्तयोपांशुयाजविकारत्वासम्भवात् ॥

## तन्त्रशिखामणिः

प्रतीतिकस्य च देवतासामान्यस्य बलीयस्त्वात्। तस्माद्देवतासामान्यादेवात्र विध्यन्तनियमः। ननु यथाम्नायं प्रकृतिक्लृप्तक्रमेणानुष्ठाने प्रयोगप्राशुभावः प्रयोगविध्यपेक्षितो भवति, इतरथा तु प्रयोगविध्यननुमतः प्रयोगविलम्ब इति स्थानसामान्यमेवादर्तव्यमिति चेत्, न, प्रथमप्रतीतदेवतासामान्याद्विध्यन्तप्रवृत्तौ (न ?) निश्चितायां प्रयोगविलम्बस्य प्रामाणिकत्वेनादोषत्वादित्याहुः ॥

## भाष्यसन्दर्भयोजिनी

द्वितीयः अन्तिमः। इतरत्र हविर्गणे। एवञ्च देशसामान्येन परं हविर्गणेऽन्तिमम्। उत्तरस्य पौर्णमास्यामन्तिमस्य एवं पूर्वं पूर्वस्य विकारः ॥१॥

## सिद्धान्तः

देशेन देशसामान्येन न नियमः प्रकृतिविकृतिनियमो न स्यादित्यन्वयः। देवतायाः शब्देन प्रतिपादितत्वात्तत्सामान्यमेव ग्राह्यमित्याह—शब्दवतीति। यथा देवता शब्देन प्रतिपादिता न तथा देशः प्रतिपादित इत्याह—देश इति। प्रचयात् अनुमानतः अर्थाद्वा इत्यर्थः।

देशदेवतयोर्मध्ये देवता विधिवाक्येन प्रत्यक्षं बोध्यते, देशस्त्वर्थाद् गम्यते। तत्र देवताप्रत्ययस्य

### भाष्यम्

इतरस्तु पौर्वापौर्यापेक्षयोत्पद्यते, तस्माज्जघन्यः। मुख्यानुग्रहश्च न्याय्यः। अतःशुचिदेवस्याग्नेयस्य विध्यन्तः, आग्नावैष्णवे चाग्नीषोमीयस्य ॥ २ ॥

इत्याग्नावैष्णवादौ देवतासामान्यादतिदेशाधिकरणम् ॥ १ ॥

२

## गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ८.३.३ ॥

### विषयः

जनकसप्तरात्रे श्रूयते—'चत्वारि त्रिवृन्त्यहानि भवन्ति' (तां. ब्रा. २२.९.१) इति। तथान्यत्र श्रूयते—'नव त्रिवृन्त्यहानि भवन्ति' इति। तत्र सन्देहः—

### वार्तिकाभरणम्

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥

अत्र बुद्धिसौकर्यार्थं यथाभाष्यमधिकरणं वर्णयामः। सन्ति कुसुरविन्दादयोऽष्टौ सप्तरात्राः। तास्वष्टमो जनकसप्तरात्रः। तत्र श्रूयते 'चत्वारि त्रिवृन्त्यहानि भवन्ति अग्निष्टोममुखानी'ति। सन्ति चाहर्गणप्रकृतिभूतद्वादशाहान्तर्गतपृष्ठ्यषडहे त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशत्स्तोमकानि स्तोत्राणि। तत्र जनकसप्तरात्रे संशयः—किमाद्येषु चतुर्षु अहःसु षाडहिकस्याद्यस्य त्रिवृत्स्तोमकस्य विध्यन्तः प्रवर्तते ? उत त्रिवृत्पञ्चदशसप्तदशैकविंशस्तोमकानां चतुर्णामन्हां विध्यन्तः क्रमेण प्रवर्तन्त इति। तत्र 'चत्वारि त्रिवृन्त्यहानि

### तन्त्रशिखामणिः

सू० गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥

यदि शब्दात्प्रथमप्रतीतं देवतासामान्यं बलीयः तदा शब्दात् प्रथमप्रवृत्तत्रिवृत्सामान्यमेव बलीय इति द्वादशाहिके पृष्ठ्यषडहे प्राथमिकस्य त्रिवृत एवान्हो धर्माश्चतुर्ष्वपि प्रवर्त्तेरन्नित्युत्थितेस्सङ्गतिः। जनकसप्तरात्रे श्रूयते-'चत्वारि त्रिवृन्त्यहानि अग्निष्टोममुखानि भवन्ति' इति। प्रकृतौ च द्वादशाहे तत्र त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशस्तोमकानि बृहद्रथन्तरवैरूपादिसामसाधनकपृष्ठस्तोत्रवन्ति च षडहानि समाम्नातानि।

### भाष्यसन्दर्भयोजिनी

मुख्यत्वमाह—देवताप्रत्यय इति। मुख्यत्वे हेतुः—अनन्तरत्वादिति। व्यवधानाभावादित्यर्थः। देशप्रत्ययस्तु किं पूर्वं किमपरमित्यपेक्षापुरस्सरं जायत इति तस्य जघन्यत्वम्। निष्कर्षमाह—अत इति।

इत्याग्नावैष्णवादौ देवतासामान्यादतिदेशाधिकरणम् ॥ १ ॥

२

### विषयः

जनकसप्तरात्रमिति सप्तदिनसाध्यः कश्चन गणयागः। सप्तसंख्याकाः सप्तरात्राः क्रतवः, तेष्वयं जनकसप्तरात्रोऽष्टमः। अत्राहःक्लृप्तिः—चत्वार्यहानि त्रिवृत्स्तोमकानि अग्निष्टोममुखानि प्रथमहरग्निष्टोमसंस्थाकम्, इतराणि त्रीण्युक्थ्यसंस्थाकानि पञ्चममहः विश्वजित् अग्निष्टोमसंस्थाकम्, षष्ठमहः महाव्रतमग्निष्टोमसंस्थाकम्, सप्तममतिरात्रसंस्थाकञ्च। अन्यत्र ब्राह्मणान्तरे।

## भाष्यम्

### संशयः

किं पार्ष्ठिकस्य प्रथमस्यायमभ्यासः ? उत नानान्हां द्वादशाहिकानां स्तोमविधिरिति ? किं प्राप्तम् ?

## वार्तिकाभरणम्

भवन्ति अग्निष्टोममुखानी'ति गणचोदनायां पार्ष्ठिकस्य प्रथमस्याह्नो यल्लिङ्गं त्रिवृत्त्वं तेन चोदनागतत्रिवृत्व-लिङ्गसामान्येन प्राथमिकस्यान्हो विध्यन्तः प्रवर्तते। यथा 'अग्नये पावकायाग्नये शुचयेऽष्टाकपालं निर्वपेदि'ति गणचोदनागतैकदेवताकत्वलिङ्गसामान्येनाग्नेयविध्यन्ताभ्यास एवमिहापीति प्राप्ते—

ब्रूमः, त्रिवृत्पञ्चदशसप्तदशैकविंशस्तोमकानां चतुर्णां विध्यन्ताश्चतुर्षु क्रमेण प्रवर्तन्ते। 'चत्वारि त्रिवृन्त्यहानि भवन्ति अग्निष्टोममुखानी'ति चोदनागताः सङ्घातसामान्यात्। अहःसङ्घातः चतुर्णामन्हां विध्यन्तप्रवृत्तौ सम्भवति, नान्यथा। यत्तूक्तं त्रिवृत्वलिङ्गेन चतुर्ष्वपि प्रथमाहर्विध्यन्ताभ्यास इति तन्न; अङ्ग-भूतस्तोत्रीयागतत्रिवृत्वसामान्यलिङ्गस्य प्रधानचोदनागतसङ्घातसामान्यलिङ्गापेक्षया दुर्बलत्वाच्चत्वारि

## तन्त्रशिखामणिः

तत्र किं प्राथमिकस्य त्रिवृतश्चतुर्ष्वपि प्रवृत्तिः ? उत त्रिवृदादीनां चतुर्णामन्हां क्रमेण प्रवृत्तिः ? इति संशयः। तत्र पूर्ववत् गणत्वसामान्यस्य दुर्बलत्वात् त्रिवृत्त्वसामान्यादाद्यस्यैवाह्नः चतुर्षु प्रवृत्तिरिति प्राप्तेऽभिधीयते-पूर्वत्र सङ्घातसामान्यस्याशाब्दत्वेन दुर्बलत्वेऽप्यत्र त्रिवृत्त्ववत् सङ्घातस्यापि चत्वारीति शाब्दत्वे न दौर्बल्यम्। अतश्च-तुर्णामन्हां चतुर्षूक्तक्रमेण प्रवृत्तिः। न च विनिगमनाविरहः, त्रिवृत्त्वस्यापि अशाब्दत्वादिति वाच्यम्। चत्वारीति पदेन सङ्घातस्यैव प्रथमप्रतीतत्वात् तत्सामान्यं बलीयः। किञ्च सङ्घातत्वं प्रधानानां नियमः। त्रिवृत्वन्तु स्तोत्रीय-परिमाणरूपत्वादाग्नेयमिति दुर्बलम्। नन्वेवं द्वितीयादिष्वहस्सु पञ्चदशादीनां प्रवृत्तौ वाचनिकत्रिवृत्त्वविरोध-स्स्यादिति चेत्सत्यम्, वचनेन पञ्चदशादिमात्रबाधेऽपि तद्व्यतिरिक्तधर्मप्रवृत्तावविरोधात्। किञ्च त्रिवृत एव चतुर्षु प्रवृत्तौ तस्याग्निष्टोमत्वाच्चतुर्णामप्यग्निष्टोममुखानीति पक्षोऽनुपपन्नः। चतुर्णां प्रवृत्तौ त्वाद्यस्यैव त्रिवृतोऽग्नि-ष्टोमत्वादग्निष्टोममुखानीति घटते। तस्मादपि चतुर्णां प्रवृत्तिः। यत्तु भाष्यकृतात्र सिद्धान्तितम्-जनकसप्तरात्रेण यजेतेति गणचोदनया द्वादशाहतश्चोदकप्राप्तिरिति। चत्वार्यहान्यनूद्य त्रिवृन्तीति शक्यं विधातुम्, न तु त्रिवृन्ती-त्यनूद्य चत्वारीति, त्रिवृतां बहूनामिहाभावात्। अतो द्वादशाहिकानां क्रमेण प्रवृत्तिरिति। तदयुक्तम्। चत्वारि

## भाष्यसन्दर्भयोजिनी

### संशयः

'गणेषु द्वादशाहस्य' इत्यत्र गणयागानां द्वादशाहः प्रकृतिरित्युक्तम्। तत्र द्वादशाहे पृष्ठ्यष्षडहः त्रिवृत् पञ्चदशः सप्तदश एकविंशः त्रिणवः त्रयस्त्रिंश इति क्रमेण षण्णामन्हां स्तोमा विहिताः। तत्र किं 'चत्वारि त्रिवृन्ति' इत्यनेन पृष्ठ्यषडहस्य प्रथमेऽन्हि यः त्रिवृत्स्तोमो विहितः तस्यैवेतरेषु त्रिष्वहस्सु अभ्यासो विधीयते; तेन च त्रिवृद्विकारत्वमेषां चतुर्णामन्हाम् ? उत त्रिवृदाद्यहश्चतुष्टयविकारत्वम् ? इति। **पार्ष्ठिकस्य** पृष्ठ्यषडहसम्बन्धिनः **प्रथमस्य** अन्हो यः त्रिवृत्स्तोमः **तस्याभ्यासः**। उत त्रिवृदादिस्तोमयुक्तानां **नानान्हां स्तोमविधिरित्यर्थः**।

## भाष्यम्

### पूर्वपक्षः

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेत, आग्नेयवत् । गणचोदनायामेवंविधायां यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्यान्हस्त्रिवृत्त्वं तस्यैवावृत्तिः प्रतीयेत, चोदनासामान्यात् । अग्नेयवत् । तद्यथा—'अग्नये पावकाय अग्नये शुचये' इति देवतैक्याच्चोदनासामान्यादाग्नेयस्य

## वार्तिकाभरणम्

त्रिवृन्त्यहानीत्यनेन जनकसप्तरात्रेण यजेतेत्यनेनोत्पन्नानि चत्वार्य्यहान्यनूद्य त्रिवृत्त्वं विधीयते तानि त्रिवृन्तीति । एवञ्च वाचनिकत्रिवृत्वव्यतिरिक्तानामन्हां विध्यन्तप्राप्तिर्भवति त्रिवृन्तीत्यनूद्य चतुःसङ्ख्याविधाने त्रिवृत्वस्य विधानाभावेन त्रिवृत्पञ्चदशसप्तदशैकविंशानामहर्धर्मणां बाधो न स्यात् । तस्मान्नानान्हां धर्मप्राप्तिः । एवञ्च 'चत्वारि त्रिवृन्त्यहानि भवन्ति अग्निष्टोममुखानी'त्येष वादो युज्यते । त्रिवृत एव विध्यन्तश्चतुर्षु

## तन्त्रशिखामणिः

त्रिवृन्तीत्यनेन चतुस्सङ्ख्यात्रिवृत्वाग्निष्टोममुखत्वविशिष्टानि कर्माण्युत्पद्यन्ते तेषाञ्च प्रयोगा 'जनकसप्तरात्रेण यजेत' इत्यनेन विधीयन्ते, न तु जनकसप्तरात्रेण यजेतेत्यनेन विहितेषु सप्तस्वहस्सु चत्वार्यहान्यनूद्य त्रिवृत्त्वं चत्वारि त्रिवृन्तीति वाक्येन विधीयते । तथा सति अग्निष्टोममुखानीत्यस्याविधेयत्वा·······भेदापत्तेः । न चाद्यानि चत्वार्य हान्यनूद्य त्रिवृत्वविधानादग्निष्टोममुखता प्राप्ताऽनूद्यत इति वाच्यम्, आद्यानामेवानुवाद इत्यत्र प्रमाणाभावादित्याचार्याः । अत्र केचिद्, यथा 'न गिरा गिरेति ब्रूयात्' इत्यनुवादबलाद् 'ऐरं कृत्वोद्गेयम्' इति विहितस्यैरापदस्य गिरापदस्थानतावसीयते, तथाग्निष्टोममुखानीत्यनुवादबलाच्चत्वारीत्यनुवादस्यापि आद्यचतुरहविषयत्वमवसीयते । न चात्र जनकसप्तरात्रेणेति प्रयोगविध्यपेक्षितोत्पत्तिविधिपरत्वं सम्भवति । चत्वारि त्रिवृन्तीत्यस्य त्विष्टाव्याद्यानां चतुर्णामन्हां त्रिवृत्वगुणविधित्वकल्पना न युक्ता । तथा सति प्रयोगवाक्यस्यैवोत्पत्तिविधिपरत्वमपि कल्पनीयमिति गौरवम् । किञ्चाग्निष्टोममुखत्वस्याविधेयत्वेऽग्निष्टोममुखानीत्यस्यान्यार्थदर्शनत्वापत्तेरिति वाच्यम्, विशिष्टविधिपक्षे विधेयानामन्हामाद्यत्वे न प्रमाणम्, प्रत्युताद्यानां चोदकत एवाग्निष्टोममुखत्वप्राप्तेराद्यानां नाग्निष्टोममुखत्वविधिसम्भव इत्याद्यमहर्वर्जयित्वा यानि कान्यप्यहानि सङ्ख्यादिविशिष्टानि विधेयानि स्युः । ············तीत्यत्र विशेषनियामकाभावात् । न च सत्यां गतावनियमो युक्त इत्यग्निष्टोममुखानीत्यनुवादबलाच्चत्वारीत्यनुवादस्याद्यचतुरहविषयत्वमेव कल्पनीयम् । एवञ्चाग्निष्टोममुखानीत्यस्यानुवादतया 'तथा चान्यार्थदर्शनम्' इति सूत्रितम् । त्रिवृत एव चतुर्षु प्रवृत्त्यभावे लिङ्गमन्यन्न मृग्यम् । अग्निष्टोममुखानीत्यस्यैव तत्र लिङ्गसम्भवात् । अग्निष्टोममुखानीत्यस्यापि विधेयत्वे त्वन्यदन्यार्थदर्शनं मृग्यं स्यात् । अतश्चत्वारि त्रिवृन्तीति वाक्यं विधिपरत्व-

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

प्रथमस्यान्हो यः स्तोमस्तस्यैवावृत्तिरिति पूर्वपक्षः । गणचोदनायां गणयागविधायकवाक्ये 'चत्वारि त्रिवृन्त्यहानि' इति पृष्ठ्यषडहस्य प्रथमस्यान्हो यल्लिङ्गं त्रिवृदिति तस्याभ्यास इत्यर्थः । पूर्वस्मिन्नधिकरणे

भाष्यम्

विध्यन्ताभ्यासः, एवमिहापि ॥ ३ ॥

## नानाहानि वा सङ्घातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥ ८.३.४ ॥

सिद्धान्तः

नानाहानि वा द्वादशाहिकानि प्रवर्तेरन् न पार्ष्ठिकं प्रथममहः । कस्मात् ? सङ्घात-

टुप्टीका

सन्ति च तत्र चोदनया प्रवृत्तानि द्वादशाहिकानि चत्वारि । तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते इत्येतदनुपपन्नम् । 'जनकसप्तरात्रेण यजेत' इति प्रयोगचोदनेयम् । प्रयोगश्चोत्पत्तिं न त्यजति । अहश्शब्दो

वार्तिकाभरणम्

प्रवर्तेत इति पक्षे चतुर्णामग्निष्टोमत्वात्तेषामग्निष्टोममुखत्वं न स्यात्, तस्माच्चतुर्णां विध्यन्ताश्चतुर्षु क्रमेण प्रवर्तन्ते 'चत्वारि त्रिवृन्त्यहानि भवन्ती'त्येतत्त्रिवृत्वविधायकमिति वक्तुं प्रवृत्तं भाष्यं दूषयितुं सिद्धान्तसूत्रं पठति—

नानाहानि वा सङ्घातत्वात्प्रकृतिलिङ्गेन चोदनात् ।

तद्भाष्यमनुवदति—सन्तीति । दूषयति—एतदयुक्तमित्यादिना । न हि जनकसप्तरात्रेण यजेतेत्येत दुत्पत्तिवाक्यम् । येन 'चत्वारि त्रिवृन्त्यहानि भवन्ति' इत्यनेन तद्वाक्यप्राप्तानि चत्वारि अहान्यनूद्य त्रिवृत्वं विधीयेत । न त्वेवम्, किन्तु जनकसप्तरात्रेण यजेतेति प्रयोगचोदनेयं फलश्रवणात्प्रयोगचोदना तूत्पत्तिमपेक्षते । उत्पत्तिश्च न प्रयोगवाक्ये, वाक्यभेदप्रसङ्गात् । तस्माच्चत्वारि त्रिवृन्त्यहानि भवन्तीत्येतदेवोत्पत्ति वाक्यमित्यर्थः । ननु चत्वारि त्रिवृन्त्यहानि भवन्तीत्येतन्नोत्पत्तिवाक्यं फलाश्रवणात् । किन्तु फलश्रवणेऽप्युद-

तन्त्रशिखामणिः

सिद्धो जनकसप्तरात्रेणेति यागविधिरेव 'उद्भिदा यजेत पशुकाम इतिवदुत्पत्तिविधिपरत्वकल्पनावश्यम्भावाद् गौरवमपि प्रामाणिकत्वान्न दोषायेति भाष्यकारसिद्धान्त एव युक्त इत्याहुः ॥

वृत्तमधिकरणम्

सू०नानाहानि वा सङ्घातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥

पूर्ववदिहापि गणत्वसामान्याद् द्वादशाहिकविध्यन्तप्राप्तिरित्युत्थितेऽसङ्गतिः । षट्त्रिंशद्रात्रे श्रूयतेऽ-ये षडहा भवन्ति चत्वारो भवन्ति' इति । किमत्र चतुर्विंशतिसङ्ख्याकान्यहानि विधीयन्ते, तेषु च द्वादशाहिकस्य

भाष्यसन्दर्भयोजिनी

विधिवाक्यचोदितदेवतासामान्येन प्रकृतिविकृतिभावस्स्वीकृतस्तथैवात्रापि चोदनासामान्येन स्वीक्रियत इति भावः । आग्नेयवदिति दृष्टान्तं घटयति—देवतैक्यादिति ॥३॥

सिद्धान्तः

सौत्रं 'नानाहानि' इत्यस्य विवरणम्—द्वादशाहिकानीति । षडहपृष्ठ्यस्य प्रथमदिने त्रिवृत्स्तोमो वर्तते । तेऽप्यत्रातिदेशेन द्वितीयादिदिनेषु प्राप्ताः । ते स चात्रातिदिष्टः । तत्र द्वितीयादिदिनेषु पञ्चदशादयः स्तोमाः ।

## भाष्यम्

त्वात् । सङ्घात एष उच्यते—'चत्वारि त्रिवृन्त्यहानि' इति । पृथक्त्वनिवेशिनी हि चत्वारीति सङ्ख्या । पृथक्त्वेनाह्नां भवतीति । सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि

## टुप्टीका

यागविशेषवचनोऽश्रुतमपि विशेष्यमनुमापयति । नेदं विशेषणं यागमन्तरेण सम्भवति । यथा वज्रीतीन्द्रमनुमापयति । बहुवचनादनियतबहुत्वेषु चत्वारीति नियम्यते । तेषां त्रिवृत्त्वमग्निष्टोममुखत्वञ्च विधीयते । ननु 'चत्वारि त्रिवृन्त्यहानि भवन्ति' अत उत्पन्नानि 'जनकसप्तरात्रेण यजेत' इति फले विधीयन्ते । पूर्वपक्षे त्रिवृत्त्वेन लिङ्गेन प्रथमस्याह्नो विध्यन्तश्चतुर्ष्वपि ।

## वार्तिकाभरणम्

भिदादिवाक्यवज्जनकसप्तरात्रेण यजेतेत्येतदेवोत्पत्तिमपि विदध्यादित्यत आह—अहः **शब्दो यागविशेष वचनः** । सोमयागपरिमाणवचन इति यावत् । चत्वारि अहानि भवन्ति इत्यत्र श्रूयमाणोऽश्रुत**मपि विशेष्यं यागमनुमापयति** । न ह्यहः परिमाणं विशेषणं यागमन्तरेण सम्भवति । यथा वज्रीति विशेषणमिन्द्रमनुमापयती त्यर्थः । 'चत्वारि त्रिवृन्त्यहानि भवन्ती'ति वाक्येऽनेकगुणश्रवणादिदमेव कर्मोत्पत्तिपरम् । अन्यथा वाक्यभेद प्रसङ्गादित्यभिप्रेत्यानेकगुणविधानमेव दर्शयति— **बहुवचनादिति** । तानि त्रिवृन्तीत्येतावन्मात्राम्नाने जनक सप्तरात्रे सप्तानामह्नां विद्यमानत्वात्त्रयाणां वा चतुर्णां वा पञ्चानां वा षण्णां वा सप्तानां वा अनियमेन ग्रहणं स्यादिति चत्वारीति नियम्यते । तेषां चतुर्णामह्नां त्रिवृत्त्वमग्निष्टोममुखत्वञ्च विधीयते । चतुष्ट्वत्रिवृत्वाग्निष्टोम मुखत्वविशिष्टान्यहानि भवन्तीति । एवमनेकगुणविधानेऽपि विशिष्टकर्मविधानान्न वाक्यभेद इत्यर्थः । अनेन वाक्येनोत्पन्नानामह्नां जनकसप्तरात्रेण यजतेति वाक्यं फलसम्बन्धबोधकमित्याह—**चत्वारीति** । वाक्यभेद भयेन चत्वारि त्रिवृन्त्यहानि भवन्तीति वाक्यमेवोत्पत्तिविधिपरमिति पक्षे कथं पूर्वपक्षसिद्धान्तयोः प्रवृत्ति रिति मन्दधियामाशङ्का स्यादिति तन्निवृत्यर्थं भाष्यकारपक्षवदेव पूर्वपक्षसिद्धान्तप्रवृत्तिः सम्भवतीति दर्शयति—**पूर्वपक्ष इति** । त्रिवृत्त्वलिङ्गेन पाक्षिकस्य त्रिवृत्कस्य प्रथमस्याह्नो विध्यन्तश्चतुर्षु प्रवर्तत इति पूर्वपक्षः ।

## तन्त्रशिखामणिः

दशरात्रस्य दाशमिकन्यायेन प्रवृत्तिः ? पार्ष्ठिकस्याभिप्लविकस्य वा षडहस्य चतुरभ्यास इति । तत्र चत्वारष्षडहा इति षडहस्यैकस्य चाभ्यासो न विधीयते, तथासति चतुष्षडहोऽभ्यसनीय इति प्रयोगापत्तेः । किन्तु चतुर्विंशतिरहान्येवात्र विधीयन्ते । तथाहि षडहा इति षट्सङ्ख्याकानि सौत्यानि कर्माणि प्रयीयन्ते । अहश्शब्दस्याहःपरिमित सौत्यकर्मवचनत्वात् तेषु च चत्वार इति प्रत्येकं चतुस्सङ्ख्यावगम्यते पृथक्त्वनिवेशित्वात्सङ्ख्यायाः । एवञ्च चतुर्विंशतिरहानि विधीयन्ते । तेषु च गणत्वसामान्यात् द्वादशाहिकस्य दशरात्रस्य चतुर्विंशतिसङ्ख्यापूरणार्थं-

## भाष्यसन्दर्भयोजिनी

'चत्वारि त्रिवृन्त्यहानि' इत्यनेन विधानेन बाध्यन्ते । अर्थात् जनकसप्तरात्र आदितश्चतुर्षु दिनेषु त्रिवृत्स्तोम एव कर्तव्य इति । तथासति द्वादशाहिकं यद्दशरात्रं ततः स्तोमातिरिक्तमङ्गजातं तदतिदिश्यत इति सिध्यति । तदिदमाह—**न पार्ष्ठिकं प्रथममह इति** । अत्र हेतुः—**सङ्घातत्वादिति** । पार्ष्ठिकस्य प्रथमस्याह्नो यत् त्रिवृत्त्वं तत्सामान्ये विद्यमानेऽपि सङ्घातत्वरूपसामान्यस्याधिकस्य सत्त्वात् द्वादशाहिकान्यङ्गान्येव प्रवर्तन्त इति भावः ।

## भाष्यम्

**द्वादशाहिकानि चत्वारि। तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते। न तु त्रिवृन्ति बहून्यनूद्य तत्र**

## टुप्टीका

**सिद्धान्ते-यागानां गुणस्सङ्घातः। तदीयेन गुणेन नानाह्नां यो धर्मस्सोऽतिदिश्यते, सङ्घातसामान्यात्। त्रिवृत्त्वं पुनरङ्गावस्थितम्। तद् बहिरङ्गत्वाद्दुर्बलम्। एवं वर्णयितव्यमधिकरणम्। यथा भाष्यकारेण**

## वार्तिकाभरणम्

प्रधानभूतानां चतुर्णामहराख्यातानां सोमयागानां समुदायस्य चत्वारीति शाब्दत्वात् प्रधानयाग गतत्वाच्च सङ्घातरूपगुणस्य प्राबल्यम् ततश्च तदीयेन प्रधानयागसम्बन्धिना सङ्घाताख्येन गुणेन नानाह्नां नानाधर्मकाणां पार्ष्ठिकानां वाचिनिकत्रित्वव्यतिरिक्तो यो धर्मोऽस्ति स सर्वोऽप्यतिदिश्यते—सङ्घातसामान्यादिति सिद्धान्त इत्यर्थः। समासान्तविधेरनित्यत्वात्तदभिप्रायेण **नानाहानीत्युक्तम्। यो धर्मं** इति जातावेकवचनम्। ननु त्रिवृत्त्वस्यापि शाब्दत्वात् त्रिवृत्वलिङ्गेन वा प्राथमिकविध्यन्तश्चतुर्षु कुतो न प्रवर्तत इत्यत आह—**त्रिवृत्त्वं पुनरिति।** स्तोत्रन्तावत्प्रधानाङ्गम्। स्तोत्रिया तु तदङ्गम्। स्तोत्रियापरिमाणत्वात् त्रिवृत्त्वं तदङ्गमित्यर्थः। अस्तु को दोष इत्यत आह—**तदिति।** तत् त्रिवृत्त्वं प्रधानयागगतत्वेनान्तरङ्गभूतात् संघातलिङ्गादङ्गान्तर-गतत्वेन बहिरङ्गत्वाद्दुर्बलम्। ततस्त्रिवृत्त्वस्य दुर्बलत्वान्न तेन विध्यन्तप्रवृत्तिरित्यर्थः। **अङ्गावस्थितमिति** अङ्गाङ्गावस्थितमित्यर्थः। ननु पूर्वाधिकरण एव सङ्घातस्याशाब्दत्वेन सङ्घातलिङ्गान्न विध्यन्तप्रवृत्ति-रित्युक्तम्। सङ्घातस्य शाब्दत्वे देवतासामान्यवद् विध्यन्तप्रापकत्वं सिद्धम्। तथापि किमर्थमिदमधिकरणमित्यत आह—**एवमिति।** सत्यं सङ्घातः शाब्दः त्रिवृत्वमपि शाब्दम्, तथापि सङ्घातस्य प्रधानगुणत्वात् त्रिवृत्वस्याङ्गा-ङ्गगुणत्वात्, त्रिवृत्वापेक्षया सङ्घातस्यान्तरङ्गत्वेन प्रबलत्वमिति न्यायान्तरव्युत्पादनार्थमिदमधिकरणमिति-न काप्यनुपपत्तिरित्यर्थः।

भाष्यकारपक्षे बहवो दोषाः सन्तीत्युक्तम्। तत्कथमिति **पृच्छति कथमिति।** दोषानेव दर्शयितुमनू-दितमेव भाष्यं निष्कृष्यार्थतोऽनुवदति—**चत्वारीति विधीयत** इत्यत्र इति शब्दोऽध्याहार्यः। दोषानेव दर्शयति—

## तन्त्रशिखामणिः

मभ्यासेन प्रवृत्तिः। नन्वेवमभ्यासेन द्वादशाहिकदशरात्रप्रवृत्तौ चतुर्विंशदहाभावात्सङ्ख्यानुपपत्तिः सिद्धान्तवत्पूर्व-पक्षेऽपि तुल्या स्यादिति चेन्न; न त्वेतान्यहानि द्वादशाहिकान्येव प्रकरणान्तरन्यायेनैतेषामन्हां ततो भिन्नत्वात् किन्तु ततोऽभिन्नेष्वेव तद्विध्यन्तः परं प्रतीयते इति कर्मभेदान्न सङ्ख्यानुपपत्तिरिति प्राप्तेऽभिधीयते—

अत्र हि चत्वारिंशत्सङ्ख्याको गणो न साक्षात् श्रूयते। किन्तु चतुर्भिष्षडहैः श्रुतैरनुमातव्यः। ततश्च प्रत्यक्षश्रुतेन षडहशब्देन प्रसिद्धषडहप्रत्यभिज्ञानात्तस्यैव चतुरावृत्तिरभिधीयते। तस्मात्प्रथमप्रतीतषडहशब्दानु-

## भाष्यसन्दर्भयोजिनी

सङ्घातत्वे प्रमाणं दर्शयति—**चत्वारीति।** चतुस्सङ्ख्या पृथक्त्वनिवेशिनी—पृथक्त्वेन सहैव निवेष्टुं शीलमस्या इति पृथक्त्वनिवेशिनी। अनेन चतुर्णां सङ्ख्येयानां सङ्घ उक्तो भवति। अतः सङ्घातत्वसामान्येन द्वादशाहिक धर्मेषु प्राप्तेषु त्रिवृत्स्तोमः चतुर्षु दिनेषु विधीयत इत्यर्थः। ननु चोदकतः प्राप्तं त्रिवृत्त्वमनूद्य तत्र चतुस्सङ्ख्या विधीयतामित्यत आह—**न तु त्रिवृन्तीति।** त्रिवृच्छब्दः स्तोमवाची। स्तोमश्च स्तोत्रगुणभूतः। स्तोत्रञ्च

## भाष्यम्

चतुस्सङ्ख्या विधीयते ॥ ४ ॥

## टुप्टीका

वर्णितं तथा बहवो दोषाः। कथम्? चत्वारीत्यनूद्य त्रिवृत्त्वं विधीयते, न च सप्तरात्रे चत्वारि सन्ति, अविधीयमानत्वाच्चतुर्णाम्, यान्यनूद्येरन्। अभ्युपेत्य ब्रूमः। सन्तु वा चत्वारि। तत्राग्निष्टोममुखानीति द्वितीयो गुणो विधेयः। तत्र वाक्यं भिद्येतेति सिद्धम् ॥४॥

वृत्तमधिकरणम्

## वार्तिकाभरणम्

न च सप्तरात्र इति। सप्तरात्रे यानि चत्वार्यहानि तान्यनूद्य त्रिवृत्त्वं विधीयत इत्युक्तं तदनुपपन्नम्। सप्तरात्रे सप्तानामह्नां विहितत्वेन चतुर्णां विधानाभावेनाप्राप्ततयानुवादासम्भवादित्यर्थः। सप्तानामह्नां विधाने चतुर्णामपि विहितप्रायत्वेन प्राप्तत्वादनुवादः सम्भवतीति भाष्यकारीयाधिकरणं नानुपपन्नमिति यो ब्रूयात् तं प्रति चतुर्णामनुवादत्वमभ्युपेत्य। एवमपि दूषणान्तरसद्भावाद् भाष्यकारीयाधिकरणमनुपपन्नमित्याह—अभ्युपेत्येति। अभ्युपगतत्वमेव दर्शयति—सन्तु वेति। सन्तु वा चत्वर्यहानि प्राप्तानि। तथाप्यग्निष्टोममुखानीति द्वितीयो गुणो विधेय इत्यनेकगुणविधानाद्वाक्यं भिद्येत। तस्माद्भाष्यकारीयाधिकरणमनुपपन्नमित्यर्थः। ननु यान्यग्निष्टोममुखानि चत्वार्यहानि तानि त्रिवृन्तीति त्रिवृत्वमात्रविधानान्न वाक्यभेद इति चेन्न; उक्तविधया त्रिवृत्त्वमात्रविधानेऽपि यान्य'ग्निष्टोममुखानि चत्वार्यहानि' इति विशिष्टानुवादेन वाक्यभेदतादवस्थ्यात्। न च यानि सप्तरात्रस्याद्यान्यहानि तान्यनूद्य त्रिवृत्त्वं विधीयते। तथा चाद्यस्याग्निष्टोमत्वेनाग्निष्टोममुखत्वलक्षणगुणस्य प्राप्तत्वान्न वाक्यभेद इति वाच्यम्। आद्यानामेव चतुर्णामनुवाद इत्यत्र प्रमाणाभावात्। नन्वाद्यानां चतुर्णां नियमेन प्राप्त्यसम्भवेऽपि पक्षे प्राप्तिसम्भवादग्निष्टोममुखत्वस्य पाक्षिकानुवादत्वं सम्भवतीति न वाक्यभेद इति चेत्—तथा सति नित्यवच्छ्रवणविरोधः स्यात्। अत्र यद्यपि दोषद्वयमेवोपन्यस्तम्, तथापि 'जनकसप्तरात्रेण यजेते'ति वाक्यस्य 'उद्भिदा यजेते'ति वाक्यवदुत्पत्तिविधिपरत्वकल्पना गतौ सम्भवन्त्यां न युक्तेत्येतद्दूषणाभिप्रायेण बहवो दोषा इत्युक्तमिति न काप्यनुपपत्तिः। तस्मात् 'चत्वारि त्रिवृन्त्यहानि भवन्ती' त्येतदेवोत्पत्तिवाक्यमिति सिद्धम् ॥

## तन्त्रशिखामणिः

रोधेन प्रसिद्धषडहावृत्तिविधौ निश्चिते कथञ्चिदभ्यासाभिप्रायेण सङ्ख्या समर्थनीया। केचित्तु प्रकरणान्तरन्यायेन कर्मभेदावश्यम्भावादिह प्रसिद्धषडहधर्मकाश्चत्वारः यागगणा विधीयन्त इति न सङ्ख्यानुपपत्तिरित्याहुः। तन्न; 'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः' इति न्यायेनैवञ्जातीयकेषु भावनाभेदेऽपि यज्यश्रवणेन धात्वर्थभेदाभावात्, एवमपि भावनाभेदसत्वात्तदभिप्रायेण सङ्ख्योपपत्तिरित्यन्ये ॥

वृत्तमधिकरणम्

## भाष्यसन्दर्भयोजिनी

क्त्वङ्गम्। अङ्गाङ्गमुद्दिश्य चतुस्सङ्ख्या विधीयत इति निर्गलितम्। तदपेक्षया सङ्ख्यातोद्देशेन सङ्ख्यायां विधीयमानायाम् सङ्ख्यायाः प्रधानाङ्गत्वं सिध्यतीति भावः ॥४॥

भाष्यम्

## तथा चान्यार्थदर्शनम् ॥ ८.३.५ ॥

'चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानीति' येषामग्निष्टोमः प्रथमः, इतरेऽनग्निष्टोमाः, त एवमुक्ते प्रतीयन्ते, न ये सर्वेऽग्निष्टोमाः। यथा—अयोमुखं पिण्डच्छेदनमित्युक्ते न सर्वायसं प्रतीयते। यदि च त्रिवृतोऽभ्यासस्स्यात् सर्वेऽग्निष्टोमा भवेयुः। अग्निष्टोमो ह्यसौ। तस्माद् द्वादशाहिकानां चोदकप्राप्तानामन्हां त्रिवृत्ता विधीयते। एवं 'नव त्रिवृन्त्यहानि भवन्ति' इति ॥ ५ ॥

इति जनकसप्तरात्रे क्रमेण द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ २ ॥

भाष्यसन्दर्भयोजिनी

'चत्वारि त्रिवृन्त्यहानि' इत्यत्राहश्शब्दस्य 'त्रिवृन्ति' इत्येकं विशेषणम् एवम् 'अग्निष्टोममुखानि' इत्यपरम्। अग्निष्टोमः संस्था मुखं-आदिर्येषामिति प्रथमदिनस्याग्निष्टोमसंस्थाकत्वेऽतिरिक्तानामन्हाग्निष्टोमत्वं प्रतीयते। यदि त्रिवृत्त्वमुद्दिश्य चतुस्सङ्ख्या विधीयेत तदा चतुर्षु दिनेषु यथा त्रिवृत्त्वं तथाग्निष्टोमसंस्थाकत्वमपि स्यात्। यदि चाहस्सङ्घातोद्देशेन चतुस्सङ्ख्या बिधीयेत तदा चतुर्णामन्हां त्रिवृत्स्तोमकत्वमात्रमवगतं भवेत्, स्तोमातिरिक्ता अन्ये धर्मा यथायथमतिदिष्टा भवेयुः यथाप्रकृति च संस्थानां सन्निवेशस्स्यादित्याह—**येषामिति**। प्रथमस्यान्होऽग्निष्टोमत्वमितरेषामनग्निष्टोमत्वमित्यत्र दृष्टान्तः—**अयोमुखमिति**। अयोमयश्शङ्कुः अयःपिण्डस्य प्रस्तरपिण्डस्य वा छेदको भवति। तत्र छेदनं शङ्कोरग्रभाग एव सम्पादयति, न तु सर्वोऽप्ययश्शङ्कुरित्यर्थः। **यदि चेति**। अयमाशयः—जनकसप्तरात्रस्य द्वादशाहविकृतित्वं तावत्स्पष्टम् गणत्वसामान्यात्। तत्रापि द्वादशाहिक दशरात्रविकृतित्वम्। दशरात्रे प्रथममहः त्रिवृत्स्तोमकमग्निष्टोमसंस्थाकञ्च। तदत्रातिदिश्यते। तत्र 'चत्वारि त्रिवृन्ति' इति जनकसप्तरात्रवाक्यं चतुर्ष्वहस्सु त्रिवृत्त्वं विदधाति। अग्निष्टोमसंस्थाकत्वञ्च प्राप्तमिति 'अग्निष्टोममुखानि' इत्यनुवादः। प्रकृतितः प्राप्तं त्रिवृत्त्वमुद्दिश्य चत्वारि त्रिवृत्त्वानि विधीयन्त इत्यङ्गीकारे त्रिवृत्त्वस्यावृत्या सम्पादनं सिध्यति। यथा सर्वे स्तोमाः त्रिवृतो भवन्ति, तथा सर्वेऽप्यग्निष्टोमा भवेयुः। यदि च प्राप्ताहरुद्देशेन त्रिवृत्त्वं विधीयते तर्हि द्वितीयाद्यहस्सु प्राप्तं पञ्चदशत्वादिकं बाधित्वा त्रिवृत्त्वनिवेशस्सङ्गतो भवेत् प्रथमस्यान्होऽग्निष्टोमसंस्थाकत्वञ्च सङ्गतं स्यादिति। तदिदमुपसंहरति—**तस्मादिति** ॥५॥

इति जनकसप्तरात्रे क्रमेण द्वादशाहिकधर्मातिदेशाधिकरणम् ॥२॥

३

भाष्यम्

## कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ८.३.६ ॥

विषयः

**क्वचित्कर्मविशेषे श्रूयते—षडहा भवन्ति, चत्वारो भवन्ति, पञ्चाहा भवन्ति इति ।**

सन्देहः

**तत्र सन्देहः—किं द्वादशाहिकानामह्नां प्रवृत्तिः? उत षडहस्य? इति । किं प्राप्तम् ?**

वार्तिकाभरणम्

अत्राचार्यैः चत्वार्यधिकरणानि त्यक्तानि । तानि वयं वर्णयामः ।

कालाभ्यासे च बादरिः कर्मभेदात् ॥

षड्विंशतिरात्रे सत्रे श्रूयते—'षडहा भवन्ति, चत्वारो भवन्ती'ति । तत्र संशयः—किं षड्विंशत्यामहस्सु प्रायणीयोदयनीयाख्ये प्रथमोत्तमे अहनी वर्जयित्वाऽवशिष्टेषु मध्यमेष्वहस्सु द्वादशाहिकदशरात्रविध्यन्त आवृत्या प्रवर्तते ? उत षडह एव चतुर्वारमावर्तते ? इति, षडहा भवन्ति ते च चत्वर इति श्रुत्यर्थपर्यालोचनया चतुर्विंशतिरहा प्रतीयन्ते । पृथक्त्वनिवेशिनी चतुर्विंशतिसङ्ख्या चतुर्विंशत्याहाख्यानां कर्मणां भेदे सत्येवोपपद्यते न षडहावृत्तौ । षडहावृत्तौ हि द्वादशाहिकानां षडहाख्यानां षण्णामेव कर्मणामावृत्तिरिति न चतुर्विंशतिकर्माणि स्युः । तथा च चतुर्विंशतिसङ्ख्या नोपपद्येत । किञ्च षडहावृत्तौ द्वित्रिचतुर्भ्यः सुजि'ति पाणिनीयसूत्रेण क्रियाभ्यावृत्तिगणने सुचो विधानाच्चतुर्भुङ्क्त इतिवच्चतुष्षडहा भवन्तोति स्यात् । न चैवं श्रूयते । ननु न द्वादशाहिकस्य षडहस्यावृत्तिः । किन्तु द्वादशाहिकषडहविध्यन्तस्यावृत्तिः । तथा हि—प्रकरणान्तरन्यायेन द्वादशहिकषडहाख्यकर्मापेक्षया षड्विंशतिरात्रगतानां चतुर्णां षडहाख्ययागगणानां भिन्नत्वेन कर्मभेदस्य स्फुटत्वात्पृथक्त्वनिवेशिनो सङ्ख्या उपपद्यत इति चेन्न । सत्रेष्वासनोपायिचोदितेषु सत्स्वपि प्रकरणान्तरेण नाम्ना व्यवहितस्यापि कर्मणः उपस्थानेन धात्वर्थो न भिद्यते । किन्तु भावनैव भिद्यते । यत्र तु यजिःश्रूयते तत्रानेन यजिना कर्म नोपस्थाप्यते सन्निधानाभावात्, नापि नामधेयेन, तस्य सिद्धवाचित्वेन

भाष्यसन्दर्भयोजिनी

विषयः

**क्वचित्कर्मविशेषे** इति । षड्विंशद्रात्रे इत्यर्थः । 'षडहा भवन्ति चत्वारो भवन्ति' चत्वारः षडहा इत्युक्ते चतुर्विंशतिसङ्ख्याकान्यहानि निष्पद्यन्ते । अहश्शब्देन तत्सञ्ज्ञकाः सोमयागा उच्यन्ते । तेषां षडहशब्दान्तर्गतषट्शब्देन सङ्ख्याऽभिधीयते । सा च संख्या चतुश्शब्देन विशेष्यमाणा चतुर्विंशतिसङ्ख्याकानामह्नां सङ्घे पर्यवस्यति । इदमेवास्याधिकरणस्योदाहरणम् । पूर्वस्मिन्नधिकरणे सङ्घातस्य शाब्दत्वात्प्राबल्यमङ्गीकृत्य द्वादशाहिकदशरात्रविध्यन्त इत्युक्तम् । तेनैव न्यायेनात्रापि विचारः प्रवर्त्यते ।

संशयः

किं चतुर्विंशत्यामहस्सु द्वादशाहिकदशरात्रविध्यन्तः प्रवर्तते ? उत प्रसिद्धषडहस्यैव चतुरावृत्या विध्यन्तः ? इति ।

## भाष्यम्

### पूर्वपक्षः

**कालाभ्यासेऽपि बादरिः। षडहकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे बादरिराचार्यो द्वादशाहिकानामन्हां प्रवृत्तिं मन्यते स्म। कुतः? कर्मभेदात्। षडहशब्देनात्राहर्मितानि षट्-**

## वार्तिकाभरणम्

साध्यवाचित्वाभावात्, आख्यातपरतन्त्रत्वाच्च। प्रकृते च यज्यश्रवणेन नाम्नः स्वतन्त्रतया व्यवहितकर्मप्रत्यभिज्ञानान्न कर्मभेद इति सङ्ख्यासामञ्जस्यतादवस्थ्यात्। उक्तं चाचार्यैः तन्त्रवार्तिके—प्रमाणान्तरे प्रयोजनान्यत्वमिति द्वितीयाध्यायतृतीयपादाधिकरणे 'भिद्यते भावानामात्रं धात्वर्थो नायजिश्रुतेः। नाम्ना हि तदुपादान मासनोपायिचोदितः॥ इति। तस्माद् द्वादशाहिकदशरात्रविध्यन्त आवृत्त्या प्रवर्तत इति प्राप्ते—

ब्रूमः। द्वादशाहिकषडह एव चतुर्वारमभ्यस्यते। षड्विंशतिरात्रे 'षडहा भवन्ति' 'चत्वारो भवन्ति' इति षट्त्वसङ्ख्यायाः प्रत्यक्षश्रुतत्वात्, चतुर्विंशतिसङ्ख्याहीनप्रत्यक्षश्रुताः षडहा भवन्ति। चत्वारो भवन्ति इति षडहचतुष्ट्वं पूर्वं ज्ञात्वा पश्चात् षडहचतुष्ट्वेन सानुमातव्या। प्रत्यक्षश्रुतेन षडहशब्देन षडहावृत्तौ निश्चितायां को वा षडहचतुष्ट्वेन चतुर्विंशतिसङ्ख्यामनुमिनुयात्। अथ यदुक्तं षडहावृत्तौ सङ्ख्यायास्सामञ्जस्यं नास्तीति तच्छतुर्विंशत्यहानि विधीयन्त इति वदतः पूर्वपक्षिणोऽपि तुल्यं चतुर्विंशतिरहानि विधीयन्त इति पक्षेऽपि द्वादशाहिकमध्यमदशरात्रस्यैवावृत्त्या चतुर्विंशतेरहाख्यकर्माभावात्। ननु द्वादशाहिकमध्यमदशरात्रसम्बन्धिनो विध्यन्तरस्यैवावृत्त्या दशरात्रस्यैवावृत्त्यभावात् प्रकरणान्तरन्यायेन द्वादशाहिकमध्यमदशरात्रापेक्षया चतुर्विंशतेरहाख्यकर्मणां भिन्नत्वाच्चतुर्विंशतिसङ्ख्योपपद्यते। द्वादशाहिकषडहावृत्तौ तु षडहनाम्ना द्वादशाहिकषडहस्यैव प्रत्यभिज्ञानेन कर्मभेदाभावात्पृथक्त्वनिवेशिनी सङ्ख्या नोपपद्यत इत्यस्ति वैषम्यमिति चेत्सत्यम्, चतुर्विंशतिरहानि विधीयन्त इति पक्षे प्रकरणान्तरन्यायेन चतुर्विंशतेरहराख्यकर्मणां भिन्नत्वेऽपि द्वादशाहिकमध्यमदशरात्रविध्यन्तसहिततया चतुर्विंशतेः कर्मणाभनुष्ठानेन स्पष्टभेदानवगमादित्यभिप्रायेण सङ्ख्यासामञ्जस्यं पूर्वपक्षेऽपि तुल्यमित्युक्तमिति न दोषः। अथ यदुक्तं षडहावृत्तौ चतुष्षडहा भवन्ति इति स्यादिति तन्न; न्यायेन श्रुत्यर्थे निश्चिते तद्विरोधेन स्मृतेः दुर्बलत्वात्। तस्मात् षडहस्यैव चतुर्वारमभ्यास इति सिद्धम्।

नन्वस्मिन्नधिकरणे तन्त्ररत्ने पार्थसारथ्युपाध्यायैः—

भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः।
नाम्ना हि तदुपादानमासनोपायिचोदितः॥

इति प्रकरणान्तराधिकरणवार्तिकानुसारेण सत्रेष्वेव नाम्ना कर्मान्तरोपस्थानान्न कर्मभेदः, किन्तु भावनामात्र भेद इत्युक्तम्। तैरेव शास्त्रदीपिकायां प्रकरणान्तराधिकरणवार्तिकानुसारेण 'ननु नामधेयेन भवति पूर्वकर्मण

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

सौत्रकालशब्दस्य षडहपरत्वं स्वीकृत्य पूर्वपक्षयति—**षडहकालाभ्यासे इति**। षडहादिभिरहोभिस्सम्मतानि यानि कर्माणि तेषामभ्यासे इत्यर्थः। **द्वादशाहिकानां** द्वादशाहिकदशरात्रान्तर्गतान्हामित्यर्थः। अत्र हेतुः—**कर्मभेदाविति**। कर्मभेदं निरूपयति—षडहशब्देनेति। षड्भिरहोभिः क्रियमाणानि **सौत्यानि सौभिकानि कर्माणि**

## भाष्यम्

**सौत्यानि कर्माण्युच्यन्ते। तेषाञ्च षट्कानां भेदो गम्यते। चत्वारः षडहा इति पृथक्त्वनिवेशात्सङ्ख्यायाः। यद्येकस्यैव कर्मषट्कस्य पार्ष्ठिकस्याभिप्लविकस्य वाभ्यासः कल्प्येत ततः**

## वार्तिकाभरणम्

उपस्थानमि'ति, धातुसमानाधिकरणेन तदसमानाधिकरणेन च नाम्ना पूर्वकर्मण उपस्थानमित्युभयसाधारण्येनाशङ्कनीयम्। 'भवतु धात्वर्थस्य, भावना तु तेनानुपस्थानाद्भिद्यत एवे'ति कर्मैक्येऽपि भावनाभेदोऽस्तीति परिहृत्य 'धात्वर्थोऽपि यादृशो धातुनाख्यातवर्तिना पूर्वापरीभूतो विधेरुपनीयते न तादृशो नाम्नोपस्थाप्यत इति तस्यापि युक्तो भेद, इति पुनःकर्मभेदं 'प्रसाध्य तदभेदेऽपि भावना तावद्भिन्नेति सिद्धमि'ति कर्मभेदाभ्युपगमेऽपि भावनाभेदोऽस्तीति न सूत्रस्थप्रयोजनान्यत्वहानिरित्युक्तम्। तथा च सत्रेष्वेव कर्मभेदेऽपि भावानाभेद इत्यभिदधता वार्तिकश्लोकेन नन्वित्यादि सिद्धमित्यन्तो ग्रन्थो विरुध्येत चेत्, स्यादेतदेवं यदि भिद्यते भावनामात्रमिति श्लोकानुरोधेन शास्त्रदीपिकाग्रन्थः प्रवर्तेत। न त्वेवम्। किन्त्वाचार्यैस्तन्त्रवार्तिके प्रकरणान्तराधिकरण एव धातुसमानाधिकरणस्थलतदसमानाधिकरस्थलोभयसाधाण्येन। ननु चाग्निहोत्रादिपदेनोत्पत्तिसहचारिणा तत्कर्मोत्पत्तावुपनीयमानायां माससम्बन्धमात्रव्यापृतोऽयं विधिरुत्पादकाद्विहन्यते। ततश्च सन्निधानोपनीतं चेत्कर्म नोत्पद्यते। पुनर्नामधेयोपनीतं तत्। ननु नोत्पद्यतेतराम्। यत्र वाक्यन्तरगतमपि सन्निधानमात्रादेव प्रत्यभिज्ञायमानं न भिद्यते तत्र स्ववाक्यगतेन नाम्नोपनीयमानं न प्रत्यभिज्ञास्यत इति कुत एतदिति। नामधेयेनैव पूर्वकर्मण उपस्थानमिति न कर्मभेद इत्याशङ्क्योच्यते यथाभिलषितम् यत्र दुर्बलेनापि हेतुना कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते। सन्निधाने हि यादृगेव देशादिवाक्येषु कर्मावगम्यते तादृगेवोपतिष्ठत इति न भिद्यते। नामधेयं पुनरादितस्तावदाख्यातपरतन्त्रत्वान्नैव [भेदाय] व्याप्रियते। तस्मिन्नाख्यातप्रतिपक्षिण्यवस्थिते मासं जुहोति मासं यजत इति जुहोतियजतिपदमात्रसङ्गतावालोच्यमानायामन्यस्य जुहोत्यादेः स्ववाक्यप्रकरणेष्वविपरिवर्तमानत्वादप्रत्यभिज्ञानमिति नामधेयेन पूर्वकर्मण उपस्थानं न सम्भवतीत्यस्ति कर्मभेद इति परिहृतम्। किञ्च नाम्ना धात्वर्थमात्रञ्च सन्निधाप्येत। शक्तितो भावना त्वनुपस्थानाद् भिद्यमाना न वार्यते। सामानधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेनावस्थितानि, न भावना। तेन भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैक्ये भावना तावदनन्यप्रमाणत्वादाख्यातप्रत्ययान्तरेणानुपनीमाना। (न?) कथञ्चित् प्रत्यभिज्ञायत इत्युपपन्नम्। प्रयोजनान्यत्वमिति कर्मभेदेऽपि भावनाभेदोऽस्तीति न प्रयोजनान्यत्वहानिरित्यभ्युपगमवादेनोक्तत्वात्तदनुसारेण शास्त्रदीपिकाग्रन्थः प्रवृत्त इति नानुपपत्तिः। तस्मिन्नधिकरणे तु आचार्यैः तत्रैव प्रकरणान्तराधिकरणे 'अथवा धात्वर्थोऽपि यथाख्यातेऽसत्वभूतः प्रतीयते सत्वाभिधायिना नाम्ना तादृक् नैवोपनीयते। असत्वभूतो हि धात्वार्थोऽत्र जुहोतिना विधेरुपनीयते। न च तादृशस्यैव द्रव्यभूतलिङ्गसङ्ख्यायोग्यार्थाभिधायिभिरग्निहोत्रादिपदैरभिधानमित्यभिज्ञानात्सोऽपि भिद्येत। यत्र तु प्रकारान्तरे तथाभूते नैवोपादास्यते भावना वा तदनुरक्तात्मना लक्ष्यते तत्र तदेककर्मकेन वचनेन पर्युपस्थाप्य परेण फले विधीयत इत्यवगमात्कामं

## भाष्यसन्दर्भयोजिनी

षट्, षट्संख्या चतुस्सङ्ख्यया विशेष्यमाणा चतुर्विंशत्यां संख्यायां पर्यवस्यति। सङ्ख्यायाः पृथक्त्वनिवेशित्वात्कर्मभेद इत्यर्थः। ननु चतुस्सङ्ख्यया षट्संख्याया गुणनद्वारा चतुर्विंशतिसङ्ख्याश्रयणम्, तेन चाहस्सङ्घातसिद्धिः, ततश्च गणेषु द्वादशाहस्येति न्यायेन तद्विकृतिरिति साधनापेक्षया प्रसिद्धषडहस्यैव पृष्ठ्यस्याभिप्लविकस्य वा

### भाष्यम्

चतुष्षडहा इति स्यात्। अथ पुनः चत्वारष्षडहा इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते। सा अहस्सङ्घातचोदना प्रकृतिलिङ्गत्वाद् द्वादशाहिकीमहःप्रवृत्तिं गृह्णाति। तस्मान्नान्हां द्वादशाहिकानां प्रवृत्तिः ॥ ६ ॥

### सिद्धान्तः

## तदावृत्तिन्तु जैमिनिरन्हामप्रत्यक्षसङ्ख्यत्वात् ॥८.३.७॥

तदावृत्तिं पाष्ठिकस्यैव प्रज्ञातस्य षडहस्यावृत्तिं जैमिनिराचार्यो मेने। कुतः? अन्हामप्रत्यक्षसङ्ख्यत्वात्। चतुर्विंशतिरन्हामप्रत्यक्षा सङ्ख्यानुमानाद् गम्यते। तस्याश्च षडहचतुष्टयेनैवानुमानम्। तेन पूर्वं तावत्षडहचतुष्टयमेव प्रत्येति। तत्समाहृत्य चतुर्विंशतिसङ्ख्याम्। यथा-पूर्वं धूमं प्रतिपद्यते पश्चादग्निम्। यश्च धूमप्रत्ययेनैव कृतार्थो भवति

### वार्तिकाभरणम्

कर्मान्तरत्वं भवतु। तद्यथा—'अतिरात्रश्चतुर्विंशं प्रायणीयमहः चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः' इत्यादिषु। यथा च वरुणप्रधासेषु 'अवभृथं यन्ती'ति। यदा तु प्रकरणान्तरगतं फलादिसम्बद्धं विधित्वमुत्पत्तिमपि संस्पृशद्यावद्बलीयस्योत्पत्तिविधिविपरिवृत्त्या विप्रकर्षादनिवार्यमाणं भिनत्तीति निरीक्ष्यते तदेवमादिष्वपि भेद एवेत्यवगम्यते। परमार्थेन तु 'भिद्यते भावनामात्रं धात्वर्थो न यजिश्रुतेः। नाम्ना हि तदुपादानमासनोपायिचोदितः,' नामविलक्षणया तु श्रवणेन हि तदभेदो भवति। सत्रेषु तु यज्यश्रवणान्नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानाद् भावनामात्रभेदः। तस्मात्साधूक्तम्—प्रयोजनान्यत्वमिति। धात्वसमानाधिकरणस्थलेषु च कर्माभेदोऽपि भावनाभेद इति व्यवस्थापितत्वात् तदनुरोधेन निष्कृष्टार्थः प्रतिपादित इति न पूर्वापरविरोध इति द्रष्टव्यम्।

### भाष्यसन्दर्भयोजिनी

लाघवादभ्यासस्स्वीक्रियतामित्याशङ्क्य परिहरति—**तत** इति। एवमभ्यासे चतुष्षडहा इति स्यात् न तु चत्वारष्षडहा इत्यर्थः। **चत्वारष्षडहा इत्युक्ते** 'चत्वारः षडहा भवन्ति' इति वाक्यबलात् इति शेषः। **प्रकृतिलिङ्गत्वात्** 'गणेषु द्वादशाहस्य' गणत्वसामान्यादित्यर्थः॥

सिद्धान्तयति—**तदावृत्तिमिति**। तस्य पृष्ठ्यषडहत्वेनाभिप्लवषडहत्वेन च प्रसिद्धस्य **आवृत्तिं** अभ्यासं **जैमिनिर्मेने**। सौत्रहेतुं विवृणोति—**चतुर्विंशतिरिति**। चतुर्विंशतिसङ्ख्या षट्सङ्ख्यायाश्चतुस्सङ्ख्यया गुणनेन कल्पनीया, न सा प्रत्यक्षेत्यर्थः। सा चानुमानादवगन्तव्या भवतीति भावः। अनुमानप्रकारमुपपादयति—**तेनेति**। 'षडहा भवन्ति' इत्यनेन षड्भिर्दिनैर्निष्पाद्यः कर्मविशेषः षडहशब्दवाच्यः। ते च षडहाः 'चत्वारो भवन्ति' इत्यनेन चत्वार इति ज्ञानानन्तरं चतुर्विंशतिरवगम्यते। अतश्चतुर्विंशतिर्न शब्देन प्रतीयते। शब्देन च षडहचतुष्टयमित्येव प्रथमं ज्ञानं भवति। षडहानां चतुष्टयमिति ज्ञातेऽनन्तरं चतुर्विंशतिसङ्ख्यायाः प्रतीतिः। चतुर्विंशतिसङ्ख्याया ज्ञानेन नात्र किमपि प्रयोजनम्। षडहप्रत्यये जाते तत्र चतुष्ट्वसम्पादनमावृत्त्या कर्तव्य-

### भाष्यम्

नासावग्निप्रत्ययमाद्रियते। इहापि षडहप्रत्ययादेव तत्प्रवृत्तिः प्रसज्यते। तथा च कृतार्थः किं चतुर्विंशतिसङ्ख्यया प्रतीतया करिष्यति। तस्मात्षडहाभ्यासः।

अथ यदुक्तम्, पृथक्त्वनिवेशिनी सङ्ख्या आवृत्तौ बाध्येतेति, तत्र ब्रूमः– षडह इति प्रज्ञातष्षडहः सन्निहितो गृह्यते। तस्य चतुस्सङ्ख्यासम्बन्धः साक्षान्नास्तीत्यावृत्या भविष्यति। यथा-उपसदां प्रयाजानुयाजानाञ्च। यस्यापि चतुर्विंशतिरात्रश्चत्वारः षडहा इत्येवं चोद्यते तस्यापि दशरात्रे प्रवर्तमान आवृत्यैव सङ्ख्यापूरणम्। भिन्नानां षडहानामभावात्। यश्चोभयोर्दोषो नासावेकं पक्षं निवर्तयति ॥७॥

इति षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥३॥

४

## संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥८.३.८॥

### विषयः

इह संस्थागणाउदाहरणम्। पञ्चाग्निष्टोमः पञ्चोक्थ्यः, शताग्निष्टोमं भवति, शतातिरात्रं

### वार्तिकाभरणम्

संस्थागणेषु तदभ्यासः प्रतीयेत कृयलक्षणग्रहणात् ॥

इह संस्थागणा उदाहरणम्। 'पञ्चाग्निष्टोमः पञ्चोक्थ्यः शतोक्थ्यं भवति शतातिरात्रं भवति

### तन्त्रशिखामणिः

सू० संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥

यथा पूर्वत्र षडहश्रुत्या न द्वादशाहिकदशरात्रप्रवृत्तिः तथोक्थ्यादि श्रुत्यात्रापि न तत्प्रवृत्तिरित्युत्थिते-

### भाष्यसन्दर्भयोजिनी

मित्यवगते चतुर्विंशतिसङ्ख्याप्रत्ययस्य कावश्यकतेत्युपपादयति—तत्समाहृत्येति। अत्र दृष्टान्तयति—यथेति। दार्ष्टान्तिकं घटयति—इहापीति। किं करिष्यतीति सम्बन्धः। उपसंहरति—तस्मादिति।

सङ्ख्यायाः पृथक्त्वनिवेशित्वात्कर्मभेद इति पूर्वपक्ष्यभिमतां शङ्कामनुवदति—यदुक्तमिति। तत्र ब्रूमः एवं शङ्कायां समाधानं ब्रूमः। प्रज्ञातः पृष्ठ्यषडहेऽभिप्लवषडहे च प्रसिद्धः। तस्य षडहस्य। 'चत्वारो भवन्ति' इति चतुस्सङ्ख्या षडहेन सम्बध्नाति, न तु षट्सङ्ख्यया। तथा च चत्वारः षडहा आवृत्यैव सम्पादनीया इति सिध्यति। इयञ्चावृत्तिः पूर्वपक्षेऽप्यस्तीत्याह—यस्यापीति। यश्च दोषः आवृत्तिरूपः समानः असौ दोषः कथं पक्षान्तरं निवर्तयेदित्यर्थः। अतः प्रसिद्धषडहविकार एवेति सिध्यति ॥ ७ ॥

इति षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

४

### विषयः

यथान्हां गणाः तथा संस्थानां गणा विद्यन्ते। तेऽस्मिन्नधिकरणे विचार्यन्ते। स्तोत्रेण क्रतूपरमः संस्था

## भाष्यम्

भवति इत्येवमादयः ।

## संशयः

अत्र चिन्त्यये—किं ज्योतिष्टोमस्याभ्यासः ? उतैवंसंस्थानां संस्थाविशिष्टानामन्हां वादः ? इति । किं प्राप्तम् ?

## वार्तिकाभरणम्

इत्येवमादयः। तत्र संशयः—किं ज्योतिष्टोमाभ्यासविधिः उत सङ्ख्यासंस्थाविशिष्टनानाहानां विधिरिति। तत्रोक्थ्याग्निष्टोमशब्दानां ज्योतिष्टोमनामधेयत्वं मन्वानो दूरस्थितमपि ज्योतिष्टोमं पञ्चाग्निष्टोम इत्यादिवाक्येषु अग्निष्टोमादिपदैरनूद्य पञ्चाद्यावृत्तिरङ्गतया विधीयत इति मन्यते। एवञ्च प्रसिद्धस्यैवोक्थ्याग्निष्टोमाद्यात्मकस्य सङ्ख्यामात्रविधानाल्लाघवम्। इतरथा सङ्ख्यासंस्थाविशिष्टात्यन्ताप्राप्तकर्मविधानाद् गौरवं स्यात्। तस्माज्ज्योतिष्टोमस्यैवाभ्यास इति प्राप्ते—

ब्रूमः। न ह्यभिप्लवादिशब्दवदग्निष्टोमादिपदं ज्योतिष्टोमनामधेयम्, येन प्रसिद्धज्योतिष्टोमप्रत्यज्ञानात्तस्याभ्यासो विधीयेत। किन्तु यो योऽग्निष्टोमादिसंस्थः क्रतुः तस्य सर्वस्य वाचकः। एवञ्चाग्निष्टोमादिपदस्य

## तन्त्रशिखामणिः

स्सङ्गतिः। 'शतोक्थ्यं भवति शतातिरात्रं भवति' इति श्रूयते। तत्र किमुक्थ्यादिशब्देन प्रसिद्धज्योतिष्टोममनूद्य शतकृत्वोऽभ्यासो विधीयते ? किं वा शतसङ्ख्यासंस्थाविशिष्टकर्मान्तरं विधीयत इति विशये, उक्थ्यशब्दस्योक्थ्यसंस्थज्योतिष्टोमनामत्वाद्दूरस्थमप्यनूद्य शतकृत्वोऽभ्यासः क्रत्वर्थतया विधीयते मासादिवदभ्यासस्यानुपादेयत्वाभावेनाहवनीयवद् दूरस्थानुवादेनापि विधातुं शक्यत्वात्। एवञ्च विशिष्टविधिगौरवञ्च न भविष्यति तस्मान्नात्र द्वादशाहप्रवृत्तिरिति प्राप्तेऽभिधीयते—

## भाष्यसन्दर्भयोजिनी

कथ्यते। अग्निष्टोमस्तोत्रेण क्रतोरुपरमे तन्नाम्ना संस्थापि व्यवह्रियते क्रतुरपि। अग्निष्टोमः उक्थ्यः, अतिरात्रः षोडशी इत्यादीनां प्रचुरप्रयोगात् तत्तत्संस्थासु शक्तिः तादृशसंस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे च साम्प्रतिकी लक्षणा। स्तोत्रे गौणी इति स्थितिः। तत्र संस्थानां 'शताग्निष्टोमं भवति' शतातिरात्रं भवति' इति गणा विधीयन्ते।

## संशयः

ज्योतिष्टोमेऽग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थाः क्रमेण क्रियन्ते। ज्योतिष्टोमातिरिक्तसोमक्रतुषु यो यत्संस्थाको विहितः, सः तत्संस्थाकज्योतिष्टोमविकृतिभूत इति तावत्सिद्धम्। शताग्निष्टोमः, शतातिरात्र इत्युक्ते किं अग्निष्टोमसंस्थाकज्योतिष्टोमस्यैव शतमभ्यासा भवन्ति ? अर्थात् शतवारमग्निष्टोमसंस्थाकज्योतिष्टोमस्याभ्यासः ? उत शतसङ्ख्यं संस्थाविशिष्टं कर्मान्तरं विधीयते ? प्रथमकोटौ अग्निष्टोमादिशब्दैः ज्योतिष्टोममनूद्य तस्य शतकृत्वोऽभ्यासो विधीयत इत्यर्थो निष्पद्यते। द्वितीयकोटौ च तत्सङ्ख्याकान्यहानि तत्तत्संस्थाकानि कर्मान्तरत्वेन विधीयन्त इति निष्कर्षः। अन्हां वादः शतसङ्ख्याकान्हां विधायक इत्यर्थः।

## भाष्यम्

### पूर्वपक्षः

संस्थागणेषु तदभ्यासः प्रतीयेत। तस्यैव प्राकृतस्य ज्योतिष्टोमस्यायमभ्यासः। कुतः? कृतलक्षणग्रहणात्। तस्यैतत्कृतलक्षणम् अग्निष्टोमः उक्थ्यः षोडशी अतिरात्र इति। तत्संयोगेनैतास्संस्था उत्पन्नाः। स ताभिश्शक्यते लक्षयितुम्। तञ्च लक्षयित्वा सङ्ख्यां केवलां विधास्यति। नानान्हान्तु वादे संस्था सङ्ख्या चोभयं विधीयते। उक्थ्यसंस्था भवन्ति ते च

## वार्तिकाभरणम्

ज्योतिष्टोमनामधेयत्वाभावाज्ज्योतिष्टोमसन्निध्यभावाच्च सङ्ख्यासंस्थाविशिष्टानि कर्मान्तराणि पञ्चाग्निष्टोम इत्यादिभिर्वाक्यैः विधीयन्ते। तत्र च 'गणेषु द्वादशाहस्य' इति द्वादशाहिकदशरात्रविध्यन्तः प्रवर्तते। एवञ्च यागभेदात् पृथक्त्वनिवेशिनी सङ्ख्योपपद्यते। यद्यपि शतोक्थ्यादिषु दशरात्रविध्यन्तस्यैवावृत्या स्पष्टभेदाभावान्न सङ्ख्यातः समाञ्जस्यम्। तथापि प्रकरणान्तरन्यायेन यागानां भिन्नत्वादस्त्येव सङ्ख्यासामञ्जस्यम् विशिष्टविधिगौरवञ्च प्रमाणिकत्वान्न दोषाय। 'शतोक्थ्यं भवति' इत्यादिषु 'आग्नेयोऽष्टाकपालो भवति' इत्यादिवल्लक्षणया भवतेर्भावनैवार्थं इत्यनेकगुणविशिष्टकर्मविधानं सम्भवति। पञ्चाग्निष्टोमः पञ्चोक्थ्य इत्यादौ भवतिरध्याहार्यः विशेषतश्चात्र समासोपात्तत्वादनेकविध्युपपत्तिः। ननु भाष्यकारोक्तरीत्या गणचोदनाप्राप्तयागनुवादेन संस्थामात्र

## तन्त्रशिखामणिः

उक्थ्यादिशब्दो हि न ज्योतिष्टोमनामधेयम् येन ततस्तत्प्रत्यभिज्ञानं स्यात्, किन्तूक्थ्यादिसंस्था निमित्तीकृत्य क्रतौ वर्तते। यथा प्रायणीयशब्दः प्रारम्भं निमित्तीकृत्य क्रतौ वर्तते तद्वत्। ततश्च प्रसिद्धकर्मप्रत्यभिज्ञानाभावात् सङ्ख्यासंस्थाविशिष्टकर्मान्तरविधिः अनेकार्थविधिश्चापूर्वभावना विधावदोषः। किञ्चात्र शतोक्थ्यमिति समस्तं पदं विशेषणद्वयविशिष्टमेकं गणमाह। स चैक एवेति नानेकार्थविधिः। एकपदत्वाच्च नैकदेशेनानुवादः एकदेशेन च विधिस्सम्भवति इति गणत्वसामान्यादत्र द्वादशाहिकदशरात्रावृत्त्या प्रवृत्तिः। यत्त्वत्र भाष्यकारेण 'पञ्चोक्थ्यं भवति' इत्युदाहरणे गणचोदनया प्राप्तानि पञ्चाहान्यनूद्य संस्थामात्रं विधीयत इति नानेकार्थविधानमित्युक्तम्। विधानेऽत्यन्तलाघवात् स एव पक्षोऽस्त्विति चेन्न; पञ्चरात्रेण यजेतेत्यादिगणचोदनावाक्यस्य

## भाष्यसन्दर्भयोजिनी

### पूर्वपक्षः

पूर्वाधिकरणन्यायेन ज्योतिष्टोमस्याभ्यासं पूर्वपक्षी मन्यते। तदाह—तस्यैवेति। तत्र हेतुः—कृतलक्षणग्रहणात्। हेतोर्विवरणम्—तस्यैतदिति। तस्य ज्योतिष्टोमस्य एतत्कृतं अग्निष्टोमादिशब्दैः कृतं लक्षणं नामधेयम् अग्निष्टोमः उक्थ्य इत्यादि। अग्निष्टोमादिसम्बन्धबलेन क्रतोर्नामधेयं सम्पद्यत इत्यर्थः। अग्निष्टोमादयश्च संस्थाः क्रतुसम्बन्धेन प्रचलिता इति ताभिः संस्थाभिः सः ज्योतिष्टोमो लक्षयितुं शक्यत इति सम्बन्धः। अर्थादितेऽग्निष्टोमोक्थ्यादयश्शब्दा यत्र यत्र भवन्ति तत्र तत्र ज्योतिष्टोमग्रहणम्। अग्निष्टोमोक्थ्यादिशब्दै ज्योतिष्टोममनूद्य 'शताग्निष्टोमं भवति' इत्यादौ सङ्ख्यामात्रविधाने सति शतवारं ज्योतिष्टोमोऽभ्यसनीय इति

### भाष्यम्

पञ्च भवन्तीति । तथा वाक्यं भिद्यते । तस्माज्ज्योतिष्टोमाभ्यासः ॥८॥

### सिद्धान्तः

## अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥८.३.९॥

नैतदेवं ज्योतिष्टोमाभ्यास इति । कथं तर्हि ? प्रकृतिस्तद्विशिष्टा स्यात् । द्वादशाहिकान्यहानि संस्थाविशिष्टानि स्युः । कस्मात् ? अधिकारात् । तान्यत्र चोदकेनाधिकृतानि । एवं चोदकानुग्रहो भविष्यति । ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिशब्दैः । नेत्याह । कथम् ? अभिधानस्य तन्निमित्तत्वात् । अग्निष्टोमाद्यभिधानं संस्थानिमित्तम् न ज्योतिष्टोमाभिधायकम् । तत्तत्संस्थं क्रतुं वदितुं शक्नोति, न ज्योतिष्टोममेव । यत्तु अनेकार्थत्वमिति, नानेकार्थत्वं

### वार्तिकाभरणम्

व्यापृतत्वेनोत्पत्तिविधिपरत्वाभावात् । तस्माज्जनकसप्तरात्रन्यायेन पञ्चाग्निष्टोम इत्यादिवाक्यमेव विशिष्टकर्म विधायकमिति द्रष्टव्यम् ।

### तन्त्रशिखामणिः

फलसम्बन्धमात्रमित्युक्तम्, तदयुक्तम्-जनकसप्तरात्रन्यायेन प्रयोगविधिपरगणचोदनापेक्षितोत्पत्तिविधिपरत्वस्यैव पञ्चोक्थ्यमित्यस्योचितत्वादित्याहुः ॥

### वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

सिध्यतीत्याह—तञ्चेति । लक्षयित्वा अनूद्य । द्वादशाहिकविध्यन्तप्रवृत्तौ तु दोषमाह—नानान्हान्त्विति । उभयविधाने वाक्यभेद इत्यर्थः । अतश्च ज्योतिष्टोमस्याभ्यासः ॥ ८ ॥

### सिद्धान्तः

अभ्यासपक्षं निराकरोति—नैतदेवमिति । यथाहर्गणानां द्वादशाहः प्रकृतिस्तथा संस्थागणानामपि प्रकृतिर्द्वादशाहः । द्वादशाहे विद्यमानान्यहान्यपि संस्थाविशिष्टान्येव । तत्तत्संस्थाविशिष्टाहोभ्यो विध्यन्तेषु प्राप्तेषु तेषामधिकारस्सिद्धो भवतीत्याह—अधिकारादिति । तानि अहानि । अत्र पञ्चोक्थ्यादौ । एवं सति चोदकोऽनुगृहीतो भवति । पूर्वपक्ष्यभिहितं नन्वित्यादिनानूद्य निराकरोति—नेत्याहेति । अग्निष्टोमादयश्शब्दाः संस्थावाचका एव न ज्योतिष्टोमाभिधायकाः । तदभिधायकत्वञ्च तेषां संस्थासम्बन्धनिमित्तकमित्यर्थः । ज्योतिष्टोमशब्दप्रयोगस्य प्रवृत्तिनिमित्तं संस्थासम्बन्ध एवेति भावः । तादृशं प्रवृत्तिनिमित्तं द्वादशाहिकाहस्स्वपि वर्तत इत्याह—तत्तत्संस्थमिति । शब्दप्रयोगे व्यवहारः शक्तिग्राहकः । अग्निष्टोमादयश्शब्दा संस्थासु व्यवह्रियन्ते । ताः संस्था निमित्तीकृत्य यथा ज्योतिष्टोमे व्यवहारः तथा क्रत्वन्तरेष्वपि व्यवहारः । इयांस्तु

### भाष्यम्

भविष्यति । गणचोदनया प्राप्तानामन्हां पञ्चानां संस्थामात्रं विधायिष्यते । शताग्निष्टोममित्यपि समास उभयविशेषणविशिष्टं गणमाह । स एक एवार्थः । यथा—'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति । पृथक्त्वनिवेशिनी चैवं सङ्ख्यानुगृहीता भविष्यति । तस्माद् द्वादशाहिकानां नानान्हां वादः ॥९॥

इति संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥४॥

५

## गणादुपचयस्तत्प्रकृतित्वात् ॥८.३.१०॥

### विषयः

'शतोक्थ्यं भवति शतातिरात्रं भवति' इति श्रूयते । तत्र द्वादशाहिकान्यहानि प्रवर्तन्ते ।

### वार्तिकाभरणम्

गणादुपचयस्तत्प्रकृतित्वात् ॥

'शतोक्थ्यं भवति' इत्यत्र 'गणेषु द्वादशाहस्य' इति न्यायेन द्वादशाहिकदशरात्रविध्यन्तो दशकृत्वः प्रवर्तते । दशरात्रे च द्वावभितोऽग्निष्टोमौ मध्येऽष्टावुक्थ्याः शाखान्तरे च सप्तोक्थ्याः एकष्षोडशी द्वादशाहिकानि

### तन्त्रशिखामणिः

सू० गणादुपचयस्तत्प्रकृतित्वात् ॥

यथा शतोक्थ्ये द्वादशाहस्य दशरात्रस्य प्रवृत्तिः, तथा द्वादशाहिकानामुक्थ्यस्तोत्राणामेवात्र प्रवृत्ते-रित्युत्थितेस्सङ्गतिः । 'शतोक्थ्यं भवति' इत्यत्र च द्वादशाहिकदशरात्रप्रवृत्तिरित्युक्तं, तत्र द्वादशाहात्प्रायणीयोदय-

### भाष्यसन्दर्भयोजिनी

विशेषः—अग्निष्टोमादयश्शब्दा निरूढलक्षणया ज्योतिष्टोमं ग्राहयन्ति, क्रत्वन्तराणि च साम्प्रतिकलक्षणयेति भावः । नन्वग्निष्टोमादिशब्दानां क्रत्वन्तरबोधकत्वे संस्था सङ्ख्येति द्वयं विधेयमिति वाक्यभेद इत्यत आह—यत्त्वनेकार्थत्वमिति । 'पञ्चोक्थ्यः' इत्यत्र गणत्वसामान्येन द्वादशाहात् प्राप्तानां पञ्चानामन्हां संस्थामात्रविधा-नमिति नानेकार्थत्वम्, एवं शताग्निष्टोमं शतातिरात्रमित्यत्रापि सङ्ख्यासंस्थाविशिष्टगणो विधीयत इति नानेकार्थत्वम् । अत्र दृष्टान्तः—यथेति । लौहित्यविशिष्टोष्णीषविधानेन यथा नानेकार्थता तथेत्यर्थः । उपसंहरति—तस्मादिति ॥ ९ ॥

इति संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

### विषयः

पूर्वस्मिन्नधिकरणे 'शतोक्थ्यं भवति' इत्यादौ द्वादशाहिको विध्यन्त इति साधितम् । तत्रैव तेषु तेष्वहस्सु यानि वाचनिकानि स्तोत्राणि तान्युदाहृत्य विचार्यते । अत्रायं विषयविवेकः—शतोक्थ्येऽहर्गणाः

## भाष्यम्

तानि च प्रायेणोक्थ्यसंस्थानि । द्वावग्निष्टोमौ । शतोक्थ्यं भवतीत्युक्तेऽग्निष्टोमयोरुक्थ्यस्तोत्रोपचयः प्राप्तः । शतातिरात्रं भवतीति सर्वेषु रात्रिपर्यायोपचयः । तत्र चिन्त्यते—

## संशयः

किं द्वादशाहादुपचयः कर्तव्यः ? उत ज्योतिष्टोमात् ? इति । किं प्राप्तम् ।

## वार्तिकाभरणम्

चोक्थ्यस्तोत्राणि प्रकृतिभूतज्योतिष्टोमसम्बन्ध्युक्थ्यस्तोत्रेभ्यो वचनाद् वैशेषिकधर्मा भवन्ति । शतोक्थ्यं भवतीत्यत्र दशरात्रे दशकृत्व आवर्त्यमाने ये प्रतिदशकमष्टावुक्थ्याः सन्ति ते द्वादशाहवदेव कर्तव्याः, यौ च द्वावग्निष्टोमौ प्रतिदशकं तयोः शतोक्थ्यं भवतीति वचनादुक्थ्यस्तोत्रोपचयः प्राप्तः । तत्र संशयः—किं द्वादशाहिकोक्थ्यस्तोत्रोपचयः ? किं वा ज्योतिष्टोमोक्थ्यस्तोत्रोपचयः ? इति । तत्र द्वादशाहे उक्थ्यानां विशेषधर्मवत्वेन दर्शनात् द्वादशाहिकोक्थ्यस्तोत्रोपचय एव कर्तव्यः । एतच्च शतोक्थ्यस्य द्वादशाहप्रकृतिकत्वाच्चोदकानुग्रहो भवति । तस्माद् द्वादशाहोक्थ्यस्तोत्रोपचय इति प्राप्ते—

## तन्त्रशिखामणिः

नीयाख्ये आद्यन्ते अहनी वर्जयित्वा मध्यवर्तिनो दशरात्रस्य विकृतिषु प्रवृत्तिरिति दशमे वक्ष्यते । तत्र दशरात्रे आद्यन्तेऽहनी अग्निष्टोमसंस्थे, इतरे उक्थ्यसंस्थाः । ततश्च शतोक्थ्ये द्वादशाहिके दशरात्रे दशकृत्व आवर्त्यमाने प्रतिदशकं द्वौ द्वावग्निष्टोमौ, तयोरन्तराले चाष्टावुक्थ्याः, तेषाञ्चोक्थ्यस्तोत्राणां तत्र ज्योतिष्टोमिकेभ्य उक्थ्यस्तोत्रेभ्योऽधिकाः केचन धर्मा विहिताः । तत्रोक्थ्यास्तावद्द्वादशाहवदेवानुष्ठीयन्ते, ये च तत्राग्निष्टोमास्तेषु शतोक्थ्यमिति वचनादुक्थ्यस्तोत्राणि कर्तव्यानि । तत्र किं द्वादशाहिकानि उक्थ्यस्तोत्राणि कर्तव्यानि उत ज्योतिष्टोमिकानीति संशयः । तत्र शतोक्थ्यस्य द्वादशाहिकत्वविकारत्वात्तद्विध्यन्तप्राप्तेस्तदीयोक्थ्यस्तोत्रविकारत्वमेवाश्रयणमुक्थ्यस्तोत्राणां युक्तमिति प्राप्तेऽभिधीयते—

## भाष्यसन्दर्भयोजिनी

संस्थागणा इति प्रविभज्योक्थ्यादिशब्दा ज्योतिष्टोमावबोधका इति मन्वानस्य मतं निराकृत्य संस्थाबोधकत्वमेव तेषामिति हेतोः संस्थागणेषु द्वादशाहिकदशरात्रविध्यन्त एवेति पूर्वस्मिन्नधिकरणे संसाध्य सम्प्रति यानि स्तोत्राणि निमित्तीकृत्य संस्था भवन्ति तेषु स्तोत्रेषु विचारः क्रियत इति । तानि चेति । द्वादशाहिकदशरात्रगतानि स्तोत्राणीत्यर्थः । तत्र दशरात्रे प्रथमोत्तमेऽग्निष्टोमसंस्थाके । मध्यगतानि चाष्टावुक्थ्यसंस्थाकानि इत्यतः **प्रायेणेत्युक्तम्** । शतोक्थ्ये द्वादशाहिकदशरात्रविध्यन्ते प्राप्ते द्वयोरग्निष्टोमयोरुक्थ्यस्तोत्रवत्त्वं सम्पादनीयम् 'शतोक्थ्यं भवति' इति वचनात् । तथा चाग्निष्टोमादूर्ध्वं त्रयाणामुक्थ्यस्तोत्राणामुपचयो-वृद्धिर्भवति । तदेव शतोक्थ्यं सम्पादितं भवेत् । एवं शतातिरात्रं भवतीत्यत्रापि विचारः । एवञ्चाग्निष्टोमस्तोत्रे द्वे एतदधिकरणविषयः ।

## संशयः

तत्र संशयः—किं द्वादशाहिकदशरात्रात्प्राप्तोक्थ्येभ्य उपचयः कर्तव्यः ? उत ज्योतिष्टोमात्प्राप्तेभ्य

## भाष्यम्

### पूर्वपक्षः

गणादुपचयः। कुतः ? तत्प्रकृतित्वात्। द्वादशाहप्रकृतयः एतेऽहर्गणाः। तेषु द्वादशाहिको विध्यन्तः प्राप्यते। यदि द्वादशाहादुपचयः एवं चोदकानुग्रहो भविष्यति। तस्माद् गणादुपचयः ॥

## वार्तिकाभरणम्

ब्रूमः—शतोक्थ्ये प्रतिदशकमाग्निष्टोमयोः ज्योतिष्टोमस्योक्थ्यस्तोत्रोपचयः, न द्वादशाहस्य। द्वादशाहान्तर्गतोक्थ्यानामग्निष्टोमप्रकृतिकत्वाभावात्। इमौ चाग्निष्टोमौ द्वादशाहिकाग्निष्टोमविकारौ। तत्र चोक्थ्याभावादप्रकृतान्येवोक्थ्यस्तोत्राणीति वचनात्कर्तव्यानि। उक्थ्यस्तोत्राणि च ज्योतिष्टोम एवोत्पन्नानि, न द्वादशाहे। द्वादशाहान्तर्गतोक्थ्या अपि उक्थ्यसंस्थज्योतिष्टोमादेवोक्थ्यवत्स्तोत्राणि भवन्ति। इमावप्यग्निष्टोमौ द्वादशाहवज्ज्योतिष्टोमादेवोक्थ्यस्तोत्राणि गृह्णीतः। न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके। तस्माज्ज्योतिष्टोमादेवोक्थ्यस्तोत्रोपचयः। अत्र भाष्यकारेण शतरात्रं भवतीत्येतदप्युदाहृत्य तत्रापि द्वादशाहिकरात्रिपर्यायोपचयः कर्तव्य इति पूर्वपक्षं कृत्वा ज्यौतिष्टोमिकरात्रिपर्यायोपचय एव कर्तव्य इति सिद्धान्तितम्। पार्थसारथ्युपाध्यायैरपि तन्त्ररत्ने तथैव विचारितम्। तदनुपपन्नम्; दाशमिकन्यायेन द्वादशाहिकमध्यमदशारात्रविध्यन्तस्यैवाहर्गणेषु चोदकेन प्राप्तेरङ्गीकारेण प्रायणीयोदयनीयातिरात्रपर्यायोपचयप्राप्त्यभावेन पूर्व० (ग्रन्थपातः)

## तन्त्रशिखामणिः

यद्यपि शतोक्थ्यस्य द्वादशाहविकृतित्वं तथापि चोदकेन द्वादशाहवदेतान्यहानि कर्तव्यानीत्ययमर्थः प्राप्यते, न तु सर्वाहानि द्वादशाहिकोक्थ्यस्तोत्रधर्मकाणीति। ततश्च द्वादशाहे यान्यहानि उक्थ्यस्तोत्रवन्ति तद्विकारभूतेष्वहस्सु शतोक्थ्येऽपि द्वादशाहिकान्युक्थ्यस्तोत्राणीति भवन्ति, न तु द्वादशाहिकाग्निष्टोमसंस्थाहर्विकारेष्वपि। तेषु च वचनादुक्थ्यस्तोत्रेष्ववश्यमागमयिव्येषु यत्रोत्पन्नानि तानि तत एव ज्योतिष्टोमाद्विकृतान्यहानि तान्युक्थ्यस्तोत्राण्याकाङ्क्षन्ति, उक्थ्यशब्दश्रवणमात्रेण प्रकृत्यनपक्षज्योतिष्टोमगतानामेव प्रथमप्रतीतेः। न च द्वादशाहादस्यापि ज्योतिष्टोमादेवोक्थ्यस्तोत्रप्राप्तेः, न हि भिक्षुको भिक्षुकं याचितुमर्हतीति न्यायात्। द्वावग्निष्टोमौ सप्तोक्थ्याः एकष्षोडशीति पक्षे तु षोडशिन उक्थ्यसंस्थतयाऽपचये कर्तव्ये च द्वादशाहिकस्यैव षोडशिस्तोत्रमात्ररहितस्य प्रवृत्तिः। न ज्योतिष्टामिकस्येति ध्येयम्।

## भाष्यसन्दर्भयोजिनी

उक्थ्येभ्यः ? संशयस्यायं निष्कर्षः—ज्योतिष्टोमस्योक्थ्यसंस्थाकस्य विकृतिर्द्वादशाहः, तद्विकृतिः शतोक्थ्यम्। शतोक्थ्यञ्च द्वादशाहाद्धर्मान् गृह्णाति साक्षात्, परम्परया च ज्योतिष्टामात्। अतः साक्षाद्धर्मग्रहणम् उत परम्परयेति। गणत्वसाम्यस्य द्वादशाहेन सत्वात् द्वादशाहादेव धर्मग्रहणमिति पूर्वपक्षः। सौत्रं हेतुं विवृणोति द्वादशाहेति।

## भाष्यम्

### सिद्धान्तः

## एकाहाद्वा तेषां समत्वात्स्यात् ॥ ८.३.११ ॥

एकाहाद्वा ज्योतिष्टोमादुपचयो न द्वादशाहात् । कस्मात् ? तेषां समत्वात् । द्वादशाहिकानामन्हामितरैर्वैकृतैस्समत्वं भवति । तान्यप्यन्यतस्संस्थामकाङ्क्षन्ति इमान्यपि । न च भिक्षुका भिक्षुकादाकाङ्क्षन्ति सत्यन्यस्मिन् प्रसवसमर्थेऽभिक्षुके । किमेतदुक्तं भवति ? द्वादशाहे संस्थास्तोत्राण्यनाम्नातानि इत्यतो यत्राम्नातानि तत अकाङ्क्षन्ति । वैकृतेष्वहस्सु तानि नाम्नातानीति । तस्माद्वैकृतान्यहानि यत्र विहितानि तत एवाकाङ्क्षितुमर्हन्ति । ज्योतिष्टोमे च तान्याम्नातानि । तस्माज्ज्योतिष्टोमादुपचयः ॥ ११ ॥

इति शतोक्थ्यादौ ज्यौतिष्टमिकोक्थ्यादिस्तोत्रानुष्ठानाधि० ॥ ५ ॥

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

एकाहाज्ज्योतिष्टोमादेवोपचयः । यतोऽत्यग्निष्टोमादिसंस्थाका अन्ये वैकृताः क्रतव एकाहाः तत्तत्संस्थाकज्योतिष्टोमादेव धर्मान् गृह्णन्ति । तैस्समत्वं सिद्धं भवति यदि शतोक्थ्यगतसंस्था अपि स्युरिति सौत्रं हेतुं विवृणोति—**द्वादशाहिकानामिति**। अन्यानि वैकृतानि यथाकाङ्क्षन्ति संस्थास्तथा **इमान्यपि** द्वादशाहिक्रान्यप्याकाङ्क्षन्ति। न खल्वेको भिक्षुको भिक्षुकान्तरमाकाङ्क्षेत् सत्यन्यन्नभिक्षुके दातरि। **प्रसवसमर्थे** दानसमर्थ इत्यर्थः। भिक्षुकदृष्टान्तप्रदर्शनेन प्रकृते किमायातमिति पृच्छति—**किमेतदिति**। वैकृतेषु क्रतुषु तास्ताः संस्था उल्लिखिताः किन्तु संस्थानां स्तोत्राणि नोल्लिखितानि, ज्योतिष्टोमे चोल्लिखितानीति तत आकाङ्क्षन्ति, तथैव द्वादशाहेऽपि संस्थामात्रं निर्दिष्टमस्ति, न स्तोत्राणां निर्देशः । ज्योतिष्टोमे च तानि सन्ति इति ज्योतिष्टोमादेव द्वादशाहिकक्रतवोऽपि । एवञ्च भिक्षुकत्वं क्रत्वन्तरवत् द्वादशाहस्यापि, अभिक्षुकत्वं ज्योतिष्टोमस्येति प्रतिपादयति—**ज्योतिष्टोमे चेति**। उपसंहरति—**तस्मादिति** ॥११॥

इति शतोक्थ्यादौ ज्यौतिष्टोमिकोक्थ्यादि स्तोत्रानुष्ठानाधिकरणम् ॥५॥

## भाष्यम्

६

## गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेका-त्तदाख्यत्वम् ॥ ८.३.१२ ॥

### विषयः

उपचयश्चिन्तितः। अपचय इदानीं चिन्त्यते। इदं श्रूयते—'वाजपेयेनेष्ट्वा बृहस्पति-

### वार्तिकाभरणम्

सू० गायत्रीषु प्राकृतीनामवच्छेदः०

पूर्वाधिकरणे 'शतोक्थ्यं भवति' इत्यत्र स्तोत्रोपचयश्चिन्तितः। तत्प्रसङ्गादिदानीमपचयश्चिन्त्यते। बृहस्पतिसवे श्रूयते—'गायत्रमेतदहर्भवति' इति। तत्र संशयः—किं प्राकृतीनां त्रिष्टुब्जगतीनामृचामक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यम्? उतोत्पत्तिगायत्र्य एव दाशतयीभ्य आगमयितव्या इति। तत्र प्राकृतीनामेव त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा ता एव गायत्र्यः सम्पादयितव्याः। यदि दाशतयीभ्य उत्पत्तिगायत्र्य एवागम्येरन् तदा चोदको बाध्येत। ननु 'गायत्रमेतदहर्भवति' इति वचनाच्चोदक बाधो युक्तः। उच्यते—गायत्रीशब्दो हि चतुर्विंशतिसङ्ख्यावचनः, यतश्चतुर्विंशत्यक्षरास्वृक्षु गायत्रीशब्दः प्रयुज्यते न प्रयुज्यते च चतुश्चात्वारिंशदक्षरासु त्रिष्टुप्सु अष्टाचत्वारिंशदक्षरासु जगतीषु च। तस्मादन्वयव्यतिरेकाभ्यां सङ्ख्यावचनो गायत्रीशब्दः।

### तन्त्रशिखामणिः

सू० गायत्रीषु प्रकृतीनामवच्छेदः०

उपचये चिन्तिते प्रसङ्गादपचयश्चिन्त्यत इति सङ्गतिः। बृहस्पतिसवे श्रूयते 'गायत्रमेतदहर्भवति' इति। तत्र संशयः—किं प्राकृतीनां त्रिष्टुब्जगतीनां चोदकतः प्राप्तानामक्षरलोपं कृत्वा गायत्रं तदहः कर्तव्यम्? उत दाशतयीभ्य उत्पत्तिगायत्रीणामागमं कृत्वेति। तदर्थञ्च किमयं गायत्रीशब्दश्चतुर्विंशतिसङ्ख्यावचनः? उत ऋग्विशेषवचनः? इति। तत्र गायत्रीशब्दस्य चतुर्विंशत्यक्षरविशिष्टास्वेवर्क्षु प्रयोगादतस्तत्सङ्ख्यासु चाप्रयोगात् नागृहीतविशेषणन्यायेन चातुर्विंशतिसङ्ख्यैव तत्पदवाच्या। अत एव 'ये हि द्वे गायत्र्यौ सैका जगती'त्युपपद्यते। गायत्रीशब्दस्य चतुर्विंशतिसङ्ख्यापरत्वे हि द्वयोर्गायत्र्योरष्टचत्वारिंशत्सङ्ख्यारूपतया तावत्सङ्ख्यात्मके जगतीत्वं

### भाष्यसन्दर्भयोजिनी

६

### विषयः

पूर्वाधिकरणविषयं स्मारयति—**उपचय इति**। सङ्गतिं दर्शयति—**अपचय इति**। प्रासङ्गिकी सङ्गतिरित्यर्थः। वाजपेयस्य स्वाराज्यफलकस्य बहिरङ्गत्वेन बृहस्पतिसवोऽनुष्ठीयते। स चैकाहस्सोमयागो ज्योतिष्टोमविकारः। ज्योतिष्टोमे स्तोत्रगतासु ऋक्षु नानाच्छन्दांसि त्रिष्टुब्जगत्यादीन्याम्नातानि। 'ऋच्यध्यूढं साम गायति' इति विधिना ऋगधिकरणकसामगानं विहितम्। अधिकरणभूताश्च ऋचो नानाच्छन्दस्का भवन्ति।

## भाष्यम्

**सवेन यजेत' इति । तत्रेदं समाम्नातम्—'गायत्रमेतदहर्भवति इति ।**

## वार्तिकाभरणम्

तथा च प्राकृतीषु त्रिष्टुब्जगतीषु अक्षरावलोपः कर्तव्यः। एवञ्च 'गायत्रमेतदहर्भवति' इति वचनमुपपत्स्यते। चोदकोऽप्यनुग्रहीष्यते। यथा 'शताग्निष्टमं भवति' इत्यत्र द्वादशाहिकानामन्हामुक्थ्यावलोपः क्रियते। एवमिहापि। यदि सङ्ख्यावचनो गायत्रीशब्दस्तदा ये हि द्वे गायत्र्यौ सैका जगती' इति लिङ्गम् 'तिस्रोऽनुष्टभश्चतस्रो गायत्रीः करोति' इति लिङ्गमप्युपपत्स्यते। स्यादेतदेवम्, यदि ये हि द्वे गायत्र्यौ सैका जगती'ति श्रुतेरष्टाचत्वारिंशदक्षरपरिमितायां जगत्यां चतुर्विंशत्यक्षरपरिमिते गायत्र्यावित्यर्थः स्यात्। न त्वेवम्, सङ्ख्यायां सङ्ख्यान्तरस्य निवेशासम्भवात्। सङ्ख्या हि सङ्ख्येयरूपद्रव्यगुणः। न गुणो हि सङ्ख्यारूपे सङ्ख्यान्तरे वर्तते। तस्माल्लिङ्गबलात् न सङ्ख्यावचनो गायत्रीशब्द इति चेत्, उच्यते—न हि सङ्ख्यायां सङ्ख्या वर्तत इति ब्रूमः येनोक्तदोषस्स्यात् किन्त्वष्टाचत्वारिंशत्सङ्ख्यायां तदवयवभूते द्वे चतुर्विंशतिसङ्ख्ये वर्तेते इति ब्रूमः। यद्येवं नाभ्युपगम्येत तदा यस्य दश गावः तस्य द्वौ गवां पञ्चकाविति व्यहरो न स्यात्। तस्मात् लिङ्गवशेन सङ्ख्यावचनो गायत्रीशब्दः। अथ भवतु सङ्ख्यावचनो गायत्रीशब्दः, तथापि नाक्षरावलोपः प्राप्नोति। यथा येन देवदत्तेन विंशतिरुपात्ता गावः तेन देवदत्तेन दशापि गावः उपात्ता भवन्ति, विंशतौ दश [सङ्ख्यासम्भ]वात् एवं चतुश्चत्वारिंशदष्टाचत्वारिंशदक्षरपरिमितासु त्रिष्टुब्जगतीषु प्रयुक्तासु चतुर्विंशत्यक्षरपरिमिता गायत्र्योऽपि प्रयुक्ता भवन्ति। एवञ्च चोदकोऽप्यनुग्रहीष्यते। 'गायत्रमेतदहर्भवति' इति वचनञ्चानुग्रहीष्यते। एवञ्च वचनाद-

## तन्त्रशिखामणिः

सम्भवतीति ऋग्विशेषवचनत्वे तु ऋगन्तरस्य जगत्यन्तरत्वासम्भवादेतद्दर्शनं नोपपद्येत। किञ्च जगत्यक्षरागमेऽक्षरलोप एव युक्त इति प्राप्तेऽभिधीयते—

यथा गमनक्रियानिमित्तकस्यापि गोशब्दस्य सास्नावत्पिण्ड एव वाच्यः, वृद्धव्यवहारात् तथा सङ्ख्याविशेषनिनिमित्तकस्यापि गायत्रीशब्दस्य ऋग्विशेष एव वाच्यः, वृद्धव्यवहारात्। अन्यथा तावत्सङ्ख्यावत्सु घटादिषु मन्त्रान्तरेषु च गायत्रीपदप्रयोगापत्तिः। तस्मादृग्विशेषवचन एवायं शब्दः। न चैवं ये हि द्वे गायत्र्यौ सैका जगतीति जगत्यां गायत्रीशब्दप्रयोगानुपपत्तिरित्युक्तमिति वाच्यम्, द्वाभ्यां गायत्रीभ्यां वैश्यस्येति विधाय जागतस्य वैश्यस्य जगत्या कार्यं न गायत्रीभ्यामिति शङ्कायां गायत्रीद्वयस्तुत्यर्थं ये हि द्वे गायत्र्याविति वाक्यम्। अतोऽर्थवादत्वात् कथञ्चित्सङ्ख्यासामञ्जस्यमादाय गायत्रीशब्दस्तत्र गौण इति। अत्र विधौ गौणी न युक्ता। किञ्चार्थाभिधानार्थं हि मन्त्रप्रयोगः। न हि त्रिष्टुबाद्येकदेशेन कश्चिदर्थोऽभिधीयते। परिपूर्णस्यैव वाक्यस्य

## भाष्यसन्दर्भयोजिनी

गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप्, जगती इति सप्तानां छन्दसां नामानि। तत्र तत्तच्छन्दरकानामृचां चत्वारश्चत्वारः पादा भवन्ति। तेषु चतुष्पदा गायत्री पक्षे प्रतिपादं षडक्षराणि, त्रिपदागायत्रीपक्षे प्रतिपादमष्टावक्षराणीति चतुर्बिंशत्यक्षरा गायत्री भवति। तदूर्ध्वं निर्दिष्टक्रमेण प्रतिच्छन्दश्चत्वारि चत्वार्यक्षराणि वर्धन्ते। तथाचोष्णिकछन्दसोऽष्टाविंशत्यक्षराणि, अनुष्टुप्च्छन्दसो द्वात्रिंशदक्षराणि, बृहतीच्छन्दसः षट्त्रिंशदक्षराणि, पङ्क्तिच्छन्दसः चत्वारिंशदक्षराणि, त्रिष्टुच्छन्दसश्चतुश्चत्वारिंशदक्षराणि, जगतीच्छन्दसोऽष्टा-

## भाष्यम्

### संशयः

अत्र विचार्यते—किं प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यम्? उतोत्पत्तिगायत्रीणां दाशतयीभ्य आगमं कृत्वेति ।

## वार्तिकाभरणम्

क्षरावलोपः कर्तव्य इति पूर्वपक्षकरणमनुपपन्नमिति चेत्—स्यादेतदेवम्, यदि जगत्यां त्रिष्टुभि चोपात्तायां गायत्र्युपात्ता भवति । नत्वेवम्, किन्तु योपात्ता सैवोपात्ता भवति, न तु तदन्तर्गतापि सङ्ख्या स्तोत्रसाधनं परिच्छिन्दति । ऋग्गता सङ्ख्या कर्मण्यङ्गं भवति । सा चैका । यत्र जगत्याः स्तोत्रसाधनत्वं तत्र तद्गता सङ्ख्या कर्मण्यङ्गं भवति । यत्र त्रिष्टुभः स्तोत्रसाधनत्वं तत्र तद्गता सङ्ख्या कर्मण्यङ्गं भवति । अत्र चोदकेन जगत्याः त्रिष्टुभो वा प्राप्तौ तयोरेव स्तुतिसाधनत्वं न तु तदवयवस्य चतुर्विंशत्यक्षरपरिमितस्य । न ह्यवयवस्य स्तुतिसाधनत्वे प्रमाणमस्ति । ननु 'गायत्रमेतदहर्भवति' इति वचनमेवावयवस्य साधनत्वे प्रमाणमिति चेत् यो ह्यवयवस्य साधनत्वं वदति स वक्तव्यः—किं जगत्यां त्रिष्टुभि च विद्यमानायां तदवयवस्य चतुर्विंशत्यक्षरात्मकस्य स्तुतिसाधनत्वम्? आहोस्वित् उत्तरावयवस्यानङ्गत्वादक्षरावलोपं कृत्वाऽवशेषितस्य चतुर्विंशत्यक्षरात्मकस्य? इति । नाद्यः, उपात्ताया एव स्तुतिसाधनत्वम् न तु तदवयवस्येति प्रागेवोक्तत्वात् । न द्वितीयः; अक्षरावलोपे मत्पक्षसिध्या त्वदभिमतसिध्यभावात् । तस्मादक्षरावलोपः कर्तव्यः । न चाक्षरावलोपे चोदकबाध इति वाच्यम्, 'गायत्रमेतदहर्भवति' इति वचनेन चतुर्विंशत्यक्षरात्मकस्यावयवस्य स्तुतिसाधनत्वेनाङ्गत्वात् । उत्तरावयवस्य स्तुतिसाधनत्वलक्षणद्वाराभावेन कृष्णलादौ द्वारलोपेनावघातादेरिवानङ्गत्वेन चोदकबाधाभावात् । इदञ्च दशमाद्ये प्रपञ्चयिष्यत इति नेह प्रपञ्च्यते । यद्यवयवसङ्ख्यापि गृह्येत तदैका च दश च शतञ्च सहस्रञ्चायुतञ्च नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्धञ्चेति सर्वा अपि सङ्ख्याः प्रतिपादयन्ती श्रुतिरनर्थिका स्यात् । परार्धसङ्ख्ययैवैकादिसङ्ख्यानामुपात्तत्वात् । तस्मादक्षरावलोपः कर्तव्य इति प्राप्ते,

## तन्त्रशिखामणिः

विशिष्टार्थप्रत्यायकत्वात् । सङ्ख्याविशेषविशिष्टायामृच्येव वृद्धव्यवहारेण प्रसिद्धतया उत्पत्तिगायत्र्य एव दाशतयीभ्य अगमयितव्या इति सिद्धम् ॥

वृत्तमधिकरणम्

इति श्री राजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणावष्टमस्याध्यायस्य तृतीयः पादः ।

## भाष्यसन्दर्भयोजिनी

चत्वारिंशदक्षराणि भवन्ति इति स्थितिः । तत्र बृहस्पतिसवे ज्योतिष्टोमान्नानाच्छन्दस्सु प्राप्तेषु 'गायत्रमेतदहर्भवति' इति विधिना गायत्रं छन्दो विधीयते । अर्थादस्मिन् क्रतौ गायत्रच्छन्दस्कास्वेव ऋक्षु सर्वाणि स्तोत्राणि सम्पादनीयानि । छन्दोऽन्तराणि च निवर्तन्त इति स्थितौ विचारं दर्शयति—**किं प्राकृतीनामिति** । ज्योतिष्टोमात्प्राप्तेभ्यो गायत्रापेक्षयाऽधिकाक्षरेभ्यः छन्दोभ्योऽक्षराणि परिलोप्य सर्वेषु स्तोत्रेषु गायत्रं छन्दः कर्तव्यम्? उत गायत्रच्छन्दस्का ऋच ऋग्वेदसमुत्पन्ना आनेया इत्यर्थः ।

## वार्तिकाभरणम्

ब्रूमः—नायं गायत्रीशब्दः सङ्ख्यावचनः, किं तर्हि ? चतुर्विंशत्यक्षरस्य ऋग्द्रव्यस्य वाचकः। यावता चतुर्विंशत्यां गोषु गायत्रीशब्दं न प्रयुञ्जते। अतो गायत्रीशब्दः चतुर्विंशत्यक्षरात्मकऋग्विशेषवचनो विज्ञायते। यद्यपि गायत्रीशब्दः चतुर्विंशतिसङ्ख्यां न व्यभिचरति, तथापि गच्छतीति गौरित्यवयवयोगेनाश्वादौ सत्यपि गमने यथा गोशब्दं न प्रयुञ्जते तद्वत् इहापि चतुर्विंशतिसङ्ख्यायुक्तेषु पदार्थमात्रेषु गायत्रीशब्दं न प्रयुञ्जते। किन्तु योगरूढ्या चतुर्विंशत्यक्षरात्मके ऋग्द्रव्यविशेष एव प्रयुञ्जते। किञ्च चतुर्विंशतिसङ्ख्यायाश्चतुर्विंशति शब्दो वाचको दृश्यते। तेनैव व्यवहारे सिद्धे गायत्रीशब्देन नास्ति प्रयोजनम्। यदि चेदृशानेकशब्दैर्व्यवहार-वच्चतुर्विंशतिसङ्ख्यायाश्चतुर्विंशतिशब्देन गायत्रीशब्देन व्यवहारस्स्यात् तदा चतुर्विंशत्यक्षरात्मकऋग्द्रव्यस्य वाचकशब्दाभावेन तस्य व्यवहारो न स्यात्। तस्माद् गायत्रीशब्दः ऋग्द्रव्यविशेषवचन इति दाशतयीभ्य उत्पत्तिगायत्र्य एवागमयितव्याः। यत्तूक्तं यथा 'शताग्निष्टोम भवति' इत्यत्र द्वादशाहात्मिकानामन्हामुक्थ्याव-लोपः क्रियते एवमिहापीति, तन्न; अग्निष्टोमशब्दो गायत्रीशब्दवद् न द्रव्यान्तरमभिधत्ते, किन्तु क्रतोरग्निष्टो-मान्ततां ब्रूते। तस्य चाग्निष्टोमान्तता उक्थ्यावलोपेन विना [न] सम्भवतीति युक्तस्तत्रोक्थ्यावलोपः। गायत्री-शब्दस्तु योगरूढ्या ऋग्द्रव्यविशेषवचनः। तथा जगत्यादिष्वक्षरावलोपेऽपि गायत्रीशब्दस्य तदवयववाचित्वा-भावेन तस्य ऋग्द्रव्यविशेषवाचित्वस्यावश्यं वक्तव्यतयाऽक्षरावलोपो न सम्भवतीति वैषम्यात्। किञ्च 'शताग्निष्टोमं भवति' इति शास्त्रगम्याग्निष्टोमान्तताऽप्रत्यक्षशास्त्रगम्यान्युक्थ्यस्तोत्राणि बाधितुमीष्टे। इह तु 'गायत्रमेतदहर्भवति' इति शास्त्रगम्या उत्पत्तिगायत्र्यस्ता आनुमानिक्यः त्रिष्टुब्जगत्यो बाधितुं नेशात इत्यस्ति वैषम्यम्। यत्तूक्तम्—'ये हि द्वे गायत्र्यौ सैका जगतो' इति श्रुतिरेव लिङ्गं गायत्रोशब्दस्य सङ्ख्यावाचित्व इति तत्र ब्रूमः—न हि गायत्रोशब्दः सङ्ख्यावचनः, येन गायत्रीशब्दो जगत्याद्यवयवमपि वदेत्। किन्तु ऋग्विशेष-स्यैव गायत्रीशब्दो नामधेयम्। दाशतयीषु ऋचामुत्पत्तिक्रमे गायत्र्यादिशब्दा ऋग्विशेषाणां नामधेयानीत्युक्त-त्वात्। ये हि द्वे गायत्र्यौ सैका जगती' इति श्रुतिरपि न लिङ्गम् किन्तु जगत्याः प्रशंसार्था। यो कौरवौ स एको बाल्हीक इतिवत्। गायत्रीद्वयतुल्या जगतीति। प्रशंसार्थत्वाभावे द्वाभ्यां गायत्रीभ्यां वैश्यस्येति श्रुतिरयुक्ता स्यात्, जगत्या वैश्यस्य कार्य 'जागतो हि वैश्यः' इति श्रुतेः। प्रशंसार्थत्वे तु यद् द्वाभ्यां गायत्रीभ्यां कृतं जगत्यैव तत्कृतमिति श्रुतिद्वयमप्युपपद्यते। जगत्यवयवे गायत्रीशब्दप्रयोगस्त्वक्षरसाम्यादौपचारिकः। ननु ये द्वे गायत्र्यौ सैका जगतो' इति श्रुतेर्विधिशेषत्वेनार्थवादत्वात्तत्रत्यगायत्रोशब्दस्य गौणः प्रयोगो युक्तः। तिस्रोऽ-नुष्टुभश्चतस्रो गायत्रोः करोति' इति श्रुतेर्विधिशेषत्वाभावेन लेट् परिकल्पनया विधिपरत्वं वक्तव्यम्। तत्र च न हि तिस्र ऋचश्चतस्र ऋचो भवन्ति विरोधादिति तिस्र ऋचः चतस्रश्चतुर्विंशतय इति गौण्या वृत्या गायत्री-शब्दस्य सङ्ख्यापरत्वमभ्युपगन्तव्यम्। गायत्रोशब्दस्य ऋग्विशेषवचनत्वं वदतः तन्न सम्भवति 'न विधौ परः शब्दार्थ' इति न्यायात्। तस्मादत्र गौणः प्रयोगो न युक्त इति चेन्न; पृष्ठैरुपतिष्ठते' इत्यत्र 'उपान्मन्त्रकरणे' इति मन्त्रस्य करणत्वे गम्यमाने आत्मनेपदविधानात् पृष्ठशब्दवाच्यस्य स्तोत्रस्य मन्त्रत्वाभावात् पृष्ठशब्दवाच्य-स्तोत्रसाधनीभूते मन्त्रे यथा पृष्ठशब्दस्य लक्षणा तद्वदिहापि पूर्वोक्तरीत्या गायत्रीशब्दस्य ऋग्विशेषवाचित्वे सिद्धे [तदनुरोधेनात्रत्यगायत्रीशब्दस्य] गौण्या वृत्या सङ्ख्यापरत्वसम्भवात्। यदि सङ्ख्यावचनो गायत्रीशब्दः तदा दर्शपूर्णमासयोः 'गायन्त्रा परिदध्यात्' इत्यत्र गायत्रोशब्दवाच्यायाः सामिधेनीनां मध्येऽन्त्याया 'आजुहोतादुवस्यत' इत्यस्या ऋचः चतुर्विंशत्यक्षरपदसमूहस्य च विकल्पः स्यात्। न चेष्टापत्तिः, आजुहोताया नित्यवदाम्नानानर्थक्यापत्तेः। तस्मान्न सङ्ख्यावचनो गायत्रीशब्दः। ननु गायत्रीशब्दस्य सङ्ख्या-वचनत्वेऽपि दर्शपूर्णमासयोर्विकल्पो न भविष्यति, अन्त्याया आजुहोतायाः प्रागपि प्रत्नोवाजेत्यादय ऋच

## वार्तिकाभरणम्

आम्नाताः। तत्प्रायपाठाद् 'गायत्र्या परिदध्यात्' इत्यत्र विद्यमानस्य गायत्रीशब्दस्य चतुर्विंशत्यक्षरात्मिका ऋगेवार्थः। सामान्यवाचकस्यापि गायत्रीशब्दस्य विशेषपरत्वं प्रायपाठलक्षणप्रमाणबलादिति चेत्, तथा सति प्रकृतिभूते ज्योतिष्टोमे ऋचामेव स्तुतिसाधनत्वदर्शनाद्विकृतिभूते बृहस्पतिसवे ज्योतिष्टोमाच्चोदकेन प्राप्तानां त्रिष्टुब्जगत्यादीनां कार्ये गायत्रमेतदहर्भवतीति गायत्र्या विधानात् अत्रत्यगायत्रीशब्दोऽपि ऋक्परइति बृहस्पति-सवेऽक्षरावलोपो न स्यात्। ननु युक्तं 'गायत्र्या परिदध्यात्' इत्यत्र विद्यमानस्य गायत्रीशब्दस्य ऋक्परत्वं यावता कृत्स्नायामाजुहोता दुवस्यत' इत्यस्यामृचि गुणभूतायाश्चतुर्विंशतिसङ्ख्याया निवेशस्सम्भवति, तदवयवे च न सम्भवतीति। उक्तरीत्या सङ्ख्यावाचिनोऽपि गायत्रीशब्दस्य ऋक्प्रायपाठादृक्परत्वेऽभ्युपगम्यमानेऽर्थादृचोऽपि गुणत्वमुपपद्यते सङ्ख्याया निवेशश्च। बृहस्पतिसवे तु त्रिष्टुब्जगत्यादीनां चोदकप्राप्तानामवयवे चतुर्विंशत्यक्ष-रात्मके सङ्ख्याया निवेशसम्भवेनावयवपर एव गायत्रीशब्दो न ऋक्पर इत्यस्ति वैषम्यम्। तस्मादक्षरावलोपः प्राप्नोतीति चेत्तथासति 'गायत्रमेतदहर्भवति' इत्यस्याविशेषेण प्रवृत्तत्वेनाहानि स्तोत्रसाधनीभूता अवयवाश्च-तुर्विंशत्यक्षरात्मका इतिवत् अहनि सोमयागसाधनत्वेन प्रस्तुताश्चमसा वा ग्रहा वा चतुर्विंशतिसङ्ख्याकाः कार्या इत्यर्थः स्यात्। तथाच नियमेनाक्षरविलोपो न स्यात्। अथाक्षरगतसङ्ख्यायामेव गायत्रीशब्दः प्रसिद्धो नान्यत्रेति यो ब्रूयात् तं प्रतिब्रूयादेवम्-ऋग्विशेष एव प्रसिद्धो नान्यत्रेति। नन्वस्तूक्तरीत्या गायत्रीशब्दः ऋग्वचनः तथाप्यक्षरावलोपः प्राप्नोति। उत्पत्तिगायत्रीणामागमे तु चोदको बाध्येत, नाक्षरावलोपाश्रयणे। ऋग्वचनस्य गायत्रीशब्दस्य जगत्याद्यवयवे सङ्ख्यासादृश्याद् गौणी स्यादिति वाच्यम्, गायत्रीशब्दस्य मुख्यार्थाश्रयणे चोदक-बाधापत्त्या गौण्याश्रयणस्य न्याय्यत्वात्। एवञ्चातिदेश··· विधिर्गायत्रमेतदहर्भवतीति वैकृतविधिश्चानर्थकौ-स्यातामिति चेत्, तथासति 'शरमयं बर्हिर्भवति' इत्यत्रापि चोदकाबाधाय कुशशरशब्दप्रयोगे गौणस्स्यादिति न शरैः कुशस्य बाधनं स्यात्। न च 'ये द्वे गायत्र्यौ सैका जगती' इति जगत्यवयवे गायत्रीशब्दप्रयोगो दृष्ट इति 'गायत्रमेतदहर्भवति' इत्यत्रापि गायत्रशब्दस्य जगत्याद्यवयवे प्रयोगस्स्यादित्यस्ति वैषम्यमिति वाच्यम्, शरवण-मेवेदं कुशवनमिति प्रयोगदर्शनात् 'शरमयं बर्हिर्भवति' इत्यत्रापि शरशब्दस्य कुशे प्रयोगसम्भवात्। ननु शरवण-मेवेदं कुशवनमित्यत्र शरशब्दस्य कुशे प्रयोगो गौणः। शरमयं बर्हिर्भवति' इत्यत्र तु शरशब्दस्य शर एव मुख्य-प्रयोगः। शरमयं बर्हिर्भवति' इत्यत्रापि गौण्याश्रयणे शरशब्दस्य मुख्यार्थाभावेन मुख्यार्थसादृश्यनिबन्धना गौणी-वृत्तिः क्वापि न स्यादिति चेत्, तथासति 'गायत्रमेतदहर्भवति' इत्यत्रापि गौण्याश्रयणे गायत्रीशब्दस्य मुख्यार्था भावेन मुख्यार्थसादृश्यनिबन्धना गौणी वृत्तिः क्वापि न स्यात्। सति च गायत्रीशब्दस्य मुख्यार्थपरिग्रहे ये द्वे गायत्र्यौ इत्यत्र गौणः प्रयोगो युज्यते नोक्तबाधस्स्यात्। ये द्वे गायत्र्यावित्यत्र गायत्रीशब्दप्रयोगो गौण इति। अपि च त्रिष्टुब्जगतीनामवयवे गायत्रीशब्दप्रयोगाभ्युपगमे वाक्यं न परिसमाप्तं भवति। अर्थाभिधानार्थश्च मन्त्र-प्रयोगः। तस्य परिसमाप्तेन वाक्येन कश्चिदर्थोऽभिधीयते। तस्माद्दाशतयीभ्य उत्पत्तिगायत्रीणामागमः कर्तव्य इति॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्र-साग्निचित्याप्त-वाजपेययाजिगोविन्ददीक्षितवरनन्द-नस्य साग्निचित्य-सर्वपृष्ठाप्तोर्यामयाजि-श्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्धसमस्तविद्या-वैशद्यस्य साग्निचित्याप्तवाजपेययाजि-श्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु टुप्टीकाव्याख्याने वार्तिकाभरणे

अष्टमाध्यायस्य तृतीयः पादस्समाप्तः॥

### भाष्यम्

#### पूर्वपक्षः

अत्र सूत्रेणैवोपक्रमः। गायत्रीषु प्राकृतीनामवच्छेदः। गायत्रीषु श्रूयमाणासु 'गायत्रमेतदहर्भवति' इति प्राकृतीनां त्रिष्टुब्जगतीनामवच्छेदोऽक्षरावलोपः कर्तव्यः। कुतः? प्रकृत्यधिकारात्। चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्यः प्राप्ता अधिकृता विद्यन्ते। यद्यन्यासामृचामागमः क्रियेत प्राकृतः प्रत्ययो बाध्येत।

ननु प्रत्यक्षश्रुता गायत्र्यः। ताभिश्चोदकप्राप्ता इतरा बाधितव्याः। नेत्याह। कस्मात्? सङ्ख्यात्वात्। अयं गायत्रीशब्दस्सङ्ख्यावाचकः। कथं ज्ञायते? अव्यतिरेकाच्चतुर्विंशतिसङ्ख्यामेष न व्यभिचरति। न क्वचिच्चतुर्विंशतिसङ्ख्यया विना दृष्टः। चतुर्विंशतिसङ्ख्याहीनासु त्रिष्टुब्जगतीषु न कदाचिद्भवति। तस्मात् सङ्ख्याशब्दोऽयम्। सङ्ख्याशब्दश्चेदक्षरावलोपः कर्तव्यः, अग्निष्टोमवत्। यथा शताग्निष्टोमं भवतीत्युक्ते द्वादशाहिकानामन्हामुक्थ्यावलोपः क्रियते, एवमिहापि ॥१२॥

## तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥८.३.१३॥

तन्नित्यवत्सङ्ख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यो

### भाष्यसन्दर्भयोजिनी

उत्सूत्रं पूर्वपक्षस्योपक्रमो नास्ति किन्तु सूत्रेणैवोपक्रमः। सौत्रमवच्छेदपदस्यार्थमाह—अक्षरावलोप इति। पूर्वपक्षी छन्दःपदेनाक्षरसङ्ख्यामभिप्रैति। चतुर्विंशत्यक्षरा भवति गायत्री, त्रिष्टुब्जगत्यादयश्चाधिकसङ्ख्याका इति अधिकानामक्षराणां लोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानीति भावः। सौत्रं हेतुं विवृणोति—चोदकेनेति। चोदकतः प्राप्तासु त्रिष्टुब्जगतीषु 'गायत्रमेतदहर्भवति' इति बृहस्पतिसवे विधानात्तदधिकार इत्यर्थः। सिद्धान्त्यभिमतमनूद्य निराकरोति—यदीत्यादिना। प्राकृतः प्रत्ययः प्रकृत्यधिकारः।

ननु बृहस्पतिसवे प्रत्यक्षश्रुताभिर्गायत्रीभिः चोदकप्राप्तानां त्रिष्टुभादीनां बाधस्स्यादिति शङ्कते—नन्विति। गायत्रीशब्दस्य चतुर्विंशतिसङ्ख्यापरत्वात् प्राकृतीनां बाध इति शङ्कां निराचष्टे—नेत्याहेति। सङ्ख्यापरत्वं गायत्रीशब्दस्य कथमित्यत्र हेतुः—अव्यतिरेकादिति। यत्र यत्र गायत्रीव्यपदेशस्तत्र तत्र चतुर्विंशतिसङ्ख्यां न व्यभिचरतीत्यर्थः। गायत्रीशब्दस्य सङ्ख्यापरत्वेऽन्वयव्यतिरेकौ दर्शयति—चतुर्विंशतीति। यस्यामृचि सङ्ख्या दृश्यते तत्रैव तस्य शब्दस्य प्रयोगः, यत्र न दृश्यते तत्र न प्रयोगः। यद्यपि सङ्ख्येयेन विना सङ्ख्या न तिष्ठति, सङ्ख्येयाधीनत्वात् सङ्ख्यायाः, तथापि शब्दस्य शक्तिग्रहो नागृहीतविशेषणन्यायेन सङ्ख्यायामेवेत्याशयः। सङ्ख्यावाचकत्वे सिद्धेऽक्षरावलोप एवोचितः। अत्र दृष्टान्तोऽग्निष्टोमवदिति। द्वादशाहिकविकारे शताग्निष्टोमे प्रकृतित उक्थ्यसंस्थास्वागतास्वपि तासां लोपस्स्वीक्रियते तद्वदित्यर्थः ॥ १२ ॥

अत्रार्थे तर्कं दर्शयति--तदिति। द्वयोर्गायत्र्योरष्टाचत्वारिंशदक्षराणि, एकस्या जगत्या अष्टाचत्वारिंशदक्षराणि। जगत्योऽगायत्र्यः, तथापि तत्र गायत्रीशब्दः प्रयुज्यते—'ये हि द्वे गायत्र्यौ सैका जगती'ति सङ्ख्या-

### भाष्यम्

जगतीषु अगायत्रीषु तद्वचनं भवति, गायत्रीवचनं भवति। 'ये हि द्वे गायत्र्यौ सैका जगती'ति। यदि सङ्ख्यायां गायत्रीशब्दस्ततो जगत्यां द्वे चतुर्विंशतिसङ्ख्ये इत्येतद्वचनमुपपद्यते। अथ ऋचि, द्वे ऋचौ जगत्यां न स्त इत्येतद्वचनमुपपन्नं स्यात्। तस्मादपि सङ्ख्यायां गायत्रीशब्दः। तथेदमपरश्च दर्शनम्। 'तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति' इति ॥१३॥

## न त्रिंशतो दशेति चेत् ॥८.३.१४॥

अथ कश्चिद् ब्रूयात् न विंशतौ दशसङ्ख्यास्ति। न सङ्ख्या सङ्ख्यान्तरे वर्तते। गुणो हि सङ्ख्या। न च गुणा गुणेषु वर्तन्ते। एवमष्टाचत्वारिंशत्सङ्ख्यायां चतुर्विंशतिसङ्ख्या नास्ति। तस्मात्सङ्ख्यार्थेऽपि गायत्रीशब्दे एका जगती द्वे गायत्र्यौ इत्यनुपपन्नमेव। यश्चोभयोर्दोषो नासावेकस्य वाच्यः ॥१४॥

## ऐकसङ्ख्यमेव स्यात् ॥८.३.१५॥

अथोच्यते—न ब्रूमः सङ्ख्यायां वर्तत इति। किं तर्हि? अष्टाचत्वारिंशत्सङ्ख्यापरिच्छिन्नेष्वक्षरेष्ववयवभूते द्वे चतुर्विंशतिसङ्ख्ये, न तु द्वे ऋचौ इति। न च सङ्ख्या सङ्ख्यान्तरं निवर्तयति। यदि निवर्तयेदेकसङ्ख्यमेव स्यात्। यस्य दशगावस्तस्य द्वौ पञ्चकौ

### भाष्यसन्दर्भयोजिनी

वचनत्वाभावेऽगायत्र्यां जगत्यां गायत्रीशब्दप्रयोगः कथं सङ्गतस्स्यादित्याह—**यदीति**। एतद्वचनं ये हि द्वे इति वचनम्। गायत्रीशब्दस्य ऋग्वाचित्वेऽनुपपत्तिं दर्शयति—**अथर्चीति**। न खल्वेकस्यामृच्यपरा तिष्ठतीत्यर्थः। हेत्वन्तरं दर्शयति—**तथेदमिति**। तिसृणामनुष्टुभां षण्णवत्यक्षराणि, तथा चतसृणां गायत्रीणां तावन्त्येवाक्षराणीत्यर्थः। अतोऽक्षरसङ्ख्यामादायैव गायत्र्यादिशब्दप्रयोग उचित इति सिद्धं भवति ॥ १३ ॥

शङ्कासूत्रं व्याचष्टे—**अथ कश्चिदिति**। अल्पीयसी सङ्ख्या अधिकायां सङ्ख्यायां स्थातुर्हति। सङ्ख्येयपरिच्छेदिका सङ्ख्या सङ्ख्येये स्थातुमर्हति, न तु सङ्ख्यायाम्। अत्रोपपत्तिमाह—**न चेति**। गुणाश्च द्रव्ये तिष्ठन्ति न गुणेषु। अतश्चतुर्विंशतिसङ्ख्या कथमष्टाचत्वारिंशत्सङ्ख्यायां स्थातुमर्हतीति भावः। ननु तर्हि एकस्यामृचि कथं ऋगन्तरं तिष्ठेदित्यत आह—**यश्चोभयोरिति**। 'यश्चोभयोस्समो दोषः परिहारोऽपि तादृशः' इति हि न्यायः। कथमात्रान्यतरः पर्यनुयोगार्ह इति भावः ॥ १४ ॥

अष्टाचत्वारिंशदक्षरायां जगत्यां चतुर्विंशतिसङ्ख्या वा गायत्रीछन्दस्का ऋग्वा वर्तत इति न ब्रूमः, किन्तु अष्टाचत्वारिंशत्सङ्ख्यया परिच्छिन्नेष्वक्षरेषु द्वे चतुर्विंशतिसङ्ख्ये वर्तेते इति कथने काऽसङ्गतिरिति पृच्छति—**अथोच्यते** इत्यादिना। सर्वत्र सङ्ख्यायास्सङ्ख्यान्तरव्यावर्तकत्वं न भवति, किन्तु यत्र सङ्ख्यावाचकशब्दनिर्देशः यथा 'सप्त पदार्थाः' इति तत्र सः षण्णामष्टानाञ्च सङ्ख्यानां निवर्तकः, तथा 'चतुर्विंशत्यक्षरा गयत्री' इत्युक्ते गायत्र्या न्यूनातिरेकाक्षरसङ्ख्याव्यावर्तिका चतुर्विंशत्यक्षरेति। परन्तु चतुर्विंशत्यक्षरपदं

### भाष्यम्

गवामित्येतद्वचनं न स्यात् । भवति च तत् । तस्मान्न सङ्ख्या सङ्ख्यान्तरं निवर्तयति ।

एवं वा—न विंशतौ दशेति चेत्, यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमपि नाक्षरावलोपः कर्तव्यः । किं कारणम् ? विंशतौ दश विद्यन्ते । किमतः ? इदं तावदतः—येन विंशतिरुपात्ताः उपात्तास्तेन दश भवन्ति । एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्तास्तेन तदन्तर्गता गायत्र्यो भवन्ति । तस्मादविकारेण प्रयोगः । एवं चोदकानुग्रहश्च भवति, गायत्रश्चाहः कृतं भवति ।

### ऐकसङ्ख्यमेव स्यात्

अत्राह—जगत्यां त्रिष्टुभि चोपात्तायां न गायत्र्य उपात्ता भवन्ति । कथम् ? साधनं परिच्छिन्दन्ती सङ्ख्या कर्मणि अङ्गीभवति । न जगत्याः त्रिष्टुभो वावयवः साधनम् । किं तर्हि ? त्रिष्टुब्जगत्यः । अथोच्येत 'गायत्रमेतदहर्भवति' इति वचनादवयव एवात्र साधनमिति ।

### भाष्यसन्दर्भयोजिनी

तदन्तर्गतयोः द्वयोर्द्वादशसङ्ख्ययोः निबर्तकं न भवति, उपभृत्यष्टगृहीतन्यायेन । 'अष्टावुपभृति गृह्णाति' इत्यत्र एकं द्वे त्रीणि चत्वारि, एकं द्वे त्रीणि चत्वारि इति वारद्वयं चतुर्ग्रहणमिति अष्टसङ्ख्यायां चतुस्सङ्ख्याद्वयं स्वीक्रियत एवेति सदृष्टान्तमुपपादयति—यस्य दशेति । अतोऽष्टाचत्वारिंशत्सङ्ख्यायां चतुर्विंशतिसङ्ख्याद्वयसत्वे न कोऽपि दोष इत्युपसंहरति—तस्मादिति ।

'न विंशतौ दशेति चेत्' 'ऐकार्थ्यमेव स्यात्' इति सूत्रद्वयं प्रकारान्तरेण व्याचष्टे—एवं वेति । 'चतुर्विंशत्यक्षरा गायत्री इति निर्देशेन गायत्रीशब्दस्सङ्ख्यायां यद्यपि प्रयुज्यते, तथापि त्रिष्टुब्जगत्योऽक्षरलोपेन विना विकृतौ प्रयोक्तुं शक्यन्त इत्युपपादयति—यद्यपीत्यादिना । एवमपि तथापीत्यर्थः । अक्षरावलोपेन विना कथं ता गायत्र्यो भवेयुरिति पृच्छति—किं कारणमिति । उत्तरयति—विंशतौ दशेति । उत्तरेणापरितुष्टो ब्रवीति—किमत इति । विंशतौ दश वर्तन्ताम् । किं तेन प्रकृते साधितं भवतीत्यर्थः । इदं तावदतः वक्ष्यमाणप्रकारेणेदं साधितं भवतीर्थः । दशसङ्ख्यया विना विंशतिसङ्ख्ययास्सम्पत्तिर्न जायते यथा, तथा त्रिष्टुब्जगतीषु प्रयुक्तासु गायत्र्योऽपि शते पञ्चाशन्न्यायेन प्रयुक्ता भवन्त्येवेत्यर्थः । तथा च यथाप्रकृति त्रिष्टुब्जगत्य एव प्रयुज्यन्ताम्, तेन गायत्रीणामपि प्रयोगस्सिध्यति । एवं सति प्रयोजनं दर्शयति एवमिति । यथाचोदितं पदार्थानामनुष्ठानम् अन्हो गायत्रत्वञ्च साधितं भवतीत्यर्थः ।

अत्राह—एवंशङ्कायामुत्तरमाहेत्यर्थः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा च जगती त्रिष्टुब्जगत्यौ कर्मणोऽङ्गत्वेन विहिते स्तोत्रद्वारा । अर्थात्स्तोत्रसाधनं त्रिष्टुप्च जगती च । तदङ्गं सङ्ख्या । एवञ्च कर्मणोऽङ्गं स्तोत्रम्, तदङ्गं ऋग्गतं छन्दः, तदङ्गं सङ्ख्येति सङ्ख्याया अपि कर्माङ्गत्वं परम्परया सिध्यतीत्याह साधनमिति । परिच्छिन्दन्ती—विशिंषन्ती । यद्यक्षरलोपं कृत्वा गायत्रीसम्पादनं क्रियते तर्हि हीनावयवा त्रिष्टुब्वा जगती वा स्तोत्रद्वारा क्रतोस्साधनमेव न स्यात् इत्याह—न जगत्या इति । ननु 'गायत्रमेतदहः' इति विधिबलेन हीनावयस्यैव साधनत्वं प्रतीयत इति शङ्कते—अथोच्येत इति । अक्षरावलोपस्य विधिकृतत्वेन न दोष

## भाष्यम्

तथा सत्पक्षरावलोप एव प्राप्नोति। उत्तरस्यावयस्यानङ्गत्वात्। न चानङ्गेऽनुपादीयमाने चोदको बाध्यते। तस्मादुक्तं-'यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमप्यविकारेण प्रयोक्तव्य' इति। एतदयुक्तम्। दर्शयति च—नोत्तरस्यां सङ्ख्यायामुपात्तायां पूर्वास्सङ्ख्या उपात्ता भवन्तीति। यदयमेका च दश च शतञ्च सहस्रञ्च परार्धञ्चेति सर्वसङ्ख्या अनुक्रामति। यदि चोत्तरस्यां सङ्ख्यायामुपात्तायां पूर्वसङ्ख्या उपात्ता भवन्ति। ऐकसङ्ख्यमेव स्यात्। एकैव परार्धसङ्ख्या भवेत्। सा हि सर्वाभ्य उत्तरा। यतस्त्वेकाद्या अप्यनुक्रान्ताः अतो विज्ञायते नोत्तरस्यां सङ्ख्यायामुपात्तायां पूर्वास्सङ्ख्या उपात्ता भवन्तीति ॥ १५ ॥

### गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥८.३.१६॥

नैतदेवं सङ्ख्यायां गायत्रीशब्द इति। कथं तर्हि ? गुणाद् द्रव्यशब्दस्स्यात्। चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकस्स्यात्। कस्मात् ? असर्वविषयत्वात्। यदि सङ्ख्याशब्दस्स्यात् सर्वस्मिंश्चतुर्विंशतिसङ्ख्यासङ्ख्येये वर्तेत गोयूथ्यदौ। न च वर्तते। तस्मान्न सङ्ख्याशब्दः ॥१६॥

## भाष्यसन्दर्भयोजिनी

इत्यर्थः। अक्षरावलोपस्य हेतुः—अनङ्गत्वादिति। अङ्गमेव चोदकेनातिदिश्यते, नानङ्गम्। अतो न चोदकबाध इत्याह—न चेति। पूर्वाभिहितमनुवदति—यद्यपीति। एतदयुक्तमिति। यद्यपीत्यादिना यदुक्तं तदेतदयुक्तमित्यर्थः। नत्र 'उपात्ता भवन्ति' इत्यनेनान्वयः। उत्तरोत्तरसङ्ख्यास्वभिहितासु पूर्वपूर्वसङ्ख्या उपात्ता भवन्तीत्यङ्गीकारे दोषमाह—यदि चेति। ऐकसङ्ख्यमेवेति। सर्वसङ्ख्याया उत्तरा या सङ्ख्या तस्यामुपात्तायाम्, एकादश, शतम्, सहस्रमित्यादिसङ्ख्यायाः कावश्यकतेत्यर्थः। निगमयति—अत इति। एवञ्च त्रिष्टुब्जगत्योः प्रयुज्यमानयोरल्पसङ्ख्याया गायत्र्यास्सम्पत्तिर्न भवतीति भावः। अयञ्चात्रत्यसन्दर्भनिष्कर्षः—'न विंशतौ दशेति चेत्' 'ऐकसङ्ख्यमेव स्यात्' इति सूत्रयोः प्रथमव्याख्याने त्रिष्टुब्जगत्यादिशब्दानां सङ्ख्यावाचित्वं स्वीकृत्यापि तस्यास ङ्ख्यान्तरनिवर्तकत्वाभावेऽपि प्रथमसूत्रेण एका जगती द्वे गायत्र्यौ' इति साधनं दुष्करमित्याशङ्क्य द्वितीयसूत्रेण 'यस्य दश गावस्तस्य द्वौ पञ्चकौ गवाम्' इति प्रयोगबलेन अष्टाचत्वारिंशत्सख्याकेष्वक्षरेषु द्वे चतुर्विंशतिसङ्ख्ये भवितुमर्हत इति साधितम्। तेनाविकारेणाक्षरावलोपेन विना जगत्याः प्रयोगे द्वयोर्गायत्र्योस्सम्पत्तिरिति सिध्यति। एवंवेति द्वितीयव्याख्याने प्रथमसूत्रेण विंशतौ दश सङ्ख्या विद्यते, तिष्टब्जगीषु प्रयुज्यनासु गायत्र्येऽपि तदन्तर्गता भवन्ति। अतोऽक्षरावलोपेन विनाविकारेण प्रयोक्तव्या इत्याशङ्क्य द्वितीयसूत्रेण परिहारः क्रियते—उत्तरोत्तरं प्रयुज्यामानासु सङ्ख्यासु पूर्वपूर्वास्सङ्ख्या यदि स्युस्तर्हि उत्तरसङ्ख्ययैव पूर्वसङ्ख्यालाभे 'एका च दश च शतञ्चेत्याद्यनुक्रमणं व्यर्थं स्यात्। अतोऽक्षरावलोपेनैप प्रयोक्तव्यः पक्षद्वयेऽपि गायत्र्यादीनां सङ्ख्यावाचित्वं तुल्यमिति ॥ १५ ॥

गायत्रीशब्दस्सङ्ख्यावाचीति यत्तन्नैतदेवमित्यन्वयः। सौत्रद्रव्यशब्दस्य विवरणम् चतुर्विंशतीति। द्रव्यस्य—मन्त्रस्येत्यर्थः। एतेन शब्दो द्रव्यमित्युक्तं भवति। सङ्ख्यायुक्तद्रव्यवाची गायत्रीशब्द इति कुत इत्यत्र कारणमाह असर्वविषयत्वादिति। सर्वविषयत्वाभावादित्यर्थः। गायत्रीशब्दो यदि चतुर्विंशतिसङ्ख्यावाची स्यात्तर्हि गायत्री गोयूथ इति प्रयोगस्स्यात्। अतो न सङ्ख्यावाचीत्युपसंहरति तस्मादिति ॥ १६ ॥

भाष्यम्

## गोत्ववच्च समन्वयः ॥८.३.१७॥

यथा गौरिति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयः, नान्यत्रेति तद्वचन एव गोशब्दो विज्ञायते एवमयमपि ऋग्वचन एव विज्ञातुं न्याय्यः ॥१७॥

## सङ्ख्यायाश्च शब्दवत्त्वात् ॥८.३.१८॥

चतुर्विंशतिसङ्ख्यावाचकश्शब्दोऽस्ति चतुर्विंशतिरिति । नास्यापरेण गायत्रीशब्देनार्थः । संज्ञाया व्यवहारार्थत्वादेकेन व्यवहारसिद्धेः ॥१८॥

## इतरस्याश्रुतित्वाच्च ॥८.३.१९॥

इतरस्य ऋग्द्रव्यस्याश्रुतित्वात् । अशब्दत्वादित्यर्थः । तस्यापि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनम् । तत्रायं गायत्रीशब्दोऽर्थवान् भवति । सङ्ख्यायां निष्प्रयोजनः । तस्मादपि ऋक्छब्दो न्याय्यः । अतो गायत्रीणामृचामागमः कर्तव्य इति ॥१९॥

## द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥८.३.२०॥

यदुपवर्णितम्-अग्निष्टोमवदिति, तत्र ब्रूमः । अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चिन्नि-

भाष्यसन्दर्भयोजिनी

ननु एका जगती द्वे गायत्र्यौ, तिस्रोऽनुष्टुभः चतस्रो गायत्र्यः इत्यादौ गायत्रीशब्दस्सङ्ख्यायामेव प्रतीयते । 'द्वे गायत्र्यौ' इत्युक्ते द्वे चतुर्विंशतिसङ्ख्ये, चतस्रो गायत्र्य इत्युक्ते चतस्रश्चतुर्विंशतिसङ्ख्या बुध्यारूढा भवन्तीति चेदाह—यथेति । गोशब्दस्य गमननिमित्तकत्वे सत्यपि योगरूढ्या सास्नादिमदर्थवाचित्वं यथा, तथा चतुर्विंशतिसङ्ख्यां निमित्तीकृत्य प्रवृत्तोऽपि गायत्रीशब्द ऋग्वचन एवेत्यर्थः ॥ १७ ॥

चतुर्विंशतिसङ्ख्याया वाचकश्शब्दः चतुर्विंशतिरिति भवति, गायत्रीति न भवति । स्वातन्त्र्येण स्वसङ्ख्यावाचकत्वे सम्भवति अस्य चतुर्विंशतिशब्दस्य अपरेण गायत्रीशब्देन नार्थः न प्रयोजनम् । यत्र द्वे गायत्रीति प्रयोगः तत्र गायत्रीति चतुर्विंशतेस्संज्ञा । संज्ञा च व्यवहारार्था । सा चैकेन शब्देन सिध्यति ॥ १८ ॥

सौत्रहेतोर्विवरणम्—अशब्दत्वादिति । तस्यापि इतरस्य ऋग्द्रव्यस्यापीत्यर्थः । गायत्रीशब्दश्छन्दसो वाचकः । छादयतीति छन्दः किं छादयतीत्याकाङ्क्षायां किमपि वक्तव्यम् । तच्च ऋग्द्रव्यमेव भवत्युपस्थितम् । तदवबोधनाय गायत्रीशब्दः अर्थवान् प्रयोजनवान् इति गायत्रीशब्द ऋग्वचन उचित इत्यर्थः । निर्गलितमर्थं वदति—अत इति ॥ १९ ॥

'गायत्रीषु प्राकृतीनामवच्छेदः' इत्यादिसूत्र इति शेषः । यदुपवर्णितम् अग्निष्टोमवदिति । शताग्निष्टोमे प्रकृतितः प्राप्तानामुक्थ्यानामवलोपस्स्वीकृतस्तथैव प्रकृतितः प्राप्तानां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्रीणां निवेश इति यत्साधितं तत्र उत्तरं ब्रूम इति सम्बन्धः । अग्निष्टोमशब्दस्येति । अग्निष्टोमादयश्शब्दा-

### भाष्यम्

वेशो नास्ति । यथा गायत्रीशब्दस्य ऋग्द्रव्ये । अयं हि केवलमग्निष्टोमान्ततां ब्रूते । न चोक्थ्य लोपमन्तरेण द्वादशाहिकानामन्हामग्निष्टोमान्तता भवतीत्यवश्यकार्यं उक्थ्यलोपः । अयं पुनर्गायत्रीशब्द ऋग्द्रव्यस्य वाचक इत्युक्तम् । न चाक्षरावलोपेन तदृग्द्रव्यं प्राप्यते । तस्माद्विषमोऽयमुपन्यास इति ॥२०॥

## अशास्त्रलक्षणत्वाच्च ॥८.३.२१॥

अशास्त्रलक्षणानि चोक्थ्यस्तोत्राणि शताग्निष्टोमे । तानि शास्त्रलक्षणयाग्निष्टोमान्ततया बाध्यन्ते । इह पुनर्विपरीतम्-शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यस्त्रिष्टुब्जगत्यः । ता न शक्नुवन्ति गायत्रीं बाधितुम् ॥२१॥

## उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥८.३.२२॥

अथ यदुक्तम्-सङ्ख्यायां गायत्रीशब्दो दृष्टः ये हि द्वे गायत्र्यौ सैका जगतीति । तस्य कः परिहारः ? उच्यते—औत्पत्तिकमेतदृचो नामधेयमित्युक्तम् । अत उत्पत्तिनामधेयत्वाद्योऽयं जगत्यवयवे चतुर्विंशत्यक्षरे पदसञ्चये प्रयोगः स भक्त्या विज्ञेयः । न ह्येकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या । कया पुनर्भक्त्या ? परिमाणसादृश्यात् । यत्परिमाणं द्वयोर्गायत्र्योस्तदेकस्या जगत्याः । अत एतदुक्तम्—ये द्वे गायत्र्यौ सैका जगतीति । यथा यौ द्वौ कौरवौ स एको वाहीक

### भाष्यसन्दर्भयोजिनी

स्तत्तत्संस्थासु शक्ताः, द्रव्यान्तरे उक्थ्यादिस्तोत्रान्तरे निवेशो नास्ति वाचको नास्तीत्यर्थः । गायत्रीशब्दस्तु ऋग्द्रव्यस्य वाचक इत्यनयोर्भेदः । शताग्निष्टोमे उक्थ्यादिलोपेन विनाग्निष्टोभान्तता द्वादशाहिकानामन्हां सम्पादयितुमशक्या इति हेतोः अवश्यकार्यं उक्थ्यलोपः । इयं दृष्टान्तस्य स्थितिः । दार्ष्टान्तिकस्य स्थितिमवबोधयति—अयं पुनरिति । इत्युक्तम् अनुपदमेव पूर्वसूत्र इति शेषः । त्रिष्टुब्जगतीनामक्षरावलोपेन तदृग्द्रव्यं त्रिष्टुब्जगतीवाच्यं न प्राप्यते चोदकतो नातिदिश्यत इत्यर्थः । तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति ॥ २० ॥

शताग्निष्टोमे उक्थ्यादिलोपे हेत्वन्तरं निर्दिशति—अशास्त्रेति । शास्त्रं लक्षणं स्वरूपं येषान्तानि, तानि न भवन्तीत्यशास्त्रलक्षणानि उक्थ्यस्तोत्राणि । शताग्निष्टोमे विकृतौ तानि न विहितानीत्यर्थः । तानि उक्थ्यानि 'शताग्निष्टोमं भवति' इति शास्त्रविहिताग्निष्टोमान्ततया बाध्यन्ते शरकुशन्यायेनेत्यर्थः । इह तु बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इति शास्त्रं गायत्रं विदधातीति शास्त्रलक्षणा गायत्र्यः । त्रिष्टुब्जगत्यस्त्वानुमानिक्य इति विपरीता स्थितिः । अतो गायत्र्या बाधो त्रिष्टुजगतीभिर्न शक्यत इत्यर्थः ॥ २१ ॥

सङ्ख्यावादिनः कः परिहार इति प्रश्नं समाधत्ते—औत्पत्तिकमिति । गायत्रीति ऋचो नामधेयं नित्यमित्यर्थः । उक्तम् सङ्ख्यायाश्च शब्दवत्वादित्यत्र । ननु 'ये द्वे गायत्र्यौ सैका जगती' इति सङ्ख्यावाचित्वमवगम्यत इत्यत आह—स भक्त्येति । गौण्येत्यर्थः । गौण्यां सादृश्यञ्च परिमाणात् । द्वयोर्गायत्र्योर्यदष्टाचत्वारिंश-

### भाष्यम्

इति। एतच्च गायत्रीद्वयप्रशंसार्थं वचनम्। कथम्? इदं श्रूयते—'द्वाभ्यां गायत्रीभ्यां वैश्यस्य' इति। तदेतदयुक्तमिवोच्यते। जगत्या वैश्यस्य कार्यम्। 'जागतो हि वैश्यः'। तदेतद् द्वाभ्यां गायत्रीभ्यां क्रियते, जगत्यैव तत्कृतं भवति। ये हि द्वे गायत्र्यौ सैका जगती'ति। तस्मादहेतुरयं सङ्ख्यार्थत्वे गायत्रीशब्दस्य ॥२२॥

## वचनमिति चेत् ॥८.३.२३॥

शक्यं तावत्तत्रैतद् वक्तुम्, यत्रानुवादो गायत्रीशब्दः, यत्र तु विधिस्तत्र कथम्? यथा—'तिस्रोऽनुष्टुभः चतस्रो गायत्रीः करोति' इति। कः पुनर्विधौ विशेषः? विधौ शब्दार्थेन व्यवहारो भवति-त्रिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो न शक्याः कर्तुम्। शक्यास्तु चतस्रश्चतुर्विंशतयः। तस्मात्तत्र सङ्ख्यायां गायत्रीशब्द इति ॥२३॥

अत्र ब्रूमः—

## यावदुक्तम् ॥८.३.२४॥

इहैवैकत्र सङ्ख्यार्थो नान्यत्र, क्वचिद्दर्शनात्। आह-यद्येवं न सङ्ख्यावचनः कथमिह सङ्ख्यार्थो जात इति। उच्यते-लक्षणयापि विधानं भवति। यथा लोके-अमी पिष्टपिण्डाः सिंहाः

### भाष्यसन्दर्भयोजिनी

दक्षरवत्वं तदेकस्या जगत्या इति। कुरुदेशोद्भवौ कौरवौ, वाहिकदेशाभिजनो वाहिकः। शारीरिकशक्तिमादाय उर्ध्वत्वपरिमाणमादाय वा सादृश्यं दृष्टान्ते बोध्यम्। 'ये द्वे गायत्र्यौ सैका जगती' इति वाक्यं सङ्ख्यावादी गायत्र्योः प्रशंसार्थमिति नयति—एतच्चेति। प्रशंसा च सङ्ख्यार्थत्व एव घटत इति तदाशयः ॥ २२ ॥

पुनस्सङ्ख्यावादी प्रत्यवतिष्ठते—शक्यमिति। यत्रार्थवादे गायत्रीशब्दस्तत्र स कथमपि नेतुं शक्यते किन्तु विधिगतस्य तस्य कथमन्याऽर्थकल्पनेति पृच्छति—यत्र त्विति। 'तिस्रोऽनुष्टुभः चतस्रो गायत्रीः करोति' इति विधिः चतसृणां गायत्रीणां सम्पादनं विधत्ते। तच्च सङ्ख्ययैव सम्पादयितुं शक्यमित्यर्थः। अनुवादापेक्षया विधिगतगायत्रीशब्दस्य विशेषतामुपपादयति—विधाविति। 'न विधौ परश्शब्दः' इति न्यायेन विधिगतशब्दस्य यः शक्यार्थस्तेनैव व्यवहारः कर्तव्यः। न खल्वनुष्टुप्छन्दस्का गायत्रीच्छन्दकाः कर्तुं शक्यन्ते। चतस्रः चतुर्विंशति-सङ्ख्यास्तु शक्यन्ते कर्तुम्। तस्मात्सङ्ख्यावचनो गायत्रीशब्द इति ॥ २३ ॥

शङ्कां समाधत्ते—अत्र ब्रूम इति। इहैव 'तिस्रोऽनुष्टुभः' इत्यत्रैव। पृच्छति—आहेति। यदि गायत्रीशब्दो न सङ्ख्यावचनः किमित्यत्र सः तादृशो जात इति। लक्षणयापीति। अजहल्लक्षणयेत्यर्थः। 'न विधौ परश्शब्दार्थः' इति न्यायो जहल्लक्षणास्थले प्रवर्तत इत्यङ्गीकर्तव्यः। विधिवाक्ये स्वार्थ एव विधेयो भवति न परार्थ इति न्यायस्वरूपम्। एवञ्च प्रकृते गायत्रीशब्द ऋग्वचनस्सन्नपि सङ्ख्यापरो जात इत्यर्थः। तदिदं लौकिकदृष्टान्तेन घटयति—अमीति। अत्र सिंहशब्दः प्रतिकृतिबोधको दृष्ट इति सर्वत्र तद्बोधको न भवति। एवं

भाष्यम्

क्रियन्तामिति। वेदेऽपि 'पृष्ठैरुपतिष्ठते' इति। न च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्ट इत्यन्यत्रापि प्रतिकृतिवचनो विज्ञायते। पृष्ठशब्दो वा पृष्ठसाधनमन्त्रवचनः। न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते। यत्कारणम्—स्वार्थ एव वर्तमानोऽर्थान्तरं लक्षयति। स्वार्थं जहन्न लक्षयेत्। तस्मादयमप्यहेतुः ॥२४॥

## अपूर्वे च विकल्पस्स्याद्यदि सङ्ख्याविधानम् ॥८.३.२५॥

अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पस्स्यात् यदि सङ्ख्यायां गायत्रीशब्दः। तत्र हि श्रूयते—'गायत्र्या परिदध्यात्' इति। एवं श्रुते आजुहोतायाश्चतुर्विंशत्यक्षरस्य पदसञ्चयस्य च विकल्पस्स्यात्। विकल्पे पक्ष आजुहोताया बाधः। स चायुक्तः सत्यां गतौ। तस्मादपि नैतत्सङ्ख्याविधानम् ॥२५॥

## ऋग्गुणत्वान्नेति चेत् ॥८.३.२६॥

अत्रोच्यते—न प्रकृतौ विकल्पो भविष्यति। कुतः? ऋग्गुणत्वात्। ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः। ऋचस्तस्य सामिधेन्य आम्नाताः, यद्यनृचा परिदधाति, ऋग्गुणत्वं बाध्येत। तस्मात्तत्राऽऽजुहोतयैव परिधास्यति। तथा सति गायत्र्या परिहितं भविष्यति। ऋग्गुणत्वश्चोपसङ्गृहीतम् ॥२६॥

भाष्यसन्दर्भयोजिनी

वेदे पृष्ठशब्दः पृष्ठस्तोत्रसाधनमन्त्रवचनस्सन्नन्यत्रापि तद्वचनो न भवति। **शब्दार्थः** शक्यार्थः **परिच्छिद्यते** पृथक्क्रियते, त्यज्यत इति यावत्। तदिदमाह—**स्वार्थं जहन् न लक्षयेत्** इति ॥ २४ ॥

सङ्ख्यावादिनः पक्षे दोषमुद्भावयति - **अपूर्वे चेति**। सौत्रापूर्वशब्दविवरणम्—**दर्शपूर्णमासकर्मणीति**। अपूर्वत्वञ्चास्य प्रकृतिरूपत्वम्। प्रकृतौ दर्शपूर्णमासकर्मणीत्यर्थः। तत्र सामिधेनीमन्त्रा एकादश ऋग्रूपा आम्नाताः। तेषु प्रथममन्तिमञ्च मन्त्रं त्रिस्त्रिरभ्यस्य पञ्चदश सम्पाद्यन्ते 'पञ्चदश सामिधेनीरनुब्रूयात्' इति। तत्रैवं श्रूयते-'गायत्र्या परिदध्यात्' इति। परिधानं नामान्ते गायत्र्या उच्चारणम्। अन्ते च 'आजुहोता दुवस्यत' इति मन्त्र आम्नातः। यदि गायत्रीशब्दस्सङ्ख्यावचनस्तर्हि आजुहोताया 'गायत्र्या परिदध्यात्' इति विहितयाऽक्षरसङ्ख्यारूपया गायत्र्या विकल्पस्स्यादित्याह—**एवं श्रुते इति**। गायत्रीपदेन त्वन्मते चतुर्विंशत्यक्षरपदसञ्चयस्याभिधानात्। **पदसञ्चयस्य** पदसमुदायस्येत्यर्थः। अस्तु विकल्प इति चेत् **पक्ष आजुहोताया बाधः**। **सत्यां गतौ** गायत्रीशब्दस्य ऋग्वचनत्वाङ्गीकाररूपायां गतौ सत्यां विकल्पो न युक्त इत्यर्थः ॥ २५ ॥

सङ्ख्यावादी प्रत्यवतिष्ठते—**अत्रोच्यत इति**। सामिधेनीषु ऋचां प्रयोगो विहितः- अक्षरसङ्ख्यारूपाया गायत्र्याः परिधानकार्ये निवेशे ऋग्गुणत्वं बाध्येत। अत आजुहोतयैव परिधानं कर्तव्यमिति न विकल्प इत्याह—**न प्रकृताविति**। एवं कृते ऋग्गुणत्वं गायत्र्या परिधानञ्च सम्पादितं भवतीत्युपसंहरति—**तथा सतीति** ॥ २६ ॥

भाष्यम्

## तथा पूर्ववति स्यात् ॥८.३.२७॥

पूर्ववत्यपि बृहस्पतिसवे तथा स्यात्, यथाऽपूर्वे। अत्रापि ऋग्गुणकः प्रयोगोऽङ्गीकृतश्चोदकेन। तत्रापि ऋक्षूपादीयमानासु गायत्रश्चैवाहः कृतं भवति। ऋग्गुणकत्वञ्च न बाधितम्। तस्मान्नाक्षरावलोपः ॥२७॥

## गुणावेशश्च सर्वत्र ॥८.३.२८॥

तुशब्दस्थाने चशब्दः। दृष्टश्च तुशब्दस्यार्थे चशब्दः। यथा किञ्चेह भवतीति। गुणस्य चतुर्विंशतिसङ्ख्यायाः सर्वत्रावेशः कृत्स्नायामाजुहोतायाम्, नावयवे। अतस्तस्यामुपादीयमानायामृग्गुणत्वं चोपगृहीतं भवति, सङ्ख्या च। बृहस्पतिसवे पुनर्या ऋचश्चोदकेनाङ्गीकृताः तासामवयवे चतुर्विंशतिसङ्ख्या निविष्टा। तस्मिन्ननुपादीयमाने ऋग्गुणत्वमनुपात्तं भवति। प्रकृतिगायत्रीषु तूपात्तं भवति। तस्मान्न सङ्ख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणामागमः प्राप्नोति।

अपर आह—इदं तावदयं सङ्ख्यावादी प्रष्टव्यः—कस्मादक्षरगतायामेव सङ्ख्यायां

भाष्यसन्दर्भयोजिनी

ऋग्वादी सङ्ख्यावादिनं निगृह्णाति—**पूर्ववत्यपीति**। विकृतावपि बृहस्पतिसवे तथा स्यात् यथाऽपूर्वे प्रकृतौ। प्रकृतौ त्रिष्टुब्जगतीनामृग्गुणकत्वं तावत् स्पष्टम्। तादृश एव विकृतौ बृहस्पतिसवेऽतिदेशेन प्रयोग प्राप्तः। तत्र 'गायत्रं चैतदहर्भवति' इत्यत्र गायत्रीशब्दस्य सङ्ख्यावाचित्वमङ्गीकृत्य ऋग्गुणत्वञ्च परित्यज्य चोदकप्राप्तानामृचामक्षरावलोपः किमित्याश्रीयत इत्याह—**तत्रापि इति**। यदि गायत्रीपदमृग्वाची तर्हि बृहस्पतिसवे दाशतयीभ्य उपादीयमानासु ऋक्षु ऋग्गुणत्वं न बाधितं भवेत्, गायत्रञ्चैतदहः सम्पादितं भवेत्, अक्षरावलोपस्य प्रसक्तिरपि न स्यादित्याह—**तस्मादिति** ॥ २७ ॥

गायत्रीपदस्य सङ्ख्यानभिधाने सर्वत्र सामञ्जस्यं घटयितुमुपक्रमते—**तुशब्दस्थान इति**। सौत्रश्च शब्दस्त्वर्थ इत्यर्थः। च शब्दस्समुच्चयार्थकः, तुशब्दस्तु सामञ्जस्यार्थकः, वैलक्षण्यार्थको वा। तदिदं विशदयति—**गुणस्येति**। गुणपदं चतुर्विंशतिसङ्ख्यापरम्। स च गुण आजुहोतायां सर्वत्र वर्तते नावयवे। **तस्याम्** आजुहोतायां गृहीतायामृग्गुणत्वं सङ्ख्या चेत्युभयमनुगृहीतं भवति। इदञ्च सङ्ख्यावादिनोऽप्यभिमतम्। विकृतौ बृहस्पतिसवे विद्यमानं वैलक्षण्यं निरूपयति—**बृहस्पतिसवे पुनरिति**। सङ्ख्यावादी तत्र चोदकप्राप्तासु त्रिष्टुबादिषु अक्षरावलोपमङ्गीकृत्य चतुर्विंशतिसङ्ख्यामात्रस्य सङ्ग्रहं मन्यते, ऋग्गुणत्वञ्च त्यजति इति वैलक्षण्यमाह—**तस्मिन्निति**। सङ्ख्याभिधाने तु गायत्रीणामागमो न स्यादित्याह—**तस्मादिति** ॥

'गुणावेशश्च सर्वत्र' इति सूत्रमर्थान्तरपरतया व्याचष्टे—**अपर आहेति**। अक्षरगतसङ्ख्यायामेव गायत्रीशब्द इति किमित्याग्रहस्तव। सङ्ख्या च सङ्ख्येयस्थितिमतो। सङ्ख्येयानि यथाक्षराणि तथा सोमयागे

भाष्यम्

भवानवस्थितः, न पुनरन्यसङ्ख्येयगतायामपि ग्रहगतायां चमसगतायां वा। यावताऽविशेषेण श्रुतम्—गायत्रमेतदहर्भवति' इति। एवं सति सर्वत्र गुणावेशः सङ्ख्यावेशः प्राप्नोति ॥२८॥

निष्पन्नग्रहणान्नेति चेत् ॥८.३.२९॥

स चेद् ब्रूयात्—यत्रायं निष्पन्नो गायत्रीशब्दः प्रसिद्ध इत्यर्थः। तस्य ग्रहणं न्याय्यम्। अयञ्चाक्षरगतायामेव सङ्ख्यायां प्रसिद्धो न सर्वत्र। तस्मान्न सर्वसङ्ख्येयगतो गृह्यत इति ॥२९॥

स वक्तव्यः—

तथेहापि स्यात् ॥८.३.३०॥

यथाक्षरगतायामेव सङ्ख्यायां दृष्टो नान्यत्र, एवमृक्ष्वेव दृष्टो नान्यस्मिंश्चतुर्विंशत्यक्षरे गद्ये वा। यथा चाक्षरेष्वेव दृष्ट इति नानक्षरे विज्ञायते, एवमृक्षु दृष्ट इति नानृक्षु विज्ञातुं न्याय्यः।

अत्राह—यद्यप्ययमृक्षु गायत्रीशब्दः, एवमक्षरावलोप एव कार्यः। किं कारणम्? प्रकृत्युपबन्धनात्। चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्यः प्रापिताः। ता इमा नोज्झिता भविष्यन्ति। गायत्रीशब्दश्च सङ्ख्यासामान्याच्छक्नोति तदवयवान् वक्तुम्। एवमुभौ विधी अनुगृहीतौ भविष्यतः प्राकृतो वैकृतश्च ॥३०॥

भाष्यसन्दर्भयोजिनी

ग्रहाश्चमसाश्च। तद्गतत्वेन चतुर्विंशतिसङ्ख्या किमिति नेष्यते? इति पृच्छति—यावतेति। 'गायत्रमेतदहर्भवति' इत्यविशेषेणाम्नानात् सङ्ख्यारूपो गुणः सर्वत्र निवेष्टुमर्हतीत्यर्थः ॥ २८ ॥

स चेदिति। सङ्ख्यावादी चेदेवं ब्रूयात्—'चतुर्विंशत्यक्षरा गायत्री' इति गायत्र्यामेव चतुर्विंशतिसङ्ख्यारूपो गुणो निष्पन्नः प्रसिद्धः, नान्यत्रेति न ग्रहचमसादौ गुणस्य प्रवृत्तिः, तत्राप्रसिद्धत्वात्। अतस्सर्वसङ्ख्येयगतत्वेन स गुणो न गृह्यत इत्युपसंहरति—तस्मादिति ॥ २९ ॥

स वक्तव्यः सङ्ख्यावादी वक्तव्यः—यथा चतुर्विंशतिसङ्ख्याऽक्षरगतैव दृश्यते तथा गायत्रीशब्दः ऋक्ष्वेव दृश्यते नान्यत्र चतुर्विंशत्यक्षरात्मके गद्य इति। एवञ्च गायत्रीशब्दो न दृश्यतेऽनक्षरेषु तथा स शब्द ऋक्ष्वेव दृश्यते नानृक्षु इति को विशेषस्सङ्ख्यावादिन इति दर्शयति—यथेति।

ऋक्षु गायत्रीशब्दप्रयोगमभ्युपगम्य शङ्कते—अत्राहेति। कामं गायत्रीशब्द ऋक्षु प्रयुज्यते किन्तु बृहस्पतिसवे चोदकप्राप्तानां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वैव गायत्री सम्पादनमुचितमित्यत्र हेतुं निर्दिशति—प्रकृत्युपबन्धनादिति। प्रकृत्या सह त्रिष्टुबादीनां सम्बद्धत्वादित्यर्थः। यस्मात्कारणात् प्रकृतिसम्बद्धाश्चोदकेनात्र प्रापिताः, तस्मात् ता इमाः त्रिष्टुबादयो नोज्झिता भविष्यन्ति गायत्रीभिर्बाधिता न भविष्यन्तीत्यर्थः। चोदकानुग्रहो भविष्यतीति भावः। गायत्रीशब्दश्च सङ्ख्यावाचकस्सन् तदवयवान् त्रिष्टुबवयवान् चतुर्विंशत्यक्षराणि वक्तुं शक्नोति उभौ विधी चोदकः, गायत्रमेतदहः इति चानुगृहीतौ भविष्यतः ॥ ३० ॥

भाष्यम्

अत उत्तरं पठति—

**यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धस्स्यात् ॥८.३.३१॥**

यद्यविशये—असंशयेऽपि गायत्रीषु विहितासु प्रकृत्युपबन्धनादगायत्र्याः गायत्रीशब्दः कल्प्यते, शरेष्वपि 'बर्हिर्भवति' इति कुशेषु शरशब्दः कल्पयितव्यः कौशमेव बर्हिः कार्यम् । वक्तव्यो वा विशेषः ॥३१॥

**दृष्टः प्रयोग इति चेत् ॥८.३.३२॥**

अयं विशेषो दृष्टः—चतुर्विंशतिसङ्ख्यायामक्षरगतायां गायत्रीशब्दस्य प्रयोगः—ये द्वे गायत्र्यौ सैका जगतीति । तेन शक्यते कल्पयितुम् ॥३२॥

**तथा शरेष्वपि ॥८.३.३३॥**

शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते-शरवणमेवेदं कुशवनमिति ॥३३॥

**भक्त्येति चेत् ॥८.३.३४॥**

अत्रोच्यते—स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात्पृथुपत्रत्वात्सादृश्यवादोऽसौ—शरवणमेवेदं कुशवनमिति । स्वार्थे वर्तमानस्सादृश्यं गमयति । स्वार्थं जहत्कथं गमयेत् ? तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेष्विति ॥३४॥

भाष्यसन्दर्भयोजिनी

एवं प्राकृतवैकृतविध्योरुभयोरनुग्रहं मन्वानस्य सङ्ख्यावादिनश्शङ्काया उत्तरं पठति—**यदि वेति । यद्यविशये** । यदिशब्दस्य कल्प्यत इत्यनेन सम्बन्धः । प्रत्यक्षं गायत्रीषु विहितासु प्रकृतिसम्बन्धलोभेन त्रिष्टुब्गत चतुर्विंशत्यक्षरात्मकावयवस्य अगायत्र्याः गायत्रीभिन्नस्य गायत्रीशब्दः गायत्रीशब्दवाच्यत्वं यदि कल्प्यते, तर्हीत्यध्याहर्तव्यम् । 'शरमयं बर्हिर्भवति' इत्यत्र शरेषु कुशशब्दः, कुशेषु शरशब्दः कल्पयितव्यस्स्यात् । बर्हिश्शब्दस्योभयत्र प्रसिद्धत्वात् । अगायत्रीषु गायत्रीशब्द इव अकुशेषु शरेषु कुशशब्दः अशरेषु कुशेषु शरशब्दः प्रयोक्तव्यस्स्यादित्याह—**शरेष्वपीति** । दृष्टान्तदार्ष्टान्तिकयोः को विशेष इति वक्तव्यमित्यर्थः ॥ ३१ ॥

विशेषं दर्शयति सङ्ख्यावादी—**अयं विशेष इति** । 'ये द्वे गायत्र्यौ सैका जगतीति वाक्यबलेन चतुर्विंशतिसङ्ख्यामादायैव द्वयोर्गायत्र्योस्सम्पत्तिर्भवतीति गायत्रीशब्दप्रयोगः कल्प्यत इत्यर्थः ॥ ३२ ॥

**शरशब्दस्यापीति** । शरवणमेवेदं कुशवनमिति प्रयोगबलेन शरेषु कुशशब्दप्रयोगो भवेदिति को विशेष इत्यर्थः ॥ ३३ ॥

सङ्ख्यावादी शरशब्दप्रयोगं सङ्गमयति—**अत्रोच्यत इति** । **भाक्तः** लाक्षणिकः । सादृश्यञ्च—**दीर्घत्वात् पृथुपत्रत्वादिति** । यथा कुशा दीर्घाः पृथुपत्राश्च भवन्ति तथा शरा अपि । अजहल्लक्षणायां स्वीकृतायां शरशब्दप्रयोगे न कोऽपि दोष इत्याह—**स्वार्थे इति** ॥ ३४ ॥

भाष्यम्

## तथेतरस्मिन् ॥८.३.३५॥

तथेतरस्मिन्नपि ये द्वे गायत्र्यौ सैका जगतीति भाक्त एव गायत्रीशब्द इत्युक्तम् सोऽपि स्वार्थ एव वर्तमानस्तत्सदृशं गमयतीति ऋक्ष्वेव प्रयुक्तो न सङ्ख्यायाम् । तस्मान्न सङ्ख्यायां गायत्रीशब्दः । अतो नाक्षरावलोपः कर्तव्यः ॥३५॥

## अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥८.३.३६॥

अपि च त्रिष्टुब्जगतीनामेकदेशे वाक्यमपरिसमाप्तं भवति । न चापरिसमाप्तेन वाक्येनार्थः कश्चिदभिधीयते । अर्थाभिधानार्थश्च मन्त्रप्रयोगः । तत्र मन्त्रप्रयोग एवानर्थकः स्यात् । तस्मान्न तासां त्रिष्टुब्जगतीनामेकदेशे गायत्रीशब्दस्स्यात् । तस्मादुत्पत्तिगायत्रीणामेव दाशतयीभ्य आगमः कर्तव्य इति ॥३६॥

इति श्री शबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमाध्यायस्य तृतीयः पादः ॥

इति श्री भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामष्टस्य तृतीयः पादः ॥

### भाष्यसन्दर्भयोजिनी

'ये द्वे गायत्र्यौ सैका जगती'त्यत्रापि गायत्रीशब्दो भाक्त इत्युक्तमेवेत्याह—**तथेति**। स्पष्टोऽर्थः। निगमयति—**तस्मादिति**। गायत्रीशब्दस्य सङ्ख्यावाचित्वाभावे सिद्धे त्रिष्टुब्जगतीष्वक्षरावलोपं कृत्वा प्रयोगो न कर्तव्य इत्युपसंहरति—**अत इति** ॥ ३५ ॥

त्रिष्टुब्जगतीष्वक्षरावलोपे स्वीकृते दोषान्तर प्रदर्शयति—**अपि चेति**। अक्षरावलोपे सति **त्रिष्टुब्जगतीनामेकदेशे वाक्यमपरिपूर्णं** भवेत्। अपरिपूर्णं वाक्यं नार्थाभिधायकं भवतीत्याह—**न चेति**। **मन्त्रप्रयोगः** कर्मसमवेतार्थस्मरणाय भवतीति मन्त्राधिकरणे स्थितम्। अक्षरावलोपे च मन्त्रप्रयोग एवानर्थकस्स्यात्। अतो गायत्रीशब्द ऋग्वचनः। दाशतय्यां या उत्पन्ना गायत्र्यस्तासामागमः कर्तव्य इत्युतसंहरति—**तस्मादिति**।

अयमत्र पूर्वोत्तरपक्षसूत्रविषयाणां सङ्ग्रहः—वाजपेयस्य बहिः क्रत्वङ्गं बृहस्पतिसवाख्यमेकाहस्सोम यागः अग्निष्टोमस्य विकृतिः। तत्र 'गायत्रमेतदहर्भवति' इति वाक्यं बहिष्पवमानादिषु स्तोत्रेषु गायत्रीं विदधाति। अर्थात् प्रकृतितः प्राप्तासु त्रिष्टुबादिच्छन्दस्कासु ऋक्षु गायत्रीच्छन्दस्का ऋचो विदधाति। ता ऋचः चतुर्विंशत्यक्षरात्मिकाः ऋग्वेदादानेयाः? उत प्रकृतितः प्राप्तानां त्रिष्टुबादीनामक्षरावलोपं कृत्वा चतुर्विंशत्यक्षराणि स्तोत्रसाधनत्वेन ग्राह्याणीति संशये—पूर्वपक्षी गायत्र्यादिब्दानां सङ्ख्यावाचित्वमङ्गीकृत्याधिकाक्षराणां लोपं स्वीकृत्य प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशशास्त्रानुगुण्यं वाञ्छति। दाशतीभ्य ऋचामागमे सति प्राकृतप्रत्ययो बाध्येत इति तदाशयः। ननु गायत्रीणामत्र विकृतौ प्रत्यक्षश्रुतत्वादातिदिष्टानां शरकुशन्यायेन बाधो भवत्विति सिद्धान्तिना पर्यनुयुज्यमानः पूर्वपक्षी वदति—यद् गायत्रीशब्दः चतुर्विंशतिसङ्ख्याकाक्षराणां वाचकः, अन्वयव्यतिरेकाभ्यां तथा प्रतीयमानत्वात्। तथा सति त्रिष्टुबादीनां बाधकः कथं भविष्यति इति।

## भाष्यसन्दर्भयोजिनी

अत्र पूर्वपक्षी दृष्टान्तयति—'शताग्निष्टोमं भवति' इत्यत्र ज्योतिष्टोमविकृतौ प्रकृतित उक्थ्यादिस्तोत्रेषु समागतेष्वपि यथा लोपः स्वीक्रियते, तथा त्रिष्टुबादिषु बृहस्पतिसवे समागतेष्वपि अधिकाक्षराणां लोपः स्वीक्रियत इति।

स्वीयं पक्षं पोषयितुं पूर्वपक्षी 'ये द्वे गायत्र्यौ सैका जगती' इति वाक्यबलेन गायत्रीशब्दस्य सङ्ख्यावाचित्वं साधयति। 'द्वे गायत्र्यौ' इत्यस्य द्वयोश्चतुर्विंशत्यक्षरयोरिति स्वीकारे सत्येवैका जगती भवितुमर्हतीति तदाशयः। एवं 'तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति' इति विधायकं वाक्यमपि सङ्ख्यावाचित्व एव सङ्गच्छेत।

अत्रैवं सिद्धान्तिनः ऋग्वादिनश्शङ्का—चतुश्चत्वारिंशत्सङ्ख्यायां त्रिष्टुभि चतुर्विंशतिसङ्ख्या कथं स्थातुमर्हति? न खलु गुणे गुणः स्थातुमर्हति इति। तां पूर्वपक्षी वारयति—चतुश्चत्वारिंशत्सङ्ख्यायामष्टाचत्वारिंशत्सङ्ख्यायां वा चतुर्विंशतिसङ्ख्या वर्तत इति न ब्रवीमि किन्तु यस्य दश गावस्तस्य द्वौ पञ्चकौ स्त इतिवत् अष्टाचत्वारिंशत्सङ्ख्यायां द्वे चतुर्विंशतिसङ्ख्येऽवयवभूते स्त इति। न खलु सङ्ख्या सङ्ख्यान्तरव्यावर्तिका भवति। यद्येवं तर्हि उत्तरसङ्ख्ययैव पूर्वसङ्ख्याया गतार्थत्वादेकयैव सर्वोत्तरसङ्ख्यया कार्यनिर्वाहः कर्तव्य आपद्येत। अतो गायत्रीशब्दस्य सङ्ख्यावाचित्वे न कोऽपि दोषः।

अत्र ऋग्वादी सिद्धान्ती वदति—गायत्रीशब्दश्चतुर्विंशत्यक्षरात्मकमन्त्रवाची। यदि गायत्रीशब्दस्सङ्ख्यावाची स्यात्तर्हि चतुर्विंशतिसङ्ख्याके गवां यूथेऽपि गायत्रीशब्दप्रयोगस्स्यात्। अतो न गायत्रीशब्दस्सङ्ख्यावाचकः।

सदृष्टान्तमृग्वादी स्वीयं पक्षमुपोद्बलयति—यथा गमनं निमित्तीकृत्य गोशब्दे प्रवृत्तेऽपि सास्नादिमत्येव प्रयुज्यते, तथा चतुर्विंशतिसङ्ख्याया अवयवरूपेण त्रिष्टुबादिषु सत्त्वेऽपि चतुर्विंशत्यक्षरात्मकेषु ऋक्ष्वेव गायत्रीशब्दो वर्तत इति।

किञ्च चतुर्विंशतिसङ्ख्याया वाचकश्शब्दः चतुर्विंशतिरित्यस्त्येव, तस्मिन् सति तत्सङ्ख्यावाचकत्वेन गायत्रीशब्दस्य काऽऽवश्यकता? व्यवहाराय संज्ञाशब्दा भवन्ति। एकेन शब्देन व्यवहारे सिध्यति, अपरेण शब्देन किं प्रयोजनम्। अतो गायत्रीशब्द ऋग्वचन एव।

किञ्च चतुर्विंशत्यक्षरात्मिकामृचं वदितुं गायत्रीशब्दं परित्यज्यापरश्शब्दो नास्ति। तस्या ऋचो व्यवहारायैवायं शब्द इत्यस्मादपि हेतोर्गायत्रीशब्द ऋग्वचनः। तस्माद् गायत्रीणामृचामागमो बृहस्पतिसवे कर्तव्यः।

अग्निष्टोमदृष्टान्तेनाक्षरावलोपमुक्तवतः पूर्वपक्षिणो मतमेवं सिद्धान्तिना निरस्यते—यत्-संस्थाशब्दस्समाप्तिवचनः, अग्निष्टोमसंस्था नामाग्निष्टोमस्तोत्रेण समाप्तिः। तदूर्ध्वमुक्थ्यादीनां स्तोत्राणां लोप एव। यदि तदूर्ध्वमुक्थ्यस्तोत्राणि क्रियेरन् तर्हि उक्थ्यसंस्था भवेत्। शताग्निष्टोममित्यत्र शताग्निष्टोमसंस्थाः कर्तव्या इत्युक्तेस्वत एवोक्थ्यादीनां लोपस्सिध्यति। गायत्रीशब्दस्तु ऋग्द्रव्ये ऋङ्मन्त्रे वर्तते। अक्षरावलोपं कृत्वा चतुर्विंशत्यक्षराणि त्रिष्टुब्जगतीतो गृह्येरन् तानि न गायत्रीशब्दवाच्यानि भवेयुः अक्षरेषु लुप्तेषु ऋक्त्वमेव न तिष्ठेदित्यग्निष्टोमदृष्टान्तो विषमः।

अग्निष्टोमेनोक्थ्यादीनां बाधः शास्त्रकृतः, त्रिष्टुबादिभिर्गायत्र्या बाधः आनुमानिकः, गायत्र्यस्तु शास्त्रलक्षणाः त्रिष्टुबादिभिर्बाधितुं न शक्यन्ते।

'ये द्वे गायत्र्यौ सैका जगती' इत्यादौ चतुर्विंशतिसङ्ख्यामादायैव जगत्यां द्वयोर्गायत्र्योस्सम्पत्तिरिति यदुक्तं पूर्वपक्षिणा, तत्रेदमुत्तरम्—गायत्रीति ऋचो नामधेयम्, तच्चौत्पत्तिकम् अर्थान्नित्यम्। अक्षरावलोपेन

## भाष्यसन्दर्भयोजिनी

कृत्रिमत्वे गायत्रीति नामधेयमेव न घटते। 'ये द्वे गायत्र्यौ' इत्यत्र गायत्रीपदं भक्त्या नेयम्। अतो गायत्रीपदं न सङ्ख्यापरम्।

पुनस्सङ्ख्यावादी पृच्छति—भक्त्या शब्दप्रयोगोऽनुवादे भवितुमर्हति। यत्र तु विधिः 'तिस्रोऽनुष्टुभः चतस्रो गायत्रीः करोति' इति तत्र कथं भक्त्या शब्दो नेतु शक्यते। न खलु विधौ भक्तिर्भवति। तिसृष्वनुष्टुप्सु चतसृश्चतुर्विंशतयो वर्तितुमर्हन्तीति गायत्रीशब्दस्सङ्ख्यावचन इति।

अस्योत्तरम्—यत्र स्वार्थं परित्यज्य जहल्लक्षणा तत्रायं दोषः, किन्तु यत्र स्वार्थमपरित्यजन् लक्षणा भवति, तत्र न दोषः। यथा अमो पिष्टपिण्डाः सिंहाः क्रियन्तामिति विधौ सिंहशब्दः प्रतिकृतिवचन इति सर्वत्र तद्वचनस्स इति न स्वीक्रियते, तद्वत् प्रकृतेऽपि लाक्षणिकः प्रयोग इति न सङ्ख्यावचनो गायत्रीशब्द इति।

किञ्च गायत्रीशब्दस्य सङ्ख्यावचनत्वे दर्शपूर्णमासयोः 'गायत्र्या परिदध्यात्' इति विहितपरिधानार्थया गायत्र्या सह आजुहोतामन्त्रस्य विकल्पस्यात्। स च न युक्तः। अतो न सङ्ख्यावाची गायत्रीशब्दः।

अत्र सङ्ख्यावादी वदति—सामिधेनीषु ऋचां प्रयोगः क्रियते, नाक्षरसङ्ख्यानाम्। तत्र प्रयुज्यमानेषु ऋग्गुणत्वमावश्यकम्। आजुहोतायां ऋग्गुणत्वमस्तीति तयैव परिधानं क्रियत इति।

ऋग्वादी सिद्धान्ती प्रतिवदति—बृहस्पतिसवेऽपि तथा ऋग्गुणत्वं कुतो न स्यात्? तत्र कथमक्षरावलोपं कृत्वा गायत्रीसम्पादनमिति प्रतिपादयसि? ऋग्गुणत्वं यदि सम्पाद्यते तर्हि सर्वत्र सम्पादनीयम् इति।

गायत्रीशब्दो यत्र प्रसिद्धः तस्यैव ग्रहणं न्याय्यम्। स च चतुर्विंशत्यक्षरेषु प्रसिद्ध इति सङ्ख्यैव गृह्यते। अतस्सर्वसङ्ख्येयं स न गृह्यत इति सङ्ख्यावादी।

तत्र ऋग्वादी प्रत्याचष्टे—गायत्रीशब्दो यथा चतुर्विंशत्यक्षरे दृष्टः, तथा स ऋक्ष्वेव दृष्टः नान्यत्र क्वचिद् गद्ये। अनृक्षु स शब्दो न प्रयुज्यते। अतो न सङ्ख्यावाचकः। यद्यपि ऋक्षु दृश्यते गायत्रीशब्दः, तथापि प्रकृतिसम्बन्धात् त्रिष्टुबादीनां चोदकप्राप्तानां प्रकृतिसम्बन्धस्य चोदकस्य च सङ्ग्रहायाक्षरावलोप एवाश्रीयत इति चेत्सङ्ख्यावादी ब्रूयात् तत्रेदमुत्तरम्—असन्दिग्धमृक्षु दृष्टानां प्रकृतिसम्बन्धासिद्ध्यर्थमगायत्रीषु गायत्रीशब्दकल्पनमनुचितम्। एवं सति शरेषु कुशकल्पनमापतत् एव कुशेषु शरकल्पनम्।

अत्र सङ्ख्यावादी प्रतिवदति—'ये द्वे गायत्र्यौ' इत्यत्र सङ्ख्यावाचकत्वेन गायत्रीशब्दस्य दृष्टत्वात् चतुर्विंशत्यक्षरगतत्वेन गायत्रीशब्दः कल्प्यते, तादृशं गमकं शरेषु नास्तीति न कुशेषु शरकल्पनमिति।

ऋग्वादी वदति–कुशेषु शरकल्पने 'शरवणमेवेदं कुशवनमिति प्रयोगबलेन कुशेषु शरकल्पनं भवत्येवेति।

कुशेषु शरकल्पनं दीर्घत्वपृथुपत्रत्वादिसादृश्येन भाक्तमिति सङ्ख्यावादी यदि ब्रूयात्, तर्हि 'ये द्वे गायत्र्यौ' इत्यत्रापि गायत्रीशब्दो भाक्त एवेति कथने को दोषस्स्यात् इति ऋग्वादी ब्रूयात्।

अपि च क्रतुषु मन्त्राः प्रयोगसमवेतार्थस्मारकाः सम्मताः। मन्त्रैकदेशे सति तेऽर्थस्मारका न भवेयुः। अक्षरावलोपे एकदेशेन विहीनास्तेऽर्थस्मारकाः कथं भवेयुः? अतस्त्रिष्टुबादीनामेकदेशे गायत्रीशब्दप्रयोगोऽनुचित एवेति बृहस्पतिसवे दाशतयीभ्य एव गायत्र्यः समानेया इति॥

इति बृहस्पतिसवे दाशतयीभ्यो गायत्रीणां समानयनाधिकरणम्॥

इति पूज्यपाद श्रीचिन्नस्वामिशास्त्रिचरणानाम् अन्तेवासिना पट्टाभिरामेण कृतायां भाष्यसन्दर्भयोजिन्यामष्टमस्य तृतीयः पादः॥

श्रीः

# अष्टमस्य चतुर्थ पादः

१

भाष्यम्

## दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ ८.४.१ ॥

विषयः

'यदेकया जुहुयात् दर्विहोमं कुर्यात्' ( तै. सं. ३. ४. १०. ४. ) इति श्रूयते। अस्मिन् दर्विहोमशब्दे भवति संशयः—

### वार्तिकाभरणम्

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥

अत्राचार्यैस्तुरीयपादस्त्यक्तः। तं वयं वर्णयामः। पूर्वं त्रिविधेनातिदेशेनाविहितेतिकर्तव्यताकेषु कर्मस्वितिकर्तव्यताप्राप्तिस्साधिता। इदनीं विहितेतिकर्तव्यताकेषु दर्विहोमेषु तामपवदिष्यन्तः तत्रापवादार्थं प्रस्तुतदर्वीहोमशब्दप्रसङ्गात् 'यदेकया जुहुयाद् दर्वीहोमं कुर्यात्' इत्यर्थवादे श्रुतो दर्वीहोमशब्दः किं गुणविधिः ? उत कर्मनामधेयम् ? इति विचारयामः। तत्र होमसामानाधिकरण्याद्दर्वीहोमशब्दः कर्मनामधेयमिति स्थितम्। सिद्धे च नामधेयत्वेऽन्तरागर्भिणीन्यायेनान्यत्किञ्चिद्विचार्यते स किं लौकिकानामष्टकादीनां नामधेयम् ? अहोस्वित् सर्वेषां लौकिकानां वैदिकानाञ्चेति। तत्र लौकिकानामेवेदं नामधेयम्, अष्टकादिलौकिककर्मकर्तरि शिबीनां दार्विहोमिको ब्राह्मणः अम्बष्ठानां दार्विहोमिको ब्राह्मण इति स्मृतिषु प्रयोगात्। तस्माल्लौकिकानामेवेदं नामधेयमिति प्राप्ते,

### तन्त्रशिखामणिः

सू० दर्विहोमो यज्ञाभिधानं होमसंयोगात् ।

अतिदेशापवादविचारात्मकतया पादान्तरत्वम् आनन्तर्यञ्चेति ध्येयम्। तत्रातिदेशापवादविषय-

### भाष्यसन्दर्भयोजिनी

१

विषयः

अतिदेशापवादोऽत्र पादे चिन्त्यते। तत्र प्रसङ्गाद्दर्विहोमशब्दस्य गुणविधित्वनामत्वविचारः। तत्रोदाहरति—यदेकयेति। अर्थवादोऽयं वास्तोष्पतिहोमस्य। अत्रायं सन्दर्भः—आहिताग्नेरग्निहोत्रिणो गार्हपत्याग्निः गृहस्थानीयः। यदाग्निहोत्री ग्रामाद्-ग्रामान्तरं यियासति, तदा गार्हपत्येन पत्न्या च सह गच्छेत्। गमनात्पूर्वं वास्तोष्पतिं जुहुयात्। 'वास्तोष्पते प्रति' 'वास्तोष्पते शग्मया' इति पुरोनुवाक्यां याज्याञ्चानूच्य हुत्वा च

## भाष्यम्

### संशयः

किं गुणविधिः ? उत कर्मनामधेयम् ? इति । किं प्राप्तम् ?

### सिद्धान्तः

दर्विहोमो यज्ञाभिधानम्-कर्मनामधेयमित्यर्थः । कुतः ? होमसंयोगात् । होमशब्दोऽत्र श्रूयते, तत्प्रधानश्चात्र समासः । दर्विशब्द उपसर्जनम् होमश्च कर्म । अथवा जुहुयादिति

## वार्तिकाभरणम्

ब्रूमः—लौकिकानां वैदिकानामपि सर्वेषां नामधेयमित्यङ्गीकर्तव्यम् । अन्यथा वैदिकेऽपि वास्तुहोमे 'यदेकया जुहुयाद्दर्वीहोमं कुर्यात् पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति दर्विहोमत्वापादिका श्रुतिरनुपपन्ना स्यात् । एवं स्थिते तथाऽप्यत्किञ्चिद्विचार्यते-किं यज्युत्पत्तीनां जुहोत्युत्पत्तीनाञ्च सर्वेषां नामधेयम् ? उत जुहोत्युत्पन्नानामेव ? इति । तत्र यज्युत्पत्तीनामपि कर्मणां 'चतुरवत्तं जुहोति' इति होमविधानादुभयेषामपि नामधेयमिति पूर्वपक्षः । स्यादेतदेवम्, यदि 'चतुरवत्तं जुहोति' इत्यनेन यागस्य होमत्वं विधीयेत, न त्वेवम् । किन्तु प्रोक्षणादिवद्द्रव्यस्य संस्कारको होमो विधीयते 'चतुरवत्तं जुहोति' इति । तस्माद्यागस्य होमत्वाभावाज्जुहोत्युत्पत्तीनामेव नामधेयम् ।

स्थितादुपरि पूर्वपक्षः क्रियते-यदुक्तं दर्विहोमशब्दो नामधेयमिति तन्न; किन्तर्हि ? गुणविधिः, अन्यथा दर्विहोमो दर्विहोम इति झडिति प्रतीयमानसमासार्थो विरुध्येत । ननु दर्व्याख्यो होमो दर्विहोम इति समासान्तराश्रयणेनापि नामधेयत्वमुपपद्यत इति चेत्तथासति दर्विहोमशब्दस्याप्रसिद्धार्थकल्पनाप्रयासस्स्यात् । तस्माद्गुणविधिरिति प्राप्ते,

ब्रूमः—दर्विहोमशब्दो गुणविधिरिति वदन्वादी प्रष्टव्यः स किं होमसाधनम् ? किं वाधारः ? आहोस्वित्प्रदेयद्रव्यम् ? इति । नाद्यः; स किं लौकिककर्मसाधनमुत वैदिककर्मसाधनमिति । नाद्यः; 'त्वग्बिलया मूलदण्डया

## तन्त्रशिखामणिः

दर्विहोमा हृदयमागतास्तत्प्रसङ्गात् 'यदेकया जुहुयात् दर्विहोमं कुर्यात् पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति वास्तुहोमे याज्यापुरोनुवाक्याविध्यर्थवादगतो दर्वीहोमशब्दो बुद्धिमागतः, स किं गुणविधिर्नामधेयं वेति चिन्त्यते ।

## भाष्यसन्दर्भयोजिनी

गच्छेत् । आश्रावणप्रत्याश्रावणपुरोऽनुवाक्यापठन-याज्यानुवचनान्ते वषट्कारोच्चारणपुरस्सरं होमे क्रियमाणे देवास्तृप्ता भवेयुः । केवलं स्वाहान्तमन्त्रेण होमे क्रियमाणे तावती प्रीतिर्न भवेत् । याज्यापुरोनुवाक्याभ्यां विना स्वाहान्तमन्त्रेण क्रियमाणो होमो दर्विहोमः कथ्यते । अतः पुरोनुवाक्यया याज्यया च सह जुहुयादिति । एवं कृतो होमः 'सदेवत्वाय' भवतीति सन्दर्भः । तत्र दर्विहोमशब्दे संशयः—किं गुणविधिः ? कर्मनाम ? इति । गुणविधिरिति पूर्वपक्षस्यातिदुर्बलत्वात्सिद्धान्तेनोपक्रमते—**दर्विहोम** इति । यज्ञस्य कर्मणोऽभिधानं नामेत्यर्थः । दर्विशब्दस्य होमपदेन संयोगात् दर्व्या होम इति तस्य विग्रहात्, तत्पुरुषे चोत्तरपदस्य प्राधान्यात् दर्विहोमशब्दः

भाष्यम्

कर्मोच्यते। तेन समुच्चितो यदेकया जुहुयादिति। तस्मात्कर्मनामधेयं स्थितं तावत् ततोऽर्थान्तरं प्रक्रियते ॥

इति दर्विहोमशब्दस्य कर्मनामत्वाधिकरणम् ॥ १ ॥

२

## स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ ८.४.२ ॥

संशयः

यदा कर्मनामधेयं तदा चिन्त्यते—किं लौकिकानां स्मार्तानां कर्मणामष्टकादीनां

वार्तिकाभरणम्

दर्व्या जुहोति' इत्याचारादेव दर्व्याः प्राप्तत्वेन तत्र गुणवैयर्थ्यात्। न द्वितीयः; वैदिके कर्मणि 'स्रुवेण जुहोति' 'चमसेन जुहोति' इति स्रुवादीनां विहितत्वेन दर्व्याः तैस्सह विकल्पापत्तेः। स चान्याय्यः। समासानुमित विधिविहितदर्व्याः प्रत्यक्षविधिविहितस्रुवादिभिस्सह विषमशिष्टत्वात्। नापि प्रथमः; न द्वितीयः; 'यदाहवनीये-जुह्वति' इति शास्त्रेणाहवनीयस्याधारत्वेन विहिततया तत्र दर्वविधिवैयर्थ्यात्। न च विकल्पः, पूर्ववद्विषमशिष्टत्वात्। तस्मार्द्विहोमशब्दः तत्प्रख्यन्यायेन नामधेयम् ॥

तन्त्रशिखामणिः

तत्राग्निहत्रं जुहोति' इत्यत्राग्निहोत्रशब्दवद्दर्वीहोमपदस्य होमसाधनसामानाधिकरण्यात् होमशब्दस्य च कर्मनामत्वाविवादात् दर्व्या होमो दर्वीहोम इति तत्पुरुषस्य चोत्तरपदार्थभूतहोमप्रधानत्वाद्दर्वीहोमशब्दः कर्मनामधेयम् ॥

वृत्तमधिकरणम्

सू० स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥

प्रासङ्गिकी सङ्गतिः। किमयं दर्वीहोमशब्दो लौकिकानामेव कर्मणां नामधेयम् ? उताविशेषेण श्रुतानां लौकिकानाञ्चेति विशयः। तत्र शिबीनान्दार्विहोमिको ब्राह्मणः' इति शिब्यादिस्थालीपाककर्तरि दार्विहोमिक-

भाष्यसन्दर्भयोजिनी

कर्मनामेत्यर्थः। स्पष्टं पक्षान्तरमाह—अथवेति। 'वास्तोष्पतिं जुहुयात्' इत्यनेन विहितकर्मणा समुच्चितत्वाद् यदेकयेति वाक्यस्य तद्गतो दर्विहोमशब्दः कर्मनामेत्यर्थः। एवमधिकरणं समाप्य प्रसङ्गात् अर्थान्तरं लौकिकानां होमानां नाम उत वैदिकानामपीत्यर्थान्तरं प्रक्रियते प्रारभ्यत इत्यर्थः ॥ १ ॥

दर्विहोमशब्दस्य कर्मनामधेयत्वाधिकरणम् ॥

२

संशयः

दर्विहोमशब्दः कर्मनामेति सिद्धे प्रसङ्गात्केषां कर्मणामिति विचारयति—यदेति। लौकिकानामित्यस्य

### भाष्यम्

नामधेयं दर्विहोमशब्दः ? उत सर्वेषामेव लौकिकानां वैदिकानाञ्चेति । किं प्राप्तम् ?

### पूर्वपक्षः

स लौकिकानां स्यात् । स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात् । कुतः ? कर्तुस्तदाख्यत्वात् । तेषां कर्ता तेन दर्विहोमशब्देन समाख्यायते 'शिबीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मणः' इति । यश्च यत्करोति स तेनाख्यायते । यथा लावकः पाचक इति । यदि चाष्टकादीनां नामधेयमेतत् ततस्तेषां कर्मणां कर्ता दार्विहोमिक समाख्यामर्हतीति । तस्माद् लौकिकानां नामधेयम् ॥ २ ॥

### तन्त्रशिखामणिः

प्रयोगो दृश्यते । यश्च यत्करोति स तेनाख्यायते । यथा पाचको लावक इति । किञ्च लौकिकेषु स्थालीपाकादिहोमेष्वाचारानुमिता त्वग्बिलया मूलदण्डया दर्व्या जुहोति इति स्मृतिश्च तत्प्रख्यापिका विद्यते । तस्माल्लौकिकानां नामधेयमिति प्राप्तेऽभिधीयते—

यदेकया जुहुयाद्दर्विहोमं कुर्यात् इति वैदिकवास्तुहोमेऽपि दर्विहोमपदप्रयोगात् एकयर्चा क्रियमाणानां वैदिकानामपि होमानां नामधेयम् । नन्वत्रैकयर्चा दर्विहोमत्वं वास्तुहोमे केवलमापाद्यते न तु तत्र दर्विहोमशब्दः प्रयुक्तः, तत्कथं वास्तुहोमे प्रयोगादित्युच्यत इति चेत्सत्यम्, यदि वैदिकानां दर्वीहोमपदं न नाम स्यात् तदा वास्तुहोमस्यैकया होमेऽपि वैदिकत्वेन दर्वीहोमतापादनमनुपपन्नं स्यात् । ततश्च वैदिकेऽपि तदापादनबलाद्वैदिकानामपि तन्नामधेयमिति ज्ञायते । वैदिकेऽपि क्वचित्कर्मणि दर्व्या ब्रह्मौदनमुद्धृत्य × × × × मेध्यायेति ब्रह्मौदनिके जुहोति' इति तत्प्रख्यापकशास्त्रस्य विद्यमानत्वाच्च वैदिकानामपि तन्नामधेयम् । यदात्र दर्वीहोमशब्दो लौकिकानामेव नामधेयं स्यात् तदान्यत्र वैदिके प्रयुज्यमानोऽग्निहोत्रशब्दवद् अतिदेशकं स्यात् । अतोऽतिदेशकत्वापवादार्थं सर्वेषां नामेति प्रतिपाद्यते । तदुपोद्घातत्वेन च पूर्वत्र गुणविधिनामधेयत्वविचारः । सति हि नामत्वे कस्येति विचारो घटते । तस्मादतिदेशापवादायैव गुणविधित्वादिविचार इत्येकदेशिभिरुक्तम् । तन्न युक्तम्, यदि लौकिकेषु प्रयोगात् तन्नामत्वमभिमतम् तदान्यत्र प्रयोगाभावात् क्वातिदेशकत्वशङ्का, यदि च दर्वीहोमं कुर्यात् इत्यस्ति वास्तुहोमेऽपि प्रयोग इत्युच्येत, तथाप्यर्थवादगतत्वात् 'एष वै दर्शपूर्णमासयोरवभृथः' इतिवन्नातिदेशशङ्का । तस्मात्प्रसङ्ग एवात्र सङ्गतिरित्याहुः ॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

विवरणं स्मार्तानामिति । औपासनाग्निसाध्यानामित्यर्थः । संशयस्य द्वितीया कोटिः—उतेति । प्रथमायाः कोटेर्नियामकाभावाद् द्वितीया कोटिः ।

### पूर्वपक्षः

पूर्वपक्षयति—स खल्विति । यो यत्करोति स तस्य कर्तेति न्यायेन हेतुं निर्दिशति—कर्तुरिति । दार्विहोमिक इति समाख्यया लौकिकहोमा एवाष्टकादिषु क्रियमाणा दर्विहोमशब्दवाच्या इति भावः ॥ २ ॥

## भाष्यम्

### सिद्धान्तः

## सर्वेषां वा दर्शनाद् वास्तुहोमे ॥ ८.४.२ ॥

सर्वेषां लौकिकानां वैदिकानाञ्च नामधेयमेतत्, न लौकिकानामेव। कस्मात् ? दर्शनाद् वास्तुहोमे। वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति-'यदेकया जुहुयाद् दर्विहोमं कुर्यात्' पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' ( तैं० सं० ३. ४. १०. ४. ) इति। ननु विपरीतमेतद्दर्शनम्-यदेकया जुहुयाद् दर्विहोमं कुर्यात् अदर्विहोमं सन्तमित्यापद्यते। यदि दर्विहोम एवासौ तत एकया द्वाभ्याञ्च हूयमानो दर्विहोम एव भवति। तत्रैतद्दर्शनं नोपपद्यते-'यदेकया जुहुयाद् दर्विहोमं कुर्यादि'ति।

अत्रोच्यते—यदि लौकिकानामेव नामधेयम्, न वैदिकानाम् तत एकयापि हूयमानोऽसौ नैव दर्विहोमो भवति, अलौकिकत्वात्। तत्रैतद् वचनं नोपपद्यते—'यदेकया जुहुयाद् दर्विहोमं कुर्यात्' इति। तस्माज्ज्ञापकमेवेदं वैदिकानां दर्विहोमत्वे। एवमपि ज्ञापक

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

सिद्धान्तयति—**सर्वेषामिति**। लौकिकवैदिकानां होमानां नामधेयत्वे हेतुं सङ्गृह्णाति—**दर्शनादिति**। समाख्यया लौकिकहोमानां नामत्वेऽपि तदपेक्षया प्रबलेन दर्शनेन-लिङ्गेन सर्वहोमनामत्वमेवेति भावः। **वास्तुहोमे** वास्तोष्पतिहोम इत्यर्थः। देशान्तरं प्रवत्स्यताग्निहोत्रिणा 'वास्तोष्पते प्रतिजानीहि' 'वास्तोष्पते शग्मया' इत्याभ्यां क्रियमाणो होमो वास्तोष्पतिहोमः। **वैदिके** आधानाग्निसाध्य इत्यर्थः। अत्र दर्शने-लिङ्गे 'दर्विहोम' शब्दप्रयोगादस्य दर्विहोमत्वमित्यर्थः।

ननु नैतद्दर्शनमुपपन्नम्. एकयर्चा हूयमानो दर्विहोमः, द्वाभ्यां ऋग्भ्यां हूयमानोऽदर्विहोमः। वास्तोष्पति होमश्च 'पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति द्वाभ्यां क्रियते। कथमयं होमो दर्विहोमः ? कथञ्चेदं दर्शनं वास्तोष्पतिहोमस्य दर्विहोमत्वसाधकमिति शङ्कते—**ननु विपरीतमिति**। अत्र 'दर्विहोम' शब्दप्रयोगमात्रेण दर्विहोमत्वं साध्यते तर्हि वास्तोष्पतिहोमस्य द्वाभ्यामृग्भ्यां क्रियमाणस्यापि दर्विहोमत्वमापद्येतेत्याह—**यदीति**। अतो नैतद्दर्शनमुपपत्तिमदित्याह—**तत्रैतदिति**।

समाधत्ते—**अत्रोच्यत इति**। यथा लौकिकवैदिकहोमानां दर्विहोमशब्दोऽनुपपन्नः, तथैव लौकिकहोमानां नामत्वपक्षेऽपि सोऽनुपपन्नः, एकयर्चापि हूयमानो होमो न दर्विहोमः, लौकिकहोमानां तथा हूयमानत्वाभावात्, एकयर्चा होमे क्रियमाणे तस्यालौकिकत्वमेवायाति इत्याह—**यदीत्यादिना**। एवं पक्षद्वयेऽप्यनुपपत्तिस्तुल्या चेद्दर्शनस्य गतिः का भवेदित्यत आह—**तस्मादिति**। अनुपपन्नमिदं दर्शनं किञ्चिज्ज्ञापयतीत्येष्टव्यम्। एतद्दर्शनं लौकिकवैदिक होमानां दर्विहोमत्वज्ञापकं न साधकमित्यर्थे तात्पर्यं वर्णनीयम्। ज्ञापकत्वकथनमात्रेण न वस्तुनस्सिद्धिर्भवतीति

### भाष्यम्

मुक्तम्, कुतः प्राप्तिः ? उच्यते-होमशब्दस्य सामान्याभिधायित्वात्प्राप्तिः। तस्माल्लौकिक वैदिकानां नामधेयमेतत् ॥ ३ ॥

इति दर्विहोमशब्दस्य लौकिकवैदिकहोमनामत्वाधिकरणम् ॥ २ ॥

३

## जुहोतिचोदनानां तत्संयोगात् ॥ ८.४.४ ॥

### विषयसंशयौ

लौकिकानां वैदिकानाञ्च नामधेयं दर्विहोमशब्द इति स्थितम्। इदानीं चिन्त्यते· किं यजतिचोदनानां जुहोतिचोदनानाञ्च सर्वेषां नामधेयम् ? उत जुहोति चोदनानामेव ? इति।

### तन्त्रशिखामणिः

सू० जुहोतिचोदनानां वा तत्संयोगात् ॥

इहापि प्रासङ्गिकी सङ्गतिः। किमयं दर्वीहोमशब्दः यज्युत्पत्तीनामपि नामधेयम् ? उत जुहोत्युत्पत्तीनामेवेति संशयः। तत्र होमसंयोगात् जुहोत्युत्पत्तीनां नामधेयत्वमविवादम्। यागहोमयोश्च न भेदः, यज्युत्पत्तीनामाग्नेयादीनां चतुरवत्तं जुहोतीति जुहोतिनानुवादात्। नचाग्नेयादीनामुत्पत्तौ यज्यश्रवणात् कथं यज्युत्पत्तित्वमिति वाच्यम्, तत्र द्रव्यदेवतासम्बन्धेनोत्पत्तौ यजिकल्पनात्। तथा सोमेन यजेतेति यज्युत्पत्तिकस्य सोमस्य यद्ग्रहणं जुहोतीति जुहोतिनानुवादात्। तस्माद्यागहोमयोरभेदाद् यज्युत्पत्तीनामपि दर्वीहोमशब्दो नामधेयमिति प्राप्तेऽभिधीयते-

### भाष्यसन्दर्भयोजिनी

पृच्छति—एवमपि ज्ञापकमुक्तम्। कुतः प्राप्तिरिति। प्राप्ति साधयति—उच्यत इति। होमशब्दस्सर्वहोम साधारणः सामान्यतः प्राप्तस्य होमस्य दर्विहोमशब्दो नामधेयमिति स्वीकृते सर्वहोमनामत्वमेवोचितमित्युपसंहरति—तस्मादिति।

दर्विहोमशब्दस्य लौकिकवैदिकनामधेयताधिकरणम् ॥ २ ॥

३

### संशयः

दर्विहोमशब्दो लौकिकवैदिकहोमनामेति सिद्धे प्रसङ्गात् चिन्त्यते—इदानीमिति। जुहोतिपदघटितानि यजतिपदघटितानि च विधिवाक्यानि श्रूयन्ते। एवं विधिवाक्येषु सत्यपि भेदे होमस्तावत्सर्वत्र भवतीति संशयस्य प्रथमा कोटिः। द्वितीया च कोटिः जुहुधात्वर्थस्य होमत्वात् दर्विहोमशब्दे होमशब्दस्य सत्त्वात् होमानामेव नामधेयमिति प्रवृत्तेति भावः।

### भाष्यम्

#### पूर्वपक्षः

अविशेषात्सर्वेषामिति प्राप्ते,

#### सिद्धान्तः

उच्यते—जुहोतीनां नामधेयं न यजतीनाम्। कुतः? तत्संयोगात्-होमशब्द संयोगात्। अयं होमशब्दो जुहोतेर्वाचको न यजतेः। यजतौ लक्षणया स्यात्। तस्माज्जुहोति नामधेयम्॥ ४॥

इति दर्विहोमशब्दस्य होमनामत्वाधिकरणम्॥ ३॥

### तन्त्रशिखामणिः

'चतुरवत्तं जुहोति' इति न होमानुवादेन चतुरवदानं विधीयते। किन्तु 'सकृदुपस्तृणाति द्विर्हविषोऽवद्यति सकृदभिघारयति' इति वाक्यप्राप्तचतुरवदानानुवादेन होमरूपसंस्कारविधिरित्युक्तं तृतीये। तथा 'यद्ग्रहान् जुहोति' इत्यत्राप्यैन्द्रवायवं गृह्णातीत्यादिवाक्यप्राप्तग्रहाणामनुवादेन होमविधिः। अतश्च न यज्युत्पत्तीनां होमत्वमिति सिद्धम्। यदत्र सूत्रकृता होमनामधेयत्वसमर्थनानन्तरं 'गुणाभिधानं स्याद्द्रव्योपदेशादि'ति सूत्रेण गुणविधिरेवायं दर्वीहोमः दर्व्या होम इति द्रव्योपदेशादिति गुणविधित्वमाशङ्कितं तच्चोद्यमात्रं न युक्तिसहम् 'स्रुवेण जुहोति चमसेन जुहोति' इति वाचनिके स्रुवादौ जाग्रति गुणान्तरविध्ययोगात्। न च विकल्पसम्भवः, प्रत्यक्षतः श्रुतस्य स्रुवादेर्यदेकया जुहुयाद् दर्वीहोमं कुर्यादित्यर्थवादानुमेयविधिकया दर्व्या विकल्पासम्भवात्। तस्माद्धोमसामानाधिकरण्यात् तत्प्रख्यन्यायेन नामधेयमेवेति दिक्॥

वृत्तमधिकरणम्

### भाष्यसन्दर्भयोजिनी

#### पूर्वपक्षः

अविशेषात् नियामकाभावात् सर्वेषां नामधेयमिति पूर्वपक्षः।

#### सिद्धान्तः

सिद्धान्तयति उच्यत इति। तत्संयोगात् इति सौत्रतच्छब्दविवरणम्—होमेति। 'दर्विहोमः' इत्यत्र होमशब्दसत्वात्, होमस्य च जुहोतिवाच्यत्वात् जुहोतेरेवेदं नाम न यजतेः। यद्यपि यजतिशब्दवाच्ये यागे होमो भवति, तथापि तस्य न यजिवाच्यत्वम्, किन्तु यजतौ होमशब्दो लक्षणया प्रयुज्यते। सति शक्यार्थसम्भवे किमिति लाक्षणिकोऽर्थः स्वीकर्तव्य इति भावः। अतो जुहोतिनामधेयं दर्विहोमशब्दः॥ ३॥

दर्विहोमशब्दस्य होमनामधेयताधिकरणम्॥ ३॥

भाष्यम्

४

पूर्वपक्षः

**द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ।। ८.४.५ ।।**

स्थितादुत्तरमुच्यते । यदुक्तं कर्मनामधेयं दर्विहोम इति, तन्न; किं तर्हि ? गुणाभिधानं स्यात्—गुणविधिरित्यर्थः । कुतः ? द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते, दर्व्यां होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धि कल्पितौ भविष्यतः । तस्माद् गुणविधिः ।। ५ ।।

सिद्धान्तः

**न लौकिकानामाचारग्रहणत्वाच्छब्दानां चान्यार्थविधानात् ।। ८.४.६. ।।**

नायं गुणविधिर्युज्यते । किं कारणम् ? लौकिकानां तावदाचारगृहीता दर्विः 'न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति । सा न विधातव्या । श्रौतानामप्यन्यानि होमार्थानि पात्राण्याम्नातानि, 'स्रुवेण जुहोति' 'चमसेन जुहोति' इति । तैस्सह दर्वेर्विकल्पस्स्यात् । स चान्याय्यः । यत्कारणम् स्रुवादीनां विधायकः शब्दोऽस्ति-स्रुवेण जुहोतीति, न तु दर्वेः । तत्र ह्यानुमानिको विधिशब्दः ।। ६ ।।

भाष्यसन्दर्भयोजिनी

४

पूर्वपक्षः

दर्विहोमशब्दः प्रथमाधिकरणे कर्मनामेति स्थितम् । 'ततोऽर्थान्तरं प्रक्रियत' इति प्रसङ्गाल्लौकिकानां स्मार्तानां कर्मणां नामधेयम् उत वैदिकानामपीत्यादयश्चिन्तिताः । इदानीं कर्मनामधेयमिति यत् स्थितं तदुपरि पूर्वपक्षः क्रियत इत्यारभते—**यदुक्तमिति** । दर्विहोमशब्दे श्रूयमाणे दर्विः प्रतीयते द्रव्यम् । होम इति क्रिया प्रतीयते दर्व्यां होम इति । अतः द्रव्योपदेशात् गुणविधिरयम् । एवं स्वीकारे **यथाप्रसिद्धि** प्रसिद्धिमनतिक्रम्य दर्विहोमशब्दौ द्रव्यक्रियावाचिनौ भविष्यतः । तस्माद् गुणविधिरिति ।। ५ ।।

सिद्धान्तः

गुणविधिं निरस्यति— **नायमिति** । लौकिकाः दर्विशब्देन होमसाधनं न्यग्बिलं मूलदण्डयुतं पात्रविशेषं प्रतिपद्यन्त एव । एवं प्रतिपन्नस्य साधनस्य द्रव्यस्य विधानेऽप्राप्तप्रापकता विधेर्न स्यादित्याह—**सा न विधातव्येति** । लौकिका एवं प्रतिपद्यन्ताम् वैदिकानां कृते विधानमर्थवद् भविष्यतीत्यत आह—**श्रौतानामपीति** । त्रेताग्निसाध्यानि कर्माणि श्रौतानि तेषाम् । **स चान्याय्यः** । विकल्पस्समशिष्टयोरेव भवति, न विषमशिष्टयोरित्यर्थः । विषमशिष्टत्वमेकत्र विधायकशब्दवत्वम् अपरत्रानुमानिकशब्दवत्वम् । अतो न विकल्प इति भावः ।। ६ ।।

भाष्यम्

## दर्शनाच्चान्यपात्रस्य ।। ८.४.७ ।।

अन्यच्च पात्रं दर्विहोमे दृश्यते । 'भूतेभ्यस्त्वेत्यपूर्वां स्रुचमुद्गृह्णाति'इति । तस्मान्न गुणविधिः ।। ७ ।।

## तथाग्निहविषोः ।। ८.४.८ ।।

अथोच्येत-अग्निहविषोः कार्ये दर्विर्भविष्यति-दर्व्यां होमो दर्विहोमः, दर्वेर्वा होमो दर्विहोम इति । तत्र ब्रूमः—तथाग्निहविषोरपि । यथा पात्रकार्ये दर्विर्न युज्यते तथा अग्नि हविषोः कार्येऽपि । तत्रापि आहवनीय आधारत्वेन विहितः, 'यदाहवनीये जुहोति' इति । अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मादग्निहविषोरपि कार्ये न दर्वेर्निवेशः ।। ८ ।।

## उक्तश्चार्थसम्बन्धः ।। ८.४.९ ।।

उक्तश्चास्माभिरग्नेः कार्येऽन्यद् द्रव्यमसमर्थम् । दहनपचनप्रकाशनकर्म-अग्नेः । न चैतत्कार्यमन्यद् द्रव्यं शक्नोति कर्तुमिति । तस्मान्नाग्निकार्ये दर्वेरुपदेशः । अतो न गुणविधिः । कर्मनामधेयमेव दर्विहोमशब्द इति ।। ९ ।।

इति दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् ।। ४ ।।

### भाष्यसन्दर्भयोजिनी

गुणविधित्वाभावे प्रमाणं दर्शयति—अन्यच्चेति । उत्तरवेद्या आधारणरूपे दर्विहोमे पात्रान्तरं विधीयते—भूतेभ्यस्त्वेत्यादिना । तस्मान्न गुणविधिः दर्विरूपस्येत्यर्थः ।। ७ ।।

ननु 'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इत्यत्र दर्विहोमशब्दस्य दर्व्यां होम इति दर्वेर्होम इति व्युत्पत्तिमङ्गीकृत्याधिकरणरूपदर्विः प्रदेयरूपो वा गुणो विधीयतामित्याशङ्कते—अथोच्येत इति । परिहरति—तत्रेति । सौत्रं तथापदं विवृणोति—यथेति । यथा पात्रकार्ये दर्वेर्विधानं निराकृतं तथा अधिकरणप्रदेयकार्येऽपि दर्वेर्विधानं न भवेदित्यर्थः । तत्रापि अग्निकार्येऽपीत्यर्थः । होममात्रं प्रत्याधारत्वेनाहवनीयस्य विहितत्वान्नाग्निकार्ये दर्वेर्विधानं भवितुमर्हतीत्यर्थः । प्रदेयकार्येऽपि दर्वेर्न विधानम्, पुरोडाशादेः प्रदेयत्वेन प्राप्तत्वान्न हवीरूपेण दर्वेर्विधानमित्याह—अन्यच्चेति ।। ८ ।।

अग्निकार्यं दर्व्या न भवितुमर्हतीत्यत्र प्रमाणान्तरं दर्शयति—उक्तश्चेति । 'गार्हपत्ये हवींषि श्रपयति' 'दक्षिणाग्नावन्वाहार्यं पचति' इत्यादिना बोधितानि अग्नेः कार्याणि श्रपणपचनादीनि । न चेमानि दर्विः कर्तुं शक्नोति । अतो 'दर्विहोमं कुर्यात्' इत्यत्र विधित्सितस्य गुणस्यान्यतः प्राप्तत्वेन दर्विहोमशब्दः कर्मनामधेयमेवेत्याह—अत इति ।। ९ ।।

दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् ।।४।।

भाष्यम्

५

विषयसंशयौ

दर्विहोमशब्दः कर्मनामधेयमित्युक्तम् । तत्र चिन्त्यते—किमपूर्वा दर्विहोमाः ? उत कुतश्चिद्धर्मग्राहिणः ? इति । किं प्राप्तम् ?

पूर्वपक्षः

नापूर्वा इति । कुतः ? इतिकर्तव्यताविधेः । अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकाद्धर्मान् गृह्णातीत्युक्तम् । अविहितेतिकर्तव्यताकाश्चामी । तस्मात्पूर्ववन्त इति । यदैतदेवं तदैतदापतति—किंपूर्वा इति । अत्रोच्यते—

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ ८.४.१० ॥

तस्मिन् खलु दर्विहोमे सोमः प्रवर्तेत । सौमिको विध्यन्तस्स्यात् । कुतः ? अव्यक्तत्वात्-

वार्तिकाभरणम्

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥

प्रासङ्गिकं समाप्य प्रकृतमपवादविचारमनुसन्दधत्ते । दर्विहोमेषु संशयः-किं ते पूर्ववन्तः ? उतापूर्वे ? इति । दर्विहोमेषु सौमिकधर्माः प्रवर्तते अव्यक्तत्वसामान्यादिति प्राप्ते,

तन्त्रशिखामणिः

सू० तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥

प्रासङ्गिके समाप्ते पदार्थावापश्चिन्त्यत इति सङ्गतिः । 'भिन्ने जुहोति स्कन्ने जुहोति' इत्यादिना

भाष्यसन्दर्भयोजिनी

विषयसंशयौ

५

दर्विहोमशब्दस्य तत्प्रख्यन्यायेन नामत्वे सिद्धे ते दर्विहोमाः किमपूर्वाः पूर्वरहिता इत्यर्थः । प्रकृतिरहिता इति यावत् । उत कुतश्चिद्धर्मग्राहिणः प्रकृतिपूर्वा इत्यर्थः । तत्र पक्षमुपस्थापयति-नापूर्वा इति । पूर्ववन्त इत्यर्थः । इतिकर्तव्यताविधेः असत्त्वादिति शेषः । दर्विहोमाः पूर्ववन्तः अविहितेतिकर्तव्यताकत्वात्, यद्यदविहितेतिकर्तव्यताकं तत्तत्पूर्ववत् इति सप्तमोक्तं स्मारयति-इत्युक्तमिति । निगमयति-तस्मादिति । दर्विहोमानां पूर्ववत्त्वे किं तत्पूर्वं यस्मादिमे धर्मान् गृह्णन्ति इति संशयमुत्थापयति-यदैतदिति । पूर्ववत्त्वप्रतिपादनायोपक्रमते-अत्रोच्यत इति ।

सौत्रतस्मिन्पदस्यार्थः दर्विहोमे इति । सौमिकविध्यन्तप्राप्तौ हेतुः-अव्यक्तत्वादिति । अव्यक्तशब्देन स्वोत्पत्तिवाक्येऽविहितदेवताकत्वमर्थो न ग्राह्यः तथासत्यग्निहोत्रस्योपांशुयाजस्य चाव्यक्तत्वं स्यात्, किन्तु

### भाष्यम्

**अव्यक्तचोदनस्सोमः। अमी अपि चाव्यक्तचोदनाः 'भिन्ने जुहोति' इति। अतश्चोदनासामान्यात्सौमिको विध्यन्त इति।**

### वार्तिकाभरणम्

ब्रूमः—स्यादेतदेवम् यद्यव्यक्तत्वमेव सौमिकधर्मप्राप्तौ नियामकं स्यात्। न त्वेवम्। किन्तु यागत्वेन साम्ये सिद्धेऽव्यक्तत्वं विशेषनियामकम्। यथा-औषधद्रव्यकत्वेन साम्ये सिद्धे एकदेवतत्वं सौर्ये आग्नेयधर्मप्राप्तौ विशेषनियामकम्। तस्माद्यागत्वेन होमत्वेन विसदृशत्वान्न सौमिकविध्यन्तः। यदि सौमिको विध्यन्तस्स्यात् तदा 'घृतेन द्यावापृथिवी आपृणेथाम्' इत्यन्तराकर्गेन जुहोति आमूलादवस्रावयति भूमिगते स्वाहाकारं करोति' इत्यौदुम्बरीहोमे श्रूयमाणस्वाहाकारो न स्यात्। चोदकेन वषट्कारस्यैव प्राप्तेः। तस्मात्स्वाहाकारलिङ्गदर्शनादपि न सौकिविध्यन्तः। अस्तुवा यथाकथञ्चित्साम्यम् तथापि न सोमयागप्रकृतिकत्वं सम्भवति, पिष्टलेपफलीकरणादिहोमानामग्निहोत्रस्य नारिष्ठहोमानाञ्च धर्मवत्वेन चोदनासामान्यात्तत्प्रकृतिकत्वस्य युक्तया तदतिक्रमेण सोमयागप्रकृतिकत्वस्यान्याय्यत्वात्। नन्वेवं तर्हि उक्तानां धर्मवतां दर्विहोमानां मध्येऽन्यतमप्रकृतिकत्वमितरेषामिति चेत्-न तावत्पिष्टलेपफलीकरणहोमादीनां प्रकृतित्वम्, तेषां प्रतिपत्तिकर्मत्वेन स्वयं धर्मप्रयोजकत्वाभावात्। नाप्यग्निहोत्रस्य, तत्प्रकरणे 'यदि कीटोऽवपद्येतान्तः परिधि निनयेत्' इति परिधिदर्शनेन स्वतः प्रकृतित्वासम्भवात्। तथाहि-अग्निहोत्रप्रकरणे परिधिः नोपदिष्टः। नारिष्ठादिषु च परिध्यादिः सम्भवति। दर्शपूर्णमासयोः वेदिपरिधीध्माद्युपदेशस्याङ्गप्रधानार्थत्वात्। तस्मान्नाग्निहोत्रं प्रकृतिः। नापि नारिष्ठानां प्रकृतित्वम्, त्र्यम्बकहोमेषु 'यन्नेध्माबर्हिर्भवति न सामिधेनीरन्वाहेतीतीध्मादीनामभावदर्शनानुपपत्तेः। तथाहि नारिष्ठहोमेष्वङ्गप्रधानसाधारण्यादिध्मादयोऽप्यङ्गम्। यदि तद्विकृतिस्त्र्यम्बकहोमाः ततश्चोदकप्राप्तानामिध्मा-

### तन्त्रशिखामणिः

विहिता दर्वीहोमाः किं कुतश्चिच्चोदकतो धर्मग्राहकाः? तदापि किं सोमादुत नारिष्ठहोमेभ्य इति संशयः। तत्राविहितेतिकर्तव्यताकतया तदाकाङ्क्षायामुत्पत्तिवाक्यानवगतदेवताकत्वरूपाव्यक्तत्वचोदनाकत्वसामान्यात् तेषु सौमिकविध्यन्तः प्राप्नोतीति प्रथमः पक्षः। चोदनासामान्याद्धि धर्मातिदेशो भवति। न चेह जुहोत्युत्पत्तीनामपि दर्वीहोमानां यज्युत्पत्तिकेन सोमेन चोदनासामान्यमस्ति। न चैवमप्यव्यक्तत्वसामान्यात् कुतो नातिदेश इति वाच्यम्। तस्य सति यागत्वे न दर्शपूर्णमासाभ्यां धर्मप्राप्तिः, किन्तु सोमादिति विशेषनियामकत्वात्, वस्तुतस्तूत्पत्यनवगतदेवताकत्वं नाव्यक्तत्वम्, उपांशुयाजेऽतिप्रसङ्गात्, किन्तु स्वार्थतया विनियुक्तदेवताराहित्यम् इत्युक्तम्। दर्वीहोमानाञ्च मन्त्रवर्णप्राप्तस्वार्थदेवताकत्वान्नाव्यक्तत्वमिति न सौमिकधर्मप्राप्तिः। किन्तु जुहोतिचोदनासामान्यान्नारिष्ठहोमेभ्य एव तेषु धर्मप्राप्तिः। न च वैपरीत्यं शङ्क्यम्, वेदिपरिधीध्माबर्हिरादिधर्माणामङ्गप्रधानसाधारण्येन दर्शपूर्णमासाङ्गनारिष्ठानां धर्मवत्वात्। भिन्ने जुहोतीत्यादीनाञ्चाधर्मकत्वात् अन्यथा 'यदि कीटोऽवपद्येतान्तः

### भाष्यसन्दर्भयोजिनी

स्वार्थतयाऽविनियुक्तदेवताकत्वमर्थो ग्राह्यः। तादृशं कर्म प्रदर्शयति-'भिन्ने जुहोति' इति। पुरोडाशकपाले भिन्ने प्रायश्चित्ततया विहितो होम इत्यर्थः। एवञ्च 'उपेयुः' 'आसीरन्' इति चोदनासामान्याद्यथा प्रकृतिविकृतिभावः पूर्वं साधितस्तथात्रापीत्याह-अत इति।

## वार्तिकाभरणम्

दीनामभावदर्शनं न स्यात्। नच चोदकप्राप्तानां नेध्मार्बर्हिरित्यादिवाक्येनाभावो विधीयत इति वाच्यम्, त्र्यम्बकहोमानन्तरम् 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेष्विति कर्म विहितं तत्प्रस्तुत्यार्थवादः पठितः। 'अप्रतिष्ठा वै त्र्यम्बका इत्याहुरिति' त्र्यम्बकहोमेष्वप्रतिष्ठितत्वदोषमुत्कीर्त्य 'इयं वादितिरियं प्रतिष्ठा यदादित्येऽस्यामेव प्रतितिष्ठति' इति तन्निर्हरणार्थतयादित्येष्टेस्तावकत्वात्तदेकवाक्यत्वम्। तस्य चेध्मार्बर्हिराद्यभावविधिपरत्वे वाक्यभेदापत्तेः। तस्मादपूर्वा दर्विहोमाः। उक्तरीत्याग्निहोत्रस्य नारिष्ठप्रकृतिकत्वाभावे 'यदि कीटोऽवपद्येतान्तः परिधि निनयेत्' इत्यत्र परिधिशब्दस्य परिधिदेशलक्षणेति द्रष्टव्यम्। ननु 'स्कन्ने जुहोति' 'भिन्ने जुहोति' इत्यादि दर्विहोमविधिवाक्यं साकाङ्क्षत्वादप्रमाणं स्यात्। तथाहि-लोके हि परशुना छेत्तव्यमित्युक्ते भूम्यां स्थितस्य परशोश्छिदाकरणत्वानुपपत्तेः उद्यम्य निपात्य परशुना छेत्तव्यमित्युद्यमननिपातनादियुक्तस्यैव परशोश्छिदाकरणत्वं प्रत्यक्षेणावगम्यत इति परशुना छेत्तव्यमिति वाक्यं नासाकाङ्क्षम्। तथा वेदेऽपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र यागेन स्वर्गं कुर्यादित्यर्थेऽवगते करणानुग्राहिण्या इतिकर्तव्यतायाः अभावे यागस्य फलसाधनत्वाभावात् 'व्रीहीनवहन्ति' 'समिधो यजति' इत्यादिपठितशास्त्रेणावधातप्रयाजादिभिरुपकृत्य यागेन स्वर्गं कुर्यादिति व्यापारसहितस्य यागस्य फलसाधनत्वं शास्त्रेणावगम्यत इति यागविधायकं शास्त्रं न साकाङ्क्षम्। 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिष्वितिकर्तव्यताविधायकपठितशास्त्राभावेऽपि अतिदेशेनेतिकर्तव्यताप्राप्तिसम्भवात् करणगतव्यापारसहितस्यैव सौर्यादियागस्य फलसाधनत्वावगमात् सौर्यादिवाक्यानामपि न साकाङ्क्षत्वम्। 'स्कन्ने जुहोति' 'भिन्ने जुहोति' इत्यादिवाक्यन्तु प्रमाणान्तरेण नोपदेशेन नातिदेशेन वेतिकर्तव्यतानवगमात् साकाङ्क्षम्। साकाङ्क्षत्वादप्रमाणं चेदुच्यते-'स्कन्ने जुहोति' 'भिन्ने जुहोति' इत्यादिषु प्रत्यक्षेण नोपदेशेन नातिदेशेन वा करणगतव्यापारानवगमेऽप्युत्पन्नस्य करणत्वानुपपत्तेर्द्रव्यदेवताभ्यां होमनिष्पादनाख्यव्यापार एव होमस्येतिकर्तव्य-

## तन्त्रशिखामणिः

परिधि निनयेत्' इत्यग्निहोत्रे परिधिदर्शनम्, 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इत्यग्नौ सावित्रहोमे वेदिदर्शनञ्चानुपपन्नं स्यात्। तस्मान्नारिष्ठप्रकृतिका दर्वीहोमा इति द्वितीयः पक्षः। एवं प्राप्तेऽभिधीयते—

'अप्रतिष्ठा वै त्र्यम्बका इत्याहुः नेध्मार्बर्हिस्सन्नह्यत' इति दर्वीहोमानां त्र्यम्बकानामप्रतिष्ठात्वे इध्मार्बर्हिरभावो हेतुत्वेन निर्दिश्यते, सिद्धश्च हेतुर्भवति इति त्र्यम्बकेष्विध्मार्बर्हिरभावः प्रतीयमानस्तेषां नारिष्ठहोमप्रकृतिकत्वेनावकल्पते। तत्प्रकृतिकत्वे चोदकतस्तत्प्राप्त्यवश्यम्भावात्। न चायं चोदकप्राप्तेध्मादिप्रतिषेधविधिरेवास्त्विति वाच्यम्, न, इध्मार्बर्हिरित्यस्यादित्यचरुविधिवाक्यशेषत्वेन प्रतिषेधविधित्वासम्भवात्। तथाहि 'अप्रतिष्ठा वै त्र्यम्बका इत्याहुः नेध्मार्बर्हिस्सन्नह्यते' इत्यादिना इध्माद्यभावेन त्र्यम्बकेष्वप्रतिष्ठत्वरूपदोषमुपजीव्य 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेष्वियं वा अदितिरियं प्रतिष्ठा यदादित्योऽस्यामेव प्रतितिष्ठति' इति श्रुतस्यादित्यचरुविधेरर्थवादतया तदेकवाक्यस्य 'अप्रतिष्ठा वै त्र्यम्बका इत्यस्यैकदेशभूतेन इध्मार्बर्हिरिति वाक्ये प्रतिषेधविधित्वं वाक्यभेदप्रसङ्गेन वक्तुमयुक्तम्! तस्मान्न नारिष्ठप्रकृतिका दर्विहोमाः। न चैवमग्निहोत्रादौ परिध्यादिदर्शनानुपपत्तिरित्युक्तमिति वाच्यम्. अनन्यथासिद्धेध्माद्यभावलिङ्गदर्शनविरोधेन नारिष्ठाङ्गानां दर्विहोमेष्वप्रवृत्तौ सिद्धायां परिध्यादिपदस्य तद्देशलक्षकत्वकल्पनावश्यम्भावात्। किञ्चाग्निहोत्रत्र्यम्बकहोमादौ सन्निपात्युपदेशबाहुल्येनाकाङ्क्षाविरहात् न नारिष्ठप्रकृतिकत्वम्, अनुपदिष्टधर्मकेषु होमान्तरेष्वप्युपदिष्टधर्मकाणामग्निहोत्रादीनामन्येषामपि सत्वेन न तत्प्रकृतिकत्वम्। अतएव विशेषनियामकाभावादग्निहोत्रादीनामपि न तत्प्रकृतिकत्वमिति न पूर्ववन्तो दर्विहोमाः। नन्वेवं कथमनुपदिष्टेतिकर्तव्यताकेषु तेष्वाकाङ्क्षापूरणमिति चेत्

## भाष्यम्

### सिद्धान्तः

## न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात्तन्त्रे तेन विप्रतिषेधात् ॥ ८.४.११ ॥

वाशब्दः पक्षं व्यावर्तयति । नात्र सौमिको विध्यन्तो न्याय्यः । किं कारणम् ? स्वाहाकारेण संयोगात्——स्वाहाकारेण संयुक्ता दर्विहोमाः——'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' ( तै. सं. १.८.१३.३. ) इति । किमतः ? वषट्कारस्य निर्देशात्तन्त्रे तेन च विप्रतिषेधः । तन्त्रे च सौमिके वषट्कारो निर्दिष्टः । तेनास्य विप्रतिषेधः, उभयोः प्रदानार्थत्वात् । यदि सौमिको विध्यन्तः ततो वषट्कारेण भवितव्यम् । तत्रैतत्स्वाहाकाराम्नानमनर्थकं स्यात् । अथ विकल्पः क्रियते, तथाप्युभयोः पक्षे बाधः । अथ त्वपूर्वा दर्विहोमाः नैव विरोधो भविष्यति । तस्मादपूर्वाः ॥ ११ ॥

## वार्तिकाभरणम्

तेत्यर्थादिवगम्यत इति साकाङ्क्षत्वाभावान्नाप्रमाणं 'स्कन्ने जुहोति' इत्यादिवाक्यमिति सिद्धम् ॥

इति श्रीमदद्वैतविद्याचार्य साग्निचित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितवर-नन्दनस्य साग्निचित्यसर्वपृष्ठाप्तोर्यामयाजिश्रीयज्ञनारायणदीक्षितानुजस्य तच्छिष्यतालब्ध-समस्तविद्यावैशद्यस्य साग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु टुप्टीकाव्याख्याने वार्तिकाभरणेऽष्टमस्याध्यायस्य चतुर्थः पादः ॥

## तन्त्रशिखामणिः

उच्यते, अनुत्पन्नस्य कारणत्वानुपपत्तिलभ्येनोत्पादनरूपेण व्यापारेण वाचनिकेन मन्त्रेण मन्त्रवर्णप्राप्तया देवतया सामान्यविधिप्राप्तेनाज्येनाहवनीयादिना च तदाकाङ्क्षापूरणमिति न दर्विहोमाः पूर्ववन्त इति सिद्धम् ॥

वृत्तमधिकरणम्

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणावष्टमोऽध्यायस्समाप्तः ॥

## भाष्यसन्दर्भयोजिनी

### सिद्धान्तः

सिद्धातिनः पक्षमुपस्थापयति-वेति । सौत्रं हेतुं विवृणोति-स्वाहाकारेणेति । यावन्तो दर्विहोमास्ते स्वाहान्तमन्त्र-प्रदेयत्वेन विहिता यतस्तस्मात्सौमिको विध्यन्तो न न्याय्य इत्यर्थः । प्रश्नपुरस्सरं यागहोमयोर्विद्यमानं भेदं प्रदर्शयति-किमत इति । होमस्य स्वाहाकारान्तत्वम् यागस्य च वषट्कारान्तत्वञ्च होमयागयोर्भेदकमित्यर्थः । तन्त्रे च सोमिके सौमिकानुष्ठान इत्यर्थः । याज्यान्ते वषट्कृत्य हविः प्रदीयते यागे, होमे च मन्त्रान्ते स्वाहाकारमुच्चार्य तत्प्रदीयत इति विप्रतिषेधः । अतस्त्वनयोः स्वाकारवषट्कारयोर्विकल्प इति शङ्कते-अथेति । पाक्षिकबाधादनुचितो विकल्प इत्याह-पक्षे बाध-इति दर्विहोमानामपूर्वत्वे नायं दोष इत्याह-अथ त्विति । निगमयति-तस्मादिति ॥११॥

५१

भाष्यम्

## शब्दान्तरत्वात् ॥ ८.४.१२ ॥

शब्दान्तरञ्च यजतिशब्दाज्जुहोतिशब्दः। यजतिचोदनश्च सोमः। दर्विहोमाः पुनर्जुहोतिचोदनाः। चोदनासामान्येन च धर्मप्राप्तिरिष्यते। तस्मादप्ययुक्ता सौमिकी धर्मप्राप्तिः। न न्वव्यक्तत्वाच्चोदनासामान्यमुक्तम्। अत्रोच्यते-सामान्येऽव्यक्तत्वे यजतिशब्दो विशेषलिङ्गम्। तेन यजिमतीष्वव्यक्तासु धर्मनियमः। यथा समान औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्यकर्मण्याग्नेय विध्यन्त इति ॥ १२ ॥

## लिङ्गदर्शनाच्च ॥ ८.४.१३ ॥

लिङ्गदर्शनाच्चैतद् विज्ञायते-नात्र सौमिको विध्यन्त इति। औदुम्बरीहोमे हि स्वाहाकारं विधायाज्यविधिपरे वाक्ये दर्शयति-'घृतेन द्यावापृथिवी आपृणेथामित्यन्तरा कर्णौ जुहोति। आमूलादवस्रावयति भूमिगते स्वाहाकरोति' इति। यद्यत्र सौमिको विध्यन्तः स्याद् वषट्कारस्ततो भवेत्, न स्वाहाकारः ॥ १३ ॥

भाष्यसन्दर्भयोजिनी

दर्विहोमानां सौमिकविध्यन्तत्वाभावे युक्त्यन्तरं दर्शयति-शब्दान्तरञ्चेति। सोमः सोमयागः 'सोमेन यजेत' इति यजतिशब्दघटितविधिना विहितः, दर्विहोमस्तु जुहोतिशब्दघटितवाक्येन 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति। एवं शब्दान्तरत्वहेतुना चोदनासामान्यं नास्तीति कथं सोमदर्विहोमयोः प्रकृतिविकृतिभाव इति भावः। नन्वव्यक्तत्वसामान्यमस्तीत्युक्तमिति चेदाह-अत्रोच्यत इति। आपाततोऽव्यक्तत्वसामान्ये सत्यपि यजतिचोदनाचोदितत्वस्य विशेषलिङ्गस्य दर्विहोमेष्वभावात् न सौमिकविध्यन्तप्राप्तिरिति भावः। निष्कर्षमाह-तेनेति। अत्र दृष्टान्तयति-यथेति। सौर्याग्नीषोमीयपुरोडाशयोरौषधद्रव्यकत्वसामान्ये सत्यपि एकदेवताकत्वसामान्यमाग्नेयेन विद्यत इति सौर्ये आग्नेयविध्यन्त एवेति यथा निर्णीतं तथा प्रकृतेऽपीति भावः ॥ १२ ॥

लिङ्गान्तरदर्शनेन दर्विहोमेषु सौमिकविध्यन्ताभावं व्यवस्थापयति-लिङ्गेति। औदुम्बरीति। सोमे 'यजमानसमितौदुम्बरी भवति' इत्यौदुम्बरी स्थूणा विहिता। उद्गातुर्गानावसरे तत्स्पर्शनपूर्वकं तेन गानं कर्तव्यम्-औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति। तस्यां होमो विहितः-'घृतेन द्यावापृथिवी' इत्यनेन मन्त्रेण। होमश्च तस्याः कर्णावन्तरेण कर्तव्यः। कर्णशब्दः क्षुद्रशाखामूलवाची। औदुम्बर्या द्वौ कर्णौ यथा भवेतां तथा सा स्थूणा कल्पनीया। तयोरन्तरा भूयिष्ठेनाज्येनाहुतिः क्रियते। हूयमानमाज्यं यदा भूमिगतं भवति, तदा स्वाहाकारः कर्तव्य इति वाक्यस्यार्थः। भूमिगते आज्ये स्वाहाकरोतीति विधानादयं दर्विहोम इति सिध्यति। अस्य सौमिकविध्यन्तत्वे स्वाहाकारः कथमुपपद्येत इत्याह-यद्यत्रेति। सोमस्य यागत्वात् तत्र वषट्कारस्यैवौचित्यम् न स्वाहाकारस्येति भावः। अतो न दर्विहोमानां सौमिकविध्यन्तत्वम् ॥ १३ ॥

भाष्यम्

## उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् ॥ ८.४.१४ ॥

लिङ्गदर्शनस्य परिहार उच्यते। यदुक्तमौदुम्बरीहोमे सिद्धवत्स्वाहाकारस्य दर्शनान्न सौमिको विध्यन्त इति। अत्र ब्रूमः—उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यम्। तद्यथा-साप्तदश्यमनारभ्याधीतं 'सप्तदश सामिधेनीरन्वाह' इति अनारभ्यवादानां प्रकृत्यर्थत्वाद्दर्श-पूर्णमासावागतम्। ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सद्विकृत्यर्थं जातम्। एवमयं स्वाहा-कारोऽनारभ्याधीतः 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति। तेनैव न्यायेन प्रकृतिं निविविक्षुः सोमं दर्शपूर्णमासौ च, ततस्तथैव वषट्कारेणोपरुद्धस्तद्वर्जमन्यानि प्रदानान्यु-पसङ्क्रामति। तत्राविप्रतिषिद्धा सोमधर्मप्रवृत्तिः, पशुवत्। तद्यथा पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते, वाचनिकत्वात्साप्तदश्यस्य। एवमिहापि वाचनिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनान्न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते। पुनश्शब्दश्चानर्थकः—यथा किं पुनरीदृशमिति ॥ १४ ॥

भाष्यसन्दर्भयोजिनी

पूर्वपक्षी प्रत्यवतिष्ठते-लिङ्गदर्शनस्येति। उत्तरार्थस्त्विति। अयमाशयः—अनारभ्याधीतानामस्ति प्रकृतिगामित्वनियमः। यदि प्रकृतौ तत्कार्यनिर्वर्तनायान्यदुपदिष्टं स्यात्तर्हि तदनारभ्याधीतं तत्र निवेष्टुं नार्हति। सामिधेनीषु साप्तदश्यमनारभ्याधीतम्। तद् दर्शपूर्णमासयोर्गतम्, किन्तु तत् तत्र 'पञ्चदश सामिधेनीरनुब्रूयात्' इत्युपदिष्टं पाञ्चदश्यं विलोक्य ततो निवृत्तं सत् तत्र गच्छति यत्र च साप्तदश्यस्य पुनः श्रवणमस्ति विकृतौ। अनेन न्यायेन स्वाहाकारोऽनारभ्याधीतः साप्तदश्यवत् प्रकृतौ सोमयागे गतः तत्र च वषट्कार आम्नातो वर्तते। सोमयागस्य विकृतिष्वपि वषट्कारोऽतिदेशेन गतः। अतस्स्वाहाकारस्य प्रकृतौ तद्विकृतिषु च न प्रवेशः किन्तु प्रकृतावेव वषट्कारातिरिक्तप्रदानेषु दर्विहोमेषु स्वाहाकारनिवेशे न दोष इति सौमिकविध्यन्तत्वस्वीकारे का हानिरिति। दार्ष्टान्तिके दृष्टान्तं घटयति-एवमयमिति। तेनैव न्यायेन साप्तदश्यन्यायेनेत्यर्थः। निविविक्षुः निवेष्टुमिच्छुरनारभ्याधीतो वषट्कारः सोमं दर्शपूर्णमासौ चेति प्रकृतिमित्यस्य विवरणम्। सोमं दर्शपूर्णमासौचेति प्रकृतिं निविविक्षुर्वषट्कार इत्यन्वयः। तथैव साप्तदश्यमिव तद्वर्जं वषट्कारप्रदानवर्जम्। अन्यानि वषट्कार-प्रदानातिरिक्तप्रदानानि स्वाहान्तप्रदानानि उपसङ्क्रामति सम्बध्नातीत्यर्थः। तत्र अन्यप्रदानेषु कर्मसु-सोमधर्मप्रवृत्तिरित्यर्थः। अत्र दृष्टान्तः-पशुवदिति। अग्नीषोमीयः पशुः 'सान्नाय्यं वा तत्प्रभवत्वात्' इत्यत्र सान्नाय्यप्रकृतिको निर्णीतः। प्रकृतौ सान्नाय्ये सामिधेनीषु पाञ्चदश्यमाम्नातम्। पशौ तु तत्र साप्तदश्यं वाचनिकम् वाचनिकेन साप्तदश्येन पाञ्चदश्ये निवारितेऽपि तदतिरिक्तो दार्शपूर्णमासिकाङ्गकलापः पशावविप्रतिषिद्ध इति दृष्टान्तार्थः। तं प्रकृते सङ्गमयति-एवमिहापीति। यथा हि पाञ्चदश्यातिरिक्तो दार्शपूर्णमासिकाङ्गकलापः पशावविप्रतिषिद्धः, तथैव दर्विहोमेषु वषट्कारप्रदानातिरिक्तप्रदानेषु सौमिकविध्यन्तप्रवृत्तिरविप्रतिषिद्धेति दार्ष्टान्तिकार्थः। ननु सूत्रे 'पुनः प्रवृत्तिः' इति पुनश्शब्दस्य किं प्रयोजनमित्यत आह—पुनश्शब्दश्चेति ॥ १४ ॥

भाष्यम्

## अनुत्तरार्थो वार्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधस्स्यात् ॥ ८.४.१५ ॥

यदुक्तम्—उत्तरार्थः स्वाहाकार इति, तन्न; कुतः ? अनुत्तरार्थः, अर्थवत्त्वात् । प्रकृतावेवास्यार्थवत्वम् नारिष्ठहोमेषु, पार्वणहोमयोश्च 'पूर्णमासाय सुराधसे स्वाहा' इति । अनर्थकत्वाद्धि प्राकृतस्योपरोधस्स्यात् । यदि प्रकृतावनर्थकः स्यात्स्वाहाकारः ततः प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्यानारभ्यवादेन स्यादुपरोधः-वषट्कारबाध इत्यर्थः । न त्वस्यानर्थक्यम् । तस्मान्नोत्तरार्थः । न चेदुत्तरार्थः, लिङ्गमेवैतद् भवत्यसोमपूर्वत्वे दर्विहोमानां भूमिगते स्वाहाकरोतीति ॥ १५ ॥

## न प्रकृतावपीति चेत् ॥ ८.४.१६ ॥

एवञ्चेत्पश्यसि—नारिष्ठहोमेषु पार्वणयोश्च स्वाहाकारस्य निवेश इति । प्रकृतावपि नारिष्ठहोमादौ नास्य निवेशो घटते । तत्रापि वषट्कार एव प्राप्नोति । स ह्यविशेषेण दर्शपूर्णमासयोर्विहितः । 'द्व्यक्षरो वषट्कार एष वै प्रजापतिः सप्तदशोऽन्वायत्तः' ( तै० सं० १.६.११.१. ) इति । ननु स्वाहाकारोऽपि प्रत्यक्षं पठितः । सत्यं पठितः, वषट्कारस्तु विहितः ।

### भाष्यसन्दर्भयोजिनी

एवमुत्तरार्थत्वेन स्वाहाकारं मन्वानस्य मतं निरस्यति—तन्नेति । अस्य अनारभ्याधीतस्य प्रकृतावेव प्रयोजनवत्वमित्यर्थः । नारिष्ठहोमेषु 'नारिष्ठाञ्जुहोति' इति विहिता 'दश ते तनुवो यज्ञ' इत्यादिभिर्मन्त्रैः क्रियमाणाः नारिष्ठगुणकाग्निवाय्वादिदेवताका आज्यद्रव्यका होमा नारिष्ठहोमाः । एवं नारिष्ठहोमेभ्यः पूर्वं प्रधानयागसमाप्त्यनन्तरं क्रियमाणौ होमौ पार्वणहोमाविति कथ्येते । प्रतिपर्वं क्रियमाणत्वादनयोः पार्वणहोमाविति व्यवहारः । अत्राज्यं द्रव्यम्, अमावास्या पौर्णमासी च देवते । 'अमावास्या सुभगा सुशेवा' इत्यादिर्मन्त्रोऽमावास्यायाम्, 'ऋषभं वाजिनं वयम्' इत्यादिर्मन्त्रः पौर्णमास्याम् । पार्वणहोमौ प्रकृतौ दर्शपूर्णमसयोरेव भवतः, न विकृतौ । एवञ्चानारभ्याधीतस्य स्वाहाकारस्य नारिष्ठहोमेषु पार्वणहोमयोश्च निवेशे न वषट्कारस्योपरोध इत्याह—अनर्थकत्वादिति । उपरोधपदस्य विवरणम्—वषट्कारबाध इति । तस्माद्दर्विहोमानां सोमपूर्वकत्वं नास्तीत्यत्र 'भूमिगते स्वाहा करोति' इत्यौदुम्बरीहोमो लिङ्गमेवेत्युपसंहरति—लिङ्गमेवेति ॥ १५ ॥

एवमनारभ्याधीतस्य स्वाहाकारस्य प्रकृतावेव निवेश इति साधिते पुनः पूर्वपक्षी प्रत्यवतिष्ठते—एवञ्चेदिति । अस्य अनारभ्याधीतस्वाहाकारस्य । तत्रापि नारिष्ठपार्वणहोमादिष्वित्यर्थः । एवं प्राप्तौ तर्कमुपस्थापयति—स हीति । दर्शपूर्णमासप्रकरणे 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषट् इति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः । एषवै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' ( तै० सं० १,६.११.१ ) इति वषट्कारस्य द्व्यक्षरस्य अविशेषेण विहितत्वादनारभ्याधीतस्य स्वाहाकारस्य नारिष्ठहोमादिषु न प्रवृत्तिरित्यर्थः । विहितेन पाञ्चदश्येनावरुद्धे कर्मणि यथा साप्तदश्यस्यानारभ्यपठितस्य न प्रवृत्तिस्तथेति भावः ।

## भाष्यम्

अतश्चोदनेति। 'नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठती'ति स्वाहाकारं पाठेन प्राप्तं बाधते। पाठे ह्यानुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते। न चेत्तत्रापि निवेशः, उत्तरार्थ एव स्वाहाकारो भवति विकृत्यर्थः॥ १६॥

## उक्तं समवाये पारदौर्बल्यम्॥ ८.४.१७॥

अत्राह—नैतद्युक्तम्-वषट्कारेण स्वाहाकारो बाध्यत इति। कुतः? यत उक्तं श्रुत्यादीनां समवाये परस्य दुर्बलत्वम्। इह च वाक्यप्रकरणयोस्सन्निपातः। प्रकरणेन वषट्कारः प्राप्नोति नारिष्ठहोमेषु, तन्मन्त्रपदैरेकवाक्यत्वात्स्वाहाकारः। वाक्यञ्च प्रकरणाद् बलीयः। ननु स्वाहाकारस्योपरिष्टात्प्रदानार्थो वषट्कारः प्रयोक्ष्यते, न खलु स्वाहाकारेणैव प्रदानं निर्वर्तितम्। कथमविहितः प्रदानार्थे स्वाहाकारः प्रदानार्थं निर्वर्तयिष्यति? विहितश्च। कथम्? 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति। ननूभयोः स्वाहाकारवषट्कारयोः प्रकृतावाम्नानाद् अनारभ्यवादस्यानर्थक्यम्। अत उच्यते-प्रदानार्थतामनयोर्विधास्यति। तस्मान्न सोमप्रकृतयो दर्विहोमाः॥ १७॥

### भाष्यसन्दर्भयोजिनी

तदिदमाह—सत्यं पठित इति। न विहित इत्यर्थः। केवलं पठितस्यान्येन सम्बन्धो विधिकल्पनाद्वारैव भवितुमर्हति, विहितस्य तु सम्बन्धः प्रत्यक्षेण भवतीति विहितस्य प्राबल्यं पठितस्य च दौर्बल्यमित्याह—पाठे हीति। एवञ्च नारिष्ठादिहोमेष्वपि निवेशाभावे सिद्धे उत्तरार्थ एव नानुत्तरार्थ इत्यर्थः। अतः श्रुतस्वाहाकारस्यौदुम्बरीहोमाद्यर्थत्वमिति स्वाहाकारलिङ्गदर्शनं दर्विहोमे न सौमिकविध्यन्तप्रवृत्तिविरोधीति शङ्कितुराशयः॥ १६॥

शङ्कां निरस्यति—अत्राहेति। अत्र तार्तीयं न्यायं स्मारयति—यत उक्तमिति। सौत्रसमवायेपदं पूरयति—श्रुत्यादीनामिति। अङ्गत्वबोधकप्रमाणानां समवाये पूर्वं पूर्वं प्रबलम्, उत्तरमुत्तरञ्च दुर्वलमिति साधितमित्यर्थः। इह च स्वाहाकारवषट्कारयोः। वषट्कारस्य प्रकरणेन नारिष्ठहोमेषु सम्बन्धे सिद्धे नारिष्ठहोमसाधनीभूतमन्त्रपदैकवाक्यत्वात् स्वाहाकारस्य सम्बन्ध इति प्रकरणाद् वाक्यं बलीय इति स्वाहाकारस्य वषट्कारबाधकत्वं सिध्यतीति भावः। तेनौदुम्बरीहोमे स्वाहाकारदर्शनं सौमिकविध्यन्ताप्रवृत्तौ भवति लिङ्गमिति सिध्यति। ननु प्रकरणाद् वाक्यं भवतु बलीयः, स्वाहाकारस्य हविः प्रदानार्थतया विधानाभावात् तदर्थत्वेन विहितो वषट्कारः मन्त्रगतस्वाहाशब्दादूर्ध्वं वषट्कारः प्रयुज्यतामिति शङ्कते—नन्विति। प्रदानार्थतया वषट्कारो विहितः, स्वाहाकारस्त्वविहितः। विहिताविहितयोर्विहितस्य ग्रहणमुचितम्। अतस्स्वाहानन्तरं वषट्कारप्रयोगे विहितानुग्रहस्स्यादिति भावः। उत्तरयति—विहितश्चेति। स्वाहाकारोऽपि विधिविषय इत्यर्थः। विधिं दर्शयति—स्वाहाकारेणेति। यदि स्वाहाकारोऽपि विधिविषयस्तर्हि अनारभ्यवाक्यस्य सार्थक्यं कथं भवेदिति शङ्कते—नन्विति। उत्तरयति—अत इति। अनयोः वषट्कारस्वाहाकारयोः। अतस्स्वाहाकारस्यापि प्रदानार्थत्वे सिद्धे दर्विहोमानां सोमप्रकृतिकत्वं नेत्याह—तस्मादिति॥ १७॥

## भाष्यम्

## तच्चोदना वेष्टेः प्रवृत्तित्वात्तद्विधिस्स्यात् ॥ ८.४.१८ ॥

वाशब्दः पक्षान्तरपरिग्रहे। तच्चोदना वा। तदित्यनेन दर्विहोमाः प्रतिनिर्दिश्यन्ते। जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्मविशेषास्ते दर्विहोमेषु प्रवर्तेरन्। के पुनस्ते? नारिष्ठहोमाः। कस्मात्कारणात्? ते हि प्रवृत्तधर्माणः सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः। यस्य च यो धर्मः प्रायेण दृष्टः, स तस्यादृश्यमानोऽप्यनुमीयते। यथा यः परार्थान् प्रायेण करोति अन्यस्मिन्नपि परार्थकरणे स एव सम्भाव्यते। तस्मात्तेषां प्रवृत्तिः ॥ १८ ॥

## शब्दसामर्थ्याच्च ॥ ८.४.१९ ॥

शब्दसामर्थ्यञ्च। चोदनासामान्यं दर्विहोमानाम्। नारिष्ठहोमेऽपि हि जुहोतिचोदना 'नारिष्ठाञ्जुहोति' 'भिन्ने जुहोति' इति। चोदनासामान्याद्धर्मप्राप्तिः ॥ १९ ॥

## लिङ्गदर्शनाच्च ॥ ८.४.२० ॥

लिङ्गञ्चैतमर्थं दर्शयति। यथा नारिष्ठहोमपूर्वत्वं दर्विहोमानामिति। किं लिङ्गं भवति? अग्निहोत्रे श्रूयते—'यदि कीटोऽवपद्येतान्तः परिधि निनयेत्' इति। तथाग्नौ श्रूयते- 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति। परिधयो वेदिश्चाङ्गप्रधानार्थत्वान्नारिष्ठहोमाङ्गम्। यदि तेषां धर्माः प्रवर्तेरंस्तत एतद्दर्शनमुपपद्यते। तस्मात्तेषां प्रवृत्तिः ॥ २० ॥

## भाष्यसन्दर्भयोजिनी

दर्विहोमेषु सौमिकविध्यन्तप्रवृत्तिपक्षं परित्यज्य पक्षान्तरमवलम्ब्य पूर्वपक्षी प्रत्यवतिष्ठते—**वाशब्द** इति। सौत्रतच्छब्दो दर्विहोमानां परामर्शक इत्याह—**तदिति**। दर्शपूर्णमासयोः जुहोतिशब्दघटितविधिवाक्यैर्ये कर्मविशेषा विहितास्तेषां धर्माः दर्विहोमेषु 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादिषु प्रवर्तन्तां जुहोतिचोदनासामान्यात्। के ते कर्मविशेषाः येषां धर्माः प्रवर्तेरन्नित्यत आह—**नारिष्ठहोमा** इति। नारिष्ठहोमा हि दर्शपूर्णमासतस्सर्वास्त्विष्टिष्वतिदिश्यन्ते स्वाङ्गैस्सह। तथैव तद्धर्माः दर्विहोमेषु प्रवर्तन्ताम्। अधर्मका दर्विहोमाः धर्मानपेक्षन्ते। नारिष्ठहोमाश्च प्रवृत्तधर्माणः। तदिदं विशदयति—**यस्य चेति**। तेषां नारिष्ठहोमधर्माणाम् ॥ १८ ॥

उभयेषां चोदनासामान्यं दर्शयति—**शब्देति**। प्रकृतिविकृतिभावे चोदनासामान्यस्य व्यवस्थापितत्वात् तद्धर्मप्राप्तिरित्यर्थः ॥ १९ ॥

दर्विहोमानां नारिष्ठहोमप्रकृतिकत्वे साधकं प्रमाणमुपस्थापयति-**अग्निहोत्र** इति। **एतमर्थं** नारिष्ठहोमप्रकृतिकत्वम्। परिधिदर्शनं वेदिदर्शनञ्च लिङ्गम्। वेदिपरिधयोऽङ्गप्रधानार्थाः। नारिष्ठहोमा दर्शपूर्णमासाङ्गभूताः। प्रधानस्य यान्यङ्गानि तानि तदङ्गसाधारणानि-यथा देशः कालः कर्ता इत्येवमादीनि साधारणानि तथैव वेदिः परिधयोऽपि। अतो नारिष्ठहोमास्साङ्गाः। ततश्च दर्विहोमेषु नारिष्ठधर्माः प्रवर्तन्त इत्याह-**तस्मादिति** ॥ २० ॥

### भाष्यम्

## तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् ॥ ४.८.२१ ॥

यदेतद्गुणार्थे नारिष्टहोमार्थे दर्शनमुपदिष्टम्-नारिष्टहोमानां प्रवृत्तावित्यर्थः, अदर्शनं तत्-असाधकमित्यर्थः। कुतः? तत्राभावस्य हेतुत्वात्। त्र्यम्बकेषु 'अप्रतिष्ठा वै त्र्यम्बका इत्याहुः, नेध्माबर्हिस्सन्नह्यते, न प्रयाजा इज्यन्ते नानुयाजा इज्यन्ते, न सामिधेनीरन्वाह' इति। अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थमिध्मादीनामभावो हेतुत्वेनोपदिश्यते। यदि च नारिष्टहोमाः प्रवर्तेरंस्ततोऽङ्गप्रधानार्थत्वादिध्माबर्हिषोस्सामिधेनीनाञ्च त्र्यम्बकेषु भाव एव स्यात्। तत्रायं तदभावोऽसत्वाद्धेतुत्वेन न युज्यते। तस्मान्नारिष्टहोमानामप्रवृत्तिः॥ २१ ॥

## विधिरिति चेत् ॥ ८.४.२२ ॥

इति चेत्पश्यसि-(अ) दर्शनमेतदिति। अत्र कस्माद् विधिर्न भवति, नारिष्टहोम प्रकृतित्वात्प्राप्तानामिध्मादीनां प्रतिषेधको विधिः सन्नपूर्वमर्थं विधास्यति। अनुवादोऽप्रवृत्तिविशेष-करोऽनर्थकस्स्यात्। स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ २२ ॥

## न, वाक्यशेषत्वाद् गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ ८.४.२३ ॥

नायं विधिर्युज्यते। किं कारणम्? अन्योऽत्र विधिराम्नातः। 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इति। तस्य वाक्यशेषोऽयम्। कथं ज्ञायते? तेनाकाङ्क्षितत्वात्।

### भाष्यसन्दर्भयोजिनी

दर्विहोमेषु नारिष्टहोमधर्मप्रवृत्तौ यद्दर्शनमुक्तं तद्दर्शयितुमारभते-**यदेतदिति**। नारिष्टहोमपूर्वकत्वे यद्दर्शनमुक्तं तददर्शनमसाधकम्। परिधीनां वेदेश्च नारिष्टहोमाङ्गत्वाभावे हेतोस्सत्वाददर्शनमित्यर्थः। हेतुं दर्शयति **त्र्यम्बकेष्विति**। दर्विहोमानां नारिष्टहोमपूर्वकत्वे यद् दर्शनमुक्तम् तद् अदर्शनम् असाधकमित्यत्र हेतुमाह **तत्राभावस्येति**। तत्र त्र्यम्बकेष्वित्यर्थः। त्र्यम्बकाणामप्रतिष्ठितत्वमिध्माद्यभावहेतुकम्। तेषां नारिष्टहोमपूर्वकत्वे इध्मादीनामङ्गप्रधानार्थत्वात् नारिष्टहोमार्थत्वमप्यस्तीति इध्मादयः प्राप्नुवन्ति। तथासति त्र्यम्बकेषु इध्मादीनां भाव एव वर्तेत इति तत्रायं हेतुः कथमिव स्यादिति प्रतिपादयति-**यदिचेति**। अत इदं दर्शनमदर्शनमिति भावः। उपसंहरति-**तस्मादिति** ॥ २१ ॥

'नेध्माबर्हिस्सन्नह्यते न प्रयाजा इज्यन्ते' इत्यादिः चोदकप्राप्तेध्मादीनां प्रतिषेधविधिः। तेन दर्विहोमानां नारिष्टहोमप्रकृतिकत्वे न कश्चन विरोधः। अतिदेशतः प्राप्तानां तेषां प्रतिषेधेन प्रवृत्तिविशेषकरत्वं सिध्यति अर्थवादत्वे वादमात्रमनर्थकमिति न्यायेनानर्थक्यं स्यादिति शङ्कासूत्रम् ॥ २२ ॥

'न बर्हिरनुप्रहरती' त्यादिर्न प्रतिषेधविधिरित्यत्र हेतुं निर्दिशति-**अन्योऽत्रेति**। अयमाशयः-वेदीध्मादी-नामङ्गप्रधानार्थत्वान्नारिष्टहोमानामपि तेऽङ्गभूता भवन्ति, ते च दर्विहोमेष्वतिदेशेन प्राप्यन्ते, तेन च नारिष्टहोम-

### भाष्यम्

'अप्रतिष्ठा वै त्र्यम्बका' इति दोषमनुकीर्त्येदं श्रूयते—'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' 'इयं वा अदितिः इयं प्रतिष्ठा यदादित्योऽस्यामेव प्रतितिष्ठति' (तै० ब्रा० १.१०.५.) तदेतत्तस्य दोषस्य परिहरणार्थमिति विज्ञायते। अतस्तेन सहैकवाक्यतां याति। तन्मध्ये च य इध्माद्यभाववचनास्तेऽपि तच्छेषा एव समुच्चारणान्न्याय्याः, ते यदि विधयः कल्पेरन् पृथग्वाक्यानि भवेयुः। तत्रैकवाक्यत्वं बाध्येत। व्यवहितकल्पना च स्यात्। न चैषां विधायकत्वम्, अनुवादसरूपत्वात्। तस्मान्न विधयः। अथ कोऽत्र विशेषः? यत्समाने लिङ्गत्वेऽन्तः परिधिदर्शनमसाधकमितरत्साधकमिति। विशेषमुपरिष्टाद्वक्ष्यामः॥ २३॥

## येषां वापरयोर्होमस्तेषां स्यादविरोधात्॥ ८.४.२४॥

येषां वा यागानामपरयोरग्न्योर्होमः, तेषां प्रवृत्तिस्स्यात्। पत्नीसंयाजानामित्यर्थः। कुतः? अविरोधात्। तत्र विरोधो नास्ति, यो नारिष्ठहोमानां प्रवृत्तावुक्तः तत्राभावस्य हेतुत्वादिति। तेषां हीध्माबर्हिस्सामिधेन्यश्च नैवाङ्गम्। तदभावदर्शनं तत्र न विरुध्यते, प्रवृत्तिधर्माणस्तेऽपि जुहोतिचोदनाश्च। सह पत्न्या जुहोतीति। तस्मात्तेषां प्रवृत्तिः॥ २४॥

### भाष्यसन्दर्भयोजिनी

प्रकृतिकत्वं दर्विहोमानां प्रतिषेधविधिबलादित्युन्नयनं तदा वक्तुं शक्यम्, यदा 'नेध्माबर्हिस्सन्नह्यते' इत्यादयः प्रतिषेधविधिपरा भवेयुः, किन्तु इमे प्रतिषेधाः त्र्यम्बकहविषामप्रतिष्ठितत्वमनुकीर्त्य आदित्यचरुविधायकेन वाक्येनाकाङ्क्षितत्वात्तेन सहैकवाक्यतां प्राप्य आदित्यचरुगतप्राशस्त्यबोधनतात्पर्येण प्रवृत्ता इति नेमे प्रतिषधविधिपरा इति। तदिदमुक्तम्-तदेतत्तस्य दोषस्य परिहरणार्थमिति। तस्य दोषस्य अप्रतिष्ठितत्वदोषस्य। यदीमे प्रतिषेधविधिपरास्स्युः तर्हि तत्र दोषमुद्भावयति—ते यदीति पृथग्वाक्यानि प्रकृतैकवाक्यतां विहाय पृथगर्थविधायकानि भवेयुरित्यर्थः। अस्तु को दोष इत्यत आह—तत्रेति। बाधोऽपि भवत्वित्यत आह—व्यवहितेति। प्रवृत्तिविशेषकरत्वाय व्यवहितकल्पनाप्यस्त्वित्यत आह—न चैषामिति। एषां 'नेध्माबर्हिस्सन्नह्यते' इत्यादि निषेधानां वर्तमानलकारघटितत्वान्न विधायकत्वमित्यर्थः। तस्मान्न विधयः न प्रतिषेधविधय इत्यर्थः। एकं दर्शनं साधकमितरच्चासाधकमित्यत्र किं विनिगमकमित्यत आह—विशेषमिति। विनिगमकमित्यर्थः॥ २३॥

इध्माबर्हिराद्यभावदर्शनविरोधान्नारिष्ठहोमप्रकृतिकत्वं दर्विहोमानां मास्तु, पत्नीसंयाजपिष्टलेपहोमप्रकृतिकत्वमस्त्विति शङ्कामुत्थापयति—येषामिति। अपरयोरग्न्योः गार्हपत्यदक्षिणाग्न्योरित्यर्थः। गार्हपत्याग्नौ सम्पत्नीहोमाः क्रियन्ते, दक्षिणाग्नौ च पिष्टलेपफलीकरणहोमाः। पत्नीसंयाजानां यागत्वेऽपि तत्र प्रक्षेपात्मकहोमस्यापि सत्त्वात् इति द्योतयितुं होमः इत्युपात्तम्। नारिष्ठहोमप्रकृतिकत्वे यो विरोधः प्रदर्शितः सोऽत्र नास्तीत्याह—तत्राभावस्येति। चोदनासामान्यात् सम्पत्नीयपिष्टलेपफलीकारणहोमप्रकृतिकत्वं दर्विहोमानां स्वीकारे न कश्चन विरोध इत्याह—तस्मादिति। तेषां सम्पत्नीयादिहोमधर्माणामित्यर्थः॥ २४॥

### भाष्यम्

## तत्रौषधानि चोद्यन्ते तानि स्थाने न गम्येरन् ॥ ८.४.२५ ॥

नैतद्युक्तम् । किं कारणम् ? यतस्त्वौषधानि चोद्यन्ते दर्विहोमे । यथा त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुला इत्येवमादीनि । तानि स्थाने न गम्येरन् । आज्यस्थानापत्या आज्य धर्माः प्राप्येरन् । ते न शक्यास्तत्रानुष्ठातुम् । अनुष्ठीयमाना वाऽप्रकृतकार्यास्स्युः । तत्र चोदको बाध्येत । तस्मान्न तेषां प्रवृत्तौ किञ्चित्प्रयोजनमस्ति । याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारस्स्वाहाकारेण ॥ २५ ॥

## लिङ्गाद्वा शेषहोमयोः ॥ ७.५.२६ ॥

पिष्टलेपफलीकरणहोमयोर्वा प्रवृत्तिः स्यात् । कुतः ? लिङ्गात्-औषधसामान्यात् । यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तः धर्माणामानर्थक्यमिति तदत्र नास्ति । तत्रौषधधर्मा निर्वपणादयश्शक्याः कर्तुम् । तस्मात्तयोः प्रवृत्तिरिति ॥ २६ ॥

## प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥ ८.४.२७ ॥

न त्वेतदेवम् । कुतः ? यतः प्रतिपत्तिकर्मणी एतौ होमौ । दर्विहोमाश्च प्रधानकर्माणि ।

### भाष्यसन्दर्भयोजिनी

आपराग्निकपत्नीसंयाजादिभ्यो धर्मप्राप्तिरित्याशङ्कां निराकरोति—नैतद्युक्तमिति । तत्र दर्विहोमभूते त्र्यम्बकहोमे औषधद्रव्याणि पुरोडाशादीनि चोदितानि । तानि स्थाने अज्यस्थाने न गम्येरन् नाभ्युपगम्येरन् । अर्थात् सम्पत्नीयहोमे आज्यं द्रव्यम् । तत्स्थाने औषधद्रव्याणि भवन्त्विति शङ्का न समीचीना । यदि आज्यस्थानापत्या पुरोडाशादीनि भवेयुस्तर्हि को दोष इत्यत आह—ते न शक्या इति । स्थानापत्तिस्थलेऽतिदेशेन धर्माणां प्राप्तिस्स्यात् । ते च धर्मा विलेपनादयः पुरोडाशादिषु न शक्या अनुष्ठातुम् । यदि विलेपनादयोऽनुष्ठीयेरंस्तर्हि **अप्रकृतकार्यास्स्युः** अनुपयुक्तकार्या भवेयुः । तत्र तथासति अतिदेशो बाध्येत । एवं सति सम्पत्नीयहोमप्रकृतिकत्वं दर्विहामानामङ्गीकारे किं प्रयोजनं सिध्येत् इत्याह—**तस्मान्न तेषां प्रवृत्तौ किञ्चित्प्रयोजनमस्ति** । न केवलं धर्मा निवर्तन्ते किन्तु स्वाहाकारेण वषट्कारो निवर्त्यते, मन्त्रान्तरेण याज्यानुवाक्ये अपि निवर्त्येते इत्याह-**याज्यानुवाक्ये अपीति** ॥ २५ ॥

पत्नीसंयाजप्रकृतिकत्वं दर्विहोमानामुत्सृज्य पिष्टलेपफलीकरणहोमप्रकृतिकत्वं तेषां शङ्कते—**पिष्टलेपेति** । ओषधिप्रभवद्रव्यकत्वसामान्यं तत्र हेतुं निर्दिशति—**औषधेति** । दर्विहोमानां पत्नीसंयाजधर्मकत्वे यो दोष उक्तः विलेपनाद्यशक्तिरूपः सोऽत्र नास्तीत्याह—**यश्चेति** । त्र्यम्बकहविर्होमस्यौषधधर्मकत्वात् पिष्टलेपफलीकरणहोमस्य च तद्धर्मकत्वात् औषधधर्मा निर्वपणायोऽत्र शक्याः कर्तुमित्याह—**तत्रौषधेति** । अतः पिष्टलेपफलीकरणहोमप्रकृतिकत्वं दर्विहोमानामस्त्वित्युपसंहरति—**तस्मादिति** ॥ २६ ॥

पक्षमिमं निरस्यति—**न त्वेवमिति** । पिष्टलेपफलीकरणहोमौ संस्कारकर्मणी । प्रधानयागे उपयुक्तस्य पुरोडाशपात्रे लग्नस्य पिष्टस्य, व्रीह्यवहननान्तरं फलीकरणावसरे यद् द्रव्यं पृथग् भवति तस्याप्युपयुक्तावशिष्टत्वात्

**भाष्यम्**

तेषां दूरतरो भेदः । सामान्यतश्च धर्मप्राप्तिरिष्यते । यच्चोक्तम्—औषधधर्माश्शक्यास्तत्र कर्तुमिति, प्रतिपत्तित्वादप्रयोजकावेव निर्वपणादीनां धर्माणाम् । अतस्तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम् । नापि प्रयोजनवत्, तस्मादेतदप्ययुक्तम् । एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते । तस्मादपूर्वाः ॥ २७ ॥

**सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद् वचनाददतिदेशस्स्यात् ॥ ८.४.२८ ॥**

अथ कस्मादुभयपक्षसाधनानामपि लिङ्गानामभावे अप्रवृत्तिरेव प्रतीयते न पुनः प्रवृत्तिः ? इति । उच्यते—सन्निपाते विरोधिनामेतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुं न न्याय्या । कुतः ? विध्युत्पत्तिव्यवस्थानात् । विधीनामुत्पत्तिः पाठः । स च व्यवस्थितः । केचिद्दर्शपूर्णमासयोः पठ्यन्ते केचित्सोमे । तेषामर्थस्यापरिणेयत्वम् । यत्र पठितास्ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते । तस्मादप्रवृत्तिः प्रतीयेत । तत्राह—किमेष एवोत्सर्गस्सर्वत्राप्राप्तिरिति ? एवं खलु प्राप्त उच्यते—वचनादतिदेशस्स्यात् । यथा राष्ट्रभृतामुद्वाहकर्मसु । असत्येवंविधे वचनेऽपूर्वा इति । अथ ये लिङ्गे अपदिष्टे 'यदि कीटोऽवपद्येतातः परिधि निनयेत्, अन्तर्वेदि तिष्ठन् सावित्राणि

**भाष्यसन्दर्भयोजिनी**

तत्संस्कारकत्वेनेमौ होमौ विहितौ । अत इमौ प्रतिपत्तिकर्मणी । दर्विहोमाश्च प्रधानकर्माणि, न संस्कारकर्माणि । एवमेषां मिथो महान् भेद इति सादृश्याभावात्कथं पिष्टलेपफलीकरणहोमप्रकृतिकत्वं दर्विहोमानामित्याह—**तेषामिति** । प्रकृतितो विकृतौ धर्मप्राप्तिं प्रति नियामकं सामान्यं सादृश्यम् इत्याह—**सामान्यतश्चेति** । निर्वपणादीनां प्राप्त्यभावे हेतुः—**प्रतिपत्तित्वादिति** । अतः पत्नीसंमाजप्रकृतिकत्वाभावे यो न्यायोऽभिहितः तेनैव न्यायेन पिष्टलेपहोमप्रकृतिकत्वाभावेऽपीत्याह—**अत इति** । **नाऽपि प्रयोजनवदिति** । अनुष्ठानाविषयत्वाभावादित्यर्थः । उपसंहरति **तस्मादिति** ॥ २७ ॥

पक्षद्वयसाधकलिङ्गानां साधकत्वाभावे प्रतिपाद्यमाने कस्मादप्रवृत्तिरेवोच्यते प्रवृत्तिः किमिति नोच्यत इति शङ्कते—**अथेति** । समाधत्ते—**उच्यत इति** । यत्र विरोधीनि लिङ्गानि एकत्र सन्निपतन्ति तत्र प्रवृत्तिः कथं ज्ञायताम् । यतो हि **विध्युद्देशव्यवस्थानात्** धर्मविधायकोत्पत्तिवाक्यानां नारिष्ठहोमसन्निधावेव पाठाद् व्यवस्थितत्वादित्यर्थः । पाठव्यवस्थां निर्दिशति—**केचिदिति** । **तेषाम्** उत्पत्तिवाक्यानाम् । **अर्थस्य** धर्मजातस्य **अपरिणेयत्वम्** अन्यत्र नेतुमयुक्तत्वमित्यर्थः । अयुक्तत्वमेवोपपादयति—**यत्रेत्यादिना** । अत्र शङ्कते—**तत्राहेति** । यत्र पठिता धर्मास्ते तत्रैव व्यवस्थिता इति चेत् सौर्यादिविकृतियागानामुत्पत्तिवाक्येषु भावनानां कथम्भावाकाङ्क्षापूरणं कथं स्यादिति शङ्कितुराशयः । समाधत्ते—**उच्यत इति** । वचनस्य स्थलं प्रदर्शयति—**यथा राष्ट्रभृतामिति** । उद्वाहादिस्मार्तकर्मसु कर्मसमृध्यर्थं जयादि राष्ट्रभृतादिहोमाः क्रियन्ते । एतादृशं वचनं यत्र कर्मणि नास्ति तत्र कस्य कर्मणोऽपूर्वत्वमिति साधयति—**असत्येवं विधे इति** । दर्विहोमानां नारिष्ठहोमप्रकृतिकत्वपूर्वपक्षावसरे पूर्वपक्षिणा

### भाष्यम्

जुहोति' इति तयोः कस्समाधिः ? उच्यते—अन्याय्यपूर्वत्वाल्लक्षणया वादस्स विज्ञायते। अन्तः परिधिदेशे अन्तर्वेदिदेशे इति । परिधीनां वेदेश्च तत्राभावात् । यथा—रजनी मे कण्डूयति, तिलको मे स्पन्दते इति रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तार इति ॥ २८ ॥

इति दार्विहोमस्यापूर्वताधिकरणम् ॥ ५ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये

अष्टमस्य चतुर्थः पादः ॥

अष्टमाध्यायस्समाप्तः ॥

### भाष्यसन्दर्भयोजिनी

यल्लिङ्गद्वयं प्रदर्शितं तच्छङ्कते—अथेति। समाधत्ते—उच्यत इति। तत्र परिधिशब्दस्य अन्तर्वेदिशब्दस्य च देशलक्षकत्वमङ्गीकृत्यार्थवादो नेय इत्यर्थः। देशलक्षणायां कारणं प्रदर्शयति—परिधीनामिति। दृष्टान्तयति—रजनीति। रजनीशब्दस्य तिलकशब्दस्य च तद्देशलक्षकत्वेन वक्तृभिः प्रयोगः क्रियते तथा परिधिशब्दस्य वेदिशब्दस्य तद्देशलक्षकत्वमङ्गीकर्तव्यम्, यथा रागस्य तिलकस्याभावेऽपि कण्डूयनस्पन्दनक्रिययोरुपपत्तये देशो लक्ष्यते तथेत्यर्थः। अतो दर्विहोमा अपूर्वा इति सिद्धम् ॥ २८ ॥

इति दर्विहोमानामपूर्वताधिकरणम् ॥ ५ ॥

इति म० म० चिन्नस्वामिशास्त्रिणामन्तेवासिना पट्टाभिरामशास्त्रिणा
विरचितायां भाष्यसन्दर्भयोजिन्याम् अष्टमोऽध्यायस्समाप्तः ॥



# सप्तमाष्टमाध्याययोस्सूत्रसूची

सप्तमाष्टमयोरध्याययोस्सूत्रसूची

समाप्ता

